अन्यथाऽऽचार्यस्य यजमानशाखाऽध्ययनाऽभावे तच्छाखीयपदार्थानां निर्वाह एव न स्यात् । स्वशाखयाऽनुष्ठाने तु वैगुण्यं । तथा च पराशरः । यः स्वशाखां परित्यज्य परशाखां समाश्रयेत् । अप्रमाणमृषिं कृत्वा सोंऽधे तमसि मज्जतीति ॥ ऋत्विजस्तु भिन्नशाखीया अपि । सर्वेऽप्याचार्यब्रह्मर्त्विजो मधुपर्केण पूज्याः । ऋत्विजो वृत्वा मधुपर्कमाहरेदित्याश्वलायनोक्तेः । संपूज्य मधुपर्केण ऋत्विजः कर्मकारयेदिति विश्वामित्रोक्तेश्च । य ऋत्विक् यच्छाखीयं कर्म करोति तच्छाखोक्तेन प्रकारेण कांडाऽनुसमयेन मधुपर्कं कुर्वंति यायजूकाः केचित् । परे यजमानशाखोक्तेन । यजमानेन स्वशाखीया ऋत्विग्भिश्च स्वस्वशाखीयाः पदार्था अनेकेष्वृत्विक्षु पदार्थाऽनुसमयेनाऽनुष्ठेया इति तु युक्तं । तत्तच्छाखाऽध्ययनजन्यज्ञानस्यांऽगत्वादेकप्रयोगविधिपरिग्रहाच्च । ऋत्विग्भ्यो देयमुक्तं लिंगपुराणे । वस्त्रयुग्मं तथाऽप्पूरं केयूरं कर्णभूषणं । अंगुलीभूषणं चैव मणिबंधस्य भूषणं ॥ कंठाऽऽभरणयुक्तानि प्रारंभे धर्मकर्मणः । पुरोहिताय दत्वाऽथ ऋत्विग्भ्यश्चाऽपि दापयेदिति ॥ आपः पूर्यंतेऽस्मिन्नित्यप्पूरं जलपात्रं । मत्स्यपुराणे । यजमानः सपत्नीकः पुत्रपौत्रसमन्वितः । पश्चिमद्वारमाश्रित्य प्रविशेद्यागमंडपं ॥ संग्रहे । समंततश्च सिद्धार्थान् किरेद्रक्षोघ्नमंत्रतः । प्रतिष्ठासारे । सर्वतः पंचगव्येन प्रोक्षयेद्यागमंडपं । आपोहिष्ठत्तृचेनैव ततः स्वस्त्ययनं जपेत् ॥ तत्र हेमाद्रौ वास्तुपूजाऽप्युक्ता । स मंडपं प्रविश्याऽथ तोरणादि प्रपूज्य च । वास्तुयागं ततः कुर्यात्प्रासादे मंडपेऽथवा ॥ वास्तुमंडलं च नैर्ऋत्यां । नैर्ऋत्यां दिशि वास्त्वीशं ब्रह्माद्यांश्च समर्चयेदिति शारदोक्तेः । वास्तुहोमस्तु भिन्नस्थंडिले कार्यः । मुख्याऽऽयतने वा । तत्राऽप्यादौ पृथक्प्रयोगतया प्रधानसमतंत्रतया वा । शारदातिलके तु होम एव नोक्तः । सर्वं च शांतिकपौष्टिकमहादानादि लौकिकाग्नौ कार्यं । श्रौतस्मार्त्ताग्निप्राप्तौ मानाऽभावात् । यत्तु मनुः । वैवाहिकेऽग्नौ कुर्वीत गार्ह्यं कर्म यथाविधि । पंचयज्ञविधानं च पक्तिं चाऽऽन्वाहिकीं गृहीति तत्स्पष्टं गृह्योक्तपरं । वैवाहिक इति च दारदायाद्यकालीनयोरप्युपलक्षकं ।

तत्सजातीयसंस्कारस्यैव साधनताऽवच्छेदकत्वात् । यदपि याज्ञवल्क्यः । स्मार्त्तं कर्म विवाहाग्नौ कुर्वीत प्रत्यहं गृही । दायकालाऽऽहृते वाऽपि श्रौतं वैतानिकाग्निष्विति ॥ तत्रापि सामान्यं स्मार्त्तपदं गार्ह्य उपसंन्हियते । एतेनाऽऽहवनीयादयो निरस्ताः । यदाहवनीये जुह्वतीत्यादावश्वप्रतिग्रहेष्टौ वैदिकत्वसाम्येन वैदिकाऽश्वदानप्रतिग्रहोपस्थितिवद्वैदिकहोमोपस्थितेश्च । यद्यप्यत्र गार्ह्यं स्मार्त्त एव श्रौतं च वैतानिक एवेति नियमेन स्मृत्युक्तेऽपि कर्मणि श्रौतस्मार्त्ताग्न्योः प्राप्तिः संभाव्यते । तथापि न साऽऽहवनीयाऽऽवसथ्यत्वरूपेण । किंतु लौकिकसाधारणज्वलनत्वेनैव । अवैधाऽऽहुतिप्रक्षेपे आहवनीयत्वादिविघाताऽऽपत्तेश्च । अतएव सर्वाधानिन औपासनाऽभावाद्वैतानिकाऽप्राप्तेश्च । तेन गार्ह्यं लौकिक एव कार्यं । अमुमेव सर्वमर्थं स्मृत्यर्थसारकृदपि संजग्राह । गार्ह्यमौपासने कुर्यात् सर्वाधानी तु लौकिके।स्मार्तं च लौकिके कुर्याच्छ्रौतं वैतानिकाग्निष्विति ॥ यत्तु नारायणवृत्तौ सर्वाधानिना सीमंतोन्नयनादिगार्ह्यकर्मार्थं स्मार्ताग्निरुत्पादनीय इति । तत्र मूलं बौधायनसूत्रं ।यदपि विज्ञानेश्वरो ग्रहयज्ञ औपासने इत्यूचे । तत्र मूलमन्वेष्यं । कातीयपरं वा तत् । तत्सूत्रे तथाऽऽम्नानात् । अतएव स विनायकशांतौ लौकिकाग्निमेवाऽवोचत् । अतः स्मृत्युक्तं लौकिक एवेति दिक् । कृत्यरत्नाकरे । शुभपात्रं तु कांस्यं स्यात्तेनाऽग्निं प्रणयेद्बुधः । तस्याऽभावे शरावेण नवेनाऽभिमुखं च तं ॥ गोभिलीये । आहूय चैव होतव्यो यो यत्र विहितोऽनलः । तथा । लक्षहोमे च वन्हिः स्यात्कोटिहोमे हुताशनः । पूर्णाहुत्यां मृडो नाम शांतिके वरदः सदा ॥ अन्येषु संस्कारादिकर्मस्वग्नेर्नामविशेषाः प्रयोगरत्ने ज्ञेयाः । होमे विशेषो गोभिलीये । न मुक्तकेशो जुहुयान्नाऽनिपातितजानुकः । उत्तानेनैव हस्तेन अंगुष्ठाऽग्रेण पीडितं ॥ संहतांऽगुलिपाणिस्तु वाग्यतो जुहुयाद्धविरिति । बहुकर्तृकहोमे प्रत्याहुति त्यागाऽशक्तेर्होमारंभ एव देवताश्चतुर्थ्यंतेनोद्दिश्य सर्वाणि द्रव्याणि त्यजेदितिहेमाद्र्यादयः ॥ वि० पा० दिशामनुक्तौ प्राची स्यात्तथा हस्तस्तु दक्षिणः । शुभे काले शुभे देशे शांतिकर्म

समाचरेत् ॥ अप० शांतिः फलदानोन्मुखदुरितनिवारणं ।' नैमित्तिकविशेषेण विहितं त्वन्यथाऽपि वा । यथा मूलादिका शांतिर्यथा षष्ठ्यादि-
पूजनं । प्रवृत्तमन्यथा कुर्याद्यदि मोहात्कथंचन । यतस्तदन्यथाभूतं तदारभ्य पुनश्चरेत् । ल० शौ० । उपात्ते तु प्रतिनिधौ मुख्यार्थो लभ्यते
यदि । तत्र मुख्यमनादृत्य गौणेनैव समापयेत् ॥ अंतरेणाऽऽज्यभागौ तु अर्वाक् स्विष्टकृतोऽपि च । प्रधानं तत्तु विज्ञेयमंगानि चेतराणि तु ॥,
प्रधानस्याऽक्रिया यत्र सांऽगं तत्क्रियते पुनः । तदंगस्याऽक्रियायां तु नाऽऽवृत्तिः सर्वकर्मणः॥ यज्ञोपवीतिना कार्यं प्रागुदक्संस्थता तथा ।
शुद्धेन कर्म कर्त्तव्यं विष्णुस्मरणपूर्वकं ॥ ईषद्धौतं नवं श्वेतं सदशं यन्न धारितं । निर्णेजकाऽक्षालितं यदहतं वास उच्यते ॥ दे० । स्वयं
धौतेन कर्तव्या क्रिया धर्म्या विपश्चिता । एकवासा न भुंजीत न कुर्याद्देवतार्चनं । नचाऽर्चयेद्द्विजानग्नौ कुर्याद्देवंविधो नरः '॥ दा० क०
ब्रह्मांडे । नाऽधिकारी मुक्तकच्छो मुक्तचूडस्तथैवच । दाने प्रतिग्रहे यज्ञे ब्रह्मयज्ञादिकर्मसु ॥ सोत्तरीयस्ततः कुर्यात्सर्वकर्माणि भारत । अधौते
कारुधौते वा परिदध्यान्न वाससी॥ आपस्तंबः । आर्द्रवासास्तु यः कुर्याज्जपहोमप्रतिग्रहान् । सर्वं तद्राक्षसं विद्याद्बहिर्जानु च यत्कृतं ॥ वसिष्ठः ।
यज्जले शुष्कवस्त्रेण बहिश्चैवाऽऽर्द्रवाससा । जपो होमस्तथा दानं तत्सर्वं निष्फलं भवेत् ॥ विष्णुपुराणे । होमे देवार्चनाद्यासु क्रियास्वाचमने
तथा । नैकवस्त्रः प्रवर्तेत द्विजवाचनके जपे ॥ शातातपः । सव्यादंसात्परिभ्रष्टकटिदेशधृतांऽबरः । एकवस्त्रं तु तं विद्याद्दैवे पित्र्ये च वर्जयेत् ॥
वृद्धयाज्ञवल्क्यः । परिधानाद्बहिः कच्छा निबद्धा ह्यासुरी भवेत् । धर्मकर्मणि विद्वद्भिर्वर्जनीया प्रयत्नतः ॥ बहिर्निर्गतकच्छ इत्यर्थः । दानमाचमनं
होमं भोजनं देवतार्चनं । प्रौढपादो न कुर्वीत स्वाध्यायं पितृतर्पणं । आसनारूढपादस्तु जान्वोर्वा जंघयोस्तथा । कृताऽवसक्थिको यश्च
प्रौढपादः स उच्यते ॥ ल० शौ० । अभिषेकं मूर्ध्नि होमं मांगल्यं स्वस्तिवाचनं । आशीर्वादान् क्रतौ प्रैषानूर्ध्वस्थश्चैव कारयेत् ॥ गृहस्थस्तु

षडग्निः स्यात्पंचाग्निश्चतुराग्निकः । स्यात् त्र्यग्निरथवैकाग्निर्नाऽग्निहीनः कथंचन ॥' सर्वेषु धर्मकार्येषु पत्नी दक्षिणतः शुभा । अभिषेके वामभागे संस्कार्यश्चैव दक्षिणे ॥ आर्षं छंदो दैवतं च विनियोगस्तथैव च । वेदितव्यं प्रयत्नेन ब्राह्मणेन विपश्चिता ॥ अविदित्वा तु यः कुर्याद्याजनाऽध्यापनं जपं । यदन्यत्कुरुते किंचित्तत्सर्वं निष्फलं भवेत् [ होममंतर्जलादीनि तस्य चाऽल्पं फलं भवेत् ] ॥ अग्निप्रतिष्ठाकर्मादि स्वशाखोक्तं समाचरेत् । विशेषविहितं यत्तु तत्सर्वेषामपीष्यते ॥ यन्नाऽऽम्नातं स्वशाखायां पारक्यमविरोधि यत् ।विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादि-कर्मवत् ॥ पुण्याहवाचनं मातृस्थापनं श्राद्धमेव च । शांतिकर्माऽगमुद्दिष्टं शौनकस्य वचो यथा ॥ स्वस्तिवाचनमेवैके ब्रूयुः शांतिककर्मणि । वृद्धिश्राद्धं न कर्त्तव्यं बौधायनवचो यथा ॥ शाखांतरे स्वशाखायां यच्छांत्यादिकमीरितं । स्वशाखोक्तं तदा कार्यं परोक्तं न समाचरेत् ॥ स्वशाखाश्रयमुत्सृज्य परशाखोक्तमाचरन् । शाखारंडः स विज्ञेयः सर्वकर्मबहिष्कृतः ॥ ल० आ० । कर्मणां याजुषादीनां स्वस्वशाखा न विद्यते । ऋक्शाखाविहितं कर्म समानं सर्वशाखिनां ॥ बहृचानां तु यत्कर्म यदि स्याद-न्यशाखया । पुनश्चैवाऽपि तत्कर्म कुर्याद्बहृचशाखया ॥ शौ० का० । इदं कार्यमनेनेति न क्वचिद्दृश्यते विधिः । लिंगादेवेदमर्थत्वं येषां ते मंत्रसंज्ञकाः । प्राजापत्य उपांशुः स्यान्मंत्रः सावित्र एव च । कात्या० । कृतमोदनसक्त्वादि तंडुलादि कृताऽकृतं । व्रीह्यादि चाऽकृतं प्रोक्तमिति हव्यं त्रिधा बुधैः ॥ व्र० रा० मदनरत्ने ब्राह्मे । यथोक्तवस्त्वसंपत्तौ ग्राह्यं तदनुकारि यत् । यवाऽभावे तु गोधूमा व्रीह्यभावे च तंडुलाः ॥ दा० क० विष्णुधर्मे । दध्यलाभे पयः कार्यं मध्वलाभे तथा गुडः । घृतप्रातिनिधिं कुर्यात्पयो वा दधि वा नृप ॥ पैठीनसिः । सर्वाऽलाभे यवः प्रतिनिधिः । मैत्रपरिशिष्टे । घृतमन्यार्थे प्रतिनिधिस्तदलाभे दधि पयो वा ' । खंडत्रयं तु मूलानां फलानां स्वप्रमाणतः । ग्रासमात्रम-

थाऽन्नस्य पंच सूत्राणि होमयेत् ॥ पनसस्य फलस्याऽथ शतं भागाः प्रकीर्तिताः । शतं तथैव भागाश्च कूष्मांडस्य प्रकीर्तिताः ॥ नारीकेलस्य विद्वद्भिर्भागाः प्रोक्तास्तु षोडश । तावंत एव भागाः स्युः कदलस्य कृतूत्तमे ॥ खर्जूरीफलभागाश्च पंच प्रोक्ता मनीषिभिः । पत्रमेकैकमेव स्यात्तथा पुष्पं च हूयते ॥ तिला अशीतिसंख्याकास्तथा षष्टिर्यवाः स्मृताः । व्रीहयश्च शतं ग्राह्या गोधूमाः षष्टिसंमिताः ॥ प्रियंगवश्च विज्ञेया बिडालपदमात्रकाः । तथैव तंडुलाः प्रोक्ता होमलक्षणकोविदैः ॥ फलानि बदरादीनि पंच पंचैव हावयेत् । आदिशब्देन बदरमात्राण्येव । इक्षवः पर्वमात्राश्च पल्लवाः कोमलाः स्मृताः ॥ शर्करा च गुडश्चैव बिडालपदमात्रकः । अतिसूक्ष्माणि बीजानि फलान्यपि तथैव च ॥ यज्ञकृद्यज्ञसिद्ध्यर्थं वल्लमात्राणि हावयेत् । चतुर्धा बीजपूराणि दाडिमानि तथैव च ॥ कंदास्त्वेकैकशः प्रोक्ता आर्द्रमंकुरशः शुभं । कंदेष्वपि विशेषात्तु सूरणो दशधा भवेत् ॥ जंबीराऽऽमलकद्राक्षास्तथा भल्लातकाः कणाः । अक्षाऽभयाऽम्रउर्वाद्याः प्रोक्ता ह्येकैकशो यजौ ॥ दूर्वास्तिस्रश्च होतव्याः समिधस्त्वेकिकाः स्मृताः । आज्यं च पृषदाज्यं च दधि दुग्धं तथैव च ॥ दधिमिश्रितमाज्यं पृषदाज्यं । स्रुववक्त्रप्रमाणं तु होतव्यं यज्ञकोविदैः । एवं बृहस्पतेरुक्तिरथ मुद्रा निगद्यते ॥ मयूरी कुक्कुटी हंसी सूकरी च मृगी तथा । पंच मुद्रा विजानीयाद्धौम्यद्रव्यग्रहे बुधः ॥ न्युब्जेन पाणिना द्रव्यं तर्जनीरहितेन यत् । आदाय हूयते विप्रैर्मयूरीं तां विदुर्बुधाः ॥ अंगुष्ठयंत्रिताः सर्वा अंगुल्योत्तानलक्षिताः । हवनं क्रियते ताभिः कुक्कुरी सा प्रकीर्त्तिता ॥ विकनिष्ठा तु हंसी स्यान्मुकुलाऽऽभा च सूकरी । मध्यमाऽनामिकांऽगुष्ठैर्मृगी सैवोपलक्षिता ॥ फलमूलयजौ श्रेष्ठा मुद्रा ज्ञेया शिखंडिनी । जारणे मारणे तद्वत् कुक्कुटी परिकीर्तिता ॥ वश्योच्चाटनपूर्वाणां कर्मणां सूकरी मता । शांतिके पौष्टिके कार्ये मृगी हंसी प्रशस्यते ॥ कुक्कुटी पत्रपुष्पाणां शालिहोमे तु सूकरी । यवानां च तिलानां च हंसी प्रोक्ता मनीषिभिः ॥ या यत्र विहिता मुद्रा

तया तत्र तु होमयेत् । अन्यथा जुहुयाद्यस्तु न कर्मफलभाग्भवेत् ॥ ल० शौ० । जुह्वतामृत्विजामग्नौ बहिः पतति यद्धविः । स एष वारुणो भागस्तस्मादप्सु विनिक्षिपेत् ॥ हूयमाने हविर्यज्ञे यद्धविः स्रंसते बहिः । द्रप्सश्चस्कंदमंत्रेण तदग्नौ निक्षिपेत्पुनः ॥ वि० मा० । अग्रे धृतो विनाशाय धृतो मध्ये प्रजाक्षयः । मूले धृतस्तु होतुश्च मृतिं दद्यात्स्रुवो ध्रुवं ॥ अग्रान्मध्याच्च मध्ये तु मूलान्मध्याच्च मध्यतः । स्रुवः प्रधार्यो विद्वद्भिः सर्वकार्यार्थसिद्धये ) ॥ अथ सर्वशांतिप्रकृतित्वात् ग्रहयज्ञ उच्यते । " बृ० प० । स्मृत्युक्तमंत्रैर्विधिवत्प्रयुक्तमित्यद्रिजानंदनपूजनं च । कृत्वांऽतरायान्विनिहत्य सर्वान् कुर्यादथाऽतो ग्रहयागमेतं ॥ शां० म० प्रयोगपारिजाते उत्पलपरिमलः । कार्याऽऽरंभेषु सर्वेषु प्रतिष्ठास्वध्वरेषु च । नववेश्मप्रवेशे च गर्भाधानादिकर्मसु ॥ आरोग्यस्नानसमये संक्रांतौ रोगसंभवे । अभिचारे च यः कुर्याद् ग्रहपूजां विधानतः ॥ सोऽभीष्टफलमाप्नोति निर्विघ्नेन न संशयः । „ स्कंदयाज्ञवल्क्यौ । श्रीकामः शांतिकामोवा ग्रहयज्ञं समाचरेत् । वृष्ट्यायुःपुष्टिकामो वा तथैवाऽभिचरन्नपि ॥ (अदृष्टोपायेन परपीडा अभिचारस्तत्कामश्चेत्यर्थः) स चतुर्धा । केवलोऽयुतहोमो लक्षहोमः कोटिहोमश्चेति । आद्यो याज्ञवल्क्याद्यैरुक्तः । अन्ये मात्स्ये उक्ताः । ग्रहयज्ञस्त्रिधा प्रोक्तः पुराणश्रुतिचोदितः । प्रथमोऽयुतहोमः स्याल्लक्षहोमस्ततः परं ॥ तृतीयः कोटिहोमस्तु सर्वकामफलप्रदः । ते च द्वेधा । नैमित्तिकाः काम्याश्च । तद्देशस्तत्रैव । गृहस्योत्तरपूर्वेण मंडपं कारयेद्बुधः । रुद्राऽऽयतनभूमौ वा चतुरस्रमुदक्प्लवं ॥(उत्तरे निम्नं)॥ दशहस्तमथाऽष्टौ वा हस्तान्कुर्याद्विधानतः । तस्य द्वाराणि चत्वारि कर्तव्यानि विचक्षणैः ॥ मंत्रमुक्तावल्यां । चतुरस्राश्चतुर्द्वारा अष्टहस्तादितस्त्रयः । चतुर्विंशतिहस्तांऽता हीनमध्योत्तमाः क्रमात् ॥ यद्वा द्वादशहस्ताद्या द्विहस्ताद् वृद्धितो नव । अष्टाविंशतिपर्यंताः कैश्चिदुक्ता मनीषिभिः ॥ अग्निपुराणेऽप्येवं । अयं मंडपः काम्ये नित्यो न नैमित्तिकादौ । नित्यं नैमित्तिकं हित्वा सर्वमन्यत्समं

डपमिति शारदातिलकात् । कुंडमंडपप्रकारोऽस्मत्पितृकृतप्रयोगदीपिकायां मत्कृते दानकमलाकरे च ज्ञेयः । स्कांदे । नवग्रहमखे कुंडं हस्तमात्रं समं भवेत् । " म० म० समं चतसृष्वपि दिक्षु हस्तप्रमाणं " चतुरस्रमधोहस्तं योनिवक्त्रं समेखलं । " शां० म० योनिरेव वक्त्रं यस्य तत् । पुत्रादिकामनायां तु योन्याद्याकारा अपि भवंति " चतुरंगुलविस्तारा मेखला तद्वदुच्छ्रिता । " शां० म० अत्र विशेषोपदेशादेकैव मेखला । म० म० त्रिमेखलं वा कुर्वीत " मानहीनाऽधिकं कुंडमनेकभयदं स्मृतं ॥ " ल० शौ० गृहस्यैशानदिग्भागे पूर्वे वा चोत्तरेऽथवा । तत्र कुंडं प्रकर्तव्यं चतुरस्रं कराऽवधि ॥ शते शताऽर्धके होमे मुष्ट्यरत्निप्रमाणतः । सहस्राऽयुतहोमे तु हस्तं हस्तद्वयं मतं ॥ त्रिमेखलं सहस्रे तु अथवा चैकमेखलं ।" योनिलक्षणं मात्स्ये । वितस्तिमात्रा योनिः स्यात्षट्सप्तांऽगुलविस्तृता । " म० म० वितस्तिमात्रमित्येतच्च योनेर्दैर्घ्यं । षड्वा सप्त वेति विस्तारे विकल्पः । शां० सा० वितस्तिशब्दः कुंडार्धपरः । " कूर्मपृष्ठोन्नता मध्ये पार्श्वयोश्चांऽगुलोच्छ्रिता ॥ गजोष्ठसदृशी तद्वदायता छिद्रसंयुता । मेखलोपरि सर्वत्र अश्वत्थदलसंनिभा ॥ कुंडाऽभावे स्थंडिलं वा कार्यं । नित्यं नैमित्तिकं होमं स्थंडिले वा समाचरेदिति शारदातिलकात् । कुंडमेवंविधं न स्यात्स्थंडिलं वा समाश्रयेदिति प्रपंचसाराच्च। स्कांदे । तस्य चोत्तरपूर्वेण स्थंडिलं हस्तमात्रकं । तस्य कुंडस्य स्थंडिलं वेदी । त्रिवप्रं चतुरस्रं च वितस्त्युच्छ्रायसंमितं ॥ द्व्यंगुलोच्छ्रायवान् वप्रः प्रथमः समुदाहृतः । त्र्यंगुलोच्छ्रायसंयुक्तं वप्रद्वयमथोपरि ॥ (वप्रो मेखला) द्व्यंगुलस्तत्र विस्तारः सर्वेषां कथितो बुधैः । " शां० म० वेद्यां विशेषमाह गोभिलः । कुंडस्य प्रागुदीच्यां वा प्राच्यामुत्तरतोऽपि वा । चतुरस्रं चतुर्द्वारं कर्तव्यं ग्रहपीठकं ॥ श्रीकामः पूर्वतः कुर्यात् पुष्ट्यर्थं दक्षिणेन तु । पश्चाद्द्विजन्मसिद्ध्यर्थं शांत्यर्थं चोत्तरेण तु ॥ ऐशान्यां सर्वकामार्थमाग्नेय्यामभिचारके । नैर्ऋत्यां पुत्रलाभाय पुष्ट्यर्थं वायवेन त्विति ॥ वेदी तु

स्थंडिलपक्षेऽपि कार्या । वसिष्ठः । लिखेदष्टदलं पद्मं वेदिकोपरि तंडुलैः । ल० शौ० । कुर्यादष्टदलं पद्मं वेद्यां शुक्लपटेऽहते । " वेद्यां संभवे सर्वतोभद्रं कार्यं । मंडलं सर्वतो भद्रमेतत्साधारणं स्मृतमिति शारदातिलकात् । नवग्रहमखे कुर्यादृत्विजश्चतुरः शुभान् । अथवा चैकमभ्यर्चेद्विधिना ब्रह्मणा सह ॥ मात्स्ये । नवग्रहमखे विप्राश्चत्वारो वेदवादिनः । " शां० सा० चतुः पक्षे ब्रह्मा आचार्यो द्वौ च ऋत्विजावित्येवं व्यवस्थेति हेमाद्रिः । " अथ वा ऋत्विजौ शांतौ द्वावेव श्रुतिकोविदौ ॥ कार्यावयुतहोमे तु न प्रसज्जेत विस्तरे । " शां० सा० । एकमप्यर्चयेद्भक्त्या ब्राह्मणं वेदपारगं । दक्षिणाभिः प्रयत्नेन न बहूनल्पवित्तवान् ॥ अनेनाऽऽचार्यमात्रकर्तृकः प्रयोग उक्तः । ल० शौ० । आचार्यश्चाऽत्र कर्तव्यः सर्वज्ञः शुभलक्षणः । ऋत्विजोऽष्टौ च चत्वारो द्वावप्येकं विदुर्बुधाः ॥ वि० मा० यजमानः शुचिः स्नातः श्रद्धायुक्तो जितेंद्रियः । पादशौचाऽर्घ्यवस्त्राद्यैराचार्यादींस्ततोऽर्चयेत् ॥ अस्य यागस्य निष्पत्तौ० ॥ इति संप्रार्थ्य विप्रांस्तान् दद्यात्पूगीफलं करे । आचार्यत्वे वृतोऽसीति ब्रह्मत्वे च वृतोऽस्यथ ॥ ल० शौ० । आदित्यादिग्रहमखमहं कुर्वेऽत्र कर्मणि । ऋग्वेदाऽध्यायकर्माणमाचार्यं त्वामहं वृणे ॥ एवमेवेतरान्व्यस्तान् समस्तान्वा तदूह्य च । अस्य यागस्य० ॥ इत्युक्त्वोपविशेत्तत्र यावत्कर्म समाप्यते ।" हेमाद्रौ विश्वामित्रः । संपूज्य मधुपर्केण ऋत्विजः कर्म कारयेत् । अन्यथा विफलं कर्म भवतीह न संशयः ॥ स च तत्तच्छाखया कार्यः । अर्च्यशाखया मधुपर्क इति तत्रैव स्मृतेः । " शां० सा० मंत्रवद्वरण एव मधुपर्क इति केचित् । मधुपर्कस्य वरणांऽगत्वाद्यत्र वरणं तत्र मधुपर्क इति वृत्तिकृत् । वस्तुतस्तु ऋत्विजो वृत्वा मधुपर्कमाहरेदित्यत्र क्रममात्रविधानान्मधुपर्कस्य न वरणांऽगत्वं किंतूभयोर्ऋत्विगंगत्वं । तेन स्मार्ते मंत्रवद्वरणाऽभावेऽपि ऋत्विक्सत्वान्मधुपर्को भवति।तेनाऽत्र वरणोत्तरमाशौचादिपाते न ऋत्विक्परावृत्तिरिति युक्तं ।" मात्स्ये ।पुण्येऽह्नि विप्रकथिते कृत्वा ब्राह्मणवा-

चनं । अग्निप्रणयनं कृत्वा वेद्यामावाहयेत्सुरान् ॥ देवतानां ततः स्थाप्या विंशतिर्द्वादशाऽधिका । आदित्याभिमुखाः सर्वे साऽधिप्रत्यधिदेवताः॥ " म० म० स्थापनीया मुनिश्रेष्ठ नांऽतरेण पराङ्मुखाः । नांतरेणेति । आदित्यस्याऽन्यस्य च स्थापितग्रहस्य मध्येऽन्यो ग्रहो न स्थापनीय इत्यर्थः । न च पराङ्मुखाः स्थापनीयाः " प्रतिमा आह याज्ञवल्क्यः । ताम्रकात्स्फटिकाद्रक्तचंदनात्स्वर्णकादुभौ । रजतादयसः सीसात्कांस्यात्कार्या ग्रहाः क्रमात् ॥ स्ववर्णैर्वा पटे लेख्या गंधैर्मंडलकेषु वा । ( सूर्यादीनां मूर्तयस्ताम्रादिभिर्यथाक्रमं कार्याः । तदलाभे स्ववर्णैर्वर्णकैः पटे लेख्या मंडलकेषु वा गंधैरक्तचंनादिभिर्यथावर्णेन लेख्या इत्यन्वयः ) " गृ० प० सुवर्णमेकमेव वा सर्वेषां । शां० म० वसिष्ठः । यथारुचिप्रमाणेन प्रतिमाः कल्पयेत्सुधीः । " मात्स्ये । पद्मासनः पद्मकरः पद्मगर्भसमद्युतिः । सप्ताऽश्वः सप्तरज्जुश्च द्विभुजः स्यात्सदा रविः ॥ १ ॥ श्वेतः श्वेतांऽबरधरो दशाऽश्वः श्वेतभूषणः । गदापाणिर्द्विबाहुश्च कर्तव्यो वरदः शशी ॥ २ ॥ रक्तमाल्यांऽबरधरः शक्तिशूलगदाधरः । चतुर्भुजो मेषगमो वरदः स्याद्धरासुतः ॥ ३ ॥ पीतमाल्यांऽबरधरः कर्णिकारसमद्युतिः । खड्गचर्मगदापाणिः सिंहस्थो वरदो बुधः ॥ ४ ॥ देवदैत्यगुरू तद्वत्पीतश्वेतौ चतुर्भुजौ । दंडिनौ वरदौ कार्यौ साऽक्षसूत्रकमंडलू ॥ ५ ॥ ६ ॥ इंद्रनीलद्युतिः शूली वरदो गृध्रवाहनः । बाणबाणासनधरः कर्तव्योऽर्कसुतः सदा ॥ ७ ॥ करालवदनः खड्गचर्मशूली वरप्रदः । नीलसिंहासनस्थश्च राहुरत्र प्रशस्यते ॥ ८ ॥ धूम्रा द्विबाहवः सर्वे गदिनो विकृताऽऽननाः । गृध्रासनगता नित्यं केतवः स्युर्वरप्रदाः ॥ ९ ॥ सर्वे किरीटिनः कार्या ग्रहा लोकहिताऽऽवहाः । स्वांऽगुलेनोच्छ्रिताः सर्वे शतमष्टोत्तरं सदा ॥ " दा० क० स्वांऽगुलं प्रतिमालब्धांऽगुलं म० म० नवग्रहसाधारणधर्मान्पादत्रयेण चतुर्थचरणेन केतुसंख्यां चाऽऽह । सर्वे किरी० । अंगुलेनो० ॥ शतमिति केतूनामानंत्यप्रदर्शनार्थं नतु नियमार्थं । पूजायां त्वेकैव मूर्तिः । शिष्टाचारात् । " स्कांदे जन्म भूर्गोत्रमग्निश्च वर्णस्थानमुखानि च । योऽज्ञात्वा कुरुते

शांतिं ग्रहास्तेनाऽवमानिताः ॥ “ शां० म० तत्र वर्णजन्मनी आह दामोदरीये वृद्धपराशरः । रक्तः कश्यपजो भानुः शुक्लो ब्रह्मसुतः शशी । रक्तो रुद्रसुतो भौमः पीतः सोमसुतो बुधः ॥ पीतो ब्राह्मः सुराचार्यः शुक्लः शुक्रो भृगूद्वहः । कृष्णः शनी रवेः पुत्रः कृष्णो राहुः प्रजापतेः ॥ कृष्णः केतुः कृशानूत्थः कृष्णाः पापास्त्रयोऽप्यमी । ” उत्पन्नोऽर्कः कलिंगेषु यमुनायां च चंद्रमाः । अंगारकस्त्ववंत्यां च मगधायां हिमांशुजः ॥ सैंधवेषु गुरुर्जातः शुक्रो भोजकटे तथा । शनैश्वरस्तु सौराष्ट्रे राहुर्वै राठिनापुरे ॥ अंतर्वेद्यां तथा केतुरित्येता ग्रहभूमयः । आदित्यः काश्यपे गोत्रे आत्रेयश्चंद्रमा भवेत् ॥ भारद्वाजो भवेद्भौमस्तथाऽऽत्रेयश्च सोमजः । गुरुश्चैवांऽगिरोगोत्रः शुक्रो वै भार्गवस्तथा ॥ शनिः काश्यप एवाऽथ राहुः पैठीनसिस्तथा । केतवो जैमिनीयाश्च ग्रहाग्निस्तदनंतरं ॥ आदित्ये पिंगलो नाम पिंगलः सोम उच्यते । धूमकेतुस्तथा भौमे जठराग्निर्बुधे स्मृतः ॥ गुरौ चैव शिखी नाम शुक्रे भवति हाटकः । शनैश्चरे महातेजा राहुकेत्वोर्हुताशनः ॥ भास्करांऽगारकौ रक्तौ शुक्लौ शुक्रनिशाकरौ । सोमपुत्रो गुरुश्चैव तावुभौ पीतकौ स्मृतौ ॥ कृष्णं शनैश्चरं विद्याद्राहुं चित्राश्च केतवः । गोभिलेन तु । ब्राह्मणौ भार्गवाऽचार्यौ क्षत्रियावर्कलोहितौ । वैश्यौ सोमबुधौ ज्ञेयौ शेषान् शूद्रान्विनिर्दिशेदिति वर्णा उक्ताः । स्कांदे । मध्ये तु भास्करं विद्याच्छशिनं पूर्वदक्षिणे । दक्षिणे लोहितं विद्याद्बुधं पूर्वोत्तरेण तु ॥ उत्तरेण गुरुं विद्यात्पूर्वेणैव तु भार्गवं । (सप्तम्यर्थे तृतीया) पश्चिमे तु शनिं विद्याद्राहुं दक्षिणपश्चिमे ॥ पश्चिमोत्तरतः केतून् स्थापयेच्छुक्लतंडुलैः । “ म० म० शुक्लतंडुलैर्ग्रहस्थापनप्रदेशं स्थंडिलं वेदिं वा परिपूर्य तेषामुपरि तत्तद्वर्णतंडुलैरुपलक्षितेषु प्रदेशेष्वादित्यादीन्ग्रहान् स्वस्वाऽऽयतनाऽनतिक्रमेण स्थापयेत् । अथवा तत्तद्वर्णतंडुलोपलक्षितेषु प्रदेशेषु ग्रहप्रतिमा निधाय पश्चाच्छुक्लतंडुलैः कृत्वा स्थापयेत् । ” अथवा वर्णकैः कार्याः कार्याः स्वर्णादिधातुभिः ॥ शुक्राऽर्कौ प्राङ्मुखौ ज्ञेयौ गुरुसौम्यावुदङ्मुखौ । प्रत्यङ्मुखः शनिः

सोमः शेषा दक्षिणतोमुखाः ॥ प्राङ्मुखौ ऊर्ध्वदृष्टी । उदङ्मुखौ वामदृष्टी । प्रत्यङ्मुखावधोदृष्टी । दक्षिणतोमुखा दक्षिणदृष्टयः । आदि त्याऽभिमुखा इति मात्स्योक्तेरिति हेमाद्रिः । " शां० म० यत्तु हेमाद्रिर्विकल्पपरिजिहीर्षया प्राङ्मुखावूर्ध्वदृष्टी इत्यादि व्याचष्ट । तत्र मूलं चिंत्यं विरोधतादवस्थ्यं च । " विकल्प इति तु युक्तं ( मयूखेऽप्येवं ) वर्णरूपगुणैर्युक्तान्व्यात्दत्याऽऽवाहयेत्तु तान् । ग्रहमंडलानि स्कांदे । भानुं तु मंडलाकारं सोमं तु चतुरस्रकं । अंगारकं त्रिकोणं तु बुधं बाणाकृतिं तथा । गुरुं तु पट्टिशाकारं [दीर्घं गुरुं चतुरस्रं] ( पट्टिशं आयुधविशेषः । धोप इति भाषायां ) पंचाऽस्रं भार्गवं तथा । धनुस्तुल्यं शनिं विद्याद्राहुं शूर्पाकृतिं तथा ॥ध्वजाऽऽकाराः केतवः स्युर्गणेशं तत्र रूपिणं । " म० म० अत्र भान्वादिशब्दैस्तत्तद्दर्णाऽक्षतविरचितानि ग्रहाऽऽयतनानि वर्तुलचतुरस्रादीनि धिष्ण्यानि लक्ष्यंते । तथा सूर्यादिमूर्त्युल्लेखनाऽधिकरणानि ताम्रादिनिर्मितानि वर्तुलादीनि वस्तून्यपि । गोभिलीयनवग्रहे । द्वादशांऽगुलं लिखेदर्कं सोमं तद्द्विगुणं लिखेत् । भृगुं नवांऽगुलं चैव गुरुं चैव षडंगुलं ॥ बुधं भूमिसुतं सौरिं चतुस्त्रिद्व्यंगुलं लिखेत् । सोमादर्धाऽगुलं राहुं केतुं चैव षडंगुलं ॥ शां० म० रूपिणं हस्तपादाद्यवयवोपेतं । स्थापयेच्छुक्लतंडुलैर्वर्णकैर्लेख्याइत्येतत्पक्षयोर्मंडलाद्याकारतेति हेमाद्रिः । " तत्तद्दर्णमंडलेषु ताम्रादिप्रतिमासु तंडुलैः स्थापयेदित्यर्थः । मंडलमूर्त्योर्विकल्प इति हेमाद्रिः । " ल० आ० । ऋष्यादि सर्वं विज्ञाय जपेदर्चेद्धुनेद्बुधः । नाऽन्यथा सिद्धिमाप्नोति कामेच्छुरपि यत्नवान् ॥ " ग्रहमंत्रानाह याज्ञवल्क्यः । आकृष्णेन इमं देवा अग्निर्मूर्धा दिवः ककुत् । उद्बुध्यस्वेति च ऋचो यथासंख्यं प्रकीर्तिताः ॥ बृहस्पते अतियदर्यस्तथैवाऽन्नात्परिस्रुतः । शंनोदेवीस्तथाकांडात्केतुं कृण्वन्निमास्तथा ॥ स्कांदे तु कयान इति राहोश्चेत्युक्तं । मात्स्ये त्वन्ये उक्ताः । अग्निं दूतं दिनेशाय सोमायाऽप्स्वग्न इत्यपि । स्योनापृथिवि भौमाय इदं विष्णुर्बुधाय च ॥ इंद्र आसां सुरेज्याय शुक्रं ज्योतिः

सिताय च । प्रजापतेति सौराय आयंगौरिति राहवे ॥ केतवे ब्रह्मजज्ञानं स्वैः स्वैर्मंत्रैः प्रतिष्ठिताः । " शां० म० विष्णुधर्मोत्तरे । अतःपरं प्रवक्ष्यामि यो देवो यो ग्रहः स्मृतः । अग्निरर्कः स्मृतः सोमो वरुणः परिकीर्तितः ॥ अंगारकः कुमारश्च बुधश्च भगवान् हरिः । बृहस्पतिः स्मृतः शक्रः शुक्रो देवी च पार्वती ॥ प्रजापतिः शनिश्चैव राहुर्ज्ञेयो गणाऽधिपः । विश्वकर्मा स्मृतः केतुर्ये ग्रहास्ते सुराः स्मृताः ॥ अतएवाऽग्न्यादिलिंगका मंत्राः सूर्यादिस्थापने उक्ताः " । अन्यार्थानामपि मंत्राणां वचनात्त्वयथार्थमैंद्रीस्यादिति न्यायेन विनियोगः । " म० म० विनियोगो नाम संबंधः । सचांऽगांगिभावरूपः । एकस्यैव मंत्रस्य विधिबलादनेकेषु सजातीयेषु विजातीयेषु च कर्मस्वंगत्वमस्ति । अतो यस्मिन्कर्मणि यदांऽगभावं भजते तदा तस्मिन्कर्मणि विनियोगो ज्ञेयः " होमेऽप्येत एव । ( व्याहृत्याऽऽवाहयेत्तुतान् इत्युक्त्या एभिर्मंत्रैर्व्याहृतिभिर्वाऽऽवाहनं कार्यं ) " म० पा० व्याहृतिभिरावाहनं मंत्रैः स्थापनं । प्र० पा० प्रणवंत्वादितः कृत्वा भूर्भुवःस्वस्ततः परं । चतुर्थ्यानामसंयुक्तं नमस्कारांतयोजितं ॥ एष मंत्रः समाख्यातो ग्रहपूजाविधायकः । अनेनाऽऽवाहनं कुर्यादनेनैव विसर्जनमित्यूचे वामनः " अधिदेवताः स्कांदे । सूर्यस्य चोत्तरे शंभुमुमां सोमस्य दक्षिणे । स्कंदमंगारकाच्चैव दक्षिणस्यां निवेशयेत् ॥ सौम्यात्पश्चिमतो विष्णुं ब्रह्मा जीवस्य पूर्वतः । इंद्रमैंद्र्यां सिताद्दिद्धि मंदस्याऽऽग्नेयतो यमं ॥ राहोः पूर्वोत्तरे कालं सर्वभूतभयावहं । केतोर्निर्ऋतिदिग्भागे चित्रगुप्तं निधापयेत् ॥ ईश्वरं त्र्यंबकं चेति श्रीश्च ते इति पार्वतीं । यदक्रंदेति च स्कंदं विष्णुं विष्णोरराटतः ॥ आब्रह्मन्निति ब्रह्माणं सजोषा इंद्रवासवं । यमायत्वेति च यमं कालं कार्षिरसीति च ॥ चित्रावस्विति मंत्रेण चित्रगुप्तं निधापयेत् । अग्निरापः क्षितिर्विष्णुरिंद्रेंद्राणी प्रजापतिः ॥ सर्पा ब्रह्मा च निर्दिष्टा अधिदेवा यथाक्रमं । अग्निं दूतमितिह्यग्नेर्वरुणस्य उदुत्तमं ॥ स्योनापृथिविमेदिन्यां इदं विष्णुस्तु विष्णवे । इंद्रायेंदो इतींद्रस्योत्तानपर्णे

शचीस्थितौ ॥ प्रजापते प्रजेशस्य एष ब्रह्मेति वै विधेः । मंत्रो नमोऽस्तु सर्पेभ्यः सर्पाणां स्थापने मतः ॥ " शां० म० अत्र सूर्यादयो ग्रहा ईश्वरादयो देवा अग्न्यादयोऽधिदेवाः । तत्रेश्वरादिदेवानां सूर्यस्यैवोत्तरेशंभुमित्यादिना पूर्वं स्थलान्युक्तानि । अग्न्याद्यधिदेवास्तु ग्रहदेवयोर्मध्ये स्थाप्याः । तथा च मदनरत्ने गोभिलवसिष्ठौ । ग्रहदेवतयोर्मध्ये अधिदेवान्निवेशयेत् । " गोभिलवसिष्ठौ । ग्रहदेवतयोर्मध्ये अधिदेवान्निवेशयेत् । मदनरत्ने संग्रहे तु । अधिदेवा दक्षिणतो वामे प्रत्यधिदेवताः । स्थापनीयाः प्रयत्नेन व्याहृतिभिः पृथक् पृथक् ॥ उत्पलपरिमले । ग्रहस्य दक्षिणे पार्श्वे स्थापयेदधिदेवतां । ग्रहस्योत्तरपार्श्वे तु न्यसेत्प्रत्यधिदेवतां ॥ वासिष्ठ्यां त्वन्यथोक्तं । रुद्रं त्र्यंबकमंत्रेण रवेरुत्तरतो न्यसेत् । सोमस्याऽऽग्नेयदिग्भागे श्रीश्च ते मेनकात्मजां ॥ यदक्रंदेति भौमस्य स्कंदं याम्ये प्रपूजयेत् ॥ विष्णुं विष्णोरराटेति यजेत्पूर्वे बुधस्य च ॥ गुरोरुत्तरतः स्थाप्यो ब्रह्मा ब्रह्मेति मंत्रतः । सजोषेंद्रेति शुक्रस्य प्राच्यां शक्रं निधापयेत् ॥ शनेः पश्चिमतः स्थाप्यो यमाय त्वेत्यृचा यमः । कार्षिरसीति मंत्रेण राहोः कालं तथोत्तरे ॥ चित्रगुप्तं तु केतूनां चित्रावस्विति नैर्ऋते । ग्रहदेवतयोर्मध्ये अधिदेवान्निवेशयेत् । " शां० म० एतानि च वासिष्ठीयवचांसि कैश्चिन्नाऽऽद्रियंते " मात्स्ये । विनायकं तथा दुर्गां वायुमाकाशमेव च । आवाहयेद्व्याहृतिभिस्तथैवाऽश्विकुमारकौ ॥ मदनरत्ने स्कांदे । उत्तरे शनिसूर्याभ्यां गुरोः केतोश्च दक्षिणे । विनायकं प्रतिष्ठाप्य सर्वदेवनमस्कृतं ॥ तत्रैव संग्रहे । राहुमंददिनेशानामुत्तरस्यां यथाक्रमं । गणेशदुर्गावायूंश्च राहुकेत्वोस्तु दक्षिणे ॥ आकाशमश्विनौ चेति पंचैतान्स्थापयेद्बुधः । " शां० म० एते पंच ग्रहेभ्य उत्तरतः स्थाप्या इति सांप्रदायिकाः । दक्षिणपश्चिमवायव्योत्तरपूर्वेषु यथाक्रममित्यन्ये । राहुमंददिनेशानामित्यादिसंग्रहवचनाऽनुसारेणेति पितामहचरणाः । रूपनारायणश्च । स्कांदे । उत्तरे शनिसूर्याभ्यां गुरु-

केत्वोश्च दक्षिणे । गणाधिपं प्रतिष्ठाप्य सर्वदेवनमस्कृतं ॥ रविशनिकेतुगुरूणां मध्य इति फलितोऽर्थः । विनायकपदमुपलक्षणं । तेन दुर्गादयोऽप्यत्रैव स्थाप्या इति केचित् । " म० र० अस्मिन्पक्षे विनायकं परितो दुर्गादीनामावाहनं ।" वसिष्ठः । विनायकं गणानां त्वा दुर्गां वै जातवेदसे । वायोयेते तथा वायुं घृतं घृतेति चांऽबरं ॥ यावांकशेति संपूज्यौ द्वावप्येतौ ततोऽश्विनौ । शौनकः । क्षेत्रस्य पतिना क्षेत्रपालं भूजोत्तरे न्यसेत् । भूजो भौमः । अत्र मंत्राणां वाचनिकत्वेऽपि स्वशाखीयैस्तत्तत्प्रकाशकैरावाहनादि कार्यं । संहितायां तु ये मंत्रास्तद्देवत्याः श्रुतौ स्मृताः । तैः पूजा लोकपालानां कर्तव्या तु समंतत इति हेमाद्रौ गारुडस्योपलक्षणार्थत्वादिति केचिदाहुः । गोभिलीये । द्वात्रिंशद्देवताः स्थाप्या दिशां पालाश्च दिग्गताः । " शां० म० प्रयोगपारिजाते । पद्मप्राग्दलमारभ्य दलाऽग्रेषु क्रमान्न्यसेत् । इंद्रादिलोकपालांश्च तत्तन्मंत्रैः प्रपूजयेत् ॥ तत्तन्मंत्रैर्जपं कुर्यात्ततो होमं समाचरेत् । शां० सा० वसिष्ठसंहितायामपि इंद्रादिपूजोक्ता । लोकपालक्षेत्रपालादीनां चाऽऽवाहनमनित्यं । द्वात्रिंशदिति मात्स्योक्तेः । केवलग्रहमखे त्वधिदेवतादीनामप्यनित्यं । याज्ञवल्क्यादिभिरनुक्तेः"। याज्ञवल्क्यः । यथावर्णं प्रदेयानि वासांसि कुसुमानि च । गंधाश्च बलयश्चैव धूपो देयश्च गुग्गुलुः ॥ स्कांदे । दिवाकरकुजाभ्यां हि दापयेद्रक्तचंदनं। चंद्रे च भार्गवे चैव सितवर्णं प्रदापयेत् ॥ कुंकुमेन तु संयुक्तं चंदनं जीवसौम्ययोः । अगुरुं चंदनं दद्याद्राहुकेत्वर्कजेषु च ॥ ग्रहवर्णानि पुष्पाणि गायत्र्या धूपमादहेत् [हरेत्] । रवेः कुंदुरुकं धूपं शशिनस्तु घृताऽक्षतान्।भौमे सर्जरसं चैव अगुरुश्च बुधे स्मृतः ॥ सिह्लकं गुरवे दद्याच्छुक्रे बिल्वाऽगुरुं तथा । गुग्गुलुं मंदचारे तु लाक्षां राहोश्च केतवे ॥ " म० म० कुंदुरुकं शल्लकी-निर्यासः कवड्याऊद इति ख्यातः । सर्जरसः राळ इति भाषायां। सिह्लकं सिल्हा इति मध्यदेशे प्रसिद्धं । बिल्वाऽगुरुं बिल्वफलमज्जासहितमगुरुं । मंदचारः शनिः । शां०म०उप-

चाराश्च सर्वेषामपि शुक्लाऽक्षतैः सदा। गंधाऽभावे शुक्लगंधं पुष्पाऽभावे सुगंधकं ॥ धूपाऽभावे गुग्गुलुः स्याद्रव्याऽभावे तु मिश्रकं। पंचामृतं गवामेव मिश्रकं न कदाचन ॥ " उद्दीप्यस्वेतिमंत्रेण दीपं दद्यादतंद्रितः " गृ० प० सर्पिषा दीपस्तिलतैलेन वा। वि० मा०। नववर्तियुतं दीपं घृतेन परिपूरितं। ग्रहाणामग्रतः कुर्यात्तेजोऽस्येतेन मंत्रितं। " गुडौदनं रवेर्दद्यात्सोमाय घृतपायसं। लोहिताय हविष्यान्नं बुधाय क्षीरषाष्टिकं ॥ दध्योदनं गुरोर्दद्याच्छुक्राय च घृतौदनं। मिश्रितं तिलमाषैश्च नैवेद्यं तु शनैश्चरे ॥ राहोर्मांसौदनं दद्यात्केतोश्चित्रौदनं तथा " शां० म०। तिलतंडुलमिश्रं स्यादजाक्षीरं च शोणितं। कर्णनासागृहीतं स्यादेतच्चित्रौदनं स्मृतमिति दामोदरः। म० म० पूर्वोक्तविविधनैवेद्याऽभावे यथालाभमोदनादि निवेदयेत्। एवमधिदेवतादीनां। विनाकस्यतु मोदकसहितमोदनादि। वि० मा० द्राक्षेक्षुपूगनारंगजंबीरं बीजपूरकं। खर्जूरीनालिकेरं च दाडिमं च यथाक्रमं ॥ मात्स्ये तुअंगारकाय संयावमित्युक्तं। ग्रहदेवाऽधिदेवानां नैवेद्यं कुसुमानिच ग्रहवच्चाऽऽसनं दानं स्थापनं चाऽनुपूर्वशः ॥ निवेदयित्वाऽऽहुतिभिर्होमं कुर्यादतंद्रितः। अत्र विशेषो मत्कृते दानकमलाकरे ज्ञेयः। मात्स्ये। धूपो देयोऽत्र सुरभिरुपरिष्टाद्वितानकं। शोभनं कल्पयेत्प्राज्ञः फलपुष्पसमन्वितं ॥ विनायकलोकपालादीनां तूत्पलपरिमले। सर्वेषां लोकपालानां चंदनं च विलेपनं। शतपत्राणि पुष्पाणि दद्याद्गुग्गुलुधूपकं ॥ दीपं गोघृतसंयुक्तं नैवेद्यं च घृतौदनं। मात्स्ये। प्रागुत्तरेण तस्माच्च दध्यक्षतविभूषितं। चूतपल्लवसंयुक्तं फलवस्त्रयुगान्वितं ॥ पंचरत्नसमायुक्तं पंचभंग [ त्वच ] युतं तथा। " दा० क०। अश्वत्थोदुंबरप्लक्षचूतन्यग्रोधपल्लवाः। पंचभंगा इमे प्रोक्ताः सर्वकर्मसु शोभनाः ॥ " स्थापयेदव्रणं कुंभं वरुणं तत्र विन्यसेत् ॥ " म०म० अक्षतानामुपरि स्थापयेत् " गंगाद्याः सरितः सर्वाः समुद्राश्च सरांसि च। गजाऽश्वरथ्यावल्मीकसंगमह्रदगोकुलात् ॥ मृद-

मानीय विप्रेंद्र सर्वौषधिसमन्वितां । स्नानार्थं विन्यसेत्तत्र यजमानस्य धर्मवित् ॥ मात्स्ययाज्ञवल्क्यौ । कर्तव्या मंत्रवंतश्च चरवः प्रतिदैवतं । नानाश्रपयेत्समोप्यवेति गृह्यसूत्रवचनात्सह पृथग्वा श्रपयेत् । “ल० शौ० । तिर्यगूर्ध्वं समिन्मात्रा दृढा नाऽतिबृहन्मुखी । मृन्मय्यौदुंबरी वाऽपि चरुस्थाली प्रशस्यते ॥ (औदुंबरी ताम्रमयी॥कांस्यमय्यपि क्वचिदुक्ता)” म० म० केचन गृहपाकादोदनमुद्धृत्य ग्रहादीनुद्दिश्य जुह्वति तत्र शिष्टाचार एव प्रमाणं।” हेमाद्रौ देवीपुराणे । गणाधिपतये देया प्रथमा तु वराहुतिः । अन्यथा विफलं विप्र भवतीह न संशयः ॥ “शां० सा० । म० म० स्वत्वत्यागस्य याजमानिकत्वायुगपदनेकर्त्विक्साध्ये कर्मणि प्रत्याहुति त्यागस्य कर्तुमशक्यत्वाच्च सर्वदेवता उद्दिश्य सर्वद्रव्याणि च निर्दिश्य सकृत्त्यागः कार्यः । ” याज्ञवल्क्यः । अर्कः पलाशखदिरावपामार्गोऽथ पिप्पलः । उदुंबरः शमी दूर्वा कुशाश्च समिधः क्रमात् ॥ “ ल० शौ० । अलाभे तु प्रकर्तव्याः सर्वाः पालाशवृक्षजाः । आर्द्रा पक्वां समच्छेदां तर्जन्यंगुलिवर्तुलां ॥ होमयेदीदृशीं प्राज्ञः प्राप्नोति विपुलां श्रियं । दा० क० नांऽगुष्ठादधिका ग्राह्या समित्स्थूलतया क्वचित् । प्रादेशान्नाऽधिका नोना तथास्याच्च विशाखिका ॥” एकैकस्य त्वष्टशतमष्टाविंशतिरेव वा । होतव्या मधुसर्पिर्भ्यां दध्ना क्षीरेण वा युताः ॥ “ म० म० मात्स्ये दध्ना चैव समन्विता इत्यनेन वचनेन मध्वाज्यदध्नां समिदंजने समुच्चयोऽवगम्यते । याज्ञवल्क्यस्तु दध्ना क्षीरेण वा युता इति विकल्पमाह । तेन स्मृतिपुराणयोः स्मृतेः प्राबल्यात्पुराणवाक्यस्थश्चशब्दो वाशब्दार्थो ग्राह्यः । तथाच मध्वादीनि समिदंजने विकल्पितानि । शां० म० नचाऽत्र संप्रतिपन्नदेवताकाऽनेकद्रव्याणामेकैवाऽऽहुतिः सांनाय्यवदिति वाच्यं । आदौ तु समिदन्नाज्यैः पृथगष्टोत्तरं शतमिति वासिष्ठात् । अन्यत्राऽपि संप्रतिपन्नदेवताके स्मार्ते कर्मण्यनेकद्रव्यके पृथगेव होम इति सांप्रदायिकाः । बहुषु कर्मसु प्रायो वचनान्यप्येवं । ” प्रादेशमात्राः समिधो ह्यशाखा अपलाशिनीः । ( पत्ररहिताः) । देवानामपि सर्वेषामुपांशु पर-

मार्थवत् ॥ स्वेन स्वेनैव मंत्रेण होतव्याः समिधः क्रमात् । होतव्यं च घृतं ह्यत्र चरुभक्ष्यादिकं ततः । "दा० क० वायवीये । दानं प्रतिग्रहो होमो भोजनं बलिरेव च । सांऽगुष्ठेन सदा कार्यमसुरेभ्योऽन्यथा भवेत् ॥ अंगुष्ठसहितांऽगुलिभिरित्यर्थः ।" स्कांदे स्थापनमंत्रा एव होममंत्रा उक्ताः । अधिदेवानां चैवं । वासिष्ठयामपि । शेषाणां स्थापने मंत्रैर्होमो व्याहृतिभिस्तिलैः । ( स्थापने ये मंत्रास्तैरित्यर्थः ) मात्स्ये त्वधिदेवतादीनामन्ये मंत्रा उक्ताः । ( अत्र मात्स्ये ग्रहाणामप्यन्ये मंत्रा उपलभ्यंते । तेचेत्थं । आकृष्णेनेति सूर्याय होमः कार्यो द्विजन्मना । आप्यायस्वेति सोमाय मंत्रेण जुहुयात्पुनः ॥ अग्निर्मूर्धादिव इति मंत्रं भौमाय कीर्तयेत् । अग्नेविवस्वदुषस इति सोमसुताय वै ॥ बृहस्पतेपरिदीया रथेनेति गुरोर्मतः । शुक्रंतेअन्यदिति च शुक्रस्याऽपि निगद्यते ॥ शनैश्चराय तु पुनः शंनोदेवीति होमयेत् । कयानश्चित्रआभुवदिति राहोरुदाहृतः ॥ केतुं कृण्वन्निति ब्रूयात्केतूनामपि शांतये इति । महार्णवेऽप्येते श्लोका उक्ताः । तत्र तु उद्बुध्यस्वाग्नइति बुधस्य । बृहस्पतेअतियदर्य इति गुरोः । अन्नात्परिस्रुत इति च शुक्रस्येत्येवं पाठभेदो दृश्यते । विधानमालायां वसिष्ठेन तु । आकृष्णेनाऽऽप्यायस्वाऽग्निर्मूर्धोद्बुध्यध्वं बृहस्पतेअति शुक्रःशुशुक्वान् शमग्निः कयानश्चित्रः केतुंकृण्वन्नित्यर्कादीनां । त्र्यंबकं गौरीर्मिमाय यदक्रंदो विष्णोर्नुकं ब्रह्मजज्ञानमिंद्रंवो यमाय सोमं मोषुण उषोवाजमित्यधिदेवानां । अग्निंदूतमप्सुमे स्योनापृथिवीदंविष्णुरिंद्रश्रेष्ठानींद्राणीमासु प्रजापत आयंगौर्ब्रह्मजज्ञानमिति प्रत्यधिदेवानां । गणानांत्वा जातवेदसे तववायवादित्प्रत्नस्यैषोउषाः क्षेत्रस्यपतिनेति कर्मसाद्गुण्यदेवतानां । इंद्रंविश्वा अग्निंदूतं यमायसोमं मोषुणस्त्वंनोअग्ने तववायो सोमोधेनुं तमीशानमिति च लोकपालानां क्रमेण मंत्रा उक्ताः ) । आवोराजेति रुद्रस्य बलिं होमं समाचरेत् । आपोहिष्ठेत्युमायाश्च स्योनेति स्वामिनस्तथा ॥ विष्णोरिदंविष्णुरिति तमीशेति स्वयंभुवः । इंद्रमिदेवतातय इंद्राय जुहुयात्पुनः ॥ तथा यमस्य चाऽऽयंगौरिति होमः प्र-

कीर्तितः । कालस्य ब्रह्मजज्ञानमिति मंत्रः प्रशस्यते ॥ चित्रगुप्तस्य चाऽऽज्ञातमिति वेदविदो विदुः । अग्निदूतंवृणीमह इति वह्नेरुदाहृतः ॥ उदुत्तमंवरुणेति त्वपां मंत्रः प्रकीर्तितः । भूमेः पृथिव्यंतरिक्षमिति वेदेषु पठ्यते ॥ सहस्रशीर्षापुरुष इति विष्णोरुदाहृतः । इंद्रायेंदोमरुत्वत इति शक्रस्य शस्यते ॥ उत्तानपर्णेसुभग इति शच्याः प्रशस्यते । प्रजापतेः पुनर्होमः प्रजापतिरिति स्मृतः ॥ नमोस्तु सर्पेभ्य इति सर्पाणां मंत्र उच्यते । एषब्रह्मायऋत्विय इति ब्रह्मण्युदाहृतः ॥ विनायकस्य चाऽऽतून इति मंत्रो बुधैः स्मृतः । जातवेदसेसुनवाम दुर्गामंत्रोऽय मुच्यते ॥ आदित्प्रत्नस्यरेतस आकाशस्य उदाहृतः । ऋाणाशिशुर्महीनां च वायोर्मंत्रः प्रकीर्तितः ॥ एषोउषा अपूर्व्येति अश्विनोर्मंत्र उच्यते ॥ स्कांदे । नैवेद्यशेषं हुत्वा तु होममंत्रादनंतरं । अथ व्याहृतिभिर्हुत्वा एकैकस्य यथाक्रमं ॥ अष्टोत्तरं च साहस्रं शतमष्टाधिकं तथा । अष्टाविंशतिमष्टौ वा एकैकस्य तु होमयेत् ॥ " शां० म० । होतव्यं च घृतं तत्र चरुर्लक्षादिकं पुनः । मंत्रैर्दशाऽऽहुतीर्हुत्वा होमो व्याहृतिभिः स्मृतः ॥ अथेति अथवेत्यर्थः । गृहीत्वा तामथांऽबिकामितिवत् । मदनस्तु अथवेत्येव पपाठ । तत्तन्मंत्राणां व्याहृतीनां च परस्परं विकल्पः । अष्टोत्तरसहस्रादिसंख्या तु पक्षद्वयेऽपि । नैवेद्यशेषहोमस्तु शाखाविशेषपर इत्यपि स एव । लक्षादिकः पुनर्व्याहृतिभिर्होमो मंत्रैर्दशाऽऽहुतीर्हुत्वा स्मृत इत्यन्वयः । मंत्रैर्ग्रहमंत्रैर्व्याहृतिभिर्व्यस्ताभिः समस्ताभिश्च । तातचरणास्तु अथ व्याहृतिभिर्हुत्वेति पृथग्वाक्यं । एकैकस्येति तु प्रतिदेवतमष्टादिसंख्याऽन्वयार्थं । एकैकस्य तु होमयेदित्यत्र एकैकपदं तु चर्वादिद्रव्यपरं न देवतापरं । अस्मिन्नेव होमे घृतचरुविधिरग्रे । लक्षादिक इत्येतत्तु अथव्याहृतिभिर्हुत्वेति विहिते होमे लक्षादिसंख्यासिद्ध्यर्थं । मंत्रैरित्यादि तु चरुहोमोत्तरं सोमं राजानमितिमंत्रेण यथाप्रकृति स्विष्टकृतं हुत्वा सूर्यादिमंत्रैर्दशदशाऽऽहुतीः प्रतिदैवतं लक्षहोमादिद्रव्येण हुत्वा व्याहृतिभिर्लक्षादिहोमः

कार्यइत्याहुः । यवाद्यन्यतमद्रव्येण ग्रहादिभ्यः प्रत्येकं दशाऽऽहुतीस्तत्तन्मंत्रैर्हुत्वा तेनैव द्रव्येण व्यस्तसमस्तव्याहृतीभिरयुतलक्षकोट्यन्यत-
मसंख्यया जुहुयादिति हेमाद्रिमदनौ । तानि च द्रव्याणि देवीपुराणे । यवव्रीहिघृतक्षीरतिलकंगुप्रसारिकाः । पंकजोशीरबिल्वाऽर्क-
दला होमे प्रकीर्तिताः ॥ सं० कौ० दशसंख्या प्रागुक्ताऽष्टोत्तरसहस्रादिसंख्याभिर्विकल्पत इत्युक्तं । " नैवेद्यशेषहोमः केषां चिन्मते
हेमाद्रौ । ततोऽवदानधर्मेण स्रुचैव जुहुयाच्चरुं । घृताक्ताऽर्कसमिद्भिश्च स्रुवेणाऽऽज्यं च होमयेत् ॥ आकृष्णेनेति मंत्रेण तिलान्व्याहृ-
तिभिर्हुनेत् । चरुणा च समिद्भिश्च सर्पिषा च तिलैः क्रमात् ॥ तत्तन्मंत्रैश्च होतव्याः क्रमात्तदधिदेवताः । तेन चरोः प्रत्याहुत्यवदानध-
र्मः । केचिद्धस्तेन होममाहुस्तच्चिंत्यं । मात्स्ये । होतव्यं च समित्सर्पिश्चरुभक्ष्यादिकं ततः । " शां० सा० स्कांदे । अष्टोत्तरं च साहस्रं
शतमष्टाऽधिकं तथा । अष्टाविंशतिमष्टौ वा एकैकस्य तु होमयेत् ॥ वसिष्ठः । आदौ तु समिदन्नाऽऽज्यैः पृथगष्टोत्तरं शतं । इयं च संख्या
द्विविधेऽपि ग्रहमखे । प्रधानदेवतानां विशेषपरत्वे प्रमाणाऽभावात् । चरौ तु एकाऽऽहुतिपक्षोऽपि मात्स्ययाज्ञवल्क्याभ्यामुभयत्रोक्तः ।
' ल० शौ० एकैकाहुतिराज्यस्य एकैका च चरोस्तथा । स्वकीयेन च मंत्रेण देया चैव ग्रहान्प्रति ॥ मध्वाज्यक्षीरसंयुक्तान् सयवान्
जुहुयात्तिलान् । ' अधिदेवतादीनां संख्या गृह्यपरिशिष्टे पारिजाते । प्रधानदशांशेन पार्श्वदेवतयोरिति । वासिष्ठे तु । द्वित्राश्चैवाऽधिदेवत्याः
पंचानां चैव पंचधा । द्वित्राः द्वे तिस्रो वेत्यर्थः । मयूखे तु द्वित्राः पंचेत्युक्तं । पंचानां गणेशादीनां पंचधा एकैकेत्यर्थः । पंच पंचेत्यर्थ इति-
केचित् । म० म० अधिदेवतादीनां प्रत्येकं तिस्रस्तिस्र एकैकां वा दद्यात् । आसां च समिधः पालाश्य एव । " होमं समारभेत्सर्पिर्य-
वव्रीहितिलादिभिः । मंत्रैर्दशाऽऽहुतीर्हुत्वा होमं व्याहृतिभिस्ततः ॥ उदङ्मुखाः प्राङ्मुखा वा कुर्युर्ब्राह्मणपुंगवाः ॥ अत्र व्याहृतिभिरिति

हृंहाऽपवादैकशेषाऽवगतसाहित्यबहुत्वयोरुपादेयगतत्वात् सर्वव्यात्हृतिभिरेकाऽऽहुतिरित्येव युक्तं । हेमाद्रौ भविष्योत्तरेऽपि । होमो व्याहृतिभिश्चैव सर्वस्तत्र विधीयते । " शां० म० नृसिंहपुराणे । ततो व्याहृतिभिः पश्चाज्जुहुयाच्च तिलादिकं । यावत्प्रपूर्यते संख्या लक्षं वा कोटिरेव वा । वाशब्दादयुतमपि । " भक्ष्यादिकं नैवेद्यशेषं हुत्वा तत्तद्ग्रहमंत्रैरयुतहोमीयतिलादिद्रव्येण प्रत्येकं दशाहुतीर्हुत्वा प्रणवादिभूरादिव्याहृतिभिर्व्यस्ताभिस्तिस्रः समस्ताभिश्चैकेत्येवमावृत्त्याऽयुतलक्षहोमादिसंख्या पूरणीयेति हेमाद्रौ मदनरत्ने चोक्तं । एवं विभागे मूलं तु न विद्मः । तत्त्वं तु तिसृभिर्व्याहृतिभिरेकाऽऽहुतिरित्येवं सर्वो होम इति प्रतिभाति । तदुक्तं हेमाद्रौ भविष्ये । भूर्भुवःस्वस्तथा स्वाहा लक्षहोमविधिः स्मृत इति । हेमाद्रिस्तु पूर्वाऽपरविरोधान्न्यायविरोधाच्च भ्रांत एव । " शां० सा० अयुतादिहोमे च ऋत्विज एव कर्तार इति कश्चित् । तन्न । ऋत्विग्द्वयपक्षे आचार्यस्यैव होमकर्तृत्वात् । " मात्स्ये । पूर्णाहुतिं च मूर्धानं दिव इत्यभिपातयेत् । अग्निपुराणे । मूर्धानं दिवमंत्रेण संस्रवेण च धारया । दद्यादुत्थाय पूर्णां वै नोपविश्य कदाचन ॥ महार्णवे तु मूर्धानं पुनस्त्वादित्याः पूर्णादर्वि सप्ततेअग्ने इति पूर्णाहुतौ चत्वारो मंत्रा उक्ताः ॥ " शां० म० वसिष्ठः । मंत्रेण सप्ततेअग्न इति पूर्णाहुतिं चरेत् । अत्र भिन्नशाखागतैकादशद्वादशकपालभेदेऽप्यैंद्राग्नैक्यवदनेकमंत्रयुक्ताया अनेकस्मृत्युक्ताया अपि पूर्णाहुतेरेकत्वान्मंत्राणां विकल्पः । उपांशुयाजने च शाखाभेदेन भिन्नानां याज्याऽनुवाक्यानां समुच्चयेन तु पठंति । वसोर्धारा त्वयुतहोमे नास्ति । प्रमाणाऽभावात् ॥ वि० मा० चंदनेनाऽनुलिप्तांऽतौ कृत्वा दर्वीस्रुवौ शुभौ । वामहस्ते धृतां दर्वीमाज्येनैवाऽभिघारयेत् ॥ पूर्णाहुतिं ततः कुर्याद्घृतेनाऽच्छिन्नधारया । निविष्टः प्राङ्मुखः कर्ता शांतात्मा च हुताऽनलः॥ " ( निविष्टः स्थिरः ) मात्स्ये । अथाऽभिषेकमंत्रेण वाद्यमंगलगीतकैः । पूर्णकुंभेन तेनैव होमांते प्रागुदङ्मुखैः ॥ अव्यंगाऽवयवैर्ब्रह्मन् हेमस्रग्दाम-

भूषितैः । यजमानस्य कर्तव्यं चतुर्भिः स्नपनं द्विजैः ॥ "म० म० अभिषेकमंत्रेणेत्येकवचनं मंत्रत्वोपाध्यभिप्रायेण । वाद्यमंगलगीतकैरिति सहाऽर्थे तृतीया । कुंभेन तेनैवेति । तेन पूर्वमीशानदिग्भागस्थापितेन । एवकारेण कलशांऽतरेण तदुदकं नीत्वाऽभिषेको निषिध्यते । प्रागुदङ्मुखैरिति स्नपनकर्तृद्विजविशेषणं । अत्राऽयमाशयः । यदि यजमानः प्राङ्मुखस्तर्हि ऋत्विज उदङ्मुखा ईशानदिङ्मुखा वा । अथ यजमान उदङ्मुखस्तदा ऋत्विजः प्राङ्मुखा ईशानदिङ्मुखा वेति । कुतः । दिक्त्रयस्याऽपि मांगलिकत्वात् । चतुर्भिरित्येतच्च वृतर्त्विगुपलक्षणार्थं । अत्र च वैदिका मंत्राः स्वस्वशाखोक्ता ग्राह्याः । स्मार्तास्तु सुरास्त्वामित्यादयः । शां० म० वसिष्ठः । स्वस्तिकं कल्पयेत्पश्चात् कुंडस्यैशानभागतः । यजमानाऽभिषेकार्थं तत्र भद्रासनं न्यसेत् ॥ प्राङ्मुखस्योपविष्टस्य यजमानस्य तत्र ते । अभिषेकं ततः कुर्युः साचार्याः षोडशर्त्विजः ॥ वि० मा० । यज्ञकुंडात्पश्चिमतो ह्यभिषेकं समाचरेत् । आदाय रुद्रकलशं द्विजैः सार्धं ततो गुरुः ॥ उच्चार्य वारुणान्मंत्रान् जलमश्वत्थपल्लवैः । उद्धृत्योद्धृत्य सिंचेत्तं सकलत्रं सपुत्रकं ॥ आम्रोदुंबरन्यग्रोधप्लक्षा दूर्वाः समूलकाः । सपुष्पाः सकुशाः प्रोक्ता विद्वद्भिरभिषेचने ॥ ल० शौ० । कला कला हि देवानां दानवानां कला कला । विगृह्य निर्मितो येन कलशस्तेन कथ्यते ॥" तत्र सुरास्त्वामित्यादयो मंत्राः प्रयोगे वक्ष्यंते । मात्स्ये । ततः शुक्लांबरधरः शुक्लमाल्याऽनुलेपनः । सर्वौषधैः सर्वगंधैः स्नापितो विप्रपुंगवैः ॥ (स्नापित इत्यत्र स्नापितपूर्व इत्यर्थः । तेन स्नानोत्तरमेव शुक्लांबरधारणादीति बोध्यं) "म० म० । एवं स्नपयित्वा पूर्वोपकल्पितैः सर्वौषधगंधादिभिः सपत्नीकं यजमानं स्नापयेत् । सर्वौषधादिभिः स्नानं नाम तैर्मस्तकप्रभृति गात्राण्यनुलिप्य पश्चान्निर्मलोदकेन स्नानं । शां० म० । ततो मंडपमागत्य ध्यायेदग्निं ग्रहान्सुरान् । प्रत्येकं प्रतिमंत्रेण दद्यात्पुष्पांजलिं तत इति वामनः । ल० शौ० यजमानः सपत्नीको ग्रहपूजां समारभेत् । गंधादिभिर्यथावर्णैर्नामभिस्तु नमोऽन्वितैः ॥ " वसिष्ठः । ऐशान्यामाहरे-

द्रस्म स्रुचा वाऽथ स्रुवेण वा । वंदनं [अंकनं] कारयेत्तेन शिरःकंठांऽसकेषु च ॥ वासिष्ठ्यां । ततस्तस्याऽभिषिक्तस्य रक्षार्थं बलिमुत्क्षिपेत् । दिग्विदिक्षु विचित्राऽन्नैर्दीपैर्नीराजयेत्ततः ॥ प्रयोगपारिजाते वामनः । आचार्यप्रभृतिभ्यश्च ग्रहार्चनफलं ततः । समिदाज्यचरूणां च तिलहोमफलं तथा ॥ तेषां जपफलं तद्वद्गृह्णीयाज्जलपूर्वकं । ततस्तेभ्यो यथाशक्ति दातव्या दक्षिणाः पृथक् ॥ मात्स्ये । यजमानः सपत्नीक ऋत्विजस्तान् समाहितः । दक्षिणाभिः प्रयत्नेन पूजयेद्गतविस्मयः ॥ ताश्च याज्ञवल्क्येनोक्ताः । धेनुः शंखस्तथाऽनड्वान् हेम वासो हयः क्रमात् । कृष्णा गौरायसं छाग एता वै दक्षिणा नव ॥ मात्स्ये । सुवर्णेन समाः कार्या यजमानेन दक्षिणाः ॥ "शां॰ म॰ बुधप्रीत्यर्थदेयहेम्ना सह सर्वा मूल्यतः समा इति केचित् । अस्मिन्पक्षे षोडशमाषविशिष्टहेमवाचिसुवर्णपदाऽसामंजस्याऽऽपत्तेस्तादृशसुवर्णमूल्यं प्रत्येकमिति परे । बह्वल्पमूल्येषु तथा हेमाऽपि देयं । यथा सर्वाः प्रत्येकं दशमाषसुवर्णेन समा भवंतीति तु सम्यक् । म॰ म॰ सुवर्णेन समा इति । सूर्यस्य दक्षिणाधेनोर्यावता मूल्येन या या दक्षिणा न्यूना भवति तावत्तावन्मूल्यं सुवर्णं तस्यास्तस्याः पूरणाय तत्तत्समकालमेव दातव्यं । नचाऽत्र सुवर्णमंत्रः पृथक्पठनीयः । स्वमंत्रेण प्रदातव्या इति चिंतामणैदर्शनात् । एतच्चाऽल्पधनविषयं । प्रभूतधनेन तु अश्वमूल्यसमं स्वर्णं दातव्यं । गवाद्यभावेऽपि तत्तन्मूल्यं सुवर्णं दातव्यं । तत्राऽप्यल्पधनेन प्रथमोपात्तगोमूल्यं । तत्राऽप्यशक्तश्चेद्गवामभावे निष्कं स्यात्तदर्धं पादमेव वेति दिशा सर्वत्र परिकल्पनीयं । " सर्वेषामथवा गावो दातव्या हेमभूषिताः । सुवर्णमथवा दद्याद्गुरुर्वा येन तुष्यति ॥ स्वमंत्रेण प्रदातव्याः सर्वाः सर्वत्र दक्षिणाः । तेच मंत्रा मत्कृते दानकमलाकरे ज्ञेयाः । अत्रापि प्रयोगे वक्ष्यंते " शां॰ म॰ । आचार्याय तु यद्दत्तं तदर्धं ब्रह्मणे भवेत् । ब्रह्मणोऽर्धं सदस्याय ऋत्विग्भ्यश्च तदर्धकं ॥ वि॰ मा॰ । शुक्लांबराणि वै धृत्वा कुर्यादाज्याऽवलोकनं । रूपं रूपेति मंत्रेण चित्रं तच्चक्षुरेव वा ॥ शां॰ सा॰ आज्यं निरीक्ष्य

दत्वा च ब्राह्मणान् भोजयेत्ततः । " याज्ञवल्क्यः । गुडौदनं पायसं च हविष्यं क्षीरषाष्टिकं । दध्योदनं हविश्चूर्णं मांसं चित्राऽन्नमेवच ॥ दद्याद्ग्रह-
क्रमादेतद्द्विजेभ्यो भोजनं बुधः । शक्तितो वा यथालाभं सत्कृत्य विधिपूर्वकं ॥ गुडमिश्र ओदनो गुडोदनः । हविष्यं मुन्यन्नं नीवारादि । क्षीरषा-
ष्टिकं क्षीरमिश्रः षाष्टिकतंडुलौदनः । हविर्घृतौदनः । चूर्णं तिलचूर्णमिश्रौदनः । मांसं मांसमिश्रौदनः । चित्राऽन्नं नानावर्णं ओदनः । मदनरत्ने
आश्वलायनः । एकमेकाहुतौ विप्रं होमे त्वन्नेन भोजयेत् । अत्यर्थो मध्यमश्चाऽपि विप्रमेकं शताहुतौ ॥ सहस्राहुतिषु त्वेकं जघन्योऽपि प्रभोजयेत् ।
अन्यथा दहति क्षिप्रं तद्राष्ट्रं नाऽत्र संशयः ॥ ( अत्यर्थः प्रभूतधनवान् । मध्यमस्ततो न्यूनः । जघन्यो दरिद्रः । राष्ट्रं दहति दुर्भिक्षादिकं जनयतीत्-
त्यर्थः ) " म० पु० । अन्नहीनो दहेद्राष्ट्रं मंत्रहीनस्तु ऋत्विजः । यष्टारं दक्षिणाहीनो नास्ति यज्ञसमो रिपुः ॥ तस्मान्न दक्षिणाहीनं कर्तव्यं
भूतिमिच्छता ॥ " अतो दातुमशक्तो यो दक्षिणां चाऽन्नमेव च । जपैः प्रणामैः स्तोत्रैश्च तोषयेत्तर्पयेद् ग्रहान् ॥ " ल० शौ० । जपैर्हुतैस्तर्पणैश्च
ध्यानैर्दानैः समाहितः । सर्वाऽऽपदो विजयते तापांश्च त्रिविधानपि ॥ शां० म० स्कांदे । देवदानवगंधर्वा यक्षराक्षसकिंनराः । पीड्यंते ग्रह-
पीडाभिः किं पुनर्भुवि मानवाः ॥ शनैश्चरेण सौदासो नरमांसे नियोजितः । राहुणा पीडितो राजा नलो भ्रांतो महीतले ॥ अंगारकविरोधेन
रामो राष्ट्राद्विवासितः । अष्टमेन शशांकेन हिरण्यकशिपुर्हतः ॥ रविणा सप्तमस्थेन रावणो विनिपातितः । गुरुणा जन्मसंस्थेन हतो राजा
सुयोधनः ॥ पांडवा बुधपीडायां विकर्मणि नियोजिताः । षष्ठेनोशनसा युद्धे हिरण्याऽक्षो निपातितः ॥ एते चाऽन्ये च बहवो ग्रहदोषैस्तु
पीडिताः । याज्ञवल्क्यः । ग्रहाऽधीना नरेंद्राणामुच्छ्रायाः पतनानि च । भावाऽभावौ च जगतस्तस्मात्पूज्यतमा ग्रहाः ॥ ग्रहा गावो नरेंद्राश्च
ब्राह्मणाश्च विशेषतः । पूजिताः पूजयंत्येते निर्दहंत्यवमानिताः ॥ ब्रह्मणैषां वरो दत्तः पूजिताः पूजयिष्यथ ॥ " स्कांदे । यथा ग्रहो द्विज-

स्तद्दृद्विधिज्ञो वेदपारगः । तोषयेन्मृदुवस्त्राद्यैस्तुष्टमेनं विसर्जयेत् ॥ मात्स्ये । एवं समग्रं निष्पाद्य सर्वदेवान्विसर्जयेत् । यांतु देवगणाः सर्वे पूजामादाय पार्थिवात् । इष्टकामप्रदानार्थं पुनरागमनाय च । " म० म० पार्थिवात्प्रदेशाद्यांतु स्वस्थानं गच्छंत्वित्यर्थः । अथवा पार्थिवात् देहात् पार्थिव इत्यधिकार्युपलक्षणं " अनेन विधिना यस्तु ग्रहपूजां समाचरेत् । सर्वान् कामानवाप्नोति प्रेत्य स्वर्गे महीयते ॥ यस्तु पीडाकारोऽत्यंतमल्पवित्तस्य वै ग्रहः । तं तु यत्नेन संपूज्य शेषानप्यर्चयेन्नरः ॥ " म० म० तं पीडाकरं ग्रहं प्रयत्नेन पूर्वोक्तरीत्याऽधिप्रत्यधिदेवतासहितं पूजयित्वा शेषानपि ग्रहान्पुष्पांजल्यादिभिर्यथाशक्ति संपूजयेत् । इयं च प्रतिकूलग्रहपूजा तत्तद्वासरे कर्तव्या । राहुकेत्वोः पृथग्वाराऽभावान्मंदवारो ग्राह्यः । शन्यादीन्मंदवारे तु पूजयेत्प्रयतो नर इति बौधायनकारिकातः । शां० म० । ग्रहाणामिदमातिथ्यं कुर्यात्संवत्सरादपि । आरोग्यबलसंपन्नो जीवेच्च शरदां शतं ॥ आ० प० । यथा शस्त्रप्रहाराणां कवचं वारणं भवेत् । तथा दैवोपघातानां शांतिर्भवति वारणं॥ " तथा । सदैवाऽयुतहोमोऽयं नवग्रहमखः स्मृतः । विवाहोत्सवयज्ञेषु प्रतिष्ठादिषु कर्मसु ॥ निर्विघ्नार्थं मुनिश्रेष्ठ तथोद्वेगाऽद्भुतेषु च । अद्भुतं भूकंपादि । वश्यकर्माऽभिचारादि तथैवोच्चाटनादिकं ॥ नवग्रहमखं कृत्वा ततः कर्म समारभेत् । अन्यथा फलदं पुंसां न काम्यं जायते क्वचित् ॥ तस्मादयुतहोमस्य विधानं तु समाचरेत् । " शां० म० विवाहेत्यादिना विवाहादिषु काम्येषु च कर्मस्वंगत्वमुक्तं । अत्र ग्रहस्वरूपवर्णदेशगोत्राऽग्निस्थानमुखाऽऽकारस्थापनहोममंत्रचंदनधूपदीपनैवेद्यसमिद्दक्षिणाऽधिदेवताप्रत्यधिदेवतोपदेशकवाक्येषु ग्रहाणां स्वरूपनिर्देशस्थापनहोममंत्रोपदेशकवाक्येषु चाऽधिदेवताप्रत्यधिदेवताविनायकादिपंचकलोकपालानामनेकस्मृतिपुराणभेदेन भूयोविसंवादिभिरनेकैः पर्यायशब्दैरुपस्थितेर्नाऽत्रैकवैधशब्दानियमः । नाऽपि मंत्रवर्णेनैकशब्दोपस्थितिः । शब्दविशेषैर्देवता अनूद्य तत्स्मारकतया मंत्रविनियोगेन मंत्राणां

देवताप्रापकत्वाऽयोगात् । तेषां बाहुल्येनाऽस्पष्टलिंगत्वाच्च । अतो द्रव्यत्यागादिषु स्वरूपादिनिर्देशकस्मृतिमंत्रवर्णोपस्थितशब्दानामन्यतमेन शब्देनोद्देशो ग्रहादीनामिति । शिष्टाचारोऽप्येवं । अत्र व्याहृतिकरणकेऽयुतहोमेऽग्निवायुसूर्यप्रजापतय एव देवताः । न ग्रहाः । ऐंद्र्यादिवत्तत्प्रकाशकत्वेन विनियोगाऽभावात् । अतएव पारिजाते । ॐभूर्भुवः सुवश्चेति तिस्रो व्याहृतयो जपेत् । आभिश्च होमे तिसृभिश्चतुर्थी स्यात्समासत इति । समस्ताभिरेव होमः स चाऽग्निवायुसूर्यदेवत्य इति तु मदनः । सर्वथा व्याहृतिहोमे न ग्रहा देवता इति । प्रधानं चाऽत्र ग्रहपूजा । तद्धोमोऽयुतहोमश्च । श्रीकामः शांतिकामो वा ग्रहयज्ञं समाचरेदित्यादिना तत्पूजातद्धोमयोः फलसंबंधात् । ग्रहयज्ञस्त्रिधेत्युक्त्वा प्रथमोऽयुतहोम इत्यादिनाऽयुतलक्षकोटिहोमानां ग्रहयज्ञविशेषत्वेनोपक्रमात् । तस्मादयुतहोमस्य विधानं तु समाचरेदित्युपसंहाराच्च । ग्रहदेवत्यकर्मसमूहे प्राणभृतउपदधातीतिवल्लिंगसमवायेन ग्रहयज्ञशब्दः । तातचरणास्त्वयुतहोमादीनामेव प्राधान्यं ग्रहहोमस्त्वंगमित्याहुः। तदाशयं न जाने । यो हि कामशब्देन फलसंबंधः श्रीकामः शांतिकामो वा ग्रहयज्ञं समाचरेदित्यादिः स तावद् ग्रहपूजाहोमयोरेवोचितः । ग्रहसंबंधप्राप्तेर्ग्रहयज्ञशब्दस्य तन्नामत्वात् । न चाऽयुतहोमादीनां फलसंबंधे तत्प्रकरणपाठात् ग्रहपूजाहोमयोरंगतेति वाच्यं । वैपरीत्यस्याऽपि सुवचत्वात् । अयुतहोमादिशब्दानां ग्रहयज्ञसामानाधिकरण्येन ग्रहयज्ञनामत्वं तु लिंगसमवायेन । न तदंगत्वेन । आर्थवादिकः फलसंबंधस्तु । अनेन विधिना यस्तु ग्रहपूजां समाचरेत् । सर्वान्कामानवाप्नोति प्रेत्य स्वर्गे महीयते इत्यत्र यज देवपूजासंगतिकरणदानेष्वित्यनुशिष्टयोः पूजाहोमयोः । सदैवाऽयुतहोमोऽयमित्याद्युपक्रम्य निर्विघ्नार्थं मुनिश्रेष्ठेत्यादिना त्वयुतहोमादीनामपि । स्मृतिषु तु प्राय आर्थवादिकमेव फलं । अत्र कामशब्दोपनीते फले सति आर्थवादिकं संबध्यते नवेति तु विचारांतरं । किंच याज्ञवल्क्यादिस्मृतिषु न

तावदयुतहोमादीनां विधिर्नाऽप्यनुवादः । अतो ग्रहपूजाहोमयोः प्राधान्याऽभावे तत्रत्येतिकर्तव्यतासंबंधो न स्यात् । अतो ग्रहपूजाहोमयोरपि प्राधान्यं भाति । अतएव क्वचित् केवलग्रहमखेषु तदंगकेषु च शांतिकादिकर्मस्वेकस्मृत्युक्तांऽगप्रधानादरेण स्मृत्यंतरोक्तप्रधानभूताऽयुतादिहोमं विनाऽपि शाखांतरोक्तग्रहयागांतराऽभ्यासांतरं विनैकशाखीयग्रहयागाऽभ्यासमात्राणामिव पूजाग्रहदेवत्यहोमयोरेवाऽनुष्ठानं कथंचित् शिष्टानां संगच्छते । ग्रहपूजाहोमयोरंगत्वे त्वंगमात्राऽनुष्ठानमेव स्यात् । म० म० यद्यप्यग्निर्मूर्धादिव इत्यादयो मंत्रा अग्न्यादिप्रकाशकत्वेनाऽग्न्यादिदेवत्या न साक्षाद्भौमादिप्रकाशकास्तथाप्यैंद्र्यागार्हपत्यमुपतिष्ठत इतींद्रप्रकाशिकाया ऋचः श्रुत्या गार्हपत्योपस्थाने शेषत्वबोधनाद्यथाकथंचिदिंद्रादिपदानां इदि परमैश्वर्य इत्याद्यर्थचिंतनेन योगवृत्त्या गार्हपत्ये वृत्तिरिवाऽग्निर्मूर्धादिवइतिमंत्रभौमायकीर्तयेदित्यादिभिः पूर्वप्रदर्शितवाक्यैरग्निर्मूर्धेत्यादिमंत्राणां भौमादिशेषत्वबोधनादग्न्यादिपदानां भौमादिषु यथाकथंचिद्वृत्तिरवगंतव्या । सा च वृत्तिरेवं । गत्यर्थादगिधातोरग्निशब्द उत्पन्नः । भौमोऽपि गमनशीलः । अथवाऽग्निवर्णत्वाद्भौमस्याऽग्निशब्दवाच्यत्वं । उद्बुध्यस्वाग्न इत्यत्राप्यग्निशब्दः पूर्ववद्बुधे वर्तते । तेजोभूयिष्ठत्वाद्वा । उद्बुध्यस्वेत्यस्मिन्पदे बुधवर्णश्रुतेर्वा । अप्यक्षरसाम्यान्निर्ब्रूयादिति श्रुतेः । यथा पश्यकः कश्यपो भवतीति श्रुतिः । अन्नात्परिस्रुत इत्यस्मिन्मंत्रे विपानंशुक्रमंधस इति शुक्रपदनामसाम्याच्छुक्रे वर्तते । शंनोदेवीरितिमंत्रे शनिनामस्मारकस्य शंन इति वर्णद्वयस्य विद्यमानत्वात्स मंत्रः शनिद्योतकः । कयानश्चित्र इत्यत्र चित्रपदं श्रूयते । चित्रश्च राहुर्यतः शिरसा लक्ष्यते । अनयैव दिशाऽन्यत्राप्यूहनीयं । एवं तत्तद्देवताप्रकाशकत्वमवगंतव्यं । या तेनोच्यते सा देवतेति सर्वानुक्रमणीपरिभाषाऽभिधानात् । अन्यथाऽन्या पूज्या अन्या मंत्राऽभिधेयेति विरोधः स्यात् । " भविष्योत्तरे । न संख्यानियमश्चाऽत्र ब्राह्मणानां नरोत्तम । न कालनियमश्चैव स्वेच्छायज्ञोऽयमुच्यते ॥

अन्यश्चाऽत्र विशेषोऽस्मत्पितृकृतप्रयोगदीपिकायां ज्ञेयः । यत्तु शिष्टा ग्रहाणामयुतसहस्रादिसंख्यया जपं कृत्वा तद्दशांशेन तिलैर्होमं कुर्वंति तत्कुत्राऽपि जपाऽनुक्तेः किंमूलकमिति न विद्मः । इत्ययुतहोमविधिः ॥ ( अत्र यद्यपि नकालनियमश्चैवेत्यनेन ग्रहयज्ञस्य साधारणत्वेन यत्रकुत्रापि दिने कर्तव्यता प्रतीयते तथापि पुण्येऽह्नि विप्रकथिते इत्यादिना तस्य काम्येतरपरत्वेन व्याख्यातुमुचितत्वात्काम्ये कालविचारस्त्वावश्यक इति स एवाऽत्र प्रथमं संगृह्यते । मु० सिं० । खेटेज्या शनिभौमवर्जितदिने वैवाहिकर्क्षाऽश्विनीत्वाष्ट्रेज्ये त्रिषु जन्मभेषु चरभे रिक्ताविहीने तिथौ । शस्तेऽब्जे शुभखेटवीर्यसहिते वह्नेः शुभत्वे सतो वक्रेऽथाऽऽहुतिपातनेऽर्कशशिनोर्ग्रासेऽयने वैषुवे ॥ खेटा ग्रहास्तेषामिज्या यजनं । शेषं स्पष्टं । अथाऽग्निवासाऽऽहुतिपातविचारः । मु० मा० शुक्लादितस्तिथिः सैका वारयुक्ताऽब्धिशेषिता । खे गुणे भुवि वासोऽग्नेर्द्व्येकयोः स्यादधो दिवि ॥ सौख्याय होमो भौमेऽग्नावर्थप्राणहृदन्यतः । शेषिता भक्ताऽवशिष्टा । मु० चिं० । सूर्यभात्त्रिस्त्रिगे चंद्रे सूर्यविच्छुक्रपंगवः । चंद्राऽऽरेज्याऽगुशिखिनो नेष्टा होमाहुतिः खले ॥ पंगुः शनिः । अगू राहुः । शां० सा० कश्यपसंहितायां । दुष्टे न कुर्याद्धवनमित्याहुर्भार्गवादय इतीदं च काम्यविषयं । संस्कारेषु विचारोऽस्य न कार्यो नाऽपि वैष्णवे । नित्ये नैमित्तिके कार्ये न चाऽब्दे मुनिभिः स्मृतः ॥ शुभग्रहमुखे आहुतिपाताऽभावे तत्प्रतीकार उक्तस्तत्रैव विष्णुधर्मोत्तरे । क्रूरग्रहमुखे चैव संजाते हवने शुभे । शांतिं विधाय गां दद्याद्ब्राह्मणाय कुटुंबिने ॥ शांतिं अनंतरोक्तां । आयसीं प्रतिमां कृत्वा निक्षिपेत्तामधोमुखीं । गोमूत्रमधुगंधाद्यैरर्चितां प्रतिमां ततः ॥ श्वभ्रे निधाय संपूज्य तत्र हामो विधीयते । ) अथ प्रयोगः ॥ स च यद्यप्यस्मत्पितामहकृतोऽस्त्येव तथापि संक्षेपेणोच्यते । कर्ता कृतनित्यक्रियः शुचिः परिहितधौतवासा दर्भपाणिः पीठोपविष्टः प्राङ्मुखो वाग्यतो द्विराचम्य प्राणानायम्य देवगुरुब्राह्मणाऽभिवादनपूर्वं देशकालौ

स्मृत्वा श्रीकामः वृष्ट्यायुःपुष्ट्यादिकामः ग्रहपीडायामुत्पाते रोगे वा तच्छांतिकामः शत्रुपराजयकामो वाऽयुतहोमाख्यनवग्रहयज्ञेनाऽहं यक्ष्ये । केवले तु ग्रहयज्ञं करिष्य इति वा संकल्प्य गणेशं संपूज्य स्वस्तिवाचनं मातृकापूजनं वृद्धिश्राद्धं च कृत्वाऽऽचार्यं वृत्वा प्रार्थयेत् । आचार्यस्तु यथा स्वर्गे शक्रादीनां बृहस्पतिः । तथा त्वं मम यज्ञेऽस्मिन्नाचार्यो भव सुव्रतेति । कोटिहोमे त्वाचार्यप्रार्थने विशेषः । त्वं मे यतः पिता माता त्वं गतिस्त्वं परायणः । त्वत्प्रसादेन विप्रर्षे सर्वं मे स्यान्मनोगतं ॥ आपद्विमोक्षाय च मे कुरु यज्ञमनुत्तमं । कोटिहोमाख्यमतुलं शांत्यर्थं सार्वकामिकमिति ॥ ततश्चतुर ऋत्विजो वृत्वा प्रार्थयेत् । यथा चतुर्मुखो ब्रह्मा स्वर्गे लोके पितामहः । तथा त्वं मम यज्ञेऽस्मिन् ब्रह्मा द्विजपते भवेति ब्रह्माणं ॥ त्वं नो गुरुः पिता माता त्वं प्रभुस्त्वं परायणं । त्वत्प्रसादाच्च विप्रर्षे सर्वं मे स्यान्मनोगतं ॥ आपद्विमोक्षणार्थाय कुरु यज्ञमतंद्रितः । ऋत्विग्भिः सहितः शुद्धैः संयतैः सुसमाहितैः ॥ आचार्येण च संयुक्तः कुरु कर्म यथोदितमिति सदस्यं ॥ प्रारिप्सितस्य यज्ञस्य जपस्य हवनस्य च । निर्विघ्नेन समाप्त्यर्थं त्वामहं गणपं वृण इति गणपं ॥ भगवन् सर्वधर्मज्ञ सर्वधर्मभृतांवर । वितते मम यज्ञेऽस्मिन्नुपद्रष्टा भव द्विजत्युपद्रष्टारं ॥ अस्य यागस्य निष्पत्तौ भवंतोऽभ्यर्चिता मया । सुप्रसन्नाः प्रकुर्वंतु कर्मेदं विधिपूर्वकमिति ऋत्विजः ॥ यद्वाऽऽचार्यो ब्रह्मा चेति द्वौ तेषां तच्छाखया मधुपर्कः । कर्ता अमुककर्म कर्तुं मंडपं करिष्य इति संकल्प्य गणेशं कूर्मं शेषं वसुधां द्विजांश्च संपूज्य । आगच्छ देवि कल्याणि वसुधे लोकधारिणि । उद्धृताऽसि वराहेण सशैलवनकानना ॥ मंडपं कारयाम्यद्य त्वदूर्ध्वे शुभलक्षणं । गृहाणाऽर्घ्यं मया दत्तं प्रसन्ना वरदा भवेति वसुधाया अर्घ्यं दत्वा स्योनापृथिवीति तां प्रार्थ्य यथोक्तलक्षणं मंडपं कूटं वा कृत्वा तन्मध्ये ( हेमाद्रिमते ऐशान्यां वा ) हस्तमात्रं कुंडं कुर्यात् । तदैशान्यां ग्रहवेदी हस्तविस्तृता वितस्त्युच्चा वप्रत्रययुता चतुरस्रा कार्या ।

तत्राऽऽद्यवप्रो द्व्यंगुलोच्चो द्वितीयतृतीयौ त्र्यंगुलोच्चौ । त्रयोऽपि द्व्यंगुलविस्ताराः । साचार्यो यजमानो भद्रंकर्णेभिरिति मंडपं प्रदक्षणीकृत्य पश्चिमद्वारेण प्रविश्य कुंडपश्चिमभागे उपविश्य देशकालौ स्मृत्वा ग्रहयज्ञकर्माणि मंडपपूजादिकरिष्य इति संकल्प्य तदंगत्वेन गणपतिपूजनं वास्तुमंडपदेवतास्थापनादि च करिष्य इत्युक्त्वा गणेशपूजांते आचार्यो यदत्र संस्थितमिति सर्षपान्विकीर्य शुचीवोहव्येति पंचगव्येन आपोहिष्ठेति कुशोदकेन च यागभूमिं प्रोक्ष्य स्वस्त्ययनं तार्क्ष्यमिति मंत्रद्वयं जपेत् । ततो मंडपनैर्ऋत्यां मृदा वेदिं कृत्वैशानादिकोणचतुष्टये । विशंतु भूतले नागा लोकपालाश्च सर्वतः । अस्मिन्मंडपेऽवतिष्ठंतु आयुर्बलकराः सदेति शंकून् रोपयेत् । अग्निभ्योऽप्यथ सर्पेभ्यो ये चाऽन्ये तत्समाश्रिताः । तेभ्यो बलिं प्रयच्छामि पुण्यमोदनमुत्तममिति माषभक्तबलीन् दत्वा वेद्युपरि वस्त्रे कुंकुमादिना सुवर्णादिशलाकया । शांता यशोवती कांता विशाला प्राणवाहिनी । सती च सुमती नंदा सुभद्रा नवमी मतेति प्रागायता नवरेखाः कृत्वा । हिरण्या सुव्रता लक्ष्मीर्विभूतिर्विमला प्रिया । जया काला विशोका चेत्युदगायताश्च नवरेखाः कृत्वा मध्यकोष्ठचतुष्टयमेकीकृत्य कोणेषु रेखा दत्वा देवता आवाहयेत् । मध्यमपदचतुष्के हृदये ब्रह्मा । पूर्वपदद्वये दक्षिणस्तने अर्यमा । दक्षिणपदद्वये जठरदक्षिणे विवस्वान् । पश्चिमपदद्वये जठरवामे मित्रः । उदक्पदद्वये वामस्तने पृथ्वीधरः । आग्नेयपदार्धयोर्दक्षिणहस्ते सावित्रसवितारौ । नैर्ऋतपदार्धयोर्वृषणमेढ्रयोर्विबुधाऽधिपजयौ । वायव्यपदार्धयोर्वामहस्ते राजयक्ष्मरुद्रौ । ऐशानपदार्धयोरुरोमुखयोरापाऽऽपवत्सौ । ऐशानपददक्षिणार्धे शिरसि शिखी। तद्दक्षिणसार्धपदद्वये दक्षिणनेत्रे पर्जन्यः । तद्दक्षिणपदद्वये दक्षिणश्रोत्रे जयंतः । तद्दक्षिणपदद्वये दक्षिणांऽसे कुलिशायुधः । तद्दक्षिणपदद्वये दक्षिणबाहौ सूर्यः । तद्दक्षिणपदद्वये दक्षिणबाहावेव सत्यः । तद्दक्षिणसार्धपदे दक्षिणकूर्परे भृशः । तद्दक्षिणाऽऽग्नेयपदार्धे दक्षिणप्रबाहावाकाशः । तत्पश्चिमार्धे

दक्षिणप्रबाहावेव वायुः । तत्पश्चिमसार्धपदे दक्षिणमणिबंधे पूषा । तत्पश्चिमपदद्वये दक्षिणपार्श्वे वितथः । तत्पश्चिमपदद्वये दक्षिणपार्श्वे एव गृहक्षतः । तत्पश्चिमपदद्वये दक्षिणोरौ यमः । तत्पश्चिमपदद्वये दक्षिणजानौ गंधर्वः । तत्पश्चिमसार्धपदे दक्षिणजंघायां भृंगराजः । तत्पश्चिमनैर्ऋतपदार्धे दक्षिणस्फिचि मृगः । तदुत्तरार्धे पादयोः पितरः । तदुत्तरसार्धपदे वामस्फिचि दौवारिकः ॥ तदुत्तरपदद्वये वामजंघायां सुग्रीवः । तदुत्तरपदद्वये वामजानौ पुष्पदंतः । तदुत्तरपदद्वये वामोरौ वरुणः । तदुत्तरपदद्वये वामपार्श्वे असुरः । तदुत्तरसार्धपदे वामपार्श्वे एव शोषः । तदुत्तरवायव्यपदार्धे वाममणिबंधे पापः । तत्प्राक्पदार्धे वामबाहौ रोगः। तत्प्राक्सार्धपदे वामबाहावेवाऽहिः । तत्प्राक्पदद्वये वामकूर्परे मुख्यः । तत्प्राक्पदद्वये वामबाहौ भल्लाटः ॥ तत्प्राक्पदद्वये वामबाहावेव सोमः ॥ तत्प्राक्पदद्वये वामांऽसे सर्पः । तत्प्राक्सार्धपदे वामश्रोत्रे अदितिः । तत्प्रागर्धपदे वामनेत्रे दितिः । उत्तरे वास्तोष्पत इति वास्तोष्पतिः । ऐशान्यादिविदिक्षु । चरकी विदारी पूतना पापराक्षसी । प्रागादिदिक्षु । स्कंदः । अर्यमा ।जृंभकः । पिलिपिच्छः ततस्तान्संपूज्य । मंडलादैशाने महीद्यौरित्यादिना कलशं संस्थाप्य वरुणं तत्राऽऽवाह्य संपूज्य ब्रह्मादिभ्यः पायसबलींश्चरक्यादिभ्यो माषभक्तबलींश्च दत्त्वा मंडपं पावमानेन राक्षोघ्नेन च त्रिसूत्र्यावेष्टयेत् । ततः पूर्वस्यामग्निमीळे पुरोहितमिति सुदृढं तोरणमावाह्य सुदृढतोरणाय नम इति संपूज्य तत्र राहुबृहस्पती संपूज्य कलशं संस्थाप्य ध्रुवं पूजयेत् । ततो दक्षिणे इषेत्वेति सुभद्रतोरणमावाह्य तत्र सूर्याऽगारकौ संपूज्य कलशं संस्थाप्य धरां पूजयेत् । ततः पश्चिमे अग्न आयाहीति सुकर्मतोरणमावाह्य तत्र शुक्रबुधौ संपूज्य कलशं संस्थाप्य तत्र वाक्पतिं पूजयेत् । तत उत्तरे शंनोदेवीरिति सुहोततोरणमावाह्य सोमकेतुशनीन्संपूज्य कलशं संस्थाप्य विघ्नेशं पूजयेत् । ततः पूर्वद्वारे कलशद्वयं संस्थाप्य ( प्रतिद्वारशाखमेकैकमित्यर्थः ) तत्र ऐरावतं संपूज्य । ऋग्वेदः पद्मपत्राक्षो गायत्रः सोम-

दैवतः ॥ अत्रिगोत्रस्तु विप्रेंद्र ऋत्विक् त्वं मे मखे भवेति ॥ ह्यावृग्वेदिनावृत्विजौ वृत्वाऽग्निमीळे इति संपूज्य इंद्रं ध्यात्वा । एह्येहि सर्वामरसिद्धसाध्यैरभिष्टुतो वज्रधराऽमरेश। संवीज्यमानोऽप्सरसां गणेन रक्षाऽध्वरं नो भगवन्नमस्ते ॥ भो इंद्र इहागच्छेहतिष्ठेतींद्रं कलशयोरावाह्याऽऽशुः शिशान इति पीतां पताकां पीतं ध्वजं चोच्छ्रित्य त्रातारमितींद्रं संपूज्य। इंद्रः सुरपतिः श्रेष्ठो वज्रहस्तो महाबलः। शतयज्वा च यो देवस्तस्मै नित्यं नमो नम इति नत्वा इंद्राय सांगाय सपरिवाराय माषभक्तबलिं समर्पयामीति बलिं दत्वाऽऽचामेत् । तत आग्नेये कलशं संस्थाप्य तत्र पुंडरीकममृतं च संपूज्याग्निं ध्यात्वा ॐ । एह्येहि सर्वाऽमरहव्यवाहमुनिप्रवीरैरभितोऽभिजुष्ट । तेजस्विना लोकगणेन सार्धं ममाऽध्वरं पाहि कवे नमस्ते ॥ इत्यावाह्याऽग्निं दूतमिति रक्तां पताकां ध्वजं चोच्छ्रित्याऽग्निं संपूज्य । आग्नेयः पुरुषो रक्तः सर्वदेवमयोऽव्ययः । धूमकेतुरजोऽध्यक्षस्तस्मै नित्यं नमो नम इति बलिं समर्प्याऽऽचामेत् । ततो दक्षिणे कलशौ संस्थाप्य तत्र वामनं दिग्गजं संपूज्य यजुर्वेदिनावृत्विजौ। कातराक्षो यजुर्वेदस्त्रैष्टुभो विष्णुदैवतः । काश्यपेयस्तु विप्रेंद्र ऋत्विक् त्वं मे मखे भवेति वृत्वा इषेत्वेति संपूज्य यमं ध्यात्वा । एह्येहि वैवस्वत धर्मराज सर्वाऽमरैरर्चितधर्ममूर्त्ते । शुभाऽशुभाऽऽनंदशुचामधीश शिवाय नः पाहि मखं नमस्ते ॥ इत्यावाह्याऽऽयंगौरिति कृष्णां पताकां ध्वजं चोच्छ्रित्य यमाय सोममिति संपूज्य। महामहिषमारूढं दंडहस्तं महाबलं । आवाहयामि यज्ञेऽस्मिन् पूजेयं प्रतिगृह्यतामिति बलिं दत्वाऽऽचामेत् । ततो नैर्ऋत्यां कलशं संस्थाप्य तत्र कुमुदं दुर्जयं च संपूज्य निर्ऋतिं ध्यात्वा । एह्येहि रक्षोगणनायकस्त्वं विशालवेतालपिशाचसंघैः । ममाऽध्वरं पाहि पिशाचनाथ लोकेश्वरस्त्वं भगवन्नमस्ते ॥ इत्यावाह्य मोषुण इति नीलां पताकां ध्वजं चोच्छ्रित्य संपूज्य। निर्ऋतिं खड्गहस्तं च सर्वलोकैकपावनं । आवाहयामि यज्ञेऽस्मिन्पूजेयं प्रतिगृह्यतामिति बलिं समर्प्याऽऽचामेत् । ततः पश्चिमे कलशौ

संस्थाप्य तत्रांऽजनं दिग्गजं संपूज्य सामवेदिनावृत्विजौ । सामवेदस्तु पिंगाक्षो जागतः शक्रदैवतः । भारद्वाजस्तु विप्रेंद्र ऋत्विक् त्वं मे मखे भवेति वृत्वा अग्नआयाहीति संपूज्य वरुणं ध्यात्वा । एह्येहि यादोगणवारिधीनां गणेन पर्जन्य सहाऽप्सरोभिः । विद्याधरें-द्राऽमरगीयमान पाहि त्वमस्मान्भगवन्नमस्ते ॥ इत्यावाह्येमंमेवरुणेति श्वेतां पताकां ध्वजं चोच्छ्रित्य संपूज्य । पाशहस्तं च वरुणमर्णसां पतिमीश्वरं । आवाहयामि यज्ञेऽस्मिन् वरुणाय नमो नम इति बलिं समर्प्याऽऽचामेत् । ततो वायव्ये कलशं निधाय तत्र पुष्पदंतं सिद्धार्थं चाऽऽवाह्य वायुं ध्यात्वा । एह्येहि यज्ञे मम रक्षणाय मृगाऽधिरूढः सह सिद्धसंघैः । प्राणाऽधिपः कालकवेः सहाय गृहाण पूजां भगवन्नमस्ते ॥ इत्यावाह्य वायोशतमिति धूम्रां पताकां ध्वजं चोच्छ्रित्य संपूज्य । वायुमाकाशगं चैव पवनं वेगवद्गतिं । आवाहयामि यज्ञेऽस्मिन्पूजेयं प्रतिगृह्यतां ॥ अनाकारो महौजाश्च यथादृष्टगतिर्दिवि । तस्मै पूज्या-य जगतो वायवेऽहं नमामि चेति बलिं दत्वाऽऽचामेत् । तत उत्तरे कलशौ संस्थाप्य तत्र सार्वभौमं दिग्गजं संपूज्य अथर्ववेदिनावृत्विजौ । बृहन्नेत्रोऽथर्ववेदोऽनुष्टुभो रुद्रदैवतः। वैशंपायन विप्रेंद्र ऋत्विक् त्वं मे मखे भवेति वृत्वा शंनोदेवीरिति संपूज्य कुबेरं ध्यात्वा । एह्येहि यज्ञे-श्वर यज्ञरक्षां विधत्स्व नक्षत्रगणेन सार्धं । सर्वौषधीभिः पितृभिः सहैव गृहाण पूजां भगवन्नमस्ते ॥ इत्यावाह्याऽऽप्यायस्वेति हरिता पताकां ध्वजं चोच्छ्रित्य संपूज्य। सर्वनक्षत्रमध्ये तु सोमो राजा व्यवस्थितः। तस्मै सोमाय देवाय नक्षत्रपतये नम इति बलिं दत्वाऽऽचामेत्। तत ऐशान्यां कलशं निधाय तत्र सुप्रतीकं मंगलं च संपूज्य ईशानं ध्यात्वा। एह्येहि विश्वेश्वर नस्त्रिशूलकपालखट्वांगधरेण सार्धं । लोकेन यज्ञेश्वर यज्ञसिद्ध्यै गृहाण पूजां भगवन्नमस्ते ॥ इत्यावाह्य अभित्वादेवसवितरिति श्वेतां पताकां ध्वजं चोच्छ्रित्य संपूज्य । वृषस्कंधसमारूढ शूलहस्त त्रिलोचन ।

आवाहयामि यज्ञेऽस्मिन्पूजेयं प्रतिगृह्यतां ॥ सर्वाऽधिपो महादेव ईशानः शुक्ल ईश्वरः । शूलपाणिर्विरूपाक्षस्तस्मै नित्यं नमो नम इति बलिं दत्वाऽऽचामेत् । तत ऐशानीपूर्वयोर्मध्येऽनंतं ध्यात्वा । एह्येहि पातालधराऽमरेंद्रनागांऽगनाकिंनरगीयमान । यक्षोरगेंद्राऽमरलोकसंघैरनंत रक्षाऽध्वरमस्मदीयमित्यावाह्य श्वेतां पताकां ध्वजं चोच्छ्रित्याऽऽयंगौरिति संपूज्य । योऽसावनंतरूपेण ब्रह्मांडं सचराचरं । पुष्पवद्धारयेन्मूर्ध्नि तस्मै नित्यं नमो नम इति बलिं दत्वाऽऽचामेत् । ततः पश्चिमनैर्ऋत्योर्मध्ये ब्रह्माणं ध्यात्वा । एह्येहि सर्वाधिपते सुरेंद्रलोकेन सार्धं पितृदेवताभिः । सर्वस्य धाताऽस्यमितप्रभावो विशाऽध्वरं नः सततं शिवायेत्यावाह्य ब्रह्मजज्ञानमिति रक्तां पताकां ध्वजं चोच्छ्रित्य संपूज्य । पद्मयोनिश्चतु-र्मूर्तिर्वेदाऽऽवासः पितामहः । यज्ञाऽध्यक्षश्चतुर्वक्त्रस्तस्मै नित्यं नमो नम इति बलिं दत्वाऽऽचामेत् । ततो मंडपमध्ये इंद्रस्यवृष्ण इति महा-ध्वजमुच्छ्रित्य तत्र ब्रह्मजज्ञानमिति ब्रह्माणं संपूज्य मंडपस्तंभेषु सर्वेभ्यो देवेभ्यो नमः । वंशेषु किंनरेभ्यो नमः । पृष्ठे पन्नगेभ्यो नम इति संपूज्य पूर्वस्यां किंचिद्भूमिमुपलिप्य ।त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च । ब्रह्मविष्णुशिवैः सार्धं रक्षां कुर्वंतु तानि मे । देवदानवगंधर्वा यक्षराक्षसपन्नगाः । ऋषयो मनवो गावो देवमातर एव च । सर्वे ममाऽध्वरे रक्षां प्रकुर्वंतु मुदान्विताः ॥ ब्रह्मा विष्णुश्च रुद्रश्च क्षेत्रपालगणैः सह । रक्षंतु मंडपं सर्वे घ्नंतु रक्षांसि सर्वतः ॥ त्रैलोक्यस्थेभ्यः स्थावरेभ्यो भूतेभ्यो नमः । त्रैलोक्यस्थेभ्यश्चरेभ्यो भूतेभ्यो नमः । ब्रह्मणे विष्णवे शिवाय देवेभ्यो दानवेभ्यो गंधर्वेभ्यो यक्षेभ्यो राक्षसेभ्यो पन्नगेभ्य ऋषिभ्यो मनुष्येभ्यो गोभ्यो देवमातृभ्यो नम इति संपूज्य बलिं दद्यात् ॥ इति मंडपप्रतिष्ठा ॥ सा च मंडपाऽभावे न कार्या । द्वारलोपात् । कूटमंडपे तु कार्यैव । विंशद्धस्तप्रमाणेन मंडपं कूटमेव चेति लैंगे विकल्पो-क्त्या व्रीहियववत्समानविधानत्वादित्यन्यत्र विस्तरः । तत आचार्योऽमुकहोमे अग्निप्रतिष्ठां कर्तुमुपलेपनादिकुंडसंस्कारं मेखलायोनिदेवतास्था-

पनपूजनं च करिष्ये इति संकल्प्य कुंडं संस्कृत्य कुशोदकेन प्रोक्ष्योर्ध्वमेखलाया रक्तवर्णाऽलंकृतायां ब्रह्मजज्ञानमिति ब्रह्माणं। मध्यमेखलायां श्वेतवर्णाऽलंकृतायां इदंविष्णुरिति विष्णुं। अधोमेखलायां कृष्णवर्णयुतायां कद्रुद्रायेति रुद्रं। योन्यां गौरीर्मिमायेति गौरीं च संपूज्याऽग्निं प्रतिष्ठाप्य ग्रहवेद्यां सर्वतोभद्रं कृत्वा तत्र वक्ष्यमाणदेवता आवाहयेत्। यथा। मध्ये। ब्रह्मजज्ञानं वामदेवो ब्रह्मा त्रिष्टुप्। ब्रह्मावाहने विनियोगः। उत्तरादिषु। आप्यायस्व गोतमः सोमो गायत्री। अभित्वा शुनःशेप ईशानो गायत्री। इंद्रंवो मधुच्छंदा इंद्रो गायत्री। अग्निंदूतं मेधातिथिरग्निर्गायत्री। यमायसोमं यमो यमोऽनुष्टुप्। मोषुणः कण्वो निर्ऋतिर्गायत्री। तत्त्वायामि शुनः शेपो वरुणस्त्रिष्टुप्। वायोशतं वामदेवो वायुरनुष्टुप्। वायुसोममध्यादिषु। ज्मयाअत्र वसिष्ठो वसवस्त्रिष्टुप्। आरुद्रासः श्यावाश्वो रुद्रा जगती। त्वांनु मत्स्यो मान्यो वाऽऽदित्या गायत्री। अश्विनावर्तिर्गोतमोऽश्विनावुष्णिक्। ओमासो मधुच्छंदा विश्वेदेवा गायत्री। अभित्यं वामदेवः सप्तयक्षा अष्टिः। आयंगौः सर्पराज्ञी सर्पा गायत्री। अप्सरस्सामृष्यशृंगो गंधर्वाप्सरसोऽनुष्टुप्। ब्रह्मसोमयोर्मध्ये। यदक्रंदो दीर्घतमाः स्कंदस्त्रिष्टुप्। ऋषभमृषभो नंदीश्वरोऽनुष्टुप्। कद्रुद्राय कण्वःशूलो गायत्री। कुमारं कुमारो महाकालस्त्रिष्टुप्। ब्रह्मेशानमध्ये। अदितिर्बृहस्पतिर्दक्षोऽनुष्टुप्। ब्रह्मेंद्रमध्ये। तामग्निवर्णां सौभरिर्दुर्गा त्रिष्टुप्। इदंविष्णुर्मेधातिथिर्विष्णुर्गायत्री। ब्रह्माग्निमध्ये। उदीरतां शंखः स्वधा त्रिष्टुप्। ब्रह्मयमयोर्मध्ये। परंमृत्यो संकुसुको मृत्युरोगास्त्रिष्टुप्। ब्रह्मनिर्ऋतिमध्ये। गणानांत्वा गृत्समदो गणपतिर्जगती। ब्रह्मवरुणमध्ये। शंनोदेवीः सिंधुद्वीप आपो गायत्री। ब्रह्मवायुमध्ये। मरुतोयस्य गोतमो मरुतो गायत्री। ब्रह्मणःपादमूले। स्योना मेधातिथिर्भूमिर्गायत्री। तत्रैव। इमंमेगंगे सिंधुक्षिन्नधोजगती। तत्रैव। धाम्नोधाम्नो वामदेवः सप्तसागरा अनुष्टुप्। तदुपरि मेरुं। बाह्ये सोमादिसंनिधौ क्रमेणाऽऽयुधानि। गदां। त्रिशूलं। वज्रं।

शक्तिं । दंडं । खड्गं । पाशं । अंकुशं । उत्तरादिषु ऋषीन् । गौतमं । भरद्वाजं । विश्वामित्रं । कश्यपं । जमदग्निं । वसिष्ठं । अत्रिं । अरुंधतीं । पूर्वादिषु मातृः । ऐंद्रीं कौमारीं । ब्राह्मीं । वाराहीं । चामुंडां । वैष्णवीं । माहेश्वरीं । वैनायकीं । तदस्तु । गृहावै इत्यावाह्य संपूज्य ग्रहमंडलं विलिख्य **ग्रहान् स्थापयेत् । तद्यथा । ग्रहवेद्यां** वस्त्रेऽष्टदलं पद्मं गंधादिना कृत्वा मध्ये कर्णिकायां वर्तुलमंडले ताम्रप्रतिमायां अक्षतपुंजे फलादौ वा आकृष्णेन हिरण्यस्तूपः सविता त्रिष्टुप् । सूर्यावाहने विनियोगः । ॐआकृष्णेन० । ॐभूर्भुवःस्वः कलिंगदेशोद्भव काश्यपसगोत्र सूर्येहाऽऽगच्छेहतिष्ठ सूर्याय नमः सूर्यमावाहमायामीति सूर्यं स्थापयेत् । एवमग्रेऽपि । आग्नेयदले चतुरस्रे स्फटिकप्रतिमायां । आप्यायस्व गोतमः सोमो गायत्री । सोमाऽऽवाहने० । ॐआप्यायस्व० ॐभू० यमुनातीरोद्भवाऽऽत्रेयसगोत्र सोमेहा० । दक्षिणे त्रिकोणे रक्तचंदनप्र० । अग्निर्मूर्धाविरूपोऽगारको गायत्री । अंगारकावा० । ॐअग्निर्मूर्धा० ॐभू० अवंतीसमुद्भव भारद्वाजसगोत्र अंगारकेहा० । ऐशाने बाणाकारे स्वर्णप्र० । उद्बुध्यध्वं बुधो बुधस्त्रिष्टुप् । बुधावा० । ॐउद्बुध्यध्वं० ॐभू० मगधदेशोद्भवाऽऽत्रेयसगोत्र बुधेहा० । उत्तरे दीर्घचतुरस्रे स्वर्णप्र० । बृहस्पते गृत्समदो बृहस्पतिस्त्रिष्टुप् । बृहस्पत्यावा० । ॐबृहस्पतेअति० ॐभू० सिंधुदेशोद्भवांऽऽगिरसगोत्र बृहस्पते इहा० । पूर्वे पंचकोणे रजतप्र० । शुक्रः पराशरः शुक्रो द्विपदा विराट् । शुक्रावा० । ॐशुक्रःशुशु० ॐभू० भोजकटदेशोद्भव भार्गवसगोत्र शुक्रेहा० । पश्चिमे धनुराकारे आयसप्र० । शमग्निरिरिंबिठिः शनिरुष्णिक् । शन्यावाहने० । ॐशमग्नि० ॐभू० सौराष्ट्रदेशोद्भव काश्यपसगोत्र शने इहा० । नैर्ऋते शूर्पाकारे ससिप्र० । कयानो वामदेवो राहुर्गायत्री । राह्वावा० । ॐकयानश्चित्र० ॐभू० राठिनापुरोद्भव पैठीनासिसगोत्र राहो इहा० । वायव्ये ध्वजाकारे कांस्यप्र० । केतुंकृण्वन्मधुच्छंदाः केतुर्गायत्री । केत्वावाहने० । ॐकेतुंकृण्व० ॐभू० अंतर्वेदिसमुद्भव जैमिनिसगोत्र

केतो इहा० । ततः सूर्यादीनां दक्षिणेऽधिदेवता वामे च प्रत्यधिदेवताः क्रमेणाऽऽवाहयेत् । ताश्च तत्तद्ग्रहनिर्माणद्रव्यैरेव कार्याः । अधि-प्रत्यधिदेवांश्च तत्तद्वर्णाकृतींल्लिखेदिति याज्ञवल्क्योक्तेः । तत्राऽधिदेवतास्तु । त्र्यंबकं वसिष्ठो रुद्रोऽनुष्टुप् । रुद्रावाहने० । रुद्रेहा० । गौ-रीर्मिमाय दीर्घतमा उमा जगती । उमे इहा० । यदक्रंदो दीर्घतमाः स्कंदस्त्रिष्टुप् । स्कंदेहा० । विष्णोर्नुकं दीर्घतमा नारायणस्त्रिष्टुप् । नारायणेहा० । ब्रह्मजज्ञानं वामदेवो ब्रह्मा त्रिष्टुप् । ब्रह्मन्निहा० । इंद्रं वो मधुच्छंदा इंद्रो गायत्री । इंद्रेहा० । यमायसोमं यमो यमोऽनुष्टुप् । यमेहा० । मोषुणः कण्वः कालो गायत्री । कालेहा० । उषोवाजं प्रस्कण्वश्चित्रगुप्तो बृहती । चित्रगुप्तेहा० । अथ प्रत्यधिदेवताः । अग्निंदूतं मे-धातिथिरग्निर्गायत्री । अग्न इहा० । अप्सु मे मेधातिथिरापोऽनुष्टुप् । आपः इहागच्छतेहातिष्ठत० । स्योना मेधातिथिर्भूमिर्गायत्री । भूमे इहा० । इदंविष्णुर्मेधातिथिर्विष्णुर्गायत्री । विष्णो इहा० । इंद्रश्रेष्ठानि गृत्समद इंद्रस्त्रिष्टुप् । इंद्रेहा० । इंद्राणीं वृषाकपिरिंद्राणी पंक्तिः । इंद्राणी-हा० । प्रजापते हिरण्यगर्भः प्रजापतिस्त्रिष्टुप् । प्रजापते इहा० । आयंगौः सर्पराज्ञी सर्पा गायत्री । सर्पाः इहागच्छतेहतिष्ठत० । ब्रह्मजज्ञानं वामदेवो ब्रह्मा त्रिष्टुप् । ब्रह्मन्निहा० । अथ साद्गुण्यदेवताः । तत्र रविशनिकेतुगुरूणां मध्ये गणपतिं परितः प्रागादिषु दुर्गादिचतुष्टयं तदु-त्तरे च क्षेत्रपालमावाहयेत् । गणानांत्वा गृत्समदो गणपतिर्जगती । गणपते इहा० । जातवेदसे कश्यपो दुर्गात्रिष्टुप् । दुर्गे इहा० । तववायो व्यश्वो वायुर्गायत्री । वायो इहा० । आदिद्दत्स आकाशो गायत्री । आकाशेहा० । एषोउषाः प्रस्कण्वोऽऽश्विनौ गायत्री । अश्विनाविहाग-च्छतमिहतिष्ठतं० । क्षेत्रस्यपतिना वामदेवः क्षेत्रपालोऽनुष्टुप् । क्षेत्रपालेहा० । तदुत्तरे च वास्तोष्पतिमप्यावाहयेदित्येके । वास्तोष्पते वसिष्ठो वास्तोष्पतिस्त्रिष्टुप् । वास्तोष्पते इहा० । ततः प्रागादिदलाग्रेषु लोकपालानावाहयेत् । इंद्रंविश्वा जेतेंद्रोऽनुष्टुप् । इंद्रेहा० । अग्निंदूतं मेधा-

तिथिरग्निर्गायत्री । अग्ने इहा० । यमायसोमं यमो यमोऽनुष्टुप् । यमेहा० । मोषुणःकण्वो निर्ऋतिर्गायत्री । निर्ऋते इहा० । त्वं नो अग्ने वामदेवो वरुणस्त्रिष्टुप् । वरुणेहा० । तववायो व्यश्वो वायुर्गायत्री । वायो इहा० । सोमोधेनुं गोतमः सोमस्त्रिष्टुप् । सोमेहा० । तमीशानं गोतम ईशानो जगती । ईशानेहा० । लक्षहोमे तु ग्रहाणां पूर्वे गरुत्मंतं । मनोजवा नेमोगरुत्माननुष्टुप् । गरुत्मदावाहने० । मनोजवा अयमान० । सामध्वनिशरीरस्त्वं वाहनं परमेष्ठिनः । विषपापहरो नित्यमतः शांतिं प्रयच्छ मे । इति गरुत्मंतमावाहयेत् । कोटिहोमे वेद्यां पूर्वे ब्रह्मजज्ञानमिति ब्रह्माणं । मध्ये इदंविष्णुरिति विष्णुं । पश्चिमे त्र्यंबकमिति रुद्रं । उत्तरे ज्मयाअत्रेति वसून् । ऐशान्यां नवग्रहान् । आग्नेय्यां मरुतो यस्येति मरुतः । उत्तरे वायुं । ऐशान्यां लोकपालांश्चाऽऽवाह्य संपूज्य प्रार्थयेत् । आदित्या वासवो रुद्रा मरुतो लोकपास्तथा । ब्रह्मा जनार्दनश्चैव शूलपाणिर्महेश्वरः ॥ अत्र संनिहिताः सर्वे भवंतु मखभागिनः । पूजां गृह्णंतु सर्वेऽत्र मया भक्त्योपपादितां ॥ कुर्वंतु च शुभं सर्वे यज्ञकर्तुः समाहिताः । ततो ग्रहादीन् प्रणवादिनमोऽतनामभिरुक्ततत्तद्वर्णवस्त्रगंधपुष्पधूपदीपनैवेद्यफलतांबूलदक्षिणानमस्कारैः संपूजयेत् । एवमाहोमसमाप्ति प्रत्यहं कुर्यात् । ततः फलपुष्पमालापल्लवोपशोभितं वितानं बृहस्पतिदेवत्यं सूर्यादिभ्य इदं नममेत्युत्सृज्य ग्रहवेद्युपरि बध्नीयात् । ततो ग्रहवेदेरैशान्यां महीद्यौरिति भूमिं स्पृष्ट्वौषधयःसमिति यवान्निक्षिप्याऽऽकलशेष्विति कुंभं निधायेमंमेगंगइति तीर्थजलेनाऽऽपूर्य तत्र गंधद्वारामिति गंधं । याओषधीरिति सर्वौषधीः । दधिक्राव्ण इति दधि । ओषधयःसमित्यक्षतान् । कांडात्कांडादिति दूर्वाः । अश्वत्थेव इति चूताऽश्वत्थवटोदुंबरप्लक्षपल्लवान् । स्योनापृथिवीत्यश्वगजस्थानवल्मीकसंगमन्हदगोकुलराजद्वारेभ्यः सप्तमृदः । याःफलिनीरिति फलं । सिहरत्नानीति पंचरत्नानि । हिरण्यरूप इति हिरण्यं च क्षिप्त्वा युवासुवासा इति वस्त्रयुग्मेनाऽऽवेष्ट्य पूर्णादर्वीति पूर्णपात्रं निधायाऽवेतहेळोवरुणेति वरुणमावाह्य सर्वे

समुद्राः सरितः सरांसि च नदास्तथा । आयांतु यजमानस्य दुरितक्षयकारकाः । इति तीर्थान्यावाह्य संपूज्य । कलशस्य मुखे० । देवदानवसंवादे इत्याद्यैः कुंभं संप्रार्थ्य कुंडेऽन्वाधानादि । प्रत्येकं निर्वापप्रोक्षणादिना समोप्यैकत्र भिन्नान्वा चरून् श्रपयित्वाऽऽज्यभागवराहुत्यंते यजमानो द्रव्याणि तत्तद्देवताश्चतुर्थ्यंता उद्दिश्योत्सृजेन्नमम यथादैवतमस्त्विति त्यजेत् । ततो ग्रहाणामुक्तसमिधः प्रादेशमात्रा मधुघृतदधियुताश्चरुमाज्यं च तत्तन्मंत्रैः प्रत्येकमष्टोत्तरसहस्राद्यन्यतमसंख्ययाऽधिदेवप्रत्यधिदेवसाद्गुण्यदेवतालोकपालेभ्यश्च तान्येव द्रव्याण्युक्तमंत्रैरुक्तसंख्यया हुत्वा लक्षहोमे गरुत्मते कोटिहोमे तु ब्रह्मादिदेवताभ्यस्तान्येव द्रव्याण्यष्टशताद्यन्यतमसंख्यया तत्तन्मंत्रैर्जुहुयात् । ततश्चरोः सोमंराजानमिति स्विष्टकृतं हुत्वा यवाद्यन्यतमद्रव्येण ग्रहेभ्यस्तत्तन्मंत्रैर्दशदशाहुतीर्हुत्वा समस्तव्याहृतिभिरयुतादिसंख्यया होमः कार्यः । स्विष्टकृच्चांऽते भिन्नः । अयुतलक्षहोमादिसमाप्तौ स्विष्टकृन्नास्त्येव प्रायश्चित्तादि पूर्णाहुत्याद्येव कार्यमिति हेमाद्रिमदनरत्नादयः । तन्न । अयुतहोमादावतिदेशप्राप्तस्य तस्य बाधे मानाऽभावात् । एतच्चरोरधार्यत्वात्पर्युषितत्वापत्तेश्चोक्तं । तस्यैव स्विष्टकृद्द्रव्यत्वादिति कातीयशाखोक्तेः । अन्ये त्वंत्यदिने एव स्विष्टकृत् । अन्यथा सुत्योत्कर्षे सवनीयपशुयागादौ का गतिः । शेषस्थापनार्थं त्वाज्यप्रक्षेपादिरुपाय आस्थेय इति वदंति । वयं तु स्विष्टकृद्यागद्वयं कार्यं । स्विष्टकृद्यागो हि माभूच्छेषस्य तत्स्थापनस्य च प्रयोजकः । परप्रयुक्तद्रव्योपजीवित्वात् । शेषस्तु तस्य प्रयोजक एव । संस्कार्यत्वात् । अन्यथा पशुपुरोडाशादावपि पृथक्स्विष्टकृदिदं न स्यात् । हेमाद्र्यादिलिखनाच्चैवमाभाति । एकबर्हिरिध्माज्यस्विष्टकृतः स्युस्तुल्यकाला इत्याश्वलायनोक्तेः । दिनरूपकालैक्ये एकः स्विष्टकृत् । कालभेदे तु नानेति युक्तमुत्पश्यामः । ततः शुभे मुहूर्ते होमं समाप्य स्विष्टकृदादिप्रायश्चित्तहोमांते दिक्पालेभ्यो ग्रहेभ्यो विनायकादिभ्यः क्षेत्रपालाय च बलीन्दत्वा स्रुचि द्वादशगृहीतमाज्यं फलयुतं गृहीत्वा तस्यां गंधपुष्पाऽक्षताऽलंकृताग्रं स्रु-

वमधोबिलं निधाय स्रुक्स्रुवं शंखमुद्रया गृहीत्वोर्ध्वस्तिष्ठन् मूर्धानं भरद्वाजोऽग्निर्वैश्वानरस्त्रिष्टुप्। पूर्णाहुतौ विनि०।अनेन पूर्णाहुतिं हुत्वा अग्नये वैश्वानरायेदं नममेति त्यागः। यद्वा मूर्धानं०। पुनस्त्वाग्निर्वसुरुद्रादित्यास्त्रिष्टुप्। पूर्णादर्वि विश्वेदेवाः शतक्रतुरनुष्टुप्। सप्तते अग्ने सप्तवानग्निर्जगती। पूर्णाहुतौ०। इति चतुर्भिर्हुत्वा इदमग्नये वैश्वानराय वसुरुद्रादित्येभ्यः शतक्रतवे सप्तवतेऽग्नये च नममेति त्यागः कार्यः। ततो लक्षकोटिहोमयोर्वसोर्धारां जुहुयात्। सा चेत्थं। वह्नेरुपरि स्तंभद्वयविधृतामौदुंबरीमृज्वीमकोटरां बाहुप्रमाणामार्द्रां स्रुचं पूर्वाग्रां निधाय तदुपरि शृंखलाऽवलंबितेन निर्मलघृतपूरितेन ताम्रेण मृन्मयेन वा कुंभेनाऽधो यवमात्रच्छिद्रेणाऽऽज्यं मुंचता स्रुक्प्रणालिकयाऽग्रे सुवर्णजिह्वातोऽधो निपतंतीमग्नेरुपरि वसोर्धारां पातयेत्। पतंत्यां च तस्यां चमकाऽनुवाकानाग्नेयादीनि सूक्तानि श्रावयेत्। तत्र कूयवाश्रम इत्ययं मंत्रो द्वादशवारमावर्तनीयः। चमकाऽनुवाकानामग्निः कांड ऋषिः। आद्याऽऽग्नावैष्णवी गायत्री। शिष्टानां वाजादयोऽन्नादिविशेषा देवताः। यजुश्छंदः। अग्निमीळे नवानां मधुच्छंदा अग्निर्गायत्री। विष्णोर्नुकमिति षण्णां दीर्घतमा विष्णुरनुष्टुप्। आतेपितरिति पंचदशानां गृत्समदो रुद्रस्त्रिष्टुप्। स्वादिष्ठयेति दशानां मधुच्छंदाः सोमः पवमानो गायत्री। कायमान इति महावैश्वानरसाम्नो वैश्वानरो महावैश्वानरः पथ्या बृहती। मूर्धानमिति ज्येष्ठसाम्नो भरद्वाजो वैश्वानरस्त्रिष्टुप्। वसोर्धारायां विनि०। सामगानाऽसंभवे ऋङ्मात्रं पठेत्। एतच्चोपलक्षणं। तेनाऽन्यदप्याग्नेयादि यथाऽभ्यासं पठेत्। ततो वसोर्धारांजुहोतीत्यनुवाकमपि पठेत्। एवं वसोर्धारां विधाय संस्रावहोमादिकर्मशेषं समापयेत्। ततः सर्वौषधैः सर्वगंधैश्च प्रागुक्तैर्विलिप्तांऽगं प्राङ्मुखं यजमानं सपरिवारं चत्वारो विप्रा उदङ्मुखा ऐशानीमुखा वा ग्रहकुंभोदकेन समुद्रज्येष्ठा इत्याद्यैरभिषिंचेयुः। पौराणैश्च। तेच। सुरास्त्वामभिषिंचंतु ब्रह्मविष्णुमहेश्वराः। वासुदेवो जगन्नाथस्तथा संकर्षणो विभुः॥ प्रद्युम्नश्चाऽनिरुद्धश्च

भवंतु विजयाय ते । आखंडलोऽग्निर्भगवान् यमो वै निर्ऋतिस्तथा ॥ वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः । ब्रह्मणा सहिताः सर्वे दिक्पालाः पांतु ते सदा ॥ कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः । बुद्धिर्लज्जा वपुः शांतिः क्षांतिस्तुष्टिश्च मातरः ॥ एतास्त्वामभिषिंचंतु देवपत्न्यः समागताः । आदित्यश्चंद्रमा भौमो बुधजीवसिताऽर्कजाः ॥ ग्रहास्त्वामभिषिंचंतु राहुः केतुश्च तर्पिताः । देवदानवगंधर्वा यक्षराक्षसपन्नगाः ॥ ऋषयो मनवो गावो देवमातर एव च । देवपत्न्यो द्रुमा नागा दैत्याश्चाऽप्सरसां गणाः ॥ अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च । औषधानि च रत्नानि कालस्याऽवयवाश्च ये ॥ सरितः सागराः शैलास्तीर्थानि जलदा नदाः । एते त्वामभिषिंचंतु सर्वकामार्थसिद्धये इति । ततः स्नात्वा शुक्लांबरगंधमाल्यधरः प्राङ्मुखो यजमानो मंडपदेवतानां ग्रहादीनां चोत्तरपूजां विधायाऽग्निं संपूज्य विभूतिं धारयेत् । ततो वरणक्रमेण ऋत्विजः प्रतिनिधयश्चोदङ्मुखाः प्राङ्मुखयजमानहस्ते श्रेयः संपादनं कुर्युः । तद्यथा । आचार्यः अमुककर्मणि मया यत्कृतमाचार्यत्वं ( ब्रह्मादिभिस्तु ब्रह्मत्वं सदस्यत्वमित्याद्यूह्यं ) तदुत्पन्नश्रेयोदानं क० । यजमानः । आचार्यादिभ्यः अ० कर्मणः श्रेयोग्रहणं क० । तत आचार्यः शिवा आपः संत्विति यजमानहस्ते जलं क्षिपेत् । सौमनस्य० पुष्पं । अक्षतं चारिष्टं० अक्षतान् । दीर्घमायुः० पुनर्जलं । मया भवन्नियोगेन अ० कर्मणि यथांशेन यत्कृतं जपहोमादि तदुत्पन्नं यच्छ्रेयस्तत्तुभ्यमहं संप्रददे । तेन त्वं श्रेयस्वी भव । सच तथास्त्विति वदेत् । एवं ब्रह्मादयः । ततः कर्ताऽग्नेः पश्चादाचार्यर्त्विजः उदङ्मुखान् संपूज्य देशकालौ संकीर्त्य कृतैतदयुतहोमाख्यग्रहयज्ञस्य प्रतिष्ठासिद्ध्यर्थं श्रीसूर्यप्रीत्यर्थं इमां कपिलां रुद्रदेवत्याममुकगोत्रेभ्योऽमुकशर्मणे आचार्याय दक्षिणां संप्रददे नममेत्युक्त्वा । कपिले सर्वदेवानां पूजनीयाऽसि रोहिणि । तीर्थदेवमयी यस्मादतः शांतिं प्रयच्छ मे इति पठेत् । एवमग्रे । पुण्यस्त्वं

शंख पुण्यानां मंगलानां च मंगलं । विष्णुना विधृतो नित्यमतः शांतिं० ॥ इति सोमाय शंखं । धर्मस्त्वं वृषरूपेण जगदानंदकारकः । अष्ट-
मूर्त्तेरधिष्ठानमतः पाहि सनातनेति भौमाय वृषं ॥ हिरण्यगर्भगर्भस्थं० ॥ इति बुधाय हेम । पीतवस्त्रयुगं यस्माद्वासुदेवस्य वल्लभं । प्रदानात्तस्य
वै विष्णो अतः शांतिं० ॥ इति गुरवे पीतवस्त्रं । विष्णुस्त्वमश्वरूपेण यस्मादमृतसंभवः । चंद्राऽर्कवाहनं नित्यमतः शांतिं० ॥ इति शु-
क्रायाऽश्वं । यस्मात्त्वं पृथिवी कृष्णा धेनुः केशवसंनिभा । सर्वपापहरा नित्यमतः शांतिं० ॥ इति शनये कृष्णां गां । यस्मादायस कर्माणि
त्वदधीनानि सर्वदा । लांगलान्यायुधादीनि तस्माच्छांतिं० ॥ इति राहवे लोहं । यस्मात्त्वं छाग यज्ञानामंगत्वेन व्यवस्थितः । यानं वि-
भावसोर्नित्यमतः शांतिं० ॥ इति केतवे छागं । सर्वेषां वा गावः । ताश्च । गवामंगेषु तिष्ठंति भुवनानि चतुर्दश । यस्मात्तस्माच्छिवं मे स्या-
दिहलोके परत्र चेति देयाः । सर्वेभ्यो वा सुवर्णं । सर्वपक्षेषु शय्या रत्नानि भूमिश्चाऽधिकानि । तन्मंत्रास्तु । यस्मादशून्यं शयनं केशवस्य
शिवस्य च । शय्या ममाऽप्यशून्याऽस्तु दत्ता जन्मनि जन्मनीति शय्यां ॥ यथा रत्नेषु सर्वेषु सर्वे देवाः प्रतिष्ठिताः । तथा शांतिं प्रय-
च्छंतु रत्नदानेन मे सुराइति रत्नानि ॥ यथा भूमिप्रदानस्य कलां नाऽर्हंति षोडशीं । दानान्यन्यानि मे शांतिर्भूमिदानाद्भवत्विहेति भूमिं ॥
वस्त्रकांचनरत्नान्यपि यथाश्रद्धं दद्यात् । ततो ब्रह्मादिऋत्विग्भ्यो द्वारजापकेभ्योऽन्येभ्यश्चोक्तरीत्या यथाशक्ति दक्षिणां दत्वा यांतुदेवेति दे-
वान् गच्छगच्छेत्यग्निं च विसृज्य तत्पीठं सोपस्करमाचार्यहस्ते प्रतिपाद्य पत्न्या सह रूपंरूपमित्याज्यावलोकनांते तदाज्यं सदक्षिणं ब्राह्मणाय
दत्वोक्तसंख्यया गुडौदनादिभिर्विप्रान् संभोज्याशिषो गृहीत्वा कर्मेश्वरार्पणं कुर्यात् ॥ इतिकमलाकरभट्टकृतावयुतहोमप्रयोगः ॥ अथ लक्षहोमः ॥
मात्स्ये । कथितोऽयुतहोमोऽयं लक्षहोममतः शृणु । सर्वकामाप्तये यस्माल्लक्षहोमं विदुर्बुधाः ॥ पितॄणां वल्लभं साक्षाद्भुक्तिमुक्तिफलप्रदं । ग्रहताराबलं

लब्ध्वा कुर्याद्ब्राह्मणवाचनं ॥ " शां० सा० अत्र वर्ज्य कैश्चिदुक्तं । अर्कश्चंद्रादष्टमे ज्ञश्चतुर्थे मंदः शुक्रादष्टमेंऽगारकश्चेत् । राहुर्धर्मे जीवतः खेटसुतौ होमे नाशः पुत्रदाराधनानां ॥ अस्माद्दशगुणः प्रोक्तो लक्षहोमः स्वयंभुवा । आहुतीभिः प्रयत्नेन दक्षिणाभिस्तथैव च ॥ अन्येन गुडौदनादिनैवेद्येन दशगुणत्वं ज्ञेयं । अथ कुंडमंडपादि । द्विहस्तविस्तृतं तद्वच्चतुर्हस्ताऽऽयतं पुनः । लक्षहोमे भवेत्कुंडं योनिवक्त्रं त्रिमेखलं ॥ " शां० स० व्यासतो द्विहस्तविस्तृतं फलतश्चतुर्हस्तायतं भवतीत्यर्थः । " चतुर्हस्तायतमिति पक्षांतरं चिरदाहियवादिविषयं । अन्ये तु क्षेत्रफलोक्तिरियं । द्विहस्तकरण्यां हि चतुर्हस्तं क्षेत्रं भवति । तेनैक एव पक्ष इत्याहुः ॥ अत्रर्त्विजो बृहत्पराशरेणोक्ताः । युग्मास्तु ऋत्विजः कार्या ब्राह्मणा ये विपश्चितः । नित्यं जपपराश्चैव नियोज्यास्ते दश द्विजाः ॥ कंदमूलफलाऽऽहारा दधिक्षीराऽशिनोऽपि वा ॥ मात्स्ये । द्विरंगुलोच्छ्रिता कार्या प्रथमा मेखला बुधैः । द्विरंगुलोन्नता तत्र द्वितीया समुदाहृता ॥ उच्छ्रायविस्तराभ्यां च तृतीया चतुरंगुला । चतुरंगुलविस्तारः पूर्वयोरपि शस्यते ॥ तस्य चोत्तरपूर्वेण वितस्तित्रयसंमितं । प्रागुदक्प्रवणं तद्वच्चतुरस्रं समंततः ॥ विष्कंभार्धोच्छ्रितं प्रोक्तं स्थंडिलं विश्वकर्मणा । अष्टादशांगुलोच्चमित्यर्थः । संस्थापनाय देवानां वप्रत्रयसमावृतं । द्विरंगुलोच्छ्रितो वप्रः प्रथमः समुदाहृतः ॥ (द्विरंगुलेत्यार्षं) अंगुलोच्छ्रायकं प्रोक्तं वप्रद्वयमथोपरि । द्व्यंगुलस्तत्र विस्तारः सर्वेषां कथितो बुधैः ॥ दशांगुलोच्छ्रिता भित्तिः स्थंडिले स्यात्तथोपरि । तस्मिन्नावाहयेद्देवान् पूर्ववच्छुक्लतंडुलैः ॥ आदित्याऽभिमुखाः सर्वे साऽधिप्रत्यधिदेवताः । स्थापनीयाः प्रयत्नेन नांऽतरेण पराङ्मुखाः ॥ गरुत्मानधिकस्तत्र संस्थाप्यः श्रियमिच्छता । स च सर्वांते वेद्यां पूर्वभागे स्थाप्यः । अंते तु बादरायण इति न्यायात् । ग्रहमध्ये गरुत्मदादिदेवा न स्थाप्या इति हेमाद्रिः । तदावाहने मंत्रः । सामध्वनिशरीरस्त्वं वाहनं परमेष्ठिनः । विषपापहरो नित्यमतः शांतिं प्रयच्छ मे ॥ विषाऽपहरण इति वा पाठः ।

पूर्ववत्कुंभमामंत्र्य तद्वद्धोमं समाचरेत् । सहस्राणा शतं हुत्वा समित्संख्याधिकं पुनः ॥ पूर्ववत्समिदाज्यचरून् हुत्वा सुपर्णोसिगरुत्मानिति 'इंद्रंमित्रमिति वा' गरुडहोमं कृत्वा समस्ताभिर्व्याहृतिभिर्लक्षहोमं कुर्यादित्यर्थः । घृतकुंभवसोर्धारां पातयेदनलोपरि । औदुंबरीमथाऽऽर्द्रां च ऋज्वीं कोटरवर्जितां [ पर्णशाखाविवर्जितां ] ॥ बाहुमात्रां स्रुचं कृत्वा ततः स्तंभद्वयोपरि । बाहोर्मात्रा प्रमाणं यस्यास्तां हस्तद्वयांऽत-रालदीर्घामित्यर्थः । कुंभमूले यवमात्रं छिद्रं कार्यमित्युक्तं हेमाद्रौ । घृतधारां ततः सम्यगग्नेरुपरि पातयेत् ॥ श्रावयेत्सूक्तमाग्नेयं वैष्णवं रौ-द्रमैंदवं । महावैश्वानरं साम ज्येष्ठसाम च पाठयेत् ॥ स्नानं च यजमानस्य पूर्ववत् स्वतिवाचनं । पूर्ववत् सुरास्त्वामित्यादिमंत्रैरभिषेकपूर्व-कमित्यर्थः । दातव्या यजमानेन पूर्ववद्दक्षिणाः पृथक् । कामक्रोधविहीनेन ऋत्विग्भ्यः शांतचेतसा ॥ न कुर्याद्दक्षिणाहीनं वित्तशाठ्येन मानवः । अदत्वा लोभमोहाद्वा कुलक्षयमवाप्नुयात् ॥ तद्वच्च दश चाऽष्टौ वा लक्षहोमेऽपि ऋत्विजः । कर्तव्याः शक्तितस्तद्वच्चत्वारो वा विमत्सराः ॥ "शां० म० ब्रह्माचार्यसहितानामेवेयं संख्येति केचित् ।" नवग्रहमखात्सर्वं लक्षहोमे दशोत्तरं । कृत्वा दद्यान्मुनिश्रेष्ठ भूषणान्यपि शक्तितः ॥ शयनानि सवस्त्राणि हैमानि कटकानि च । कर्णांगुलीपवित्राणि कंठसूत्राणि शक्तितः ॥ अन्नदानं यथाशक्त्या कर्तव्यं भूतिमिच्छता । अ-न्नहीनः कृतो यस्माद्दुर्भिक्षफलदो भवेत् ॥ न चाऽत्यल्पधनः कुर्याल्लक्षहोमं नरः क्वचित् । तस्मात्पीडाकरो नित्यं य एव भवति ग्रहः । त-मेव पूजयेद्भक्त्या द्वौ वा त्रीन्वा यथाविधि ॥ एकमप्यर्चयेद्भक्त्या ब्राह्मणं वेदपारगं । दक्षिणाभिः प्रयत्नेन न बहूनल्पवित्तवान् ॥ लक्षहोम-स्तु कर्तव्यो यदा वित्तं भवेद्गृहे । यतः सर्वानवाप्नोति कुर्वन्कामान् विधानतः ॥ फलं तु । पूज्यते शिवलोके च वस्वादित्यमरुद्गणैः । यावत्कल्प-शतान्यष्टावथ मोक्षमवाप्नुयात् ॥ सकामो यस्त्विमं कुर्याल्लक्षहोमं यथाविधि । सर्वान्कामानवाप्नोति पदं चाऽनंतमश्नुते ॥ पुत्रार्थी लभते पु-

तान्धनार्थी लभते धनं । भार्यार्थी लभते भार्यां कुमारी च शुभं पतिं ॥ भ्रष्टराज्यस्तथा राज्यं श्रीकामः श्रियमाप्नुयात् । यं यं प्रार्थयते कामं तं तं प्राप्नोति पुष्कलं ॥ निष्कामः कुरुते यस्तु परं ब्रह्माऽधिगच्छति ॥ इति लक्षहोमः ॥ अथ कोटिहोमः ॥ मात्स्ये । अस्माच्छतगुणः प्रोक्तः कोटिहोमः स्वयंभुवा । आहुतीभिः प्रयत्नेन दक्षिणाभिः फलेन च ॥ पूर्ववद् ग्रहदेवानामावाहनविसर्जने । होममंत्रास्त एवोक्ताः स्नाने दाने तथैव च ॥ कुंडमंडपवेदीनां विशेषोऽयं निबोध मे ॥ कोटिहोमे चतुर्हस्तं चतुरस्रं च सर्वतः । योनिवक्त्रद्वयोपेतं तदप्याहुस्त्रिमेखलं ॥ " शां० म० सर्वतश्चतुर्हस्तमिति विस्ताराऽऽयामखातेष्वित्यर्थः । वक्त्रं कंठः । योनिकंठयुतमिति पितामहचरणाः ।" एकं योनिवक्त्रं पश्चिमेऽपरं दक्षिण इति हेमाद्रौ मदनरत्ने चोक्तं । वेदिश्च कोटिहोमे स्याद्वितस्तीनां चतुष्टयं । चतुरस्रा समंतात्तु त्रिभिर्वप्रैः समावृता ॥ वप्रप्रमाणं पूर्वोक्तं वेदिकायास्तथोच्छ्रयः । यत्तु भविष्ये । कुंडस्य पूर्वभागे तु वेदिं कुर्याद्विचक्षणः । चतुर्हस्तां समां चैव हस्तमात्रोच्छ्रितां नृपेति तत्क्षेत्रफलपरं । तथा षोडशहस्तः स्यान्मंडपश्च चतुर्मुखः ॥ पूर्वद्वारे च संस्थाप्य बह्वृचं वेदपारगं । यजुर्वेदविदं याम्ये पश्चिमे सामवेदिनं ॥ अथर्ववेदिनं तद्वदुत्तरे स्थापयेद्बुधः । अष्टौ तु होमकाः कार्या वेदवेदांगवेदिनः ॥ एवं द्वादश तान्विप्रान् वस्त्रमाल्याऽनुलेपनैः । पूर्ववत्पूजयेद्भक्त्या सर्वाभरणभूषणैः ॥ रात्रिसूक्तं च रौद्रं च पावमानं सुमंगलं । पूर्वतो बह्वृचः शांतिं पठन्नास्त उदङ्मुखः ॥ शाक्रं सौम्यं च रौद्रं च कौष्मांडं शांतिमेव च । पाठयेद्दक्षिणद्वारे यजुर्वेदिनमुत्तमं ॥ सौपर्णमथ वैराजमाग्नेयं रुद्रसंहितां । ज्येष्ठसाम तथा शांतिं छंदोगः पश्चिमे पठेत् ॥ शांतिसूक्तं च सौरं च तथा शाकुनिकं शुभं । पौष्टिकं च तथा राजन्नुत्तरेणाऽप्यथर्ववित् ॥ पंचभिः सप्तभिर्वाऽपि होमः कार्योऽथ पूर्ववत् । पूर्वद्वारे इति जापका उक्ताः । द्वारपालास्तु भिन्ना इति हेमाद्रिः । पंचभिः सप्तभिरिति द्वादश होमकाः । वाशब्दोऽष्टापेक्षयोक्तः ।

मात्स्ये एवं षोडशाऽप्युक्ताः । तत्रापि ऋत्विजः कार्या रविनंदन षोडश । सर्वहोमेषु राजर्षे दयाचिचेषु पावना इति । हेमाद्रौ तु विंशति-
श्वतुर्विंशतिर्द्वात्रिंशच्चतुःषष्टिः शतं वा होतार इत्युक्तं । स्नाने दाने च मंत्राः स्युस्त एव मुनिसत्तम । वसोर्धाराविधानं च लक्षहोमवदिष्यते ॥
अनेन विधिना यस्तु कोटिहोमं समाचरेत् । सर्वान् कामानवाप्नोति ततो विष्णुपदं व्रजेत् ॥ अश्वमेधसहस्राणि दश चाऽष्टौ च धर्मवित् ।
कृत्वा यत्फलमाप्नोति कोटिहोमात्तदश्नुते ॥ ब्रह्महत्यासहस्राणि भ्रूणहत्याऽर्बुदानि च । नश्यंति कोटिहोमेन यथावच्छिवभाषितं ॥ इति मा-
त्स्ये कोटिहोमः ॥ अथलक्षहोमादौ हेमाद्रिमदनरत्नयोर्नृसिंहपुराणे विशेषः । दुःस्वप्नदर्शने घोरे ग्रहपीडासु चात्मनः । हसंतीं प्रतिमां चैव
ज्वलंतीं च विशेषतः ॥ प्रस्वेदयुक्तां प्रतिमां दृष्ट्वा च नृपनंदन । तथा महाज्वरग्रस्तो धारां देवस्य मूर्धनि ॥ संततं नरसिंहस्य कुर्याद्वा
कारयेद्बुधः । अयने विषुवे चैव चंद्रसूर्यग्रहे तथा ॥ नरसिंहः समाराध्यो लक्षहोमं च कारयेत् ॥ अनावृष्टिमहामारीज्वररोगभये तथा ॥ नर-
सिंहं समाराध्य ब्राह्मणैर्वेदपारगैः । कारयेल्लक्षहोमं तु ग्रामपश्च नराधिपः ॥ दृष्ट्वोपसर्गमरणं प्रजानामात्मनश्च यः । सम्यगाराध्य यत्नेन
नरसिंहस्य मंदिरे ॥ शंकरायतने वाऽपि कोटिहोमं समाचरेत् । प्रमाणं बाहुमात्रं तु सर्वतः कुंडलक्षणं ॥ ब्रह्मचारी व्रते युक्तस्त्रिरात्रं तु
विशेषतः । अहोरात्रमुपोष्याऽथ गायत्रीमयुतं जपेत् ॥ निराहाराश्च शुचयस्ते सर्वे संयतेंद्रियाः । आरभेयुस्ततो यज्ञं ततो होममतंद्रिताः ॥
यवधान्यतिलैर्मिश्रैर्गायत्र्या प्रथमाहुतिं । जुहुयादेकचित्तेन स्वाहाकाराऽन्वितं बुधः ॥ ततो व्याहृतीभिः पश्चाज्जुहुयाच्च तिलादिकं । या-
वत्प्रपूर्यते संख्या लक्षं वा कोटिरेव वा ॥ समस्तव्याहृतिभिरेकाहुतिरित्यर्थः । तावद्दिने दिने कुर्यादच्युताऽर्चनपूर्वकं । तावच्च भोजनं द-
द्याद्यावद्धोमं समाचरेत् ॥ समाप्ते दक्षिणां दद्यात्ततः प्रोक्ष्योदकेन च । एवं कृते तु ग्रामस्य राज्ञा जनपदस्य च ॥ सर्वबाधाप्रशमनी शां-

तिर्भवति सर्वदा । अथ गायत्र्याद्ययुतहोमः । हेमाद्रौ मदनरत्ने च देवीपुराणे । षडस्रं लक्षणोपेतं वैडूर्यं कारयेच्छिवं । हेमपीठं सुशोभाढ्यं चंद्रार्कौ तत्र मातरः ॥ चर्चिकाद्याः प्रकर्तव्याः पूर्वादिपरिकल्पिताः । ग्रहाणां प्राग्वत्पूजा कार्या । लक्षहोमः प्रकर्तव्यः सर्वपीडानिवारणः ॥ गायत्र्या ग्रहमंत्रैश्च कूष्मांडैर्जातवेदसे । ऐंद्रवारुणवाह्नेयैर्वायुयाम्यैः सवैष्णवैः ॥ होमः शतसहस्रस्तु अत्रोत्कृष्टो विधीयते । अत्र मंत्रविभागं तु बृहत्पराशरोक्तं वक्ष्यामः । सर्वपीडाविनाशाय कोटिहोमः शुभावहः । यवव्रीहिघृतक्षीरतिलाः कंगुप्रसारिकाः । पंकजोशीरबिल्वाम्रदला होमे प्रकीर्तिताः ॥ तत्रैव ब्रह्मोवाच । लक्षहोमं प्रवक्ष्यामि यथा प्रोक्तं तु शंभुना । भूमिकंपे दिशां दाहे ग्रहयुद्ध उपस्थिते ॥ केतुसंदर्शने चैव आदित्यस्य च कंपने । कृष्णवर्णेऽथ वा सूर्ये तथा छिद्रसमन्विते ॥ रक्तवृष्टिस्तथा नद्यो विपरीता वहंति च । निर्गतं गगनाद्धूमं वा-रिमध्येऽग्निसंस्थितिः ॥ यस्य राशौ ग्रहाः पंच षट् सप्त च सुराधिप । ग्रहणं चंद्रसूर्यस्य ग्रहैर्वाऽष्टमसंस्थितैः ॥ सूर्यस्याऽभ्यर्चनं कार्यं शि-वस्याऽशुभनाशनं । लक्षहोमं महाहोमं कोटिहोमं पुरोदितं ॥ गोभूहिरण्यवस्त्राऽन्नतिलदानं शुभावहं । पायसं दधि क्षीराज्यं देयं नैवेद्यमु-त्तमं ॥ एकलिंगे प्रकर्तव्यमथो विप्रगृहेषु च । वृषादिरहितमेकलिंगं । बाहुमात्रे ततः कुंडे जंघामात्रेऽथवा पुनः ॥ होतव्यं सुरराजेंद्र नाऽन्ये-षु विधिरीदृशः । अहं ते कथयिष्यामि लक्षहोमस्य यो विधिः ॥ चतुर्हस्तं तथा कुंडं विस्तारं सुरसत्तम । षोडशांगुलविस्तारमुच्छ्राये षोड-शांगुलं ॥ चतुरंगुलं सवेदोष्ठं चतुर्हस्तस्य कीर्तितं । द्वादशांगुलविस्तारा दैर्घ्याद्द्विगुणविस्तरा ॥ योनिः कुंडे प्रकर्तव्या नाऽधिका शस्यते क्व-चित् । यवव्रीहिघृतं क्षीरं तिलाः कंगुर्दलानि च ॥ चूतस्य सुरराजेंद्र पालाश्यः समिधस्तथा । दूर्वाः कुशाः शमी ज्येष्ठा औदुंबर्यः शुभावहाः ॥ गायत्री त्र्यंबकं चाऽपि शंभवायेत्यथापि च । जातवेदसमंत्रेण महाँइंद्रेण चैव हि ॥ सहस्रशीर्षेण नमोहिरण्येनेत्यथापि हि । रुद्रमंत्रैस्तथा

सौरैः पंचरात्रागमोदितैः ॥ होतव्यं शतमष्टौ तु सहस्रमथ संख्यया । पंकजोत्पलबिल्वादिहोमद्रव्यं शुभावहं ॥ कंपनं स्वेदनं गात्रे अश्रु-
पातार्थजल्पनं । देवतानां सुराध्यक्ष उत्पाताः क्षयकारकाः ॥ लक्षहोमं प्रकुर्वीत कोटिहोममथाऽपि वा । गोदोहं रुद्रभवने महास्नानं शुभा-
वहं ॥ अन्यथा नरको घोरो जायते राजविभ्रमः ॥ ये देवास्ते ग्रहाः सर्वे ये ग्रहास्ते तु जंगमाः । तेषां संपूजनान्नित्यं दीर्घायुः पुरुषो भ-
वेत् ॥ इति गायत्र्याद्ययुतादिहोमः ॥ अत्र लक्षहोमे कोहिहोमे च बृहत्पराशरोक्तो विशेषः । युग्माश्च ऋत्विजः कार्या ब्राह्मणा ये विप-
श्चितः । नियमव्रतसंपन्नाः सहिताः पार्थिवेन तु ॥ नित्यं जपपराश्चैव नियोज्यास्ते दश द्विजाः । कंदमूलफलाहारा दधिक्षीराऽशिनोऽपि
वा ॥ अग्निं सोमं च सूर्यं च विष्णुं चैव प्रजापतिं । विश्वान्देवान्महेंद्रं च मित्तं स्विष्टकृतं तथा ॥ दधिमधुघृताक्ताश्च समिधश्चैव यज्ञियाः ।
होमयेच्छतसाहस्रं मंत्रैश्चैव यथाक्रमं ॥ चतुर्विंशति गायत्र्या मानस्तोकेति षट् तथा । त्रिंशद् ग्रहादिमंत्रैश्च चत्वारि विष्णुदैवतैः ॥ कूष्मांडै-
र्जुहुयात्पंच किरिकया तु षोडश । हुनेद्दशसहस्राणि जातवेदस इत्यृचा ॥ पंचैव तु सहस्राणि जुहुयादिंद्रदैवतैः । तथा । कोटिहोमे चतु-
र्हस्तं चतुरस्रायतं पुनः । योनिवक्त्रद्वयोपेतं तदप्याहुस्त्रिमेखलं ॥ वेदी च कोटिहोमे स्याद्धस्तानां च चतुष्टयं । चतुरस्रा समा तद्वत्त्रिभिर्वप्रैः
समावृता । वेद्चतुष्टयस्थांश्चतुरो द्वारपालानुक्त्वाऽऽह । अष्टौ तु होमकाः कार्या वेदवेदांगवेदिनः । एवं द्वादश ते पूज्या वस्त्रमाल्याऽनु-
लेपनैः । अन्यत्प्राग्वत् । कोटिहोमे विशेषो भविष्योत्तरे । संवरण उवाच । भगवन्महदुत्पातसंभवे भूप्रकंपने । निर्घाते पांसुवर्षे च गृह-
भंगे तथैवच ॥ जन्मनक्षत्रपीडासु अनावृष्टिभयेषु च । क्रूरासु ग्रहपीडासु दुर्भिक्षे राष्ट्रविड्वरे ॥ व्याधीनां संभवे जाते शरीरे चाऽतिपीडि-
ते । क्लेशे महति चोत्पन्ने किं कर्तव्यं नरैस्ततः ॥ स्वर्गस्य साधनं यत्तत्कीर्तिदं धनदं तथा । प्रब्रूहि त्वं द्विजश्रेष्ठ तथाऽऽरोग्यप्रदं नृणां ॥

सनत्कुमार उवाच । शृणु राजन्प्रवक्ष्यामि शांतिकर्मण्यनुत्तमं । कोटिहोमाख्यमतुलं सर्वकामफलप्रदं ॥ ब्रह्महत्यादिपापानि येन नश्यंति तत्क्षणात् । उत्पाताः प्रशमं यांति महत्संपद्यते सुखं ॥ विधानं तस्य वक्ष्यामि शृणुष्वैकमना भव । देवाऽगारे च भवने तीर्थे वा शिवसंनिधौ ॥ पर्वते वाऽथ कुर्वीत य इच्छेत्क्षेममात्मनः । शुभनक्षत्रयोगे च वारे सर्वगुणान्विते ॥ यजमानस्याऽनुकूले कोटिहोमं समाचरेत् । पूजयित्वा प्रयत्नेन ब्राह्मणं वेदपारगं ॥ वस्त्रैर्विभूषणैश्चैव गंधमाल्याऽनुलेपनैः । प्रणम्य विधिवत्तस्मा आत्मानं च निवेदयेत् ॥ त्वं मे यतः पिता० सार्वकामिकं ॥ पुरोहितस्ततः प्राज्ञः शुक्लांबरधरः शुचिः । ब्राह्मणैः संवृतः पुण्यैः संयतः सुसमाहितैः ॥ भूमिभागे समे शुद्धे प्रागुदक्प्रवणे तथा । पुण्याहंवाचयेत्पूर्वं कृत्वा विप्रांस्तु पूजयेत् ॥ ततः समाहितो विप्रैः सूत्रयेन्मंडपं शुभं । उत्तमं शतहस्तं तु तदर्धेन तु मध्यमं ॥ जघन्यं तु तदर्धेन शक्तिकालाद्यपेक्षया । मध्ये तु मंडपस्याऽथ कुंडं कुर्याद्विचक्षणः ॥ अष्टहस्तप्रमाणेन आयामेन तथैवच । मेखलात्रितयं तस्य द्वादशांगुलविस्तृतं ॥ तत्प्रमाणां तथा योनिं कुर्वीत सुसमाहितः । कुंडस्य पूर्वभागे तु वेदिं कुर्याद्विचक्षणः ॥ चतुर्हस्तां समां चैव हस्तमात्रोच्छ्रितां नृप । स्थापनं तत्र देवानां कुर्याद्यत्नेन बुद्धिमान् ॥ उपलिप्य ततो भूमिं मंडपस्य समंततः । विन्यसेत्कलशांस्तत्र जलपूर्णांश्चतुर्दिशं ॥ अश्वत्थप्लक्षचूताद्यैः पल्लवैरुपशोभितान् । वितानमुपरिष्टाच्च मंडपस्य प्रकल्पयेत् ॥ स्थापयेद्दिक्षु सर्वासु तोरणानि विचक्षणः । एवं संभृतसंभारः पुरोधाः सुसमाहितः ॥ पुण्याहजयघोषेण होमकर्म समाचरेत् । स्थापयित्वा सुरान्वेद्यां वक्ष्यमाणानरिंदम ॥ ब्रह्माणं पूर्वभागे तु मध्ये देवं जनार्दनं । पश्चिमे तु तथा रुद्रं वसूनुत्तरतस्तथा ॥ ऐशान्यां च ग्रहान्सर्वानाग्नेय्यां मरुतस्तथा । वायुं सौम्यां तथैशान्यां लोकपालान् क्रमेण तु ॥ एवं संस्थाप्य विबुधान् यथास्थानं नृपोत्तम । पूजयेद्विधिवद्वस्त्रैर्गंधमाल्याऽनुलेपनैः ॥ वेदोक्तमंत्रैस्त-

ह्लींगैः पुराणोक्तैः पृथक्पृथक् । आदित्या वसवो० कर्तुः समाहिताः ॥ एवं संपूज्य देवांस्तान्प्रयत्नेन विशुद्धधीः । नैवेद्यैर्विविधैर्भक्ष्यैः फलैर्दीपैः सुशोभनैः ॥ ततस्तु तैर्द्विजैः सार्धं कुंडस्य विधिपूर्वकं । कुर्यात्संस्कारकरणं यथोक्तं वेदवित्तमैः ॥ ततः समाह्वयेद्वह्निं नाम्नाख्यातं घृतार्चिषं । नियोजयेद्द्विजांस्तत्र शतसंख्यान्नृपोत्तम ॥ अलाभे च बहूनां तु यथालाभं नियोजयेत् । विद्यावित्तवयोवृद्धान् गृहस्थान्संयतेंद्रियान् ॥ स्वकर्मनिरतान् शुद्धान् ज्ञानशीलान्प्रयत्नतः । चिंतयेत्तत्र देवेशं पंचास्यं नृप पावकं ॥ मुखानि तस्य चत्वारि सप्तजिह्वानि पार्थिव । एकजिह्वमथैकं तु तत्स्मृतं सार्वकामिकं ॥ धूमायमाने न वृथा होतव्यं ज्वलितेऽनले । ऋग्भिः पूर्वामुखैर्होमो यजुर्भिश्चोत्तरामुखैः ॥ सामभिः पश्चिमे कार्योऽथर्वभिर्दक्षिणामुखैः । ऋग्भिः ऋग्वेदिभिः । आघारावाज्यभागौ तु पूर्वं हुत्वा विचक्षणः ॥ परितश्च परिस्तीर्णे कल्पिते च तथाऽऽसने । ब्राह्मणाः पूर्वमेवं तु सर्वे पश्चात्समाचरेत् ॥ होमो व्याहृतिभिश्चैव सर्वस्तत्र विधीयते । प्रणवादिभिश्च तल्लिंगैः स्वाहाकारांतयोजितैः ॥ जुहुयात्सर्वदेवानां वेद्यां ये चोपकल्पिताः । एवं प्रकल्पयेद्यज्ञं कोटिहोमाख्यमुत्तमं ॥ तिलाः कृष्णा घृताऽभ्यक्ताः किंचिद्व्रीहिसमन्विताः । किंचिद्यवसमायुता इति क्वचित्पाठः । होतव्याः कोटिहोमे तु समिधः सुपलाशजाः ॥ दक्षिणा च सहस्रं धेनवः सहस्रं शंखा इत्यादि । सर्वेषामथवागाव इति पक्षे नवशतं गावो नवशतं सुवर्णाः । पूर्णे पूर्णे सहस्रे तु दद्यात्पूर्णाहुतिं शुभां । पंचमे तन्मुखे राजन्सर्वकामार्थसिद्धये ॥ पूर्णाहुत्यः समाख्याताः कोटिहोमे नराधिप । सहस्राणि नृपश्रेष्ठ दश शास्त्रविशारदैः ॥ प्रारंभदिनमारभ्य ब्राह्मणैर्ब्रह्मवादिभिः । होतव्यं यजमानैश्च अथवा सुपुरोहितैः ॥ क्रोधलोभादयो दोषा वर्जनीयाः प्रयत्नतः । यजमानेन राजेंद्र सर्वकामानभीप्सता ॥ अथकोटिहोमस्य शतमुखदशमुखद्विमुखैकमुखभेदा उच्यंते । ते च हेमाद्रौ भविष्योत्तरे । संवरण उवाच । बहुत्वात्कर्मणो ब्रह्मन् कोटिहोमः सुदुष्करः । कालेन महता चैव

शक्यः प्राप्तुं कथंचन ॥ नियमा ब्रह्मचर्याद्या दुष्करा इति मे मतिः । निरोधो ब्राह्मणानां च भूशय्यादिः सुदुष्करः ॥ कार्ये गुरुलघीयस्त्व-
पर्वकालाद्यपेक्षया । कोटिहोमस्य संक्षेपं वद मे ब्रह्मसंभव ॥ सनत्कुमार उवाच । शताननो दशमुखो द्विमुखैकमुखस्तथा । चतुर्विधो म-
हाराज कोटिहोमो विधीयते ॥ कार्यस्य गुरुतां ज्ञात्वा नैकट्यमथ पर्वणः । पर्व ग्रहणादि । यथा संक्षेपतः कार्यः कोटिहोमस्तथा शृणु ॥
कृत्वा कुंडशतं दिव्यं यथोक्तं हस्त संमितं । एकैकस्मिंस्तथा कुंडे दश विप्रान्नियोजयेत् ॥ सद्यःपक्षे तु विप्राणां सहस्रं परिकीर्तितं । प्र-
तिलक्षं दशेत्याशयः । एकस्थानप्रणीतेऽग्नौ सर्वतः परिभाविते ॥ " शां० म० एकस्थानात्सर्वतः सर्वस्मिन्कुंडे परिभाविते संस्कृतेऽग्नौ प्रणी-
ते इत्यर्थः " होमं कुर्युर्द्विजाः सर्वे कुंडे कुंडे यथोदितं । ( अत्र सर्वेतिकर्तव्यता प्राग्वत् ) यथा कुंडबहुत्वेऽपि राजसूये महाक्रतौ ॥
स्यादेवाऽग्निबहुत्वं तु नच यज्ञो विभिद्यते । तथा कुंडशतेऽप्यत्र घृतार्चिषि नियोजिते ॥ एक एव भवेद्यज्ञः कोटिहोमो न संशयः ।
एवं यः क्रियते क्षिप्रं व्याकुलैः कार्यगौरवात् ॥ शताननः स विज्ञेयः कोटिहोमो न संशयः । अत्र कुंडानां हस्तमात्रता शीघ्रदाहिघृता-
दिपरा । तिलयवादौ तु । लक्षार्धे त्रिकरं कुंडं लक्षहोमे चतुष्करं । तथा । अयुतेत्वथ होतव्ये कुंडं स्याद्धस्तमात्रकं । द्विगुणं लक्षहोमे च
कोटिहोमे चतुर्गुणमिति तंत्रांतरोक्तं ज्ञेयं । " शां० सा० अत्र चाऽऽचार्यो नैर्ऋतकुंडेऽग्निं प्रतिष्ठापयेत् । ततस्तमग्निमन्येषु कुंडेषु ऋ-
त्विजः प्रणयेयुः " अत्र ऋत्विगाचार्यसहित इत्युक्तस्याऽऽचार्यस्य विशेषाऽनुक्तेः सहस्रसंख्या ऋत्विजामेव ॥ इति शतमुखः ॥ स्वल्पैर-
होभिः कार्यः स्याद्वर्षाकालादिके यदा । तदा दशमुखः कार्यः कोटिहोमो महामते ॥ विप्राणां द्वे शते तत्र विभज्य विनियोजयेत् । अत्र
कोटिदशांशदशलक्षाण्येककुंडे इति । कुंडं पंचकरं प्रोक्तं दशलक्षाहुतौ क्रमादित्युक्तेः पंचहस्तकुंडानि प्रतिकुंडं च ऋत्विजां विंशतिः सि-

ध्यति । मंडपश्च पंचाशत्करः पंचविंशतिकरो वा ॥ इति दशमुखः ॥ यत्र कुंडद्वयं कृत्वा विभज्य च विभावसुं । होमं कुर्युर्द्विजा भूयः संस्कृत्य विधिपूर्वकं ॥ शतं तत्र नियोज्यं च विप्राणां प्रविभज्य वै । मासेऽथवाऽर्धमासे वा कार्यकाले ह्युपस्थिते ॥ तदा तु द्विमुखः कार्यः कोटिहोमो विचक्षणैः । यदा तु स्वेच्छया यज्ञं यजमानः समापयेत् ॥ कालेन बहुना राजंस्तदा चैकमुखो भवेत् । एककुंडस्थितो वह्निरेकचित्तैः समाहितः ॥ यथालाभस्थितैर्विप्रैर्ज्ञानशीलैर्विचक्षणैः । न संख्यानियमश्चाऽत्र ब्राह्मणानां नरोत्तम । न कालनियमश्चैव स्वेच्छया यज्ञ उच्यते ॥ " शां० म० । एकरात्रं त्रिरात्रं वा पंचरात्रमथापि वा । शिवगाथां विष्णुगाथां शांतिं ब्राह्मणभोजनं ॥ समापयेत्प्रतिदिनमेवं भक्तिसमन्वित इति वासिष्ठेऽप्येकरात्रादिग्रहणं नियमाऽनादरार्थं । " आवृत्त्या कर्तुकामस्य चातुर्मास्यादिकर्मवत् । सदा प्रसक्तः कर्तव्यो यज्ञोऽयं सार्वकामिकः ॥ अयमेकमुखो राजन् कालेन बहुना भवेत् । बहुविघ्नश्च कालो वै तस्मात्संक्षेपमाचरेत् ॥ यतो हि वित्तमायुश्च चित्तं चैवाऽस्थिरं सदा । अतः संक्षेपतः कार्यं धर्मकार्यं प्रशस्यते ॥ ततः समाप्ते यज्ञे तु कारयेत्सुमहोत्सवं । शंखतूर्यनिनादेन ब्रह्मघोषरवेण च ॥ ( ब्रह्म वेदः ) ततस्तु दक्षयेद्विप्रानृत्विजः श्रद्धयाऽन्वितः । निष्कैश्च कंकणैश्चैव कुंडलैर्विविधैर्नृप ॥ गोशतं चैव दातव्यमश्वानां च शतं तथा । सहस्रं च सुवर्णानां सर्वेषामपि दापयेत् ॥ ग्रामैर्गजैरथैरश्वैः पूजयेच्च पुरोहितं । दीनांऽधकृपणांश्चाऽन्यान्वस्त्रैरन्नैश्च तोषयेत् ॥ ततश्चाऽवभृथे स्नायात्तैर्घटैः पूर्वकल्पितैः । लक्षहोमोक्तमंत्रेण सदा विजयकारिणा ॥ एवं समापयेद्यस्तु कोटिहोममखं शुभं । तस्याऽऽरोग्यं प्रियाः पुत्रा आयुर्वृद्धिश्च संपदः ॥ सर्वपापक्षयश्चाऽऽशु जायते नृपसत्तम । अनावृष्टिभयं नैव उत्पातभयमेव च । दुर्भिक्षग्रहपीडाश्च प्रशमं यांति भूतले ॥ एतत्पुण्यं पापहरं सर्वकामफलप्रदं । सनत्कुमारमुनिना पार्थिवाय निवेदितं ॥ सर्वोपसर्गशमनं भवनाशनं च ये कारयंति

मनुजा नृप कोटिहोमं । भोगानवाप्य मनसोऽभिमतान्प्रकामं ते यांति शक्रसदनं भुवि शुद्धसत्वाः ॥ " शां० म० अत्र यथैते साहस्राः साद्यस्क्रा इत्येकसंज्ञयोपक्रांतेषु क्रमाम्नातेषु च निकायिसंज्ञकेषु यागेषु प्रथमस्याऽऽम्नातधर्मकस्य धर्मा उत्तरेष्वनाम्नातधर्मकेषु निकायित्वाऽवांतरसामान्यात्साहस्रसाद्यस्क्राद्येकनामकत्वाच्च प्रवर्तंत इत्यष्टमे निकायिनां तु पूर्वस्योत्तरेषु प्रवृत्तिः स्यादित्यत्र निरणायि । तथेह चतुर्विधो महाराजकोटिहोमइति चतुर्णां कोटिहोमत्वाऽवांतरसामान्येनाऽऽम्नातधर्मकस्यैकमुखस्य धर्मा अनाम्नातधर्मकेषु द्विमुखादिषु प्रवर्त्तंते । तेन तेषां विकृतित्वं । तत्र द्विमुखे तावत्कुंडद्वयं प्रकृतिप्राप्तेषु शतपंचाशत्पंचविंशतिहस्तमंडपेषु मध्यमनवमांशे कार्यं । तस्यैव मध्यमेनवमांशेतु कुंडंकुर्याद्विचक्षण इति प्रकृतौ वचनेनाऽत्रापि तथाप्राप्तेः । तच्च कुंडद्वयं षड्ढस्तं । दशलक्षमिते होमे षट्करं संप्रचक्षत इति भविष्यत्पुराणात् । पंचहस्तं वा । कुंडं पंचकरं प्रोक्तं दशलक्षाहुतौ क्रमादिति तंत्रांतराच्च । दशलक्षोत्तरमेकोनकोटिपर्यंतं पंचषट्करमित्यर्थः । अयुतहोमतः प्राप्तमेकहस्तत्वं प्राकृतं परिमाणं त्वदृष्टार्थत्वापत्त्याऽप्राकृतकार्यत्वाद्बाध्यते । अर्थात्परिमाणमिति कात्यायनोक्तेश्च । तत्र पंचविंशतिहस्ते मंडपे मध्यनवांशे दक्षिणोत्तरयोः कुंडद्वयं निविशते । कथंचित्प्रकृतितो द्वादशांगुलमेखलाप्राप्तेः । इतरयोस्तु मंडपयोः सुगम एव निवेशः । एवं दशमुखेऽपि प्राकृतैकहस्तत्वबाधेन पंचकराणि षट्कराणि वा दश कुंडानि । तेषु प्रत्येकं दशलक्षाहुतयः । तत्र पंचविंशतिहस्ते मंडपे मध्यमांशे पूर्वादिषु चतुर्दिक्षु मध्ये संलग्नानि चत्वारि कुंडानि । प्राकृतमध्यमांशाऽधिकरणत्वस्य यावत्संभवमनुग्रहस्य न्याय्यत्वात्प्राचिनवमांशे तु प्राकृती चतुष्करा वेदी । सप्तस्वंशेषु षट्कुंडानि । यः कश्चिदेकोंऽशस्तु रिक्त एव ॥ कुंडद्वयं मध्यमांऽशे अष्टस्वंशेष्वष्टावित्यपि केचित् । शतमुखेऽपि पंचविंशतिहस्ते तावन्मंडपे शतकुंड्या निवेशो बाधित एव । पंचाशद्धस्ते यद्यपि संभवति तथापि सहस्रविप्राणां

सुखेन निवेशो बाधितः । अतः शतहस्ते एव निवेश उच्यते । तत्र मध्यमांशे प्राग्भागे उदक्संस्था पंचानामेका पंक्तिः । तेषां च कुंडानां प्रत्येकमंतरं सार्धपंचहस्ताश्चत्वार्यंगुलानि च । ततः प्रतीच्यामेतादृशमेवाऽन्यत्पंक्तित्रयं कार्यं । पंक्तीनामंतरं चाऽष्टौ हस्ता अष्टांगुलानि च । एवं विंशतिकुंडानि मध्यभागे। अन्येष्वष्टसु भागेषु मध्ये द्वे द्वे अष्टसु दिक्ष्वष्टावष्टाविति । प्रत्येकं दशदशेति । ननु शतकुंडेषु प्रत्येकं लक्षाहुतिप्राप्तिः । नचैतत्सद्यः कोटिहोमपक्षे संभवति । कृत्वा कुंडशतं दिव्यं यथोक्तं हस्तसंमितमिति शतमुखप्रकरणे कुंडानां हस्तपरिमाणोक्तेरिति । तत्रकेचिद्धस्तसंमितमित्यत्र हस्ताभ्यां हस्तैर्वा संमितमिति विग्रहेण द्वित्रिचतुर्हस्तताऽपि युज्यते । द्विहस्तेऽपि तु लक्षमाहुतयः संमांत्येव । अतएव हेमाद्रौ । अयुते त्वथ होतव्ये कुंडं स्याद्धस्तमात्रकं । द्विगुणं लक्षहोमे तु कोटिहोमे चतुर्गुणमिति । यद्यप्यौत्सर्गिक एकवचनांतेनैव विग्रहस्तथाप्यनुपपत्त्या द्विबहुवचनांतेनाऽपि क्रियते । यथा सप्तदशप्राजापत्यान्पशूनालभत इत्यत्र चोदकप्राप्तैकपशुनिष्पन्नहृदयाद्येकादशाऽवदानगणाऽनुरोधेन प्रजापतिर्देवता यस्याऽसौ प्राजापत्यः प्राजापत्यः प्राजापत्यश्च प्राजापत्या इति कृत्तद्धितानामेकशेषः। ननु अयं चाऽयं चाऽयं चैत इत्येकशेषोत्तरं तद्धितः । चोदकबाधापत्तेरित्युक्तं । एवं च द्विचतुर्हस्तकुंडसंपत्त्या युज्यंत एकैकस्मिन्कुंडे लक्षमाहुतय इत्याहुः । तातचरणास्तु । व्यासतुल्यखातेन षट्पंचचतुस्त्रिद्व्यंगुलानां पंचमेखलानां विंशत्यंगुलोच्चतया च मध्याऽवकाशविवृद्ध्या एकैकहस्तेष्वपि शक्या एव लक्षमाहुतयः कर्त्तुं । अनारभ्याऽऽम्नातपंचमेखलापक्षेण प्राकृतमेखलात्रयबाधस्तूपदिष्टैकहस्तत्वाऽनुरोधेनेति युक्तमाहुः । अत्रैकस्मिन्कुंडे आज्यभागांतं कृत्वाऽन्यकुंडेष्वग्निप्रणयनमिति केचित् । तन्न । वारुणप्राघासिकदक्षिणोत्तरवेद्योरनुष्ठीयमानायां मारुत्यामाग्नेयाद्यष्टहविष्षु चाऽऽघाराज्यभागप्रयाजाद्यंगानांपृथगनुष्ठानवदिहाऽपि तिस्रआहुतीर्जुहोतीतिवत्संख्यया भिन्नेषु कोटिसंख्याकेषु

होमेषु लक्षशः शतकुंडेष्वनुष्ठीयमानेष्वाज्यभागातस्विष्टकृदाद्यंगाऽनुष्ठानभेदस्यैव न्याय्यत्वात् । किंच अप्रमादार्थेन दीक्षाकालीनजागरेण दीक्षोपयुक्तसंभारसंरक्षणेऽपि प्रायणीयाद्यर्थसंभारसंरक्षणार्थाऽऽतिदेशिकजागरणावृत्तिवदिहाऽप्यग्निसमिंधनार्थेध्माधानावृत्तिः कथमप्यवार्यैव । नह्याचार्यकुंडस्थेऽग्नौ समिद्धे कुंडांतरस्थानां समिंधनं भवति । अतएवाऽयुतहोमे पूर्वलिखिततत्तद्ग्रहाकारनवकुंडीपक्षे प्रधानायतनादग्निं विभज्य कुंडेषु प्रणीय नवाचार्या आज्यभागांतं कृत्वेत्यादिना होमशेषं समाप्य पूर्णाहुतींर्हुत्वेत्यंतेनाऽऽज्यभागांताना स्विष्टकृदादीनां चांऽगानामावृत्तिलिखनं प्रयोगपारिजातीयं संगच्छते । तदेव च कोटिहोमे चोदकात्प्राप्तं । प्राकृताऽष्टसंख्याबाधेन नववतिसंख्यामात्रं विधीयते । यद्यपि प्रणयनांतरं तथापि तद्धर्मकमेव । सर्वथांऽगानामावृत्तिरेव । एतावान्परं विशेषः । शतसंख्यया कुंडेषु नवसंख्या ग्रहाद्याकारस्थलविशेषाश्च निवर्तते । अतोऽग्निस्थापनोत्तरमेव प्रणयनं । यत्तु पारिजाते मध्यकुंडात्प्रणयनमुक्तं । तन्न । प्रागुदगपवर्गप्रचारबाधात् । तेन तत्संरक्षणार्थं नैर्ऋत्यकुंडादेव प्रणयनं कार्यं । अस्तु वा कथंचिदयुतहोमे मध्यकुंडसद्भावात्तस्य च सर्वप्रधानभूतसूर्यदेवत्यत्वात्कथंचित्ततः प्रणयनं । शतमुखे तु मध्ये कुंडनिवेशाऽभावान्न ततोऽग्निप्रणयनं । मध्यस्थलसमीपवर्तिष्वनेककुंडेषु तु विनिगमनाविरहः । सर्वोऽप्ययं कोटिहोमविचारस्तातचरणैर्द्वैतनिर्णये सुविवृत इति नेह विस्तरः ॥ ” केचित् ग्रामगजादेः पुरोहितस्य चाऽन्यत्राऽसंभवाच्चतुरोऽपि प्रकारान् राजाधिकारिकानाहुः । पितृचरणास्तु फलवाक्ये मनुजोक्तेरन्यस्याऽपि बहुधनत्वे राजदत्तग्रामादिदाने वाऽधिकारः । पुरोहितशब्दस्तु गुरवे ग्रामरत्नानीतिवदाचार्येऽप्युपपन्न इत्याहुः । अत्र उत्तमं शतहस्तं तु तदर्धेन तु मध्यमं । जघन्यं तु तदर्धेन देशकालाद्यपेक्षयेति भविष्योत्तरोक्तो मंडपो ज्ञेयः । तत्र शतहस्ते बहिः पंच हस्तान् मध्ये स्तंभचतुष्कमष्टहस्तं दशहस्तं वा दत्वा मध्ये दशदशहस्तोपरि मध्यस्तंभसमान्

स्तंभान् दत्वोपरि तिर्यक्काष्ठानि दत्वा सर्वं मध्यचतुष्कोपर्युच्चं कुर्यात् । अस्याऽशास्त्रीयत्वेऽपि सौकर्यार्थत्वात् । ततः प्रागुदक्सूत्रे दशधा विभज्य दशदश प्रागपराण्युदंचि च सूत्राणि दद्यात् । तेन दशहस्ताः शतं कोष्ठका भवंति । तेषां मध्यं प्रसाध्य द्विहस्तकर्णिकानि चतुरस्राणि पद्मानि संभिन्नानि वा शतं कुंडानि कुर्यात् । तेन दशकुंडानि दशवीथ्यो भवंति । अत्रैकादशन्यायेन दशभेदाद्वारुणप्राघासिक दक्षिणोत्तरविहारवत्तद्देशस्थान्येवांऽगानि तद्देशस्थप्रधानस्योपकुर्वंतीति भूसंस्काराद्याज्यभागांतमिध्माबर्हिःस्रुक्स्रुवप्रणीताचरुश्रपणादिभेदेन पृथक्कुर्यात् । एकस्थानप्रणीतेऽग्नावित्युक्तेराद्यपंक्तावाद्यकुंडे गृह्यं लौकिकं वाऽग्निं निधायाऽन्येषु प्रणयेत् । स्विष्टकृत्पूर्णाहुतिवसोर्धाराद्यपि पृथगेव । सर्वतोमुखयज्ञवत् । तत्राऽध्वर्युभेदात्कर्तृभेदः । अत्र तु तदैक्यमिति विशेषः । इति कमलाकरभट्टकृतौ भविष्योत्तरे शतमुखादिकोटिहोमः ॥ ( अत्र कोटिहोमात्परं कतिपयपुस्तकेषु बह्वृचपरिशिष्टोक्तो ग्रहयज्ञप्रयोगोऽधिको दृश्यते । तस्य तु प्रयोगरत्नादौ विस्तरेणोक्तत्वाल्लोकेऽपि विरलप्रचारतयाऽनावश्यकत्वाच्च नेहोपात्तः । किंतु पूर्वमयुतहोमीयप्रयोगे ग्रंथकृता निर्दिष्टानामिमंदेवा इत्यादिमंत्राणां माध्यंदिनशाखागोचरत्वेन बह्वृचाऽनुपयोगित्वात् तत्रैवाऽग्रे स्वस्वशाखीयानामेव तेषामावाहनादौ ग्रहणोपदेशाच्च मयूखधृता वसिष्ठोक्तक्रमाऽनुसारेणैव ग्रहादिमंत्रा दर्शिताः । मंडपकरणार्थं च गणेशकूर्माऽर्चनाद्यप्यत्राऽनुक्तत्वात्तत एवोद्धृतं । एवमन्यत्राऽपि यथायथं ज्ञेयं । ग्रहयज्ञकालनिर्देशकखेटेज्येतिश्लोकात्पूर्वं अथ ग्रहयज्ञकालविचार इति वक्तव्ये अत्रयद्यपीत्यादिसंगृह्यते इत्यंतो लेखस्तत्र भ्रमात्पतित इत्यवधार्यं )

॥ अथ प्रसवशांतयः । " वि० पा० दुष्टनक्षत्रजननशांतिविधानानि जननाऽशौचोत्तरकाले कार्याणि । सगतिकत्वात् । जन्मतोद्वादशाहेवेत्यादिवक्ष्यमाणवचननिचयाच्छुचिकर्तृकत्वाच्च । एतानि जनननिमित्तकशांतिविधानानि नामकरणात्पूर्वं कार्याणि । नैमित्तिकत्वात् । दु-

ष्टनक्षत्रजाताना शांतिं कृत्वा विधानतः । द्वादशैकादशे वाऽह्नि नाम कुर्यात्ततः परमिति स्मृत्यंतराच्च । यदा बहुनिमित्तसंपातस्तदा प्रतिनिमित्तं नैमित्तिकमिति न्यायेन सर्वाणि नैमित्तिकानि कार्याणि । यथाऽमावास्यायां ज्येष्ठानक्षत्रे व्यतीपातादौ जातस्याऽमावास्यादिशांतिः क्रियते । तत्र क्रमस्त्वैच्छिकः । यद्वा तंत्रेणैव कार्याणि । कर्त्रादीनामेकत्वात् । कुमार्या अप्येतत्कार्यं । न्यायसाम्यात् । सुतः सुतावेत्यादिवक्ष्यमाणवचनाच्च । " ( अथ सामान्यत्वेन सर्वशांत्युपयोगिकालविचारः । मु० सिं० । स्याच्छांतिकं सह सुमंगलपौष्टिकाभ्यां क्षिप्रध्रुवांऽत्यचरमित्रमघासु शस्तं । खेऽर्के विधौ सुखगते तनुगे गुरौ नो भृग्विज्यमौढ्यमुखरे शुभदं निमित्ते ॥ खेऽर्के लग्नाद्दशमस्थे रवौ । सुखगते चतुर्थस्थिते चंद्रे । तनुगे जन्मस्थे गुरौ च प्रशस्तं । भृग्विज्येति गुरुशुक्रयोर्बाल्यवार्धकाऽस्तेषु न प्रशस्तमित्यर्थः । ध० सिं० मुख्यकाले प्रवक्ष्यामि शांतिहोमस्य यत्नतः । जातस्य द्वादशाहे तु जन्मर्क्षे वा शुभे दिने ॥ जननाद्द्वादशाहे शांतिकरणे शांत्युक्तनक्षत्राहुतिवह्निचक्राऽवलोकनादिकं नावश्यकं । कालांतरे त्वावश्यकं । एवमन्यशांतिष्वपि ज्ञेयं । संस्कारानित्यकर्मसु निमित्ताऽव्यवहितनैमित्तिकेषु रोगातुरे च वह्निचक्रादिकं नाऽपेक्षितं । अग्नेः स्थापनवेलायां पूर्णाहुत्यामथापि वा । आहुतिर्वह्निवासश्च विलोक्यौ शांतिकर्मणि ॥ त्र्युत्तरारोहिणीश्रवणधनिष्ठाशततारकापुनर्वसुस्वातिमघाऽश्विनीहस्तपुष्याऽनुराधारेवतीनक्षत्रेषु गुरुशुक्राऽस्तमलमासरहिते शुभवारतिथ्यादौ शांतिः कार्या । निमित्ताऽव्यवहितनैमित्तिके रोगशांतौ चाऽस्तादि विचारणा नास्ति । इति प्रसंगात्सर्वशांत्युपयोगी शुभदिननिर्णयः ) तत्र बहुप्रसवेषु तच्छांतिषु चोक्तत्वादादौ गोमुखप्रसव उच्यते । गर्गः । प्रणिपत्य रविं वक्ष्ये प्रायश्चित्तमनुस्मरन् । सर्वाऽरिष्टविनाशाय यदुक्तं ज्योतिरर्णवे ॥ ( अत्र शांतिके प्रायश्चित्तपदं गौणं । तद्बीजं तु शांतिमयूखारंभे द्रष्टव्यं ) पित्ररिष्टे सुताऽरिष्टे मात्ररिष्टे तथैव च । यन्नक्षत्रोत्पत्तौ पित्राद्यरिष्टं श्रुतं

तत्रेदं कुर्यादित्यर्थः । ( अरिष्टं मरणं । नत्वशुभसामान्यं । जातकेऽरिष्टपदस्य मरणवाचित्वेन दृष्टत्वात् । अन्यथा धनहान्यादावपि गोप्र-
सवशांतिरापद्येतेति भाति ) प्रायश्चित्तं तदा कुर्यात्तत्तद्दोषस्य शांतये । " शां० म० तादृशनक्षत्रोत्पत्त्या सूचिते पित्राद्यरिष्टे । प्रायश्चित्त-
मित्यत्रापि तत्तदित्यन्वेति । देहलीदीपवत् । तेन तत्तद्दोषशांत्यै तत्तत्प्रायश्चित्तं कुर्यादित्यर्थः । " पौष्णाऽश्विन्योर्गुरौ सार्पमघाचित्रेंद्रमूलभे ।
एषु ऋक्षेषु जातस्य कुर्याद्गोजननं तथा ॥ ( पौष्णं रेवती । गुरुः पुष्यः । सार्पमाश्लेषा । इंद्रो ज्येष्ठा ) तथाशब्दः समुच्चयार्थः । " शां०
सा० तेनाऽत्र प्रायश्चित्तं मूलादिशांतिं गोजननं च कुर्यादिति समुच्चयो विधीयते । अन्यथा गोप्रसवस्याऽप्यनिष्टनिरासार्थत्वेन मूलादिशां-
त्या विकल्पः स्यात् । नचाऽदृष्टार्थत्वात्समुच्चयः । एकप्रकरणाऽधीतत्वाऽभावात् । अन्यथा क्षयादिनिरसनार्थकदलीदानादेरपि समुच्चयाऽऽ
पत्तेः । तत्राऽपि शांतिकात्पूर्वं वा पश्चाद्वा गोजननं कार्यं । वि० पा० अयं च गोप्रसवो नक्षत्रादिशांतेः प्राक् कार्यः । प्रथमं गोमुखाज्ज-
न्म ततः शांतिकमाचरेदिति व्यतीपातप्रकरणोक्तेः । बाधकांतराऽभावाच्च । " ( अत्र पश्चात्करणमयुक्तं । गोप्रसवात्प्राक् पुत्रमुखदर्शनाऽभा-
वेन शांतिकांतरांऽगभूताऽभिषेकाऽनुपपत्तेः । गोमुखप्रसवं कुर्याच्छांतिं कुर्यात्प्रयत्नतः । प्रथमं गोमुखाज्जन्म ततः शांतिं समाचरेदिति व्यती-
पातादिशांतिस्थशौनकीयलिंगाविरोधाच्चेति कश्चित् ) तेन पित्ररिष्टादौ तत्तन्नक्षत्रादिशांतिं कृत्वा एतच्च कुर्यादित्यर्थः । पित्तरिष्टे इत्यनेनैव
मूलादावपि प्राप्तेः पुनर्मूलादिग्रहणं यत्र मूलादेश्चतुर्थपादादौ तदभावस्तत्रापि प्राप्त्यर्थं । जन्मर्क्षे वा त्रिजन्मर्क्षे शुभवारे शुभे दिने । ( त्रि-
जन्मर्क्षे जन्मनक्षत्रे तस्माद्दशमे एकोनविंशे चेति नक्षत्रत्रये इत्यर्थः ॥ दिनं चांद्रं तिथिरिति यावत् । अन्यथा पौनरुक्त्याऽऽपत्तेः ) कृत्वाऽभ्यं-
गादिकं सर्वं गृहाऽलंकारपूर्वकं ॥ गोमयेनोपलिप्याऽथ गृहस्यैशानभागके । पंकजं कर्णिकायुक्तं रजोभिः श्वेतवर्णकैः ॥ व्रीहींस्तत्र विनिक्षिप्य

यथावित्ताऽनुसारतः । नवशूर्पे तु तन्मध्ये रक्तवस्त्रं प्रसारयेत् ॥ स्थापयित्वा शिशुं तत्र पुनः सूत्रेण वेष्टयेत् । प्राङ्मुखं तमवाक्पादं तिल-गर्भगतं शिशुं ॥ ( अवाक् अवाच्यां दक्षिणस्यां पादौ यस्य तं । अवाक्शब्दस्याऽवाचीशब्दसमानार्थकत्वं व्याकरणे स्पष्टं । अवाङ्मुखः पीडयमान इत्यादाववाक्शब्दस्याऽधोवाचित्वेऽपि प्रकृते न तत् । शिशोरुपवेशनाऽसंभवेन तदसंभवात् ) गोमुखं दर्शयित्वाऽथ पुनर्जातं तु गोमुखात् । " शां० सा० शिशुमभि गोमुखं दर्शयित्वेत्यर्थः " विष्णुर्योनिमिति सूक्तेन गव्येन स्नापयेच्छिशुं ॥ ( गव्येन पंचगव्येन विष्णु-र्योनिमिति सूक्तेनेत्यस्य देहलीदीपवज्जातभित्यनेन स्नापयेदित्यनेन च संबंधः । सूक्तेन जन्म विचिंत्य पुनरावृत्तेन तेनैव स्नापयेदित्यर्थः । कौस्तुभेऽप्येवं ) गवामंगेषुमंत्रेण गवामंगेषु [ गोवामांगेषु ] संस्पृशेत् । विष्णोः श्रेष्ठेन मंत्रेण गोप्रसूतं तु बालकं ॥ आचार्यस्तु समादाय पश्चान्मात्रे ददेत्तदा । [ साचार्यस्तु समादाय पश्चान्मात्रे ददेत्पिता ] माता जघन्यभागस्था शिशुमानीय तन्मुखात् ॥ ( जघन्यभागः पश्चाद्भागः । तन्मुखाद्गोमुखात् ) ततः पित्रे तदा दद्यात्ततो मात्रे प्रदापयेत् । वस्त्रं स्थाप्य पिताऽस्याऽथ [ वस्त्रे नवे च संस्थाप्य ] पुत्र-स्य मुखमीक्षयेत् । " शां० सा० वस्त्रं स्थाप्य निष्काश्येत्यर्थः " गोमूत्रं गोमयं क्षीरं दधि सर्पिश्च संयुतं ( सर्पिः कुशोदकं ) । आपोहि-ष्ठादिभिर्मंत्रैरभिषिंचेत्ततः शिशुं ॥ मूर्ध्नि चाऽऽघ्राय तं पुत्रं तन्मंत्रेण तदा पिता । " शां० सा० तन्मंत्रेण अंगादंगादित्यनेन " ( कन्या-यास्तूष्णीमाघ्राणं । स इति मंत्रगतपुँल्लिंगविरोधात् । आश्वलायनीयप्रवासप्रकरणे तथैव दर्शनाच्च ) अंगादंगात्संभवसि हृदयादधिजायसे । आत्मा वै पुत्रनामाऽसि स जीव शरदः शतं ॥ मूर्धनि त्रिरवघ्राय तं शिशुं स्थापयेत्ततः । पुण्याहं वाचयेत्पश्चाद्ब्राह्मणैर्वेदपारगैः ॥ दरिद्रायाऽथ विप्राय तां गामभ्यर्च्य दापयेत् । गोवस्त्रस्वर्णधान्यानि दद्यादर्कादितः क्रमात् ॥ " शां० म० अर्कादितः अर्कादीनां प्रीतये ब्राह्मणेभ्यो

दद्यात् "( गवादिदानमाचार्यादिभ्य एव । उपस्थितत्वात् । अंते दक्षिणाऽनुक्तेश्च ) यथाशक्ति धनं दद्याद्ब्राह्मणेभ्यस्तथा पिता ॥ ततो होमं प्रकुर्वीत स्वस्वशाखोक्तमार्गतः ॥ उल्लेखनादिकं कृत्वा चाऽऽज्यभागांतमाचरेत् । ( अग्निस्थापनांते ग्रहपूजेति शांतिसारादौ । मयूखे तु सा नोक्ता । इदमेव युक्तं । मूलादिशांतौ अपूजिताभ्योऽपि देवताभ्यो होमस्य सर्वैः स्वीकारात् । भेदे मानाऽभावाच्च ) होमस्यैशानदिग्भागे धान्योपरि शुभं घटं ॥ ( होमस्य होमदेशस्य ) पंचगव्यं घटे स्थाप्य तिलांस्तत्र विनिक्षिपेत् । क्षीरद्रुमकषायांश्च पंचरत्नानि निक्षिपेत् ॥ कषायो निर्यासः । वस्त्रयुग्मेन संछाद्य गंधादिभिरथाऽर्चयेत् । विष्णुं वरुणमभ्यर्च्य प्रतिमायां विधानतः [ प्रतिमां च विधानतः ] ॥ " शां० म० प्रतिमां यक्ष्मघ्नः । अग्रे तद्देवत्यहोमविधानात् । चकाराच्च । सं० कौ० प्रतिमां० चकाराच्चेति केचित् । तन्न । विष्ण्वादिपूजायां प्रतिमा- नियमसंभवे अपूर्वपूजांऽतरविधिकल्पनस्याऽन्याय्यत्वात् । चकारस्य विधानशब्दोक्ततत्तदुचितेतिकर्तव्यतानिरूपितसमुच्चयाऽर्थत्वात् । " ( वस्तुतस्तु यद्यपि प्रकृतपूजायां प्रतिमानियमस्वीकारे लाघवं तथाप्येकवचनाऽनुपपत्तेर्दुष्परिहरत्वान्मयूखोक्तमेव साधु ) यतइंद्रादिभि- र्मंत्रैः कुंभं स्पृष्ट्वाऽभिमंत्रयेत् । यतइंद्रेति षडृचः सूक्तशेषः । दधिमध्वाज्ययुक्तेन होमं कुर्यात्प्रयत्नतः ॥ युक्तेनेति भावे क्तः । योगेनेत्यर्थः । आपोहिष्ठेति तिसृभिरप्सुमेसोम इत्यथ । ( अप्सुम इत्यस्याऽननुष्टुभो ग्रहणमिति कौस्तुभे । युक्तं चैतदेव । पूर्वोत्तरसाहचर्येण गायत्रीछं- दस्कस्यैव लाभात् । तेन क्वचिदनुष्टुभो ग्रहणमिति पाठोऽपपाठ एवेति ज्ञेयं ) तद्विष्णोःपरमंपदमक्षीभ्यामिति सूक्ततः ॥ ऋग्भिराभिः प्र- तिऋचमष्टाविंशतिसंख्यया ॥ अशक्तावष्टसंख्यं वा दधिमध्वाज्यसंयुतं ॥ आदित्यादिग्रहाणां च होमं कुर्यात्समंत्रकं । ग्रहाणां च दध्या- दिसंयुतं होमं कुर्यादित्यर्थः । अन्यथा पुनर्दध्यादिग्रहणस्य वैयर्थ्याऽऽपत्तेः ॥ ॥ अथ प्रयोगः ॥ कर्ता पूर्वोक्तशुभकाले उपलेपनादिना

गृहमलंकृत्य भार्यापुत्राभ्यां सहाऽभ्यंगस्नानं कृत्वा देशकालकीर्तनांऽते अस्य बालकस्याऽमुकदुष्टकालोत्पत्तिसूचितसकलाऽरिष्टपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं गर्गोक्तां गोप्रसवशांतिं करिष्ये ॥ इति संकल्प्य गणेशं संपूज्याऽऽचार्यं वृणुयात् । आचार्यः प्रादेशकरणांते गृहस्यैशानभागे गोमयोपलिप्ते श्वेतवर्णरजोभिः कर्णिकायुक्तं महत्कमलं विलिख्य तत्र यथाशक्ति व्रीहीन्निक्षिप्य तन्मध्ये नवे शूर्पे प्रागग्रे रक्तवस्त्रं प्रसार्य तत्र तिलान्विकीर्य तेषु प्राङ्मुखं दक्षिणदिक्पादं शिशुं निधाय रक्तवस्त्रेणाऽऽच्छाद्य सशिशु शूर्पं सूत्रेणाऽऽवेष्ट्य शिशुसमीपे गोमुखमानीय तस्मात्प्रसवं भावयेत् । विष्णुर्योनिमित्यादितिसृणां त्वष्टा विष्णुरनुष्टुप् । जन्मचिंतने स्नापने च विनि० । विष्णुर्योनिं० ३ । आवृत्ताभिस्ताभिरेव पंचगव्येन शिशुं संस्नाप्य गोः सर्वाऽगानि वामांऽगानि वा स्पृशेत् । मंत्रस्तु । गवामंगेषु तिष्ठंति भुवनानि चतुर्दश । यस्मात्तस्माच्छिवं मे स्यादिह लोके परत्र चेति । ततः विष्णोः श्रेष्ठेनेत्यस्य त्वष्टा विष्णुरनुष्टुप् । बालाऽऽदाने विनि० । विष्णोः श्रेष्ठेन० । इति बालमादाय मात्रे दद्यात् । माता तं गृहीत्वा गोमुखसमीपादानीय तत्पश्चिमभागस्था सती पित्रे दद्यात् । ततः पिता मात्रे दत्वा पुनरादाय नवे वस्त्रे संस्थाप्य ( मातुरुत्संगे कृत्वेति केचित् ) आच्छादनमपसार्य पुत्रमुखं निरीक्ष्य पंचगव्येनाऽऽपोहिष्ठेति तिसृभिस्तमभिषिंचेत् । आपोहिष्ठेति तिसृणां सिंधुद्वीप आपो गायत्री । शिशोरभिषेके वि नि० । आपोहिष्ठा० ३ । ततस्तं हस्ताभ्यां परिगृह्य अंगादंगाद्धिरण्यगर्भो धाताऽनुष्टुप् । अवघ्राणे० । अंगादंगात्० शतमिति तन्मूर्धानं त्रिराजिघ्रेत् । प्रत्याघ्राणं मंत्राऽऽवृत्तिः ॥ कन्यायास्तूष्णीमाघ्राणं । ततः शिशुमन्यत्र निधाय पुण्याहवाचनं कुर्यात् । तत्र विष्णुवरुणयक्ष्माणः प्रीयंतां । कृतगोजननकर्मणे स्वस्तीति विशेषः । एतदसंभवे तु कृतस्याऽस्य गोमुखप्रसवस्य पुण्याहं भवंतो ब्रुवंतु । एवं स्वस्ति ऋद्धिं श्रीः कल्याणमिति त्रिस्त्रिर्वाचयित्वा धेनुं संपूज्य तां कस्मैचित् दरिद्रब्राह्मणाय

विधिना दत्वा अर्कादिनवग्रहप्रीत्यर्थं गोवस्त्रस्वर्णधान्यान्याचार्यादिभ्य ऋत्विग्भ्यो दद्यात् । तानि चाऽदक्षिणानि । तत्र मंत्राः । गवामंगेषु० इति गोः । शरण्यं सर्वलोकानां लज्जाया रक्षणं परं । सुवेषधारित्वं यस्माद्वासः शांतिं प्रयच्छतु । इति वस्त्रस्य । हिरण्यगर्भ० इति स्वर्णस्थ । धन्यं करोति दातारमिहलोके परत्र च । तस्मात्प्रदीयते धान्यमतः शांतिं० इति धान्यस्य । ततो ब्राह्मणेभ्यो भूयसीं दक्षिणां दद्यात् । आचार्यः गोजननशांतिहोमं कर्तुं अग्निप्रतिष्ठां क० । स्थंडिले वरदनामानमग्निं ( तत्पूर्वं ग्रहांश्चेति केचित् ) प्रतिष्ठाप्याऽन्वादध्यात् । चक्षुषी आज्येनेत्यंते अपः प्रधानदेवतां संयुक्तदधिमध्वाज्येन द्वादशोत्तरशतसंख्याभिराहुतिभिः । द्वात्रिंशत्संख्याभिर्वा । विष्णुं प्रधानदेवं संयुक्त० अष्टाविंशतिसंख्या० । अष्टसंख्याभिर्वा । यक्ष्माणं प्रधान० अष्टषष्ट्यधिकशतसं० । अष्टचत्वारिंशत्संख्याभिर्वा । आदित्यादिनवग्रहान् संयुक्त० प्रत्येकं अष्टाविंशति० । अष्टसंख्याभिर्वा । शेषेणस्विष्ट० । ( अत्र कमलाकरेण अपः विष्णुं ग्रहांश्चोद्दिश्य प्रतिमंत्रमेकैकाहुतिरुक्ता । तस्य तु मूलोक्तेन विसंवादान्मयूखकौस्तुभशांतिसारविधानपारिजातादिष्वदर्शनाच्च मूलानुसारी मयूखादिधृतः क्रमएवांऽगीकृतः । ग्रंथकृदाशयं तु न विद्मः ) अत्र षट्पात्रासादनं । दधिमध्वाज्येन सहाऽऽज्यस्य पर्यग्निकरणं । अथाऽऽज्यभागांऽते अग्नेरैशान्यां गोजननशांतिकर्मणि मुख्यदेवतास्थापनं० । महीद्यौरित्यादिविधिना कुंभं संस्थाप्य तत्र पंचगव्यं तिलान् क्षीरद्रुमकषायान् पंचरत्नानि च क्षिप्त्वा वस्त्रयुग्मेन संछाद्य गंधपुष्पादिभिरलंकृत्य तदुपरि पूर्णपात्रे कृताऽग्न्युत्तारणासु प्रतिमासु विष्ण्वादीनावाहयेत् । ( अथ नूतनप्रतिमानामग्न्युत्तारणाविधिर्लिख्यते । अद्ये० अस्याः प्रतिमायाः अंगप्रत्यंगसंधिषु विघट्टनोच्छेदनतापनादिजन्यपीडानिरासपूर्वकं देवताऽधिष्ठानत्वयोग्यतासिद्ध्यर्थं अग्न्युत्तारणं क० । स्वर्णादिशलाकया प्रतिमां मधुसर्पिर्भ्यामभ्यज्य इमंमेगंग इति पुरुषसूक्तेन च कुशवारिणाऽभ्युक्ष्य पंचगव्येन प्रोक्ष्य

अग्निःसाप्तिमिति सप्तर्चेन सूक्तेन अग्निपदरहितेन पुनस्तत्सहितेन च तदुपरि संततजलधारां कुर्यात् ) तद्विष्णोर्मेधातिथिर्विष्णुर्गायत्री । विष्ण्वावाहने० । तद्विष्णोः० । अस्यां सुवर्णप्रतिमायां विष्णुं सांगं० । अस्यै प्राणाः प्रतिष्ठंतु अस्यै प्राणाः क्षरंतु च । अस्यै देवत्वमर्चायै माऽमहेति च कश्चनेति विष्णुं । तत्त्वायामि शुनःशेपो वरुणस्त्रिष्टुप् । वरुणावा० । तत्त्वायामि० इति वरुणं । अक्षीभ्यामित्यस्य विवृहा यक्ष्माऽनुष्टुप् । यक्ष्मावाहने० । अक्षीभ्यांते० इति यक्ष्माणं चाऽऽवाह्य संपूज्य ( यक्ष्मपूजनं नेत्येके ) कुंभं स्पृष्ट्वाऽभिमंत्रयेत । यतइंद्रेति षण्णां भर्ग इंद्रो बृहती । समानां सतोबृहती पंक्तिः । कुंभाऽभिमंत्रणे विनियोगः । यतइंद्रभयामहे० ६ । ततो यजमानेन द्रव्यत्यागे कृते स्रुवेण दधिमध्वाज्यहोमः कार्यः । आपोहिष्ठेतितिसृणां सिंधुद्वीप आपो गायत्री । अप्सुमे सिंधुद्वीप आपो गायत्री । तद्विष्णोर्मेधातिथिर्विष्णु-र्गायत्री । अक्षीभ्यामिति षण्णां विवृहा यक्ष्माऽनुष्टुप् । विहितहोमे० । ( अत्र यक्ष्महोमे सूक्तावृत्तिरेवेष्टा । सूक्तत इति मूले दर्शनात् । तंत्रावृत्तिस्तु न दुष्यति ) ततो नवग्रहमंत्राः । आकृष्णेन० ९ । एतैः प्रत्यृचं २८ । ८ वा आहुतीर्हुत्वा स्रुवेण स्विष्टकृदादिहोमशेषं समाप्य स्थापितदेवताः संपूज्य ता अग्निं च विसृजेत् । यजमान आचार्याय प्रतिमादि दत्वाऽच्छिद्रं वाचयित्वा ब्राह्मणान्संभोज्य आभि-र्गीर्भिरित्यादिकर्मशेषं समापयेत् । ( अत्र केचिद्विष्णुवरुणकलशोदकेनाऽभिषेकं कुर्वंति तत्र तेषामाचारः प्रमाणं ) इति गोमुखप्रसवशांति-प्रयोगः ॥

॥ अथ तिथिनक्षत्रयोगक्रमेण शांतय उच्यंते । तत्रादौ गंडांतः । स त्रिविधः । तिथिलग्ननक्षत्रभेदात् । गंडांतो नाम सं-धिघटिकाः । स चोक्तो ज्योतिर्निबंधे । पूर्णानंदाख्ययोस्तिथ्योः संधिनाडीद्वयं तथा । गंडांतं मृत्युदं जन्म यात्रोद्वाहव्रतादिषु ॥ ( पूर्णाः पंचमीदशमीपूर्णिमाः । नंदाश्च षष्ठ्येकादशीप्रतिपदः ) कुलीरसिंहयोः कीटचापयोर्मीनमेषयोः । गंडांतमंतरालं स्याद् घटिकार्धं मृतिप्रदं ।

( कुलीरः कर्कः । कीटो वृश्चिकः । चापं धनुः । मुहूर्तमार्तंडे त्वेकघटिकात्मकं लग्नगंडांतमुक्तं ) सार्पेंद्रपौष्णभेष्वंत्यषोडशांशा भसंधयः । तदग्रभेष्वाद्यपादा भाना गंडांतसंज्ञिताः ॥ रत्नमालायां तु नक्षत्रेष्वन्यथोक्तं । पौष्णाऽश्विन्योः सार्पपित्र्यर्क्षयोश्च यच्च ज्येष्ठामूलयोरंतरालं । तद्गंडांतं स्याच्चतुर्नाडिकं हि यात्राजन्मोद्वाहकालेष्वनिष्टं ॥ अत्र दोषतारतम्यं ज्ञेयं । रत्नसंग्रहे । तिथ्यृक्षगंडे पितृमातृनाशो लग्ने तु संधौ तनयस्य नाशः । सर्वेषु नो जीवति हंति बंधून् जीवन्पुनः स्याद्बहुवारणाऽश्वः ॥ प्रयोगपारिजाते गर्गब्राह्मौ । अश्विनीमघमूलादौ त्रिषट्क-नवनाडिकाः । रेवतीसार्पशाक्रांते मासाश्च ऋतुसायकाः ॥ ( सार्पमाश्रेषा । शाक्रंज्येष्ठा । मासाद्वादशऋतवः षट् । सायकाः पंच घटिका इत्यध्याहार्यं ) प्रकारांतरेण गंडांतमाह । अश्विनीमघमूलादौ नाडिकाद्वितयं तथा । रेवतीसार्पशाक्रांते नाडिकाद्वयमेव हि ॥ ( चतुर्नाडिके एव नक्षत्रगंडांते शांतिः कार्येति संप्रदायः ) अश्विनीमघमूलानां पूर्वार्धे बाध्यते पिता । पूषाऽहिशाक्रपश्चार्धे जननी बाध्यते शिशोः ॥ ( पूषा रेवती । अहिराश्लेषा ) पितृघ्नश्च दिवाजातो रात्रिजातस्तु मातृहा । दिनस्थगंडांतजात इत्यर्थः । आत्मघ्नः संध्ययोर्जातो नास्ति गंडे निरामयः ॥ सर्वेषां गंडजातानां परित्यागो विधीयते । वर्जयेद्दर्शनं श्रावं [ तेषां ] यावत् षाण्मासिकं भवेत् ॥ तस्य शांतिं प्रवक्ष्यामि सोममंत्रेण भक्तिमान् । कांस्यपात्रं प्रकुर्वीत पलैः षोडशभिर्नवं ॥ अष्टाभिश्च चतुर्भिर्वा द्वा-भ्यां वा शोभनं तथा । तन्मध्ये पायसे शंखे नवनीतेन पूरिते ॥ राजतं चंद्रमभ्यर्चेत् सितपुष्पसहस्रकैः । दैवज्ञः क्षौमवासास्तु शुक्लमाल्यां-बराऽर्चितः ॥ सोमोऽहमिति संचिंत्य पूजां कुर्यादतंद्रितः । जपेत्साहस्रकं मंत्रं श्रद्दधानः समाहितः ॥ आप्यायस्वेति मंत्रेण पूजां कुर्या-त्समाहितः । दद्याद्दक्षिणामिष्टां गंडदोषप्रशांतये ॥ शुक्लं वागीश्वरं चैव ताम्रपात्रसमन्वितं । गंडदोषोपशांत्यर्थं दद्याद्वेदविदे शुचिः ॥ ज्यो-

तिर्निबंधे त्वेतदंतेऽधिकमप्युक्तं । कुंकुमं चंदनं कुष्ठं गोरोचनमथापि वा ॥ घृतपूर्णेषु कुंभेषु चतुर्षु प्रक्षिपेत्क्रमात् ॥ सहस्राक्षेण मंत्रेण बालकं स्नापयेत्ततः । पितृयुक्तं दिवाजातं मातृयुक्तं तु रात्रिजं ॥ स्नापयेत्पितृमातृभ्यां संध्ययोरुभयोरपि । कांस्यपात्रं घृताऽऽपूर्णं गंडदोषोपशांतये ॥ सक्षीरं मौक्तिकं शंखं श्वेतवस्त्रयुगं शुभं । यजुर्वेदविदे दद्याद्गंडदोषाऽपनुत्तये ॥ दद्याद्धेनुं हिरण्यं च ग्रहांश्चाऽपि प्रपूजयेत् । आयुर्वृद्धिकरं जप्त्वा कुर्याद्ब्राह्मणतर्पणं ॥ " सं० कौ० अत्र चाऽश्विन्यादीनामाद्यभागे त्र्यादिसंख्या रेवत्यादीनामंत्यभागे च द्वादशादिसंख्या घटिका दुष्टाः । तत्तदाद्यांत्यभागस्थे द्वेद्वे घटिके दुष्टतरे । अश्विन्याद्यादिभागो दिवा रेवत्याद्यंत्यभागो रात्रौ दुष्टतमः । तत्रापि द्वे घटिके अतिदुष्टे । अतएव निमित्ततारतम्येन नैमित्तिकतारतम्यं कांस्यपात्रपरिमाणचतुष्टयोपन्यासेन सूचितं । अतएव चंद्रवागीश्वरप्रतिमादावपि कर्षादिपरिमाणतारतम्यमूह्यं । ध० सिं० तिथिगंडांते पूर्वार्धे जन्मनि तत्कालं स्नात्वा वृषभदानं तन्मूल्यदानं वा कृत्वा सूतकांते शांतिः कार्या । उत्तरार्धे जन्मनि तु शांतिमात्रं । लग्नगंडांते पूर्वार्धे जन्मनि कांचनदानं । उत्तरार्धे शांतिमात्रं । " अत्र गोमुखप्रसवो ग्रहशांतिश्च कार्या । अन्यत्स्पष्टमिति प्रयोगो नोच्यते । उत्तरगार्ग्यः ॥ अभुक्तरजातस्य सूतकांऽत्यदिने तथा । शांतिं शुभेऽह्नि वा कुर्यात्तावत्पुत्रं न लोकयेत् ॥ तिथिगंडे त्वनड्वाहं नक्षत्रे धेनुरुच्यते । कांचनं लग्नगंडे तु गंडदोषो विनश्यति ॥ आद्यभागे पितुर्गंडे त्रयाणामभिषेचनं । मातृपितृशिशूनामित्यर्थः । इतरत्र शिशोर्मातुरभिषेकं च कारयेत् ॥ द्वयोरेवेत्यर्थः । इति गर्गाद्युक्ततिथिलग्ननक्षत्रगंडांतशांतयः । " सं० कौ० अथ प्रयोगः । तिथिगंडपूर्वार्धजन्मनि कर्त्ता तत्कालं स्नात्वा पुत्रमनालोक्याऽस्यशिशोस्तिथिगंडपूर्वार्धजननसूचितसर्वारिष्टनिरसनद्वारा श्रीपरमे० अनडुत्प्रदानं करिष्ये इति संकल्प्य नालच्छेदनात्पूर्वं गंडदोषे ब्राह्मणपूजनपूर्वकमनड्वाहं दद्यात् । असंभवे कार्षापणाऽष्टकं वा । सूतकांते

शुभदिने वा स्नातोऽनडुत्प्रदानमित्यस्य स्थाने गर्गोक्तां शांतिमित्यूहेन संकल्प्य गणेशपूजाद्याचार्यवरणांतं कुर्यात् । सच यदत्रेत्यादिना भूशु-
द्धिकलशस्थापने कृत्वा कलशे याओषधीः सहिरत्नानि स्योनापृथिवि रुवत्थश्वत्थेव इति शतौषधी रत्नानि मृदं त्वचः पल्लवांश्च क्रमेण निक्षिप्य
पूर्णादर्वीति निहितपूर्णपात्रे स्थापितहैमवरुणप्रतिमायां तत्त्वायामीति वरुणं पूजयेत् । ततोऽग्निं प्रतिष्ठाप्य ग्रहान्संपूज्याऽन्वादध्यात् ।
ग्रहोत्कीर्तनांतेऽत्रप्रधानं । वरुणं प्रतिद्रव्यमष्टोत्तरशतसंख्याभिः समिधां चरोराज्यस्य तिलयवानां चाहुतिभिः शेषेणेत्यादिबलिदानपूर्णाहु-
तिप्रणीताविसर्गांते कलशद्वयोदकेन समुद्रज्येष्ठाइत्यादिभिः पित्रादित्रयाणामभिषेको यवव्रीहिमाषतिलमुद्गानां दक्षिणात्वेन दानं विसर्जनादि
यथाशक्तिब्राह्मणभोजनं चेति । तिथिगंडोत्तरार्धजन्मनि तु नतात्कालिकदानं । शांतौ मातुः शिशोश्चाऽभिषेक इति विशेषः । लग्नगंडपूर्वा-
र्धजन्मनि कांचनमिति विशेषः । नक्षत्रगंडस्योत्तरादिनिषिद्धभागस्य च पूर्वार्धजन्मनि धेनोस्तिलपात्रादेश्च दानं । शांतौ नक्षत्रप्रतिमाया-
स्तत्तद्वाक्याऽष्टकेन पूजनं । उत्तरार्धे जन्मनि न दानं । दक्षिणाकाले उत्तरादौ तिलपात्रादेर्दानं । इतरत्र यवव्रीह्यादेरभिषेकव्यवस्था च
पूर्ववत् । इति तिथ्यादिगंडांतशांतिप्रयोगः ॥ अथ नक्षत्रगंडांतशांतिप्रयोगः ॥ षण्मासोत्तरमेकादशे वादिने प्रथमतो गोप्रसवं कृत्वा
देशकालौ संकीर्त्य ममाऽस्य शिशोः रेवत्यश्विनीसंध्यात्मकगंडांतजननसूचितसर्वारिष्टनिरसनद्वारा० गर्गोक्तां शांतिं करिष्ये इति संक-
ल्प्य गणेशपूजनादियजुर्वेदविद्वैवज्ञाचार्यऋत्विग्वरणांतं कुर्यात् । ततस्तं चंदनशुक्लमाल्यैः क्षौमशुक्लवासोभ्यां पूजयेत् । तत आचार्यो निर्मित-
स्याऽपिनिमित्तानुसारिपरिमाणकांस्यपात्रस्य पुनर्निर्माणमाप्यायस्वेति मंत्रेण कुर्याच्चंद्रप्रतिमाऽग्न्युत्तारणं च । ततो यदत्रेति सर्षपविकिरणादिना
भूसंस्कारं कृत्वा उपलिप्ते देशे कांस्यपात्रे पायसं पयो वा निक्षिप्य तत्र नवनीतपूर्णं शंखं निधाय तत्र राजतं चंद्रबिंबं स्थापयित्वा सोमोऽहमिति

ध्यानपूर्वकं समाहितचेता आप्यायस्वेति मंत्रेणावाहनादिषोडशोपचारैस्तत्र चंद्रपूजनं कुर्यात् । तत्र श्वेतं सदशं वस्त्रद्वयं समर्पणीयं । पुष्पाणि श्वेतानि सहस्रमर्पणीयानि । मौक्तिकं दक्षिणा तदसंभवे इष्टमन्यत् । पूजांते तमेव मंत्रं सविश्वासं चंद्रं ध्यायन् सहस्रं सप्रणवमृष्यादिस्मरणपूर्वकं जपेत् । तदुत्तरतस्ताम्रकलशं महीद्यौरित्यादिविधिना स्थापयित्वा तत्र रजतप्रतिमायां बृहस्पतिमंत्रेण वागीश्वरं संपूज्य तदुत्तरतः क्रमेण तेनैव विधिना निहितकुंभचतुष्टये अश्वत्थेवोनिषदनमित्याम्रपल्लवप्रक्षेपांतं कृत्वा चतुर्षु क्रमेण द्रवीभूतानि कुंकुमचंदनकुष्ठगोरोचनानि सिंचेत् । तेषु वरुणं पूजयेत् । ततः पश्चिमदेशे स्थंडिलाद्यग्निप्रतिष्ठापनांतं कृत्वा स्थापितकलशोत्तरभागे ग्रहावाहनादिवरुणपूजांतं कृत्वाऽन्वाधानादिग्रहमखं पूर्णाहुत्यंतं कुर्यात् । अभिषेककाले वरुणकलशचतुष्टयस्थोदकेन दिवागंडांतजातं बालं पित्रा सह रात्रिजातं मात्रा सह संध्ययोर्जातमुभाभ्यां सहाऽभिषिंचेत् । सहस्राक्षेणेत्यस्य यक्ष्मनाशनः प्राजापत्य इंद्रस्त्रिष्टुप् । अभिषेके विनि० । सहस्राक्षेण० । ततः सर्वकलशोदकैः समुद्रज्येष्ठा इत्यादिभिः सुरास्त्वामित्यादिभिर्मंत्रैश्चाऽभिषेकांते सुस्नातः सपत्नीकः कर्ता धृतश्वेतचंदनादिर्विभूतिधारणांते आचार्याय शंखदानं कुर्यात् । स्वस्त्यस्तु० । इमं सचंद्रं शंखं सवस्त्रयुगं समौक्तिकं नवनीताद्युपस्करसहितं गंडदोषाऽपनुत्तये दैवज्ञाय यजुर्वेदविदे तुभ्यमहं संप्रदद इति । तत्सांगतासिद्ध्यर्थं सहिरण्यां धेनुं दद्यात् । ततो वागीश्वरं ताम्रपात्रसहितं तुभ्यं गंडदोषशांत्यर्थं संप्रदद इति बृहस्पतिप्रतिमादानं तदंगत्वेन यथाशक्तिदक्षिणादानं च । ततः स्थापितेतरदेवतानामुत्तरपूजापूर्वकं विसर्जनमाचार्यहस्ते प्रतिपादनं च । ततः सहस्राक्षेणेति मंत्रस्यायुर्वृद्ध्यर्थं यथाशक्तिजपो दशाऽवरब्राह्मणभोजनं च ॥ इति नक्षत्रगंडांतशांति प्रयोगः" अथोत्तरादिशांतिः । उत्तरातिष्यचित्रासु पूर्वाषाढोद्भवस्य च । कुर्याच्छांतिं प्रयत्नेन नक्षत्राकारजं बुधः ॥ तामेवाह । सुवर्णेन तदर्धेन यथा-

वित्ताऽनुसारतः । नक्षत्राऽधिपते रूपं कृत्वा वस्त्रद्वयाऽन्वितं ॥ वरुणस्याऽर्चनं कार्यं स्वस्तिवाचनपूर्वकं । कुंभे वरुणं नक्षत्राधिपतिं च पूजयेदित्यर्थः " शां० सा० कुंभे वरुणमभ्यर्च्य पूर्णपात्रोपरि नक्षत्राधिपतिं पूजयेदित्यर्थः" शतौषधानि रत्नानि मृत्त्वक्पल्लवसंयुतं । प्रक्षिप्येति शेषः । पूजांते समिदन्नाज्यैर्होमं तिलयवैश्चरेत् । ततः पूर्णाहुतिं हुत्वा वेदाध्यायिकुटुंबिने ॥ उत्तरे तिलपात्रं स्यात्पुष्ये गोदानमुच्यते । अजां चित्रासु वै दद्यात्पूर्वाषाढे तु कांचनं ॥ यवांश्च व्रीहिमाषांश्च तिलमुद्गान्प्रदापयेत् । यथावित्तानुसारेण कुर्याद्ब्राह्मणभोजनं ॥ पितुरायुष्यवृद्ध्यर्थं शांतिरत्र विधीयते । एवं यः कुरुते सम्यक् शांतिकर्म समाहितः । आयुरारोग्यमैश्वर्यं संप्राप्नोति दिने दिने । " सं० कौ० उत्तरादीनां निषिद्धभागव्यवस्थोक्ता नृसिंहप्रसादे । चित्राद्यार्धे पुष्यमध्ये द्विपादे पूर्वाषाढाधिष्ण्यपादे तृतीये । जातः पुत्रश्चोत्तराद्ये विधत्ते पित्रोर्भ्रातुः स्वस्य चाऽपि प्रणाशमिति । उत्तरफल्गुन्याद्यपादे इत्यर्थः । एवं चोदाहृतगार्ग्यस्मृतावुत्तरादौ तिथिगंडादौ च दानशांत्योर्वक्ष्यमाणवचनालोचनेन समुच्चयप्राप्तावभुक्तेतरजातस्येत्यनेन सर्वनिषिद्धतत्कालानामभुक्तशब्दोक्तपूर्वार्धेतरोत्तरार्धे जन्मनि निमित्ते शांतिरेव । न बहिः प्रयोगं दानमिति बोध्यते । पूर्वार्धे जन्मनि तु दानमप्याह तिथिगंडांत इति । नक्षत्रे नक्षत्रगंडे ज्येष्ठामूलसंध्यादावित्यर्थः । नतूत्तरादौ । तत्र दानांतरस्य वक्ष्यमाणत्वात् । अत्र च निमित्ताऽनंतरं नालच्छेदात्पूर्वं गंडोत्तरार्धाऽधिकरणकं दानं कार्यमिति दर्शयितुं सप्तमीनिर्देशः । पूर्वोत्तरवाक्यपर्यालोचनेनैव निमित्तलाभात् । उत्तरार्धात्पूर्वार्धे दोषाऽऽधिक्यमेव दर्शयितुमाह आद्यभाग इति । एवमुत्तरेतिलपात्रंस्यादित्यादावपि पूर्वार्धजन्मनि उत्तरार्धे दानानि कर्तव्यानीत्युच्यते । अतएव शांतिविधौ प्रयत्नेनेति पूर्वोत्तरार्धयोर्जन्मनि शांतिर्नियमेन कर्तव्येति ज्ञापनार्थं । नक्षत्राकारेति पदं रूपमित्यनेन संबध्यते । अर्चनं कार्यमिति चाऽग्रिमपदद्वयं । ततश्चाऽधिष्ठात्रधिष्ठेययोरभेदचिंतनेन पूजादि कार्यं । अतो मंत्रोऽप्यु-

५ अवशिष्टपादद्वये गोप्रसवमात्रं। पूर्वाषाढा तृतीयपाद पूर्वार्धे का च नदर्भे शान्तिश्च। तृतीयपादोत्तरार्धे शान्तिमात्रं ॥ ५





भयप्रकाशकस्तैत्तिरीयशाखागतो वाक्याऽष्टकरूप एव ग्राह्यः। होमकालीनत्यागोऽपि नक्षत्रेष्टाविवाऽधिष्ठात्रधिष्ठेयोभयोद्देशेन कार्य इति सूच्यते। तिथिलग्नगंडजन्मनि चाऽऽह वरुणस्येति। नक्षत्राधिपतेरितिपदवर्जं पूर्वश्लोकाऽनुषंगः। ततश्च तत्र वरुणपूजनमेव कार्यमित्यर्थः। तत्रैव शांत्यंगत्वेन दानमाह यवांश्चेत्यादिना। कर्त्तुरकरणे दोषेण शांतेरावश्यकतां सूचयितुमाह। पितुरिति ( चित्राद्युत्पत्तौ कौस्तुभमतेनाऽयमनुष्ठेयनिर्णयः। तत्र चित्रायाः प्रथमे पादे शांतिरजादानं गोप्रसवश्च। द्वितीये शांतिगोप्रसवौ। उत्तरार्धे गोप्रसवमात्रं। पुष्यस्य द्वितीये पादे शांतिर्गोदानं गोप्रसवश्च। तृतीये शांतिगोप्रसवौ ५ अवशिष्टपादत्रये न किमपि। उत्तराद्यपादस्य पूर्वार्धे शांतिस्तिलपात्रदानं गोप्रसवश्च। उत्तरार्धे शांतिगोप्रसवौ। अवशिष्टपादत्रये न किमपि )इत्युत्तरादिशांतिः॥ अथ प्रयोगः॥ द्विराचमनादिदेशकालकीर्तनांते अस्य शिशोः उत्तरफल्गुन्याद्यपादजननसूचितसकलारिष्ट० गर्गोक्तां सग्रहमखां शांतिं करिष्ये। एवं पुष्यादिषु तत्तदुक्तपादभेदस्योल्लेखेन संकल्पः। गणेशपूजनादिप्रादेशकरणांते महीद्यौरित्यादिना स्थापितकलशे या ओषधीरिति शतौषधीः रुवतिभीम इति त्वचः स्योनेति मृदं च निक्षिप्य तत्र वरुणं नक्षत्राधिपं च संपूज्याऽग्निं ग्रहांश्च प्रतिष्ठाप्याऽन्वादध्यात्। ग्रहोत्कीर्तनांते अर्यमणं प्रधानदेवं ( पुष्ये बृहस्पतिं। चित्रासु त्वष्टारं। पूर्वाषाढासु अपः इति विशेषः ) समिच्चर्वाज्यतिलमिश्रयवैः प्रतिद्रव्यमष्टोत्तरशतसंख्याहुतिभिः। शेषेणेत्यादि ग्रहादिहोमांते तैत्तिरीयशाखागतेनाऽष्टवाक्यात्मकमंत्रेणोक्तद्रव्यैर्नक्षत्राधिपतये होमं कृत्वा स्विष्टकृद्धोमाद्यभिषेकांते यवव्रीहिमाषतिलमुद्रानां दाक्षिणात्वेनदानं तिलपात्रादितत्तन्नक्षत्रोक्तदानं च कृत्वा पीठदानादि सर्वं समापयेत्॥ इत्युत्तरादिनक्षत्रशांतिप्रयोगः॥ अथ दिनक्षयादिशांतिः। उत्तरगार्ग्यः। अथातः संप्रवक्ष्यामि जन्मकाले विशेषतः। गंडांतानां च नामानि महादोषकराणि च॥ दिनक्षये

व्यतीपाते व्याघाते विष्टिवैधृतौ । शूले गंडेऽतिगंडे च परिघे यमकंटके ॥ कालदंडे मृत्युयोगे दग्धयोगे सुदारुणे । तस्मिन् गंडादिने प्राप्ते प्रसूतिर्यदि जायते ॥ अतिदोषकरी प्रोक्ता तत्र पापयुते सति । दिनक्षयादौ गंडांतशब्दो गौणः । विचार्य तत्र दैवज्ञः शांतिं कुर्याद्यथा-विधि ॥ यजनं देवतानां च ग्रहाणां चैव पूजनं । यजनं वक्ष्यमाणं । दीपं शिवालये भक्त्या घृतेन परिदापयेत् ॥ अभिषेकं शंकराय अ-श्वत्थस्य प्रदक्षिणं । आयुर्वृद्धिकरं जाप्यं सर्वाऽरिष्टविनाशनं ॥ मृत्युंजयमंत्रस्य आशुःशिशान इत्यादेश्च जप इत्यर्थः । गुरुदैवतविप्राणां पूजनं गोत्रवर्धनं । पुष्ट्यायुस्तुष्टिशांत्यर्थमभीष्टफलसिद्धये ॥ सर्वाऽरिष्टविनाशाय ग्रहयज्ञं समाचरेत् । शिवाय विधिवद्भक्त्या दीपदानं क-रोति यः ॥ अखंडं गोघृतेनैव स वै मृत्युं जयेन्नरः । विष्णुमूर्तिं महापुण्यमश्वत्थं श्रीकरं सदा ॥ प्रदक्षिणं नरो भक्त्या कृत्वा मृत्युंजयं जपेत् । सर्वसंपत्समृद्ध्यर्थं तथा कल्याणवृद्धये ॥ अभीष्टफलसिद्ध्यर्थं कुर्याद्ब्राह्मणभोजनं । अभिषेकं शिवे शांतिं यः करोति नरोत्तमः ॥ अकालमृत्युं निर्जित्य दीर्घायुर्जायते नरः । गाणपत्यं पुरुषसूक्तं सौरं मृत्युंजयं शुभं ॥ शांतिजाप्यं रुद्रजाप्यं कृत्वा मृत्युंजयी भवेत् । मूले वा सार्पगंडे वा कुर्यादेतानि यत्नतः ॥ आयुर्वृद्धिकरार्थाय गंडदोषप्रशांतये । एषां मूलव्यतीपातादिशांत्या समुच्चयः ॥ " सं० कौ० तस्मिन्पापयुतेसतीति विष्ट्यादेरपि निषिद्धांशयुते जन्मकाले सति दोषाधिक्यामित्याशयः । ततश्च प्रतिप्रसूतेर्भद्रापुच्छादौ जन्मनि स्वल्प-दोष इत्यर्थः । शूलादीनां निषिद्धांशानाह वृद्धवसिष्ठः । विरुद्धयोगेषु य आद्यपादः सर्वेषु कार्येषु विवर्जनीयः । सवैधृतिर्यो व्यतिपातयो-गः सर्वोऽपि नेष्टः परिघार्धमाद्यं ॥ तिस्रस्तु नाड्यः प्रथमाश्च वज्रे गंडेऽतिगंडेऽप्यथ षट् च षट् च । व्याघातयोगे नव पंच शूले शुभेषु कार्येषु विवर्जयीया इति । यमकंटकान् स एवाह । अर्कारतमसौम्यार्थमंदा यद्येकराशिगाः । कंटकाख्यो महादोषः सर्वकर्मविनाशकृत् ॥

आरो भौमः । तमो राहुः । आर्यो गुरुः । मैत्रविश्वांऽबुपाऽऽर्येंदुसार्पसूर्याख्यतारकाः । मृत्युयोगा मृतिकराः सूर्यवारादिषु क्रमात् ॥ त्रि-श्वेति वैश्वदेवमुत्तराषाढेत्यर्थः । अंबुपं शततारका । यमघंटक इति वा पाठः । तमाह गार्ग्यः । मघा विशाखे आर्द्रा च मूलमृक्षं च कृत्तिकाः । रोहिणी हस्त इत्येते यमघंटाः क्रमाद्रवेरिति । रविवारमारभ्येत्यर्थः । कालदंडो भानुवासरभरणीयोगः । अश्विन्यादिसाऽभिजिन्नक्षत्राणां चतुर्भिश्चतुर्भिः क्रमेणादित्यवारादिषु योगेन निष्पन्नेष्वष्टाविंशतियोगेषु पठित आनंदः कालदंडश्चेति । यजनं देवतानामिति देवतापदेन गुरुदेवताविप्रा गृह्यंते । जपांतोक्तकर्मणां प्रशंसापरे वाक्यशेषे तत्संकीर्तनात् । ब्राह्मणभोजनाऽश्वत्थप्रदक्षिणांतानि समाप्य तन्मध्यपठितस्याऽपि शंकराऽभिषेकस्य शांतिपदसामानाधिकरण्येन पृथक् संकीर्तनं पूर्वोक्तजपादीनामन्यशांतीनां च निरपेक्षः कार्योऽभिषेक इति द्योतनार्थं । जपस्य तदनंतरं संकीर्तनं तत्तुल्यताज्ञापनार्थं । निमित्तभूयस्त्वे चैकादशिन्यभिषेकजपयोः संख्याविवृद्धिः कल्पनीया । मूलेवेति तद्गंडे इत्यर्थः । पूर्वोक्तगंडांतशांत्या सह विकल्पेनाऽभिषेकसहितानि जपकर्माणि कुर्यादित्यर्थः । " इति दिनक्षयादिशांतिः ॥ अथ विषघटीशांतिः ॥ ताश्चाह ज्योतिर्निबंधे वृद्धगर्गः । तिथीषुनागाऽद्रिगिरीशवारिधिर्गजाऽद्रिदिक्पावकदिक् च भास्कराः ॥ मुनीभ–। १५ । ५ । ८ । ७ । ७ । ११ । ४ । ८ । ७ । १० । ३ । १० । १२ । ७ । ८ । संख्या प्रथमातिथेः क्रमात्परं विषाख्यं घटिकाचतुष्टयं ॥ " सं० कौ० तिथीनां पंचदशत्वात्तिथिशब्देन पंचदशसंख्योच्यते । एवमग्रेऽपि । एवं च सति प्रथमायां तिथौ प्रतिपदीत्यर्थः । षोडशीं घटिकामारभ्यैकोनविंशघटीपर्यंतं विषं । द्वितीयायां षष्ठीमारभ्य नवमीपर्यंतं विषं । एवमग्रेऽप्यूह्यं । ( वारनक्षत्रेष्वप्येवमेवोक्तसंख्यघटिकोत्तरं घटीचतुष्टयं विषाख्यं बोध्यं ) विंशच्चतुर्द्वादशदिक् च शैला बाणाश्च तत्वानि यथाक्रमेण । २० । ४ । १२ । १० । ७ । ५ । २५ ।

सूर्यादिवारेषु भवंत्यनंतरं नाड्यो विषाख्यं घटिकाचतुष्टयं ॥ नक्षत्रेष्वाह नारदः । खमार्गणा ५० वेदपक्षाः २४ खरामा ३० व्योमसागराः ४०। वार्धिचंद्रा १४ रूपदस्राः २१ खरामा ३० व्योमबाहवः २० ॥ द्विरामाः ३२ खाऽग्नयः ३० शून्यदस्राः २० कुंजरभूमयः १८ । रूपपक्षाः २१ व्योमदस्रा २० वेदचंद्रा १४ श्चतुर्दश १४ ॥ शून्यचंद्रा १० वेदचंद्राः १४ षडक्षा ५६ वेदबाहवः २४। शून्यदस्राः २० शून्यचंद्राः १० पूर्णचंद्रा १० गजेंदवः १८ ॥ तर्कचंद्रा १६ वेदपक्षाः २४ खरामा ३० श्चाऽश्विभात्क्रमात् । आभ्यः पराः स्युर्घटिकाश्चतस्रो विषसंज्ञिताः ॥ शांतिमाह वृद्धगर्गः । विषनाडीषु संजातः सर्वाऽरिष्टभयप्रदः । पितृमातुलमात्मानं घातयेन्नाऽत्र संशयः ॥ मातुश्च विषशस्त्राऽस्त्रैः क्रूरे लग्नेऽशगेऽपि वा । तद्दोषपरिहाराय शांतिकर्म समाचरेत् ॥ रुद्रो यमोऽग्निर्मृत्युश्च देवताः परिकीर्तिताः । सुवर्णेन यथाशक्त्या तत्तल्लक्षणलक्षिताः ॥ प्रतिमाः कारयित्वा तु आढकव्रीहिभिः स्थले । स्थंडिलं परिकल्प्याऽथ कुंभमोषधिसंयुतं ॥ जलैः संपूज्य संस्थाप्य मृदादि प्रक्षिपेत्ततः। वस्त्रद्वयेन संवेष्ट्य पंचरत्नानि निक्षिपेत् ॥ कुंभोपरि तु संस्थाप्य चतस्रः प्रतिमास्तथा । तत्तन्मंत्रैश्च संपूज्य गंधपुष्पोपहारकैः ॥ कद्रुद्रायेति मंत्रेण यमायसोममित्यथ । अग्निर्मूर्धेति मंत्रेण परंमृत्यो इति त्वथ ॥ एतैश्चतुर्भिर्मंत्रैश्च क्रमाद्धेद्धुनेत्तथा । समिच्चरुघृतद्रव्यैः प्रत्येकं च यथाक्रमं ॥ ऋत्विग्भिश्च सहाऽऽचार्यो हुनेदष्टसहस्रकं । अष्टोत्तरशतं वाऽथ अष्टाविंशतिमेव वा ॥ ततस्तिलैर्हुनेद्देवांस्तत्तन्मंत्रैश्च कृत्यवित् । ततोऽभिषेचयेद्बालं मंत्रैः पौराणिकैः क्रमात् ॥ अनंतरोक्तैरिति शेषः । प्रीयतां भगवानीशः पिनाकी सर्वतोमुखः । तव मूर्तिप्रदानेन सर्वाऽभीष्टप्रदो भव ॥ ईषत्पीनो यमः कालो दंडहस्तः प्रसन्नधीः । रक्तदृङ् नीलकायश्च महिषस्थः शिवं कुरु ॥ पिंगभ्रूश्मश्रुकेशांतः साऽक्षसूत्रकमंडलुः । सप्तार्चिः शक्तिधारी च मम पापं व्यपोहतु ॥ दंष्ट्राकरालवदनो नीलांऽजनसमाकृतिः ।

रक्ताक्षोऽसिगदापाणिर्मृत्युर्मां पातु सर्वदा ॥ दानमेवंविधैर्मंत्रैर्यथाविधि समाहितः । गोभूहिरण्यवस्त्रैश्च आचार्यं पूजयेत्सुधीः ॥ एवं कुर्याद्विधानेन विषदोषः प्रशाम्यति । इति विषघटीशांतिः ॥ ॥ अथ प्रयोगः ॥ कर्ता आशौचोत्तरं द्विराचमनादिदेशकालकीर्तनांते अस्य शिशोः अमुकतिथिविषघटीजननसूचितसकलारिष्ट० वृद्धगर्गोक्तां सग्रहमखां शांतिं० । ( एवं वारविषनक्षत्रविषेत्याद्यूह्यं ) गणेशपूजनाद्याचार्यऋत्विग्वरणांतं कुर्यात् । आचार्यः प्रादेशकरणांते गृहपूर्वभागे महीद्यौरिति भुवं स्पृष्ट्वा तत्र ओषधयःसंवदंत इति चतुःप्रस्थपरिमितान् व्रीहीन् प्रक्षिप्य तैः स्थंडिलं परिकल्प्य तत्र आकलशेष्विति स्थापितकलशे इमंमे इत्युदकमापूर्य याओषधीरिति सर्वौषधीः स्योनेति मृदश्च प्रक्षिप्य गंधद्वारामित्यादिपूर्णपात्रनिधानांते यथालक्षणनिर्मितप्रतिमासु रुद्रादीनावाहयेत् । कद्रुद्रायेति रुद्रं । यमायसोममिति यमं । अग्निर्मूर्धा विरूपोऽग्निर्गायत्री । अग्न्यावा० । अग्निर्मूर्धा० इत्यग्निं । परंमृत्यो संकुसुको मृत्युस्त्रिष्टुप् । मृत्य्वावा० । परंमृत्यो० इति मृत्युं चावाह्य संपूज्य तत्पश्चिमभागे स्थंडिलेऽग्निं ग्रहांश्च प्रतिष्ठाप्यान्वादध्यात् । ग्रहादिदेवतोत्कीर्तनांते प्रधानदेवं रुद्रं यमं अग्निं मृत्युं च समिच्चर्वाज्यतिलैः प्रत्येकं प्रतिद्रव्यं अष्टसहस्राद्यन्यतमसंख्याहुतिभिः शेषेणेत्याद्याज्यभागहोमांतं कृत्वा यजमानेन द्रव्यत्यागे कृते ऋत्विक्सहित आचार्यस्तत्तन्मंत्रैर्यथान्वाधानं होमं कुर्यात् । स्विष्टकृदादिप्रायश्चित्तहोमांते लोकपालेभ्यो ग्रहपीठदेवताभ्यो रुद्रादिभ्यश्च बलीन्दत्वा पूर्णाहुत्यंते प्रणीताविमोकादिशेषं समाप्य कलशद्वयोदकेन भार्याशिशुसहितं यजमानं समुद्रज्येष्ठा इत्यादिभिर्मंत्रैः प्रीयतांभगवानीश इत्यादिपूर्वोक्तश्लोकचतुष्टयेन सुरास्त्वामित्यादिभिश्चाऽभिषिंचेत् । अथ यजमानो विभूतिं धृत्वा रुद्रादीन्संपूज्य एकैकां देवतां प्रीयतामित्यादितत्तन्मंत्रेणाचार्याय दत्वा कृतस्य कर्मणः सांगतायै इमां दक्षिणां तुभ्यमहं संप्रदद इति गोभूहिरण्यवस्त्राणि तन्निष्क्रयं वा

दद्यात् । एवमृत्विग्भ्योऽपि यथाशक्ति दक्षिणां दत्वा आचार्येण ग्रहादीनामुत्तरपूजने विसर्जने च कृते तद्धस्ते प्रतिमादि सोपस्करं प्रतिपाद्य ब्राह्मणान्संभोज्य शांतिं वाचयित्वा कर्मेश्वरार्पणं कुर्यात् ॥ इति विषवटीशांतिप्रयोगः ॥ ॥ अथ तिथिप्रसवशांतयः । तत्र कृष्ण-चतुर्दशीशांतिः । प्रयोगपारिजाते उत्तरगर्गः । कृष्णपक्षे चतुर्दश्यां प्रसूतेः षड्विधं फलं । चतुर्दशीं च षड्भागां कुर्यादादौ शुभं स्मृतं ॥ द्वितीये पितरं हंति तृतीये मातरं तथा । चतुर्थे मातुलं हंति पंचमे वंशनाशनं ॥ षष्ठे च धनहानिः स्यादात्मनो वंशनाशनं । तस्मात्स-र्वप्रयत्नेन शांतिं कुर्याद्विधानतः ॥ आचार्यमृत्विजो वृत्वा स्वस्तिवाचनपूर्वकं । रुद्राधिदेवतां तस्याः कर्षमात्रसुवर्णतः ॥ तस्याः चतुर्द-श्याः । तदर्धार्धेन वा कुर्याद्वित्तशाठ्यविवर्जितः । प्रतिमां कारयेच्छंभोः सर्वलक्षणसंयुतां ॥ वृषभे च समासीनं वरदाऽभयपाणिनं । शुद्ध-स्फटिकसंकाशं श्वेतमाल्यांबरावृतं ॥ त्रैयंबकेण मंत्रेण पूजां कुर्याद्विधानतः । स्थापयेच्चतुरः कुंभांश्चतुर्दिक्षु यथाक्रमं ॥ आग्नेयीमारभ्य विदिक्ष्वित्यर्थः । आग्नेयकुंभमारभ्येत्यग्रे दर्शनात् । पुण्यतीर्थजलोपेतान् धान्यस्योपरि विन्यसेत् । तन्मध्ये स्थापयेत्कुंभं शतच्छिद्रसमन्वि-तं ॥ पंचमृत्पंचरत्नानि पंचत्वक्पंचपल्लवान् । पंचधान्यं सुवर्णं च तत्तन्मंत्रैर्विनिक्षिपेत् ॥ शतौषधानि निक्षिप्य श्वेतवस्त्रैश्च वेष्टयेत् । सु-रभीणि च पुष्पाणि श्वेतानि परिवेष्टयेत् ॥ (श्वेतैः सुरभिपुष्पैर्वेष्टयेदित्यर्थः) सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः । आयांतु यजमानस्य दुरितक्षयकारकाः ॥ आवाह्य वारुणैर्मंत्रैरनेन च विधानतः । "शां० सा० वक्ष्यमाणैर्वारुणैर्वरुणं अनेनोक्तेन समुद्रादींश्चेत्यर्थः" इमंमे वरुणेत्यनया तत्त्वायामीति वै तथा ॥ त्वंनोअग्न इत्यनया सत्वंन इति मंत्रतः । आग्नेयकुंभमारभ्य पूजां कुर्याद्यथाक्रमात् ॥ आनोभद्रा-ख्यसूक्तं च भद्राअग्नेश्च सूक्तकं । जप्त्वा पुरुषसूक्तं च कद्रुद्रं तु क्रमाज्जपेत् ॥ ईश्वरस्याऽभिषेकं च ग्रहपूजां च कारयेत् । "शां० सा० ईश्वरस्य

पूर्वस्थापितेश्वरप्रतिमाया इत्यर्थः" पूजाकर्म सुनिर्वर्त्य होमं कुर्याद्विधानतः। गृहस्येशानदिग्भागे कुंडं कुर्याद्विधानतः। विस्तारायामखातं च अरत्निद्वयसंमितं ॥ कुंडकंठं परित्यज्य समंतादंगुलं क्रमात्। मेखलोच्छ्रायविस्तारौ चतुस्त्रिद्व्यंगुलैः क्रमात्॥ पश्चिमे मध्यभागे तु योनिं कुर्याद्विधानतः। योनिं षडंगुलां तिर्यक् द्वादशांगुलदैर्घ्यकां ॥ अश्वत्थदलसंकाशां किंचिन्निम्नाऽऽयतां शुभां। कुर्यादाधारपर्यंतं स्वगृह्योक्तविधानतः ॥" शां० सा० आधारांतत्वोक्त्या चक्षुषी नेति केचित्" समिदाज्यचरूंश्चैव तिलमाषांश्च सर्षपैः। सर्षपैः सहितास्तिलमाषा इत्यर्थः। अश्वत्थप्लक्षपालाशसमिद्भिः खादिरैः शुभैः ॥ अष्टोत्तरसहस्रं तु अष्टोत्तरशतं तु वा। अष्टाविंशतिमेतैश्च होमं कुर्यात्पृथक्पृथक् ॥ त्रैयंबकेण मंत्रेण तिलान्व्याहृतिभिः क्रमात्। ग्रहा एवं च होतव्या अस्मदुक्तविधानतः ॥ एवं क्रमेण होतव्यं होमशेषं समापयेत्। सर्वाऽलंकारयुक्तानां त्रयाणामभिषेचनं ॥ त्रयो मातापितृबालाः। चतुर्भिः कलशैरद्भिर्बृहत्कुंभसमन्वितं । बृहत्कुंभः शतच्छिद्रः। धौतांबराणि धृत्वाऽथ कुर्यादाज्यावलोकनं ॥ पूर्णाहुतिं च जुहुयाद्यजमानः समाहितः। तत्सर्वं परया भक्त्या ईश्वराय निवेदयेत् ॥ सर्वाऽलंकारसंयुक्तां सवत्सां गां पयस्विनीं। प्रतिमां वस्त्रयुग्मं च आचार्याय निवेदयेत् ॥ ईश्वरप्रीतये शक्त्या कुर्याद्ब्राह्मणभोजनं। अन्येषां चैव सर्वेषां कुर्याद्ब्राह्मणभोजनं ॥ एवं यः कुरुते शांतिं सर्वपापैः प्रमुच्यते। सर्वान्कामानवाप्नोति चिरंजीवी सुखी भवेत् ॥ इति कृष्णचतुर्दशीशांतिः ॥ ॥ अथ प्रयोगः ॥ कर्ता पित्ररिष्टादौ गोमुखप्रसवं कृत्वाऽन्यत्राऽकृत्वा ( शांतिसारे षड्भागचतुर्दश्या द्वितीयतृतीयांशयोरुत्पत्तौ गोप्रसव उक्तः। मयूखे तु षष्ठांशेऽपि ) देशकालौ संकीर्त्याऽस्य बालकस्य कृष्णचतुर्दशी ( अमुकांश ) जननसूचिताऽरिष्टनिरसनद्वारा० गर्गोक्तां सग्रहमखां कृष्णचतुर्दशीजननशांतिं करिष्य इति संकल्प्य गणेशपूजनपुण्याहवाचननांदीश्राद्धाचार्यऋत्विग्वरणानि कुर्यात्। तत आचार्य प्रादेशकर-

णांते स्थंडिलपूर्वभागे महीद्यौरित्यादिमंत्रावृत्त्या मध्ये शतच्छिद्रं तस्य आग्नेय्यादिविदिक्षु चतुरः कलशांश्च संस्थाप्य शतच्छिद्रे स्योनेति पंचमृदः । अश्वत्थेव इति पंचपल्लवान् । सहिरत्नानीति पंचरत्नानि । रुद्रतिभीम इति पंचत्वचः । ओषधयःसमिति व्रीहियवगोधूममाषतिला इत्येतानि पंचधान्यानि । हिरण्यरूप इति हिरण्यं । याओषधीरिति शतौषधीस्तदलाभे विष्णुक्रांतासहदेवीतुलसीचशतावरीति मूलशांत्युक्ता ओषधीश्च निक्षिप्य युवासुवासा इति श्वेतवस्त्रैः सुगंधिश्वेतपुष्पैश्च संवेष्टय पूर्णपात्रे उक्तलक्षणप्रतिमायां त्र्यंबकमितिमंत्रेण रुद्रमावाह्य शुद्धस्फटिकसंकाशं श्वेतमाल्यांबरावृतं तं ध्यात्वा एकादशिन्यभिषेकघटितोपचारैः संपूजयेत् (मयूखे तु स्थंडिलात्पूर्वभागे पीठादौ हैमप्रतिमायां त्र्यंबकमिति मंत्रेण रुद्रावाहनपूजनांते तत्प्राच्यामैशान्यामुदीच्या वा विधिवत्कुंभपंचकस्थापनाद्युक्तं । तत्र च शतच्छिद्रेन पूर्णपात्रनिधानादि । केवलं मृदाद्युक्तद्रव्याणां निक्षेपः । इदमेव युक्तं भाति । मूलोक्तसंवादलभात् ) तत आग्नेय्यादिकलशेषु इमंमेगंग इत्यादिमंत्रावृत्त्या उदकपूरणादिपूर्णपात्रनिधानांते आग्नेयकुंभे । इमंमेवरुण शुनःशेपो वरुणो गायत्री । वरुणावा० । इमंमे० । सर्वे समुद्राः० । इति च समुद्रादिसहितं वरुणमावाहयेत् । एवमग्रेऽपि समुद्रादिसहितस्यैव वरुणस्यावाहनं । नैर्ऋते तत्त्वायामि० । वायव्ये । त्वंनोअग्ने वामदेवो वरुणस्त्रिष्टुप् । वरुणावा० । ऐशाने । सत्वंनोअग्ने वाम० । एवमावाह्य सर्वेषां पूजनांते देवदानवेत्यादिश्लोकैः प्रतिकलशं प्रार्थ्य चतर्षु क्रमेण सूक्तानि जपेत् । आनोभद्रा इति दशर्चस्य सूक्तस्य गोतमो विश्वेदेवा जगती । षष्ठी विराट् तिस्रोंत्यास्त्रिष्टुभः । जपे विनि० । भद्राअग्ने इति द्वादशर्चस्य सूक्तस्य सुमित्रोऽग्निराद्ये जगत्यौ शेषास्त्रिष्टुभः । सहस्रशीर्षेति षोडशर्चस्य सूक्तस्य नारायणः पुरुषोनुष्टुबंत्या त्रिष्टुप् । कद्रुद्रायेति नवर्चस्य सूक्तस्य कण्वो रुद्रो गायत्र्यंत्यानुष्टुप् । एवं सूक्तजपांतेऽग्निं ग्रहांश्च प्रतिष्ठाप्यान्वादध्यात् । ग्रहोत्कीर्तनांते

रुद्रं प्रधानदेवं अश्वत्थप्लक्षपलाशखदिरसमिदाज्यचरुभिः संमिश्रतिलमाषसर्षपैश्च प्रतिद्रव्यं अष्टोत्तरसहस्राद्यन्यतमसंख्याहुतिभिः प्रजापतिं तिलैः पूर्वोक्तसं० ( कौस्तुभमयूखयोस्तु अग्निवायुसूर्यप्रजापतीनुद्दिश्य व्यस्तसमस्तव्याहृतिभिर्होम उक्तः ) शेषेणेत्यादि निर्वापादिना चरुं कृत्वा ( कौस्तुभादिषु तु निर्वापादि नोक्तं ) कर्त्रा त्यागे कृते साचार्यऋत्विजो होमादिबलिदानांते शतच्छिद्रगतैश्चतुःकलशोदकैर्ग्रहकलशोदकेन च पत्नीशिशुसहितं यजमानमब्देवत्यमंत्रैरभिषिंचेयुः । ततो यजमानो विभूतिं धृत्वा कांस्यपात्रे रूपंरूपमित्याज्यं सकुटुंबोऽवलोक्य सदक्षिणं तत्पात्रं विप्राय दत्वा पूर्णाहुत्यादिशेषं समाप्य कृतं कर्म रुद्राय निवेद्याऽऽचार्याय सवत्सां गां वस्त्रयुग्ममृत्विग्भ्योऽन्येभ्यश्च यथाशक्ति दक्षिणां दत्वा देवताविसर्जनांते प्रतिमाद्युपस्करमाचार्यहस्ते प्रतिपाद्य विप्रान्संभोज्य तैः शांतिं वाचयित्वा सुहृद्युतो भुंजीत । इति कमलाकरभट्टकृतकृष्णचतुर्दशीशांतिप्रयोगः ॥ ॥ अथ सिनीवालीकुहूशांतिः ॥ प्रयोगपारिजाते उत्तरगार्ग्यः । सिनीवाल्यां प्रसूता स्याद्दासी [ यस्य ] भार्यापशुस्तथा । गजाऽश्वा महिषी चैव शक्रस्याऽपि श्रियं हरेत् ॥ ये संति सकलाश्चाऽन्ये स्वप्रसादोपजीविनः । वर्जयेत्तानशेषांस्तु पशुपक्षिमृगादिकान् ॥ " शां० सा० सिनीवालीकुहूत्पन्नानिति शेषः । " कुहूप्रसूतिरत्यर्थं सर्वदोषकरी स्मृता । यस्य प्रसूतिरेतेषां तस्यायुर्धननाशनं ॥ सर्वगंडसमस्तत्र दोषस्तु प्रबलो भवेत् । शांतिं विना विशेषेण परित्यागो विधीयते ॥ " शां० सा० विशेषेण उत्तमपक्षेण शांतिकरणं विना परित्यागः । यदा तूत्तमपक्षे न शक्तिस्तदा कियत्कालं त्यागं कृत्वा शांतिः कर्तव्येत्याह " परित्यागात्तत्र शांतिं कुर्याद्धीमान्विचक्षणः । (परित्यागादिति ल्यब्लोपे पंचमी । परित्यागं कृत्वेत्यर्थः) शांतौ चिकीर्षितायामपि त्यागः कार्य एव । शांतिं विना तु सुतरां त्याग इत्यर्थः । तत्फलं तत्क्षणार्धेन शिशोरेवाऽनुपालने ॥ [ तत्कालं० पालनं ] शांत्यभावे बा-

ल्त्यागाऽभावे चेत्यर्थः । नत्यजेत्पिंडतो मोहादर्थादज्ञानतोऽपि वा । ( पिंडत इति षष्ठ्यंतात्सार्वविभक्तिकस्तसिः । तेन बालदेहस्य मोहादित्यर्थः ) शांत्यभावे यदि बालं न त्यजेदित्यर्थः । तद्योगान्नाशयेत्किंचित्स्वयं वा नाशमश्नुते ॥ तद्योगाद्बालयोगादित्यर्थः । कल्पोक्तशांतिः कर्तव्या शीघ्रं दोषाऽपनुत्तये । रुद्रः शक्रश्च पितरः पूज्याः स्युर्देवताः क्रमात् ॥ कर्षमात्रसुवर्णेन तदर्धोऽर्धेन वा पुनः । अथवा शक्तितः कुर्याद्वित्तशाठ्यविवर्जितः ॥ प्रतिमां कारयेच्छंभोश्चतुर्भुजसमन्वितां । त्रिशूलखड्गवरदाऽभयहस्तां यथाक्रमात् ॥ श्वेतवर्णां श्वेतपुष्पां श्वेतांऽबरवृषस्थितां । त्रैयंबकेण मंत्रेण पूजां कुर्याद्यथाविधि ॥ इंद्रश्चतुर्भुजो वज्रांऽकुशचापैः ससायकः । “ शां० सा० वज्रांकुशचापैः सहिताः सायका यस्येति विग्रहः ” रक्तवर्णो गजारूढो यतइंद्रेति मंत्रतः ॥ पितरः कृष्णवर्णाश्च चतुर्हस्ता विमानगाः । यष्ट्यक्ष [ गदाक्ष ] सूत्रकमंडल्वभयस्यैव धारिणः ॥ येचेह इति मंत्रेण पूजां कुर्यादनंतरं । “ शां० सा० मदनरत्नादिषु तु येसत्या इति पाठः । तस्मिन्पक्षे येसत्यासोहविरद इति मंत्रः ” आग्नेयीं दिशमारभ्य कुंभान्कोणेषु विन्यसेत् ॥ तन्मध्ये स्थापयेत्कुंभं शतच्छिद्रसमन्वितं । तेष्वेव पंचगव्यादींस्तत्तन्मंत्रैश्च निक्षिपेत् ॥ ( चतुर्ष्वित्यर्थः ) आदिशब्देन पंचमृत्पंचरत्नादीनि चतुर्दशीशांत्युक्तानि । कल्पोक्तशांतिः कर्त्तव्या कुर्याच्छीघ्रं स्वशक्तितः । शांतिं पठेदित्यर्थः । गोदानं वस्त्रदानं च सुवर्णं चोर्वरां शुभां ॥ दशदानानि चोक्तानि क्षीरमाज्यं गुडस्तथा । गोदानादेर्देशदानांऽतर्गतत्वाद्दारद्वयमनुष्ठानं ॥ आज्याऽवेक्षणमेतानि तत्तन्मंत्रैश्च कारयेत् । समिदाज्यचरोर्होमं तिलमाषैश्च सर्षपैः ॥ इतरेतरयोगद्वंद्वात्तिलमाष मिलितं द्रव्यं । अश्वत्थप्लक्षपालाशसमिद्भिः खादिरैः शुभैः । अष्टोत्तरशतं मुख्यं प्रत्येकं जुहुयाद्द्विजः ॥ त्रैयंबकेण मंत्रेण तिलान्व्याहृतिभिः पुनः । “ शां० सा० मुख्यमित्युक्तेरधिदेवतादेरष्टाविंशत्यादिन्यूनसंख्यया होमः ” च-

तुर्भिः कलशैर्युक्तं बृहत्कुंभसमन्वितं ॥ शांतिवत्सकलं कार्यमभिषेकं च कारयेत् । चतुर्दशीशातिवदित्यर्थः । पितृमातृशिशूनां च अभिषिंचेत्तु वारुणैः ॥ षष्ठी द्वितियार्था । शंकरस्याऽभिषेकं च कुर्याद्ब्राह्मणभोजनं ॥ अन्येषां चैव सर्वेषां ब्राह्मणानां च तर्पणं ॥ यथाशक्त्यनुसारेण द्विजवाचनपूर्वकं । द्विजवाचनं स्वस्तिवाचनं तत्पूर्वकं सर्वं कुर्यादित्यर्थः । " शां० सा० ब्राह्मणांस्तर्पयिष्य इति प्रश्नं कर्मसंपूर्णतावाचनं वा कृत्वेत्यर्थः " इति सिनीवालीकुहूशांतिः ॥ ॥ अथ प्रयोगः । कर्ताऽस्य बालस्य सिनीवालीजननसूचितसकलानिष्टपरिहारद्वारा० गर्गोक्तां सिनीवालीजननशांतिं करिष्ये इति संकल्प्य गणेशपूजाद्याचार्यर्त्विग्वरणांतं कुर्यात् । ( कुह्वां तु गोमुखप्रसवः । संकल्पे कुहूजननेत्यूहश्चेति विशेषः) । तत आचार्यः प्रादेशकरणांते आग्नेय्यादिषु चतुरः कुंभान्मध्ये च शतच्छिद्रं महीद्यौरित्यादिमंत्रावृत्त्या संस्थाप्य चतुर्षु जलपूरणगंधक्षेपांते गायत्र्यादिमंत्रैः पंचगव्यानि पंचमृत्पल्लवरत्नत्वग्धान्यानि हिरण्यं च तत्तन्मंत्रैर्निक्षिप्य पंचस्वपि पूर्णपात्रनिधानांते शतच्छिद्रे उक्तलक्षणप्रतिमायां त्र्यंबकमिति रुद्रमावाह्य तद्दक्षिणे यतइंद्रेत्यस्य भर्ग इंद्रो बृहती । इंद्रावा० । यतइंद्र० इतींद्रं । उत्तरे येचेह शंखः पितरस्त्रिष्टुप् । पित्रावा० । येचेह० इति पितॄंश्चावाह्य पूजयेत् ( मयूखे तु स्थंडिलात्पूर्वतः पीठादौ रुद्रेंद्रपितॄन् संपूज्य तत्प्राच्यामैशान्यामुदीच्यां वा कुंभपंचकस्थापनाद्युक्तं । शतच्छिद्रे च न पूर्णपात्रनिधानादि । इदमेव युक्तं ) चतुर्षु कुंभेषु वरुणावाहनपूजनांते आनोभद्रा भद्राअग्ने: सहस्रशीर्षा कद्रुद्रायेत्यादिस्वस्वशाखोक्तशांतीः पठेत् । ( एषामृष्यादि चतुर्दशीशांतौ द्रष्टव्यं । कौस्तुभादौ तु आनोभद्रा इत्येकस्यैव सूक्तस्य जपमुक्त्वा गवादिदानान्यत्रैव कर्तव्यानीत्युपपादितं ) ततोग्निं ग्रहांश्च प्रतिष्ठाप्यान्वादध्यात् । ग्रहोत्कीर्तनांते रुद्रं प्रधानदेवं अश्वत्थप्लक्षपलाशखदिरसमिदाज्यचरुभिः संमिश्रतिलमाषसर्षपैश्च प्रतिद्रव्यंअष्टोत्तरशतसंख्याभिराहुतीभिः इंद्रं पितॄंश्च तैरेव द्रव्यैः

प्रत्येकं प्रतिद्रव्यं अष्टाविंशतिसं॰ अष्टसंख्याभिर्वा । प्रजापतिं तिलैः २८ । ८ वा । ( कौस्तुभमयूखयोस्तु त्र्यंबकमंत्रेण तिलहोमोऽत्राऽधिक उक्तः । सच व्याहृतिहोमात्पूर्वं कार्यः ) शेषेणेत्यादिबलिदानांते मूर्धानमिति पूर्णाहुतिं हुत्वा ग्रहकुंभसहितचतुःकलशोदकयुतशतच्छिद्रेण तत्त्वायामीत्यादिवारुणमंत्रैर्मातृपितृशिशूनामभिषेकं कृत्वा संस्रावहोमादिशेषं समापयेत् । ततो यजमानोऽग्नेः पश्चादुपविश्य विभूतिं धृत्वाऽऽचार्यादिभ्यो गवादिदानानि दद्यात् । गवामंगेष्विति गां । शरण्यं सर्वलोकानां लज्जाया रक्षणं परं । सुवेषधारि वस्त्र त्वमतः शांतिं॰ इति वस्त्रं । हिरण्यगर्भगर्भस्थमिति सुवर्णं । सर्वभूताश्रयाभूमिर्वराहेण समुद्धृता । अनंतसस्यफलदा अतः शांतिं॰ इति भूमिं । ततो दशदानानि । गोभूतिलहिरण्याज्यवासोधान्यगुडानि च । रौप्यं लवणमित्याहुर्दशदानानि पंडिताः ॥ गां भुवं चोक्तमंत्राभ्यां पुनर्दत्त्वा तिलान्दद्यात् । महर्षेर्गोत्रसंभूताः कश्यपस्य तिलाः स्मृताः । तस्मादेषां प्रदानेन मम पापं व्यपोहत्विति । उक्तमंत्रेण पुनर्हिरण्यं दत्वाज्यं दद्यात् । कामधेनुषु संभूतं सर्वक्रतुषु संस्थितं । देवानामाज्यमाहारमतः शांतिं॰ । उक्तमंत्रेण वासः पुनर्दत्वा धान्यं दद्यात् । सर्वदेवमयं धान्यं सर्वोत्पत्तिकरं महत् । प्राणिनां जीवनोपायमतः शांतिं॰ ॥ यथा देवेषु विश्वात्मा प्रवरश्च जनार्दनः । सामवेदस्तु वेदानां महादेवस्तु योगिनां ॥ प्रणवः सर्वमंत्राणां नारीणां पार्वती यथा । तथा रसानां प्रवरः सदैवेक्षुरसो मतः ॥ मम तस्मात्परां शांतिं ददस्व गुड सर्वदेति गुडं । प्रीतिर्यतः पितॄणां च विष्णुशंकरयोः सदा । शिवनेत्रोद्भवं रूप्यमतः शांतिं॰ इति रौप्यं । यस्मादन्नरसाः सर्वे नोत्कृष्टा लवणं विना । शंभोः प्रीतिकरं नित्यमतः शांतिं॰ इति लवणं । इति दशदानानि । ततः क्षीरं दद्यात् । क्षीरजातास्तथा शंखाः क्षीरादमृतसंभवः । क्षीरात्क्षीरोदवत्कीर्तिः क्षीरे प्राणस्य संभवः ॥ तस्मात्क्षीरप्रदानेन अतः शांतिं॰ । आज्यं गुडं चोक्तमंत्राभ्यां पुनर्दद्यात् । एतानि दक्षिणात्वेनाऽत्र देयानि । अर्थ-

क्रमेण पाठक्रमस्य बाधात् । अतएवांऽते दक्षिणाऽनुक्तिः । केचिद्दक्षिणामपि पाठक्रमान्मध्ये कुर्वंति । तत आज्यपूर्णे कांस्यपात्रे रूपंरूप-
मिति सकुटुंबः प्रतिरूपं वीक्ष्य आज्यं तेजः समुद्दिष्टमाज्यं पापहरं स्मृतं । आज्यं सुराणामाहार आज्ये देवाः प्रतिष्ठिताः ॥ इति तदाज्यं स-
दक्षिणं विप्राय दत्वा रुद्रप्रतिमायास्त्र्यंबकमितिमंत्रेणाऽभिषेकोत्तरं सर्वेषामुत्तरपूजां कृत्वा विसृज्याचार्यहस्ते दत्वाऽग्निं विसृज्य कर्मसंपूर्ण-
तां वाचयित्वा विप्राननन्यांश्चांऽधपंग्वादीन्भोजयेत् । सिनीवालीकुह्वोर्दर्शशांत्या समुच्चयः । अव्यभिचारादिति केचित् । तत्वं तु सिनीवाल्या-
मेवेयं शांतिः । कुह्वां तु दोषमात्रमुक्तं । दर्शः सूर्येंदुसंगम इति कुह्वा एव दर्शत्वात्तत्र दर्शशांतिरेवेति । केचित्तु दर्शेष्टयतीपाते पथिकृद्वैश्वा-
नरीयवत्कुह्वां द्वयोः समुच्चयमाहुः । नाऽत्र गोमुखप्रसवः । ( ग्रंथकृताऽत्र गोप्रसवो नेत्युक्तेऽपि मूलवाक्ये यस्यप्रसूतिरेतस्यांतस्यायुर्धननाश-
नमित्यत्राऽऽयुर्नाशपदेनाऽरिष्टबोधनाद्गोप्रसवो नित्यत्वेन प्राप्तः । सिनीवाल्यां तु तदभावान्नेति स्पष्टमेव । शांतिसारेऽप्येतदेवाऽभिप्रेत्य स
कार्य इति युक्तमुक्तं ) इतिसिनीवालीकुहूशांतिप्रयोगः ॥ ॥ अथ सिनीवालीदर्शादिनिर्णयः । " ध० सिं० तत्राऽमावास्यायाः
प्रथमो यामः सिनीवाली । (मयूखे तु चतुर्दश्या अंत्योऽमायाश्चाद्यो यामः सिनीवालीत्युक्तं) अंत्योपांत्ययामौ कुहूः । मध्यवर्तिपंचयामा दर्श
इति केचित् । अपरे तु चतुर्दशीमात्रयुतेऽहोरात्रे वर्तमानाऽमावास्या सिनीवाली। प्रतिपन्मात्रयुतेऽहोरात्रे वर्तमाना कुहूः । तेनाऽमाया वारत्र-
यस्पर्शित्वलक्षणदिनवृद्ध्यभावे सूर्योदयस्पर्शित्वाऽभावलक्षणक्षयाऽभावे च दर्शो नास्त्येव। उदयात्पूर्वाऽहोरात्रे वर्तमानायाः सिनीवालीत्वात्।
उदयोत्तरं वर्तमानायाश्च कुहूत्वात् । दिनक्षये सर्वाऽप्यमा दर्शसंज्ञा । न तत्र सिनीवालीकुहूभागौ । केवलचतुर्दशीकेवलप्रतिपद्युक्तत्वाऽ
भावात् । एवं दिनवृद्धौ त्रिदिनस्पर्शे मध्यदिनस्था षष्टिनाडीमिताऽमावास्या दर्शसंज्ञा । चतुर्दश्यादियोगाऽभावात् । पूर्वोत्तरदिनस्थौ भागौ

सिनीवालीकुहूसंज्ञावित्याहुः । इदं मयूखे स्पष्टं ” ॥ ॥ अथ दर्शजननशांतिः । नारदः । अथातो दर्शजातानां मातापित्रोर्दरिद्रता । तद्दोषपरिहारार्थं शांतिं वक्ष्यामि नारदः ॥ पुण्याहं वाचयित्वादौ ऋतुसंकल्पपूर्वकं । कुंडं वा मंडलं कुर्यात्तद्देशे स्थापयेद्घटं ॥ “ शां० सा० । कुंडं वा स्थंडिलं० । तद्देशे तत्समीपे” मंडलं सर्वतोभद्रं । “शां० म० मंडलं स्थंडिलं” तत्कुंभे निक्षिपेद्द्रव्यं दधिक्षीरघृतादिकं । आदिश-ब्दाद्गोमूत्रगोमये । न्यग्रोधोदुंबराऽश्वत्थाः सचूता निंबकास्तथा ॥ एतेषां वृक्षमूलानि त्वगादीन्पल्लवांस्तथा । पंचरत्नानि निक्षिप्य वस्त्रयुग्मेन वेष्टयेत् ॥ सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः । आयांतु यजमानस्य दुरितक्षयकारकाः ॥ आपोहिष्ठतृचेनाऽथ कयानश्चित्र इत्यृचा । यत्किंचेदमृचा चैव समुद्रज्येष्ठा इत्यृचा ॥ अभिमंत्र्योदकं पश्चादग्नेः पूर्वप्रदेशके । उदकमभिमंत्र्य पश्चाद्दर्शदेवतां स्थापयेदित्यर्थः । मंडलं कुर्यादिति यदुक्तं तदाह । हारिद्रं रक्तकं चैव कृष्णं श्वेतं च नीलकं ॥ एतेषां तंडुलैश्चैव सर्वतोभद्रमुद्धरेत् । “ शां० सा० कुंभतः प-श्चादग्नेश्च पूर्वतो हरिद्रादिरंगरक्तैस्तंडुलैः सर्वतोभद्रमुल्लिखेदित्यर्थः ” दर्शस्य देवतायाश्च सोमसूर्यस्वरूपकं ॥ प्रतिमां स्वर्णजां नित्यं राजतीं ताम्रजां तथा । “ वि० पा० अयं धातुक्रमो दर्शसोमसूर्यक्रमाऽपेक्षया द्रष्टव्यः ” दर्शदेवतारूपसोमसूर्यस्वरूपं प्रतिमां स्थापयेदित्यभेदेनाऽन्वयः । “ सं० कौ० दर्शदेवताः पितरस्तद्रूपां प्रतिमां स्थापयेदित्यभेदेनाऽन्वयः । शां० सा० पितृरूपाया दर्शदेवतायाः सोमसूर्ययोश्च स्वरूपं प्रतिमारूपं स्थापयेदित्यर्थ इति प्रयोगपारिजाते ” कुहा अपि तत्त्वात्तत्रापीदं । सर्वतोभद्रमध्ये च स्थापयेद्दर्शदेवतां ॥ ग्रहवर्णं वस्त्रयुग्मं तद्वर्णं गंधपुष्पकं । “ वि० पा० श्वेतरक्तवर्णमित्यर्थः ” आप्यायस्वेति मंत्रेण सवितापश्चातात्तथा ॥ उपचारैः समाराध्य ततो होमं समाचरेत् । “ वि० पा० सोमसूर्यपूजाऽपि सर्वतोभद्र एव । सांनिध्यात् ” कृत्वा वह्निं प्रतिष्ठाप्य ऋतुसंकल्पमीदृशं ॥ आयुरा-

रोग्यसिद्ध्यर्थं सर्वानिष्टप्रशांतये । पुत्रस्य दर्शजननदोषनिर्हरणाय च ॥ मातापित्रोः कुमारस्य सर्वानिष्टप्रशांतये । तेषामायुःश्रिये चैव शांतिहोमं करोम्यहं ॥ " शां० सा० आयुरारोग्येति श्लोकद्वयेन क्रतुसंकल्पं कृत्वेत्यर्थः " समिधश्च चरुद्रव्यं क्रमेण जुहुयाद्गृही । हुनेत्सवितृमंत्रेण सोमोधेनुं च मंत्रतः ॥ एतैर्मंत्रैश्च प्रत्येकं हुनेदष्टोत्तरं शतं । एतैरिति बहुवचनात्पितृदेवत्यहोमोऽप्यष्टोत्तरशतं । (प्रयोगपारिजातेऽप्येवं) "सं० कौ० एतैरिति बहुवचनं प्रणवस्वाहाकारसाहित्याऽभिप्रायेणाऽनुवादः । अतएवाह । दर्शस्य० " दर्शस्य देवताहोमस्त्वष्टाविंशतिसंख्यया ॥ " वि० पा० दर्शदेवतामंत्रस्तल्लिंगको ग्राह्यः । यद्वा दर्शदेवतापूजाहोमादि नाममंत्रेण कार्यं । वेदमंत्राऽनुपदेशात् ।" होममेवं तु कृत्वाऽथ विदध्यादभिषेचनं । श्रीसूक्तमायुष्यसूक्तं समुद्रज्येष्ठा इत्यृचा ॥ एतैर्मंत्रैरभिषेकं मातापित्रोः शिशोस्तथा । ततः स्विष्टकृदादि स्याद्धोमशेषं समापयेत् ॥ हिरण्यं रजतं चैव कृष्णा धेनुः सदक्षिणा । अन्येभ्योऽपि यथाशक्ति दातव्या दक्षिणा तथा ॥ ब्राह्मणान्भोजयेत्तत्र कारयेत्स्वस्तिवाचनं ॥ इतिनारदोक्तदर्शशांतिः ॥ ॥ अथ प्रयोगः । कर्ता उक्तकाले सपत्नीकः पीठे प्राङ्मुख उपविश्य द्विराचमनादिदेशकालकीर्तनांते ममाऽस्य शिशोः दर्शजननसूचिताऽनिष्टनिरसनद्वाराश्री० सग्रहमखां नारदोक्तां शांतिं करिष्ये इति संकल्प्य गणेशपूजाद्याचार्यर्त्विग्वरणांतं कुर्यात् । अथाचार्यः प्रादेशकरणांते कुंडात्स्थंडिलाद्वा पूर्वे सर्वतोभद्रपर्याप्तं स्थलमतिक्रम्य महीद्यौरित्यादिविधिना कुंभं संस्थाप्य तत्र जलपूरणगंधक्षेपांते गायत्र्यादिमंत्रैः पंचगव्यं । रुवतिभीम इति न्यग्रोधोदुंबराऽश्वत्थचूतनिंबानां मूलत्वचः । अश्वत्थेव इति तेषामेव पल्लवान् । कांडात्कांडादिति दूर्वाश्च निक्षिप्य याः फलिनीरित्यादिवस्त्रयुग्मवेष्टनांते तत्र सर्वेसमुद्राः० इति समुद्रादिसहितं वरुणमावाह्य संपूज्य आपोहिष्ठेति तिसृणामांब० । कयानो वामदेवो० । यत्किंचेदं शुनः शेपो वरुणो जगती । समुद्रज्येष्ठा

इत्यस्य वसिष्ठ आपस्त्रिष्टुप् । उदकाभिमंत्रणे विनि० । इति षण्मंत्रैः कलशोदकमभिमंत्र्य तत्पश्चादग्नेः पूर्वतो हारिद्रादिवर्णैस्तंडुलैर्यथोक्तं सर्वतोभद्रं विरच्य तन्मध्ये स्वर्णप्रतिमायां पित्रादीनावाहयेत् । येचेह शंखः पितरस्त्रिष्टुप् । पित्रावा० । येचेह पितरो० इति पितॄन् । तद्दक्षिणे रजतप्रतिमायां आप्यायस्वगोत० इति सोमं । उत्तरे ताम्रप्रतिमायां सवितापश्चातान्नाभागः सविता त्रिष्टुप् । सूर्यावाहने० । सवितापश्चाता० इति सूर्यं चावाह्य षोडशोपचारैः सर्वान्पूजयेत् । ततोग्निं ग्रहांश्च प्रतिष्ठाप्यान्वादध्यात् । ग्रहादिदेवतोत्कीर्तनांते । पितॄन् समिच्चरुभ्यां प्रतिद्रव्यं अष्टाविंशतिसंख्याहुतिभिः । सोमं सूर्यं च ताभ्यामेव द्रव्याभ्यां प्रत्येकं प्रतिद्रव्यं अष्टोत्तरशतसंख्या० शेषेणेत्या-द्याज्यभागहोमांते आयुरारोग्येत्यादिमंत्राभ्यां होमसंकल्पं कृत्वा यजमानेन त्यागे कृते सर्त्विगाचार्य उक्तरीत्या होमं कुर्यात् । होमांते च स्विष्टकृतः प्राक् कुंभद्वयोदकेन पत्नीशिशुसहितं यजमानमभिषिंचेत् । तत्र मंत्राः । हिरण्यवर्णामिति पंचदशर्चस्य सूक्तस्य कर्दमानंदचि-क्लीतेंदिरासुताः श्रीरनुष्टुप् । पंचमी षष्ठी च त्रिष्टुभौ चतुर्थ्यंत्या च प्रस्तारपंक्तिः । आयुष्यमित्येकादशर्चस्य सूक्तस्य सनकादयो हिरण्य-मनुष्टुप् । पंचम्यष्टमी नवमी च त्रिष्टुभः सप्तमीशक्वर्यंत्या जगती । समुद्रज्येष्ठा इत्यस्य वसिष्ठ० । अभिषेके विनि० । ततः स्विष्टकृदा-दिप्रायश्चित्तहोमांते बलिदानपूर्णाहुती कृत्वा संस्रावहोमादिशेषं समापयेत् । अथ यजमानो विभूतिं धृत्वा हिरण्यरजते सदक्षिणां कृष्णां धेनुं चाचार्याय ऋत्विग्भ्यो यथाशक्ति दक्षिणां च दत्वा स्थापितदेवतोत्तरपूजाविसर्जनांते प्रतिमाद्याचार्यहस्ते प्रतिपाद्याऽग्निं संपूज्य विसृ-ज्य शांतीः पाठयित्वा ब्राह्मणान्संभोज्य तेभ्यो दक्षिणादानांते स्वस्ति भवंतो ब्रुवंत्विति वाचयेत् । तेच स्वस्तीति वदेयुः । ( अत्र ग्रं-थकृता प्रादेशकरणोत्तरं स्थंडिलात् पूर्वे सर्वतोभद्रे कुंभस्थापनादिपूर्णपात्रनिधानांते तत्रैकस्यामेव प्रतिमायां दर्शदेवतात्वेन सोमसूर्ययोरावा-

हनमुक्तं । नाऽत्र प्रतिमाघटकद्रव्यस्योल्लेखः । नचाऽऽवाहने पितृदेवतोपादानं । एतत्तु प्रतिमां स्वर्णजां नित्यं राजतीं ताम्रजां तथेति मूलोक्तेन विरुद्धं । विधानपारिजाते अयं धातुक्रमो दर्शसोमसूर्यक्रमाऽपेक्षयेति तस्य व्याख्यानान्मयूखादिष्वेवमेवाऽग्रे व्यवस्थादर्शनाच्चेति । अथाऽन्यदपि । मूलविचारे एतैरिति बहुवचनात्पितृदेवत्यहोमोप्यष्टोत्तरशतमिति व्याख्याय प्रयोगे केवलं सोमसूर्याभ्यामेव होम उक्तस्तत्राप्यष्टशताष्टाविंशत्यन्यतरेति संख्यायां विकल्पः । सच न सर्वसंमतः । एवमत्र सर्वतो विप्रतिपत्तिदर्शनान्मूलानुसारी प्रायेण कौस्तुभोक्त एव प्रयोगो गृहीतः ) इति दर्शशांतिप्रयोगः ॥ इति तिथिशांतयः ॥ ॥ अथ नक्षत्रशांतयः ॥ तत्रादौ ज्येष्ठाशांतिः । तदुत्पत्तौ फलं ब्रह्मयामले । ज्येष्ठादौ जननीमाता द्वितीये जननीपिता । तृतीये जननीभ्राता स्वस्य माता चतुर्थके ॥ आत्मानं पंचमे हंति षष्ठे गोत्रक्षयो भवेत् । सप्तमे चोभयकुलं ज्येष्ठभ्रातरमष्टमे ॥ नवमे श्वशुरं हंति सर्वस्वं दशमेंऽशके । वसिष्ठः । सुरेशताराजनिता धवाऽग्रजं द्विदैवताराजानिता तु देवरं । पुरंदरर्क्षे जनितः सुतस्तथा स्वस्याऽग्रजं हंति न पुत्रिका यदि । "शां० सा० नृसिंहप्रसादे । धवाऽग्रजं हंति सुरेंद्रजाता तथैव पत्न्या भगिनीं पुमांश्च । द्विदैवजा देवरमाशु हन्याद्भार्याऽनुजामाशु निहंति सूनुः ॥ पत्न्यग्रजामग्रजं वा हंति ज्येष्ठर्क्षजः पुमान् । तथा पत्नीस्वसारं च श्यालकं च द्विदैवजः ॥ कन्यका देवरं हंति विशाखांऽत्यसमुद्भवा । आद्यपादत्रये नैव आद्यभे तु पुमान्भवेत् ॥ आद्यपादत्रये देवरं न हन्यात् । पुमांस्तु आद्यपादत्रय एव पत्नीकनिष्ठं हन्यादित्यर्थः । न हन्याद्देवरं कन्या तुलामिश्राद्द्विदैवजा । तद्वक्षांऽत्योद्भवा वर्ज्या दुष्टा वृश्चिकपुच्छवत् ॥ " विशेषो निर्णयसिंधौ ज्ञेयः । प्रयोगपारिजाते । सुखासीनं मुनिश्रेष्ठं गर्गं मुनिगणान्वितं । कृतांऽजलिपुटो भूत्वा परिपप्रच्छ शौनकः ॥ गर्ग उवाच । ज्येष्ठानक्षत्रसंभूतगंडदोषविनिर्णयं । तस्यशांतिविधानं च यथावत्कथयाम्यहं ॥

घटिकैका च मैत्रांते ज्येष्ठादौ घटिकाद्वयं । तयोः संधिरिति ज्ञेयं शिशुगंडं समीरितं ॥ मैत्रमनुराधा । प्रथमे च द्वितीये च ज्येष्ठर्क्षे च तृतीयके । पादत्रये नरो जातो ज्येष्ठोऽप्यत्र प्रजायते ॥ " वि० पा० ज्येष्ठाद्यघटिकाद्वयं परित्यज्य प्रथमादिचरणत्रये जातो नरो ज्येष्ठः श्रेष्ठ इत्यर्थः । दोषाऽभावात् " ज्येष्ठांऽत्यपादजातस्तु पितुः स्वस्य च नाशकः । जायते नाऽत्र संदेहो दशाहाऽभ्यंतरे तथा ॥ ज्येष्ठर्क्षे कन्यका जाता हंति शीघ्रं धवाऽग्रजं । तच्छांतिं तस्य वक्ष्यामि गंडदोषप्रशांतये ॥ सुदिने शुभनक्षत्रे चंद्रताराबलान्विते । सूतकांते तथा कुर्याज्ज्येष्ठाशांतिं विधानतः ॥ वज्रांऽकुशधरं देवमैरावतगजान्वितं । कुर्याच्छचीपतिं रम्यं देवेंद्रं सुरनायकं ॥ कर्षमात्रसुवर्णेन कर्षार्धेनाऽथ पादतः । तद्विधानं प्रकुर्वीत वित्तशाठ्यं न कारयेत् ॥ शालितंडुलसंपूर्णकुंभस्योपरि पूजयेत् । इंद्रायेंदोमरुत्वत इतिमंत्रेण वाग्यतः ॥ गंधपुष्पैर्धूपदीपैर्नानाभक्ष्यनिवेदनैः । पूजयेद्विधिना विप्र लोकपालगणान्वितं ॥ रक्तवस्त्रद्वयोपेतं पूजयेत्सुरनायकं । तत्र सं [तत्पुरः] स्थापयेत्कुंभांश्चतुर्दिक्षु विशेषतः ॥ तन्मध्ये स्थापयेत्कुंभं शतच्छिद्रसमन्वितं । पुण्योदकसमायुक्तान् वस्त्रयुग्मेन वेष्टितान् ॥ कुंभेषु विन्यसेद्धीमान्पंचगव्यं समंत्रकं । पंचामृतं पंचरत्नं मृत्तिकाः पंचसंख्यकाः ॥ पंचवृक्षकषायांश्च पंचपल्लवकांस्तथा । सुवर्णं कुशदूर्वाश्च शतौषधिं विनिक्षिपेत् ॥ पूजयेद्वारुणैर्मंत्रैश्चतुःकुंभान्प्रयत्नतः । त्वंनोअग्ने जपेदादौ सत्वंनोऽपि द्वितीयके ॥ समुद्रज्येष्ठा इति चेमंमेगंगे चतुर्थके । पूजयेद्वस्त्रयुग्माद्यैश्चतुरः कलशानपि ॥ कलशस्थान्वरुणानपीत्यर्थः । " शां० सा० । पूजयेयुश्च वस्त्राद्यैः० । अत्र पूजयेयुरिति बहुवचनादृत्विक्कर्तृका पूजा " जपं कुर्युः प्रयत्नेन मंत्रैरेभिर्द्विजोत्तमाः ॥ आनोभद्राजपं चादौ भद्राअग्नेर्द्वितीयकं । तृतीयं पौरुषं सूक्तं कद्रुद्राय चतुर्थकं ॥ आचार्यो मूलमंत्रेण जपं कुर्यात्प्रयत्नतः । " वि० पा० मूलमंत्र इंद्रायेंदो इति " इंद्रसूक्तं रुद्रजाप्यं जपेन्मृत्युंजयं ततः ॥

इत्थं संपूज्य देवेंद्रं वरुणं कुंभसंस्थितं । सुसंकल्पविधानेन होमकर्म ततश्चरेत् ॥ समिद्भिर्ब्रह्मवृक्षस्य शतमष्टोत्तरं तथा । सर्पिषा चरुणा चैव मूलमंत्रेण वाग्यतः ॥ हुनेज्जाप्यं च तेनैव यतइंद्रभयेति च । तिलान्व्याहृतिभिर्हुत्वा शतमष्टोत्तरं पृथक् ॥ भार्याशिशुसमोपेतं यजमानं विशेषतः । अभिषेकं प्रकुर्वीत सूक्तैर्वारुणसंज्ञितैः ॥ समुद्रज्येष्ठादिभिर्मंत्रैरिमंमेवरुणस्तथा । द्यौःशांतेत्यादिभिर्मंत्रैरभिषेकं समाचरेत् ॥ अभिषेकनिवृत्तौ तु यजमानः समाहितः । शुक्लांबराणि धृत्वाऽथ कुर्यादाज्यावलोकनं ॥ रूपंरूपेतिमंत्रेण चित्रं तच्चक्षुरेव वा । देवतापुरतः स्थित्वा धूपदीपनिवेदनं ॥ दद्यादाचमनं सम्यक् तांबूलाऽर्घ्यं तथैवच । नमस्ते सुरनाथाय नमस्तुभ्यं शचीपते । गृहाणार्घ्यं मयादत्तं गंडदोषप्रशांतये । कार्यं यत्पूजकादीनां शुभं लब्ध्वा समर्पयेत् । शुभमदृष्टमृत्विग्भ्यः श्रेयःसंपादनाल्लब्ध्वेंद्राय समर्पयेत् । "शां० सा० आचार्यऋत्विगादीनां कारितं यत्फलं शुभं । लब्ध्वा तु तत्फलं सम्यग् देवेंद्राय निवेदयेत् ॥ आचार्यादिभिः कारितं यत्कर्म तज्जन्यं शुभमाचार्यादिभ्यः प्रतिगृह्येंद्राय समर्पयेत्" आचार्याय च गां दद्यात्सुशीलां च पयस्विनीं । रक्तवर्णां वत्सयुतां सर्वाऽलंकारभूषितां ॥ वस्त्रयुग्मपिधानां च यथाविभवसारतः । यक्षगंधर्वसिद्धैश्च पूजितोऽसि शचीपते । दानेनाऽनेन देवेश गंडदोषं विनाशय । "शां० सा० अनेन गां दद्यादित्यर्थः" अष्टोत्तरशतं संख्या कुर्याद्ब्राह्मणभोजनं ॥ तेभ्योऽपि दक्षिणां दत्वा प्रणिपत्य क्षमापयेत् । अज्ञानादथवा ज्ञानाद्दैकल्याद्वा धनस्य च । यन्न्यूनमतिरिक्तं वा तत्सर्वं क्षंतुमर्हसि ॥ इति संप्रार्थयेद्देवमिंद्राणीपतिमुत्तमं । ज्येष्ठाशांतिमिमां कृत्वा यथाविध्युक्तमार्गतः । गंडदोषं विनिर्जित्य आयुष्मान्जायते नरः ॥ इत्युक्तं वृद्धगार्ग्येण शौनकाय विशेषतः । ज्येष्ठानक्षत्रसंभूतगंडदोषप्रशांतये ॥ इति ज्येष्ठानक्षत्रशांतिः ॥ ॥ अथ प्रयोगः । कर्ता सूतकांते चंद्रताराबलान्विते शुभदिने गोमुखप्रसवं कृत्वा द्विराचमनादिदेशका-

लस्मरणांते अस्य शिशोर्ज्येष्ठानक्षत्र ( अमुकांश ) जननसूचितसर्वारिष्टपरिहारद्वाराश्री० सग्रहमखां गर्गोक्तां ज्येष्ठाजननशांतिं करिष्य इति संकल्प्य गणेशपूजाद्याचार्यऋत्विग्वरणांतं कुर्यात् । आचार्यः प्रादेशकरणांते स्थंडिलात्पूर्वभागे महीद्यौरिति भूमिं स्पृष्ट्वा ओषधयः समिति यवान्निक्षिप्याकलशेष्विति कलशं संस्थाप्य गंधपुष्पादिभिरलंकृत्य शालितंडुलैः पूरयित्वा पूर्णपात्रे उक्तलक्षणप्रतिमायां इंद्रायेंदो इत्यस्य कश्यप इंद्रो गायत्री । इंद्रावा० । इंद्रायेंदोमरुत्वते० इतींद्रं परितो लोकपालांश्वावाह्य ( शांतिसारमयूखमते तु इंद्रभिन्ना लोकपालाः ) वाग्यतः षोडशोपचारैः पूजयेत् । तत्र रक्तवस्त्रद्वयं शष्कुल्यादिनानाभक्ष्यनैवेद्यं च दद्यात् । ततस्तस्य पूर्वादिदिक्षु कुंभचतुष्टयं तत्पूर्वमध्यभागे च शतच्छिद्रं ( पारिजाते तु मध्यकुंभात्पुरतः कुंभपंचकस्थापनमुक्तं ) महीद्यौरित्यादिमंत्रावृत्त्या संस्थाप्य चतुर्षु इमंम इत्युदकं । गंधद्वारामिति गंधं । गायत्र्यादिमंत्रैः पंचगव्यं । आप्यायस्वेत्यादिभिः पंचामृतं । सहिरत्नानीति पंचरत्नानि । स्योनेति पंचमृदः । अश्वत्थेव इति पंचपल्लवांस्तत्कषायांश्व । हिरण्येति सुवर्णं । शरासइति कुशान् । कांडात्कांडादिति दूर्वाः । या ओषधीरिति शतौषधीश्व प्रादक्षिण्येन मंत्रावृत्त्या निक्षिप्य युवासुवासाइति वस्त्रयुग्मेनावेष्ट्य पूर्णादर्वीति पूर्णपात्राणि निधाय तेषु क्रमेण वरुणमावाहयेत् । पूर्वे त्वंनोअग्ने वामदेवो वरुणस्त्रिष्टुप् । वरुणावा० । दक्षिणे सत्वंनो वामदेवो० । पश्चिमे समुद्रज्येष्ठा वसिष्ठो वरुणस्त्रिष्टुप् । उत्तरे इमंमेगंगे सिंधुक्षिद्वरुणो जगती । इत्यावाह्य प्रत्येकं वस्त्रयुग्मसमर्पणपूर्वकं षोडशोपचारैः पूजयेत् । ततश्वतुर्षु कुंभेषु ऋत्विजश्वत्वारि सूक्तानि क्रमेण जपेयुः । आनोभद्रा इति दशर्चस्य सूक्तस्य गोतमो विश्वेदेवा जगती । षष्ठी विराट् तिस्रोंत्यास्त्रिष्टुभः । भद्राअग्नेरिति द्वादशर्चस्य सूक्तस्य सुमित्रोग्निराद्ये जगत्यौ शेषास्त्रिष्टुभः । सहस्रशीर्षेति षोडशर्चस्य सूक्तस्य नारायणः पुरुषोनुष्टुबंत्या त्रिष्टुप् । कद्रुद्रायेति नवर्चस्य सूक्तस्य कण्वो रुद्रो गायत्र्यं-

शां०
॥५३॥

त्यानुष्टुप् । जपे विनि० । आचार्यस्तु ऐंद्रकलशे इंद्रायेंदो इति मंत्रस्याऽष्टशतादिसंख्यया जपांते इंद्रंविश्वा इत्यष्टर्चस्य सूक्तस्य जेतेंद्रोनुष्टुप् । कद्रुद्राय कण्वो० । जपे० । इति सूक्तद्वयं जप्त्वा त्र्यंबकमंत्रमष्टाविंशत्यादिसंख्यया जपेत् । ततोग्निं ग्रहांश्च प्रतिष्ठाप्यान्वादध्यात् । ग्रहादिदेवतोत्कीर्तनांते इंद्रं प्रधानदेवं पलाशसमिदाज्यचरुभिः प्रतिद्रव्यं अष्टोत्तरशतसंख्याहुतिभिः । प्रजापतिं तिलैः अष्टोत्तर० ।शेषेणेत्यादिग्रहादिहोमांते उक्तप्रकारेणेंद्रहोमं विधाय इंद्रायेंदो कश्यप इंद्रो गायत्री । यतइंद्र भर्ग इंद्रो बृहती । जपे विनि० । एतन्मंत्रद्वयजपांते समस्तव्याहृतिभिस्तिलानष्टोत्तरशतसंख्यया हुत्वा स्विष्टकृदादिप्रायश्चित्तहोमांते बलिदानं पूर्णाहुतिं च कृत्वा संस्रावहोमादिशेषं समाप्य कलशोदकैर्भार्याशिशुसहितं यजमानमभिषिंचेत् । तत्र मंत्राः । नहितेक्षत्रमिति दशर्चस्य सूक्तस्य शुनःशेपो वरुणस्त्रिष्टुप् । मोषुवरुणेति पंचर्चस्य सूक्तस्य शुनःशेपो वरुणो गायत्र्यंत्या जगती । इदंकवेरित्येकादशर्चस्य सूक्तस्य गृत्समदो वरुणस्त्रिष्टुप् । समुद्रज्येष्ठा इति चतसृणां० । इमंमेवरुण शुनःशेपो वरुणो गायत्री । अभिषेके० । एभिर्मंत्रैर्द्यौःशांतेति पृथिवीशांतिरिति तयाहःशांत्येति याजुषैस्त्रिभिर्मंत्रैश्चाऽभिषिक्तो यजमानः शुक्लवस्त्रचंदनविभूतिधारणांते रूपंरूपमित्यादिमंत्रेण कांस्यपात्रस्थमाज्यं पत्न्या सहाऽवलोक्य सदक्षिणं तदाज्यं ब्राह्मणाय दत्वेंद्रं गंधादिभिः संपूज्य तांबूलादिदानांते तस्मै गंधपुष्पाक्षतफलद्रव्यसहितमर्घ्यं नमस्ते सुरनाथाय नमस्तुभ्यं शचीपते । गृहाणार्घ्यं मया दत्तं गंडदोषप्रशांतये इति दत्वा आचार्यादिभ्यो होमादिजन्यं श्रेयो गृहीत्वा तदिंद्राय समर्पयेत् । तत आचार्याय सवत्सां वस्त्रद्वयावृतां सपरिकरां रक्तवर्णां पयस्विनीं गां दद्यात् । मंत्रस्तु । यक्षगंधर्वसिद्धैश्च पूजितोऽसि शचीपते । दानेनाऽनेन देवेश गंडदोषं प्रशामयेति । अस्या गोर्दक्षिणात्वान्नदक्षिणांतरं । ततः स्थापितदेवतोत्तरपूजाविसर्जनांते तत्प्रतिमाद्याचार्याय दत्वाऽग्निं

क०
॥५३॥

विसृज्याऽष्टशतं ब्राह्मणान्भोजयित्वा तैः शांतिं वाचयित्वेंद्रं प्रार्थयेत् । अज्ञानादथवा ज्ञानाद्दैकल्याद्वा धनस्य च । यन्यूनमतिरिक्तं वा तत्सर्वं क्षंतुमर्हसि ॥ ततश्च कर्मसमाप्तिः ॥ इति ज्येष्ठाजननशांतिप्रयोगः ॥ ॥ अथ मूलशांतिः ॥ तत्रादौ तदुत्पत्तिदोषः । भल्लाटः । अभुक्तमूलसंभवं परित्यजेत्तु बालकं । समाऽष्टकं पिताऽथवा न तन्मुखं विलोकयेत् ॥ तदाद्यपादके पिता विपद्यते जनन्यथ । तृतीयके धनक्षयश्चतुर्थकः शुभावहः ॥ प्रतीपमंत्यपादतः फलं तदेव सार्पभे । अभुक्तमूलमाह वृद्धवसिष्ठः । ज्येष्ठांते घटिका चैका मूलादौ घटिकाद्वयं । अभुक्तमूलमित्याहुर्जातं तत्र विवर्जयेत् ॥ बृहस्पतिस्तु । ज्येष्ठांते घटिकार्धं तु मूलादौ घटिकार्धकं । तयोरंतर्गता नाडी अभुक्तं मूलमुच्यते ॥ बृहन्नारदस्तु । अभुक्तमूलं गंडांतं घटिकानां चतुष्टयं । तत्रैंद्रांऽत्यघटीद्वंद्वं मूलाद्यं द्वंद्वमेव चेत्याह । शौनकः । त्यागो वा मूलजातस्य स्यादष्टाब्दात्प्रदर्शनं । अभुक्तमूलजातानां परित्यागो विधीयते ॥ अदर्शनाद्वाऽपि पितुः स तु तिष्ठेत्समाष्टकं । एवं च दुहितुर्ज्ञेयं मूलजातफलं बुधैः ॥ " वि० पा० ग्रंथांतरे तु कन्यकायाः फलमन्यथोक्तं । न बाला हंति मूलर्क्षे पितरं मातरं तथा । मूलजा श्वशुरं हंति व्यालजा च तदंगनां ॥ माहेंद्रजाऽग्रजं हंति देवरं तु द्विदैवजा । शांतिर्वा पुष्कला स्याच्चेत्तर्हि दोषो न कश्चनेति । व्याल आश्लेषा । माहेंद्रं ज्येष्ठा । द्विदैवं विशाखा । शां० सा० अत्र केचिदभुक्तमूलजातस्याऽऽजन्मपरित्यागो वा समाष्टकाऽदर्शनं वा शांत्यकरण एव । तत्करणे तु नोभयमित्याहुः । अन्ये तु त्यागो वा मूलजातस्य स्यादष्टाब्दात्प्रदर्शनमिति शौनकोक्तेरभुक्तमूलजातस्याऽष्टाब्दादर्वाक् न शांतिकरणेऽपि दर्शनं । शांतिश्च त्यागपक्षेऽपि । सिंहप्रसूतगोशांतिवदित्याहुः । निष्कर्षस्तु न शांतिः । त्यागपक्षे दर्शनाऽसंभवेन गोमुखप्रसवाऽसंभवात् । अत्र गंडांतोत्पत्तौ गंडांतशांतेस्तन्नक्षत्रशांतेर्गंडांतसामान्यविहितशिवाऽभिषेकादेर्नक्षत्रेधेनुरुच्यतइत्येत-

द्विहितगोदानादेश्च समुच्चयः । अत्र त्यागविधानेन स्वत्वस्याऽपायात्पातकिनंत्यजतीत्यादौ त्यजतेर्दानार्थत्वाऽभावाच्च । सिंहादिप्रसूतवन्मूलप्रसूतस्य दानं न भवतीति केचित् । तत्र त्यागविधानेऽपि स्वत्वाऽपाये प्रमाणाऽभावात् । अतश्चाऽत्र त्यजतिनाऽऽजन्मदर्शनाऽभावो जातकर्माद्यभावो वा विधेयो न स्वत्वाऽभावः । अन्यथैतस्य ज्येष्ठस्य पितृदाहाऽधिकारो न स्यात् । अतएवाऽऽजन्मपरित्यागपक्षे समाष्टकाऽदर्शने वाऽन्यद्दारा जातकर्मादिकरणं । मध्ये चाऽऽकस्मिकदर्शने शांतिपूर्वं स्वयं तत्करणं । अतस्त्यागपक्षे दानादि भवत्येवेति । एतेन सिंहाद्युत्पन्नगवादीनामपि दानं सिद्धं । पुण्यं त्वल्पं । अवश्यं त्याज्यत्वात् । मूलोत्पन्नप्रतिग्रहीतुश्च न त्यागशांतिकादि । तंप्रत्युत्पत्तिकाले स्वत्वाऽभावेन मूलोत्पन्नपुत्रत्वाऽभावात् । मूलमध्ये प्रतिग्रहेऽपि न शांतिकं तत्राऽनुत्पत्तेरिति । " कश्यपसंहितायां त्वन्यथा मूलफलमुक्तं । मूलाद्यपादजो हंति पितरं तु द्वितीयजः । मातरं च तृतीयेऽर्थान् सुहृदं तु तुरीयजः ॥ फलं तदेव सार्पर्क्षे प्रतीपं त्वंत्यपादतः । परिशिष्टे कात्यायनोऽपि । प्रथमे पितुर्नेष्टो द्वितीये मातुस्तृतीये धनधान्यस्य चतुर्थे कुलशोकावहः स्वयं पुण्यभागी स्यादिति । वसिष्ठः । तौरीयजः शुभकरः फलमेतदेव वैलोमतो भुजगधिष्ण्यभवस्य सर्वं । पित्रादेः स्वस्य च शुभकर इति ज्ञेयं ( कश्यपसंहितादिवचनप्रामाण्याच्चतुर्थे शुभत्वं बालाऽभिप्रायं न पित्राद्यभिप्रायमिति शांतिसारादौ ) मूलवृक्ष उक्तो जपार्णवे । मूलं स्तंभस्त्वचा शाखा पत्रं पुष्पं फलं शिखा । वेदाश्च मुनयश्चैव दिशश्च वसवस्तथा ॥ नंदा बाणा रसा रुद्रा मूलभेदाः प्रकीर्तिताः । मूले मूलविनाशः स्यात् स्तंभे हानिर्धनक्षयः । त्वचा भ्रातृविनाशाय शाखा मातुर्विनाशकृत् ॥ पत्रे सपरिवारः स्यात्पुष्पेषु नृपवल्लभः । फलेषु लभते राज्यं शिखायामल्पजीवितं । अन्यत्र त्वन्यथोक्तं । मूले सप्तघटीषु मूलहननं स्तंभेऽष्टसु स्वक्षयं त्वग्दिग्बंधुविनाशनं च विटपे रुद्रैर्हतो मातुलः । प-

त्रेऽर्कैः सुकृती तु बाणकुसुमे मंत्री फले सागरै राजा वह्निशिखाऽल्पमायुरिति सन्मूलांऽघ्रिपे स्यात्फलं ॥ पत्रादिघटिकानां तूत्तमत्वेऽपि चरणदोषोऽस्त्येव । मूलस्य स्वर्गादिस्थितत्वेन फलं च भूपालवल्लभे । वृषाऽलिसिंहेषु घटे च मूलं दिवि स्थितं युग्मतुलांऽगनांऽत्ये । पातालगं मेषधनुःकुलीरनक्रेषु मर्त्येष्विति संस्मरंति ॥ " शां० सा० अत्र वृषादौ सूर्ये सतीत्यध्याहार्यं " एतल्लग्नफलं तु । स्वर्गे मूले भवेद्राज्यं पाताले च धनागमः । मृत्युलोके यदा मूलं तदा शून्यं समादिशेत् ॥ "शां० सा० स्वर्गादिस्थितेऽपि चरणदोषोऽस्त्येव । मर्त्यादिस्थितेऽपि शुभं" वसिष्ठः । नैर्ऋत्यभोद्भूतसुतः सुता वा क्षिप्रादवश्यं श्वशुरं निहंति । तदंत्यपादे जनितो न हंति तस्योत्क्रमेणाऽहिभवे कलत्रं ॥ "शां० सा० उत्क्रमेण वैपरीत्येन । तस्य कलत्रमित्यन्वयः " विशेषो मत्कृते निर्णयसिंधौ ज्ञेयः । वसिष्ठः । व्यतीपातेंऽगहानिः स्यात्परिघे मृत्युमादिशेत् । वैधृतौ पितृहानिः स्यान्नष्टेंदावंधतां व्रजेत् ॥ मूले समूलनाशः स्यात्कुलनाशो धृतौ भवेत् । विकृतांऽगे च हीने च संध्ययोरुभयोरपि ॥ पर्वण्यपि प्रसूतौ च सर्वारिष्टभयप्रदः । तद्वत्सदंतजातश्च पादजातस्तथैवच । तस्माच्छांतिं प्रकुर्वीत ग्रहाणां क्रूरचेतसामिति । व्यतीपातादौ शांतिग्रहमखयोः समुच्चयः । अत्र यत् तत्तत्प्रकरणे ग्रहमखविधानं तदनारभ्याधीतस्य साप्तदश्यस्य मित्रविंदाप्रकरणस्थेनेवोपसंहारादितरेषु शांतिकेषु ग्रहमखाऽनावश्यकत्वार्थं । " शां० सा० व्यतीपातादौ तन्निमित्तकशांतिग्रहमखयोः समुच्चयः । तत्रापि स्वतंत्रप्रयोगता वैकप्रयोगता वा । यत्तु तत्तत्प्रकरणे पुनर्ग्रहमखविधानं तदेकप्रयोगतानियमार्थमिति केचित् । अन्ये त्वंगस्यैकप्रयोगताऽपि न्यायादेव सिद्धेत्यंगभूतग्रहमखाद्भिन्नं ग्रहमखांतरं विधीयत इत्याहुः । ग्रहमखस्य च सर्वशांतिषु पूर्वांगत्वात्सहप्रयोगेऽपि पूर्वं ग्रहहोमः । पश्चात्तत्तत्प्रधानहोम इति । " शांतिमाह शौनकः । अथातः संप्रवक्ष्यामि मूलजातहिताय च । मातापित्रोर्धनस्याऽपि कुल-

ज्ञातिहिताय च ॥ ( शांतिमिति शेषः ) मुख्यकालं प्रवक्ष्यामि शांतिहोमस्य यत्नतः । जातस्य द्वादशाहे तु जन्मर्क्षे वा शुभे दिने ॥ " शां० सा० अत्र केचिच्छुभदिनपदं द्वादशाहादिविशेषणमिति न स्वतंत्रकालविधानमिति वदंति । अन्ये तु दिनपदस्य द्वादशाहपदांतर्गतस्य चाऽहःपदस्य पौनरुक्त्यापत्तेः स्वतंत्रकालविधानमित्याहुः " समाष्टके द्वादशाहे कुर्याद्वा शांतिमादरात् । अष्टवर्षोत्तरं द्वादशाहे इत्यर्थः । " शां० सा० अभुक्तमूलोत्पत्तौ समाष्टकाऽदर्शनपक्षे समाष्टकानंतरं तद्भिन्नमूलोत्पत्तौ द्वादशाहे इत्यर्थः । मदनरत्ने तु द्वादशाब्दे इति पाठः । अन्यथा पौनरुक्त्यापत्तेः " यदैव शांतिकं कुर्यात्कर्म तत्र प्रचक्ष्महे । सुसमे पुण्यदेशे तु मंडपं कारयेद्बुधः । पुण्यर्भिर्मंत्रितैस्तोयैः प्रोक्षितायां क्षितौ ततः । " वि० पा० पुण्यर्चं आपोहिष्ठादयः " ऋत्विजस्तु कश्यपेनोक्ताः । ब्राह्मणाः श्रोत्रियाश्चाऽष्टौ द्वादश त्वथ षोडशेति । तत्रोदकुंभं सुश्लक्ष्णं रक्तं व्रणविवर्जितं । अकृष्णमूलं [ सुवर्तुलं च ] निर्णिक्तं पूरयेन्निर्मलांऽभसा । निर्णिक्तं धौतं । वस्त्राऽवगुंठितं कुर्यात्पूरयेत्तीर्थवारिणा । कूर्चहेमसमायुक्तं चूतपल्लवसंयुतं । " वि० पा० कूर्चं पंचगव्यं । पंचकूर्चेन पीतेनेति स्कांदे तथा दर्शनात् । यद्वा दर्भमुष्टिः " स्वस्तिकोपरि विन्यस्य सक्षीरद्रुमपल्लवं । द्रोणव्रीहींश्च निक्षिप्य ऐशान्यां तं निधापयेत् । पंचरत्नानि निक्षिप्य सर्वौषधिसमन्वितं । अर्चितं गंधपुष्पाद्यैः श्रीरुद्रं च स्पृशन् जपेत् ॥ " शां० सा० कुंभं स्पृशन् रुद्रं जपेदित्यर्थः । अत्र च पूर्णपात्रोपरि रुद्रप्रतिमां पूजयित्वा जपः कर्तव्यः । तत्कुंभवस्त्रप्रतिमां तस्मै दद्यात्प्रयत्नत इत्यग्रे दर्शनात् " षडंगसहितं सम्यक् तं जपेद्रुद्रसंख्यया । बह्वृचो रुद्रसूक्तैर्वा छंदोगो रुद्रसामभिः ॥ " वि० पा० रुद्रसूक्तानि चत्वारि । कद्रुद्रायेति नवर्चमेकं । इमारुद्रायतवस इत्येकादशर्चं द्वितीयं । आतेपितरिति पंचदशर्चं तृतीयं । इमारुद्रायस्थिरेति चतुर्ऋचं च चतुर्थं । सामगस्तु आवोराजान-

मित्येकादश रुद्रसामानि जपेत् । बह्वृचसामगयोरयं विशेषः । श्रीरुद्रस्तु सर्वसाधारणः । यजुर्वेदिनश्च श्रीरुद्र इत्यन्ये । शां० म० सूक्तानि सामानि च त्रीण्येव । कपिंजलन्यायात् " एकादशाऽष्टत्रिद्व्येकसंख्यया शक्तितो जपेत् । इयं च संख्या रुद्रतत्सूक्तसामसु । तत्राऽप्रतिरथं सूक्तं शतरुद्राऽनुवाककं ॥ अप्रतिरथमाशुःशिशान इति । शतरुद्राऽनुवाकस्त्वमग्नेरुद्र इति । रक्षामंत्रं तथा पुण्यं राक्षोघ्नं च स्पृशन्जपेत् । " वि० पा० रक्षामंत्रो रक्षाणोअग्न इति । राक्षोघ्नं च रक्षोहणमिति पंचविंशर्चं सूक्तं । शां० सा० एतेषामप्येकादशवारं जपः " एतेषामप्येकादशादिसंख्यया जपः । त्रैयंबकं जपेत्सम्यगष्टोत्तरसहस्रकं ॥ एकवारं तथा जापी पावमानीः स्पृशन्जपेत् । " शां० सा० अयं जप ऋत्विजामाचार्यस्य वा " जपस्य [ संस्थाप्य ] पंच कुंभांश्च द्वयं वा तदलाभतः ॥ " शां० सा० पूर्वोक्त एकः कुंभो वक्ष्यमाणच्छिद्रसहितो द्वितीय एते पंचेत्येवं सप्तकुंभा इति केचित् । अन्ये तु पूर्वोक्तकुंभो मध्ये ऐशानादिकोणचतुष्के चत्वार इति पंच वक्ष्यमाणः षष्ठ इत्याहुः " । रुद्रकुंभो निर्ऋतिकुंभश्च भिन्नः । एवं सप्तकुंभाः । रुद्रकुंभो निर्ऋतिमध्ये ऐशानादिकोणचतुष्के चत्वार इति पंच वा । कश्यपसंहितायां तु मध्ये शतच्छिद्रः कोणेषु चत्वार इत्येवं पंचकुंभाः । ऐशानादिचतुष्कोणेष्वव्रणान्जलपूरितान् । पूर्वोक्तद्रव्यसंयुक्तान् स्थापयेद्रक्तवर्णकान् ॥ शतच्छिद्रं बृहत्कुंभं स्थापयेत्तंडुलोपरीति । तत्र पूर्वादितः सूक्तजपस्तेनैवोक्तः । रुद्रेण क्रमशो भद्राअग्नेः सूक्तेन भक्तितः । आनोभद्रा इत्यनेन पुरुषसूक्तेन चाऽर्चयेत् ॥ मोचनीमूलजामित्यष्टौ वाक्यान्येकको जपेत् । कुंभद्वयपक्षे चतुःप्रस्रवणउक्तः कात्यायनेन । द्वितीयोदकुंभं कृत्वा चतुःप्रस्रवणसंयुक्तं ततो वरुणमुपरिष्टान्मूलानि धारयेद्वंशपात्रे कृत्वा वस्त्रे बद्ध्वेति । पंचकुंभपक्षेऽपि मध्ये शतमूलानि । " शां० सा० पंचकुंभपक्षेऽपि मध्यकुंभोपरि शतमूलानि । तस्य कुंभचतुष्टयसाहितस्य चतुःप्रस्रवणस्थानापन्नत्वात् ।

रुद्रकुंभाऽतिरिक्तेषु वरुणपूजा निर्ऋतिश्चतुर्विंशतिदलस्थकुंभे एव पूज्यः । जपस्य पंचकुंभा इत्युक्तेः । सर्वेषु पूर्वोक्तमंत्रजपो वा शांतिजपो वा कार्यः " कुंभद्वयमाह । श्रीरुद्रस्यैककुंभश्च सर्वसूक्तानि तत्र तु ॥ तथाऽन्यं च शुभं कुंभं पूर्वोक्तैर्लक्षणैर्युतं । चतुःप्रस्रवणं कुर्यात्पंचवक्रं तु तद्भवेत् ॥ " शां० म० अत्राऽयं सांप्रदायिकोऽर्थः । आद्यपक्षे षट् कुंभाः । एको रुद्रस्य । तस्मिन् शतरुद्रियं रुद्रसूक्तानि सामानि वा जप्यानि । अभिषेकार्थं पंच कुंभाः । तत्र पूर्वादिकुंभचतुष्टये तत्राऽप्रतिरथमित्यादिना क्रमात्सूक्तचतुष्टयविधिः । मध्ये च त्र्यंबकमंत्रपावमानीजपविधिः । एवं पंचकुंभाऽशक्तौ चतुःप्रस्रवण एक एव । द्वयमिति द्वित्वं तु रुद्रकुंभमादाय । अतएव श्रीरुद्रस्येतिश्लोकार्धेन रुद्रकुंभ एव पूर्वोक्तो द्वित्वसंख्यापूरणायाऽनूद्यते । चतुःप्रस्रवण एव तु पंचकुंभस्थाने विधीयते । एवं पंचवक्रंतुतद्भवेदिति पंचवक्रतोक्तिरपि पंचकुंभस्थानापत्त्या संगच्छते " वस्त्राऽवगुंठितं कुर्यात् पूरयेत्तीर्थवारिणा । पंचरत्नसमायुक्तमाम्रपल्लवसंयुतं ॥ गजाऽश्वरथ्यावल्मीकसंगमन्हृद्गोकुलात् । राजद्वारप्रदेशाच्च मृदमानीय निक्षिपेत् ॥ कुंभस्य नैर्ऋते देशे होमस्थानं प्रकल्पयेत् । गोमयाऽऽलेपिते देशे कुर्यात्स्थंडिलमुत्तमं ॥ " शां० सा० मंडपपक्षेऽपि स्थंडिलमेव । मंडपमुपक्रम्यैव स्थंडिलविधानात् " कश्यपेन तु । मंडपं चतुरस्रं च चतुर्हस्तप्रमाणतः । चतुर्द्वारसमायुक्तं तोरणाद्यैरलंकृतं । पूर्वोक्तलक्षणोपेतं कुंडमीशानतो बहिरित्युक्तं । कृत्वाऽग्निमुखपर्यंतमुल्लेखादि स्वशाखया । पूर्णपात्रनिधानांतं कृत्वा पूजां समारभेत् ॥ " शां० सा० अग्निमुखमग्निस्थापनं । पूजां तत्सामग्रीं कुर्यादित्यर्थः । नत्वत्र पूजा विधेया । तस्या वक्ष्यमाणत्वात् " नक्षत्रदेवतारूपं सुवर्णेन प्रयत्नतः । निष्कमानेन चाऽर्धेन पादेनाऽथ स्वशक्तितः ॥ प्रतिमां लक्षणैर्नैकां कारयित्वा विचक्षणः । यद्वा मूल्यं सुवर्णस्य स्थापयित्वा प्रपूजयेत् ॥ "शां० म० यद्वा मूलं सुवर्णस्य० । मूलं मूलाकारं । मूल्यमिति क्वचित्पाठः । तदा

प्रतिमामूल्यमित्यर्थः ” सुवर्णं सर्वदेवत्यं सर्वदेवात्मकोऽनलः । सर्वदेवात्मको विप्रः सर्वदेवमयो हरिः ॥ संस्मरेन्निर्ऋतिं श्यामं सुमुखं नर-
वाहनं । रक्षोऽधिपं खड्गहस्तं दिव्याभरणभूषितं ॥ ज्योतिर्निबंधे तु । मूलरूपं विधातव्यं श्वेतं कुणपवाहनं । खड्गखेटधरं चोग्रं द्विभुजं च
वृकाननमित्युक्तं । प्रतिमापूजनार्थाय वस्त्रयुग्मं प्रकल्पयेत् । पंकजं कारयेद्भूमौ रक्ताभैर्व्रीहितंडुलैः ॥ चतुर्विंशद्दलोपेतं शुक्लैर्वा कर्णिकान्वि-
तं । तस्योपरि न्यसेत्पात्रं स्वर्णं वा रौप्यमृन्मयं ॥ ( पात्रं कलशं ) शुद्धवस्त्रेण संछाद्य तत्र मूलानि निक्षिपेत् ॥ मूलानि शतमूलानि । वि-
ष्णुक्रांता सहदेवी तुलसी तु शतावरी । मूलानीमानि गृह्णीयाच्छताऽलाभे विशेषतः ॥ स्थापयेत्कर्णिकामध्ये वस्त्रगंधाद्यलंकृतं । कूर्चहे-
मजलोपेतं कुंकुमौषधिसंयुतं ॥ कूर्चो दर्भस्तंबः । एवंविधं कुंभं न्यसेदित्यर्थः । कुंभोपरि न्यसेद्विद्वान् मूलनक्षत्रदेवतां । अधिप्रत्यधिदेवौ
च दक्षिणोत्तरयोः क्रमात् ॥ अधिदेवं यजेदादौ ज्येष्ठानक्षत्रदेवतां । ततः प्रत्यधिदेवं च पूर्वाषाढाधिपं यजेत् ॥ उत्तराषाढऋक्षाद्या अनुराधांतमर्च-
येत् । भूमिस्थचतुर्विंशतिदलेषु उत्तराषाढाद्यानि चतुर्विंशतिनक्षत्राणि पूर्वादितः स्थाप्यानीत्यर्थः । “ शां० सा० नक्षत्रदेवताः स्थाप्या
इति केचित् । ऐंद्रादैशानपर्यंतं पूजयेत्स्वस्वनामतः ॥ स्वलिंगोक्तैश्च तन्मंत्रैः प्रधानादीन्प्रपूजयेत् । कश्यपेन तु । सुवर्णेन प्रमाणेन त-
दर्धार्धेन वा पुनः । यथावित्तानुसारेण प्रतिमां निर्ऋतेः सुधीः ॥ उदुंबरवटाऽश्वत्थप्लक्षाम्रत्वक् सपल्लवं । शतौषधीमूलशंखनवरत्नानि मृ-
त्तिकाः ॥ पंचामृतांऽबु सद्बीजं कुंकुमं रोचनं फलं । कुष्ठं मांसी हरिद्रे द्वे मुरा शैलेयचंदनं । वचा कचोरकं मुस्ता सर्वौषध्यो दश स्मृ-
ताः ॥ गजाऽश्वरथ्यावल्मीकसंगमस्थानसंभवाः । न्हदगोराजनगरद्वारतश्चाऽष्टमृत्तिकाः ॥ तिलव्रीहियवा माषगोधूमाऽणुप्रियंगवः । चणकैः
सहिताश्चाऽष्टौ सद्बीजाख्यानि सर्वदा ॥ ( अणुर्व्रीहिभेदः ) दधिमध्वक्षतैः कुंभान्वस्त्रैस्तल्लिंगमंत्रकैः । मोषुणइति मंत्रेण निर्ऋतिं चाऽर्च-

येत्तत इत्युक्तं । पंचामृतेन संस्नाप्य आवाह्याऽथ समर्चयेत् । " सं० कौ० आवाह्येति ल्यब्लोपे पंचमी । अथेति पूर्णपात्रनिधानांतं कृत्वे-त्युक्ताऽऽनंतर्याऽनुवादः । अतएवाह उपचारैः षोडशभिरिति । आवाहनमारभ्याऽर्चनविवरणं " उपचारैः षोडशभिर्वाह्य पंचोपचारकैः ॥ रक्तचंदनगंधाद्यैः पुष्पैः कृष्णसितादिभिः । मेषशृंगादिधूपैश्च घृतदीपैस्तथोत्तमैः ॥ सुरापोलिकमांसाद्यैर्नैवेद्यैरोदनादिभिः । मत्स्यमांससुरादीनि ब्राह्मणानां विवर्जयेत् ॥ सुरास्थाने प्रदातव्यं क्षीरं सैंधवमिश्रितं । पायसं लवणोपेतं मांसस्थाने प्रकल्पयेत् ॥ उक्तगंधाद्यलाभे तु यथालाभं समर्पयेत् । पुष्पांतं तु समभ्यर्च्य होमं कुर्याद्यथोदितं ॥ " शां० सा० पुष्पांजल्यंतमित्यर्थः " निर्वापप्रोक्षणादीनि चरोः कुर्याद्यथाविधि । हविर्गृहीत्वा विधिवन्नैर्ऋत्यैव ऋचा हुनेत् ॥ मोषुणः परापरेति यत्तेदेवीति वा पुनः । पायसं घृतसंमिश्रं हुनेदष्टोत्तरं शतं । समिदाज्यचरून्पश्चाच्छक्तितः संख्यया हुनेत् ॥ " सं० कौ० विधिवदिति पायसचर्वोरवदानधर्मविधेः प्रतिप्रसवः । अन्यथाऽऽनर्थक्यात् । पश्चात् पायसहामोत्तरं " अधिदेवतयोश्चैव जुहुयात्स्वस्वमंत्रतः । चतुर्थ्यंतैर्नमोंऽतैश्च स्वाहांतैः स्वस्वमंत्रकैः ॥ नक्षत्रदेवताभ्यश्च पायसेन तु होमयेत् । स्वस्वमंतो नाममंतः । कृणुष्वेति पंचदशर्ग्भिर्जुहुयात्कृसरं ततः ॥ " शां० सा० अत्र ऋग्भिरिति ग्रहणात्प्रत्यृचं होमः । यत्र तु अमुकसूक्तेन होमः कर्तव्य इत्याम्नातं यथाऽत्रैव श्रीसूक्तेनेति तत्र सूक्तेनैव होमः कर्तव्य इति युक्तं । संप्रदायस्तु प्रत्यृचं होम इति " गायत्र्या जातवेदसे त्र्यंबकमिति च क्रमात् ॥ " शां० सा० अत्र क्रमादित्युक्तेरेतत्पर्यंतं कृसराऽन्वयः । उत्तरत्र वक्ष्यमाणसमिदाज्यचर्वन्वयः । मंत्रक्रमस्य पाठादेव सिद्धेरिति केचित् " सीरायुंजंति तामग्निं वास्तोष्पत्याग्निमेत्र च ॥ " वि० पा० अग्निं अग्निदूतंवृणीमहइति मंत्रः । सांनिध्यात् " तामग्निवर्णां तपसा ज्वलंतीं वैरोचनीं कर्मफलेषु जुष्टां । दुर्गां देवीं शरणमहं प्रपद्ये सुतरसितरसे नमः ॥ क्षेत्रस्यपतिना गृणानाऽ

ग्निदूतंपुरोदधे । “ शां० सा० एतत्पर्यंतं कृसरान्वय इत्यपरे । संख्या तु वक्ष्यमाणा ” श्रीसूक्तेन तथा विद्वान् समिदाज्यचरून् क्रमात् ॥ अष्टोत्तरशतैर्वाऽथ अष्टाविंशतिभिः क्रमात् । अष्टाष्टसंख्यया वाऽपि जुहुयाच्छक्तितो बुधः ॥ त्वंनःसोमेन पायसं जुहुयात्तु त्रयोदश । चतुर्गृहीतमाज्यं च यातेरुद्रेति मंत्रतः ॥ स्रुवेण जुहुयादाज्यं महाव्याहृतिभिः क्रमात् । “ शां० सा० महाव्याहृतीराह पराशरः । संक्षेपायाऽसृजद्ब्रह्मा सप्तेमा व्याहृतीः पुरा । भूर्भुवः स्वर्महर्जनस्तपः सत्यं तथैव च ॥ आद्यास्तिस्रो महा प्रोक्ताः सर्वत्र प्रतियोजयेदिति । शंखस्तु भूर्भुवः स्वर्महो जनस्तपः सत्यमिति महाव्याहृतय इत्याह । बोधायनेन तु भूरग्नयेचेति मंत्रचतुष्टयं महाव्याहृतय इत्युक्तं । चतुर्गृहीतादौ सकृदेव होमः ” हुत्वा स्विष्टकृतं पश्चात्प्रायश्चित्ताहुतीर्हुनेत् ॥ कश्यपेन तु । दुर्गाऽश्विग्रहविघ्नेशलोकपालांश्च पूजयेत् । प्रजापतये स्वाहेति मुखांते जुहुयाद्यमं ॥ मूलायस्वाहा प्रजापतयेस्वाहेत्युपहोमौ । पलाशसमिदाज्येन त्वन्नेनाऽष्टसहस्रकं । अथवाऽष्टोत्तरशतं प्रत्येकं जुहुयात्ततः ॥ मूलंप्रजामित्यष्टाभिर्वाक्यैर्मंत्रद्वयेन च । सावित्रसौम्यनैर्ऋत्यमंत्रैरश्वत्थसंभवैः ॥ समिद्भिश्च तिलव्रीहीन् हुत्वा व्याहृतिभिस्तथेत्युक्तं । आचार्यो यजमानो वा अग्नौ पूर्णाहुतिं हुनेत् ॥ समुद्रादूर्मिसूक्तेन प्राजापत्यऋचा तथा । पूर्णादर्विं सप्ततेति मंत्रैः पूर्णाहुतिं हुनेत् ॥ होमशेषं समाप्याऽथ वह्निमारोपयेद्बुधः । ग्रहमखविकृतित्वात्स्मार्ताग्निपक्षेऽत्र वह्निसमारोपः । कुंभाऽभिमंत्रणं कुर्याद्दक्षिणेनाऽभिमर्शयेत् ॥ मृत्यूपशमनार्थाय जपेत्त्रैयंबकं शतं । रुद्रकुंभोक्तमार्गेण रुद्रमंत्रं [ कुंभं ] स्पृशन्जपेत् ॥ रुद्रकुंभस्य दक्षिणतोऽभिमर्शनं कृत्वा याजुषबह्वृचसामगादिः पूर्वोक्तं स्वं जपं जपेदित्यर्थः । एकादशाऽष्टत्रिद्व्येकसंख्यया रुद्रं रुद्रसूक्तं साम वा जपेदित्यर्थः । “ शां० सा० अत्राऽयं नियमः । त्रैयंबकस्य शतवारमेव जपो न सहस्रवारं ” धूपं दीपं च नैवेद्यं कुंभयुग्मे निवेदयेत् । रुद्रकुंभे निर्ऋतिकुंभे

चेत्यर्थः । प्रसादयेत्ततो देवमभिषेकार्थमादरात् ॥ निर्ऋतिं रुद्रं च । तस्मिन्काले ग्रहातिथ्यं कर्तव्यं भूतिमिच्छता । पृथक् प्रशस्तस्तेनैव न-क्षत्रेष्ट्या सहैव वा ॥ तेनैव हेतुना ग्रहयज्ञः पृथक् प्रशस्तः । मूलशांत्या सह वेत्यर्थः । ( ग्रहातिथ्यं ग्रहमखः ) अभिषेकविधिं वक्ष्ये स-र्वाचार्यैरुदीरितं । भद्रासनोपाविष्टस्य यजमानस्य ऋत्विजः ॥ दारपुत्रसमेतस्य कुर्युः सर्वेऽभिषेचनं । अक्षीभ्यामिति सूक्तेन पावमानीभिरेव च ॥ आपोहिष्ठेति नवभिरापद्दद्वाद्वयेन च [ यतइंद्रद्वयेन च ] । सहस्राक्षतृचेनाऽपि देवस्यत्वेति मंत्रकैः ॥ शिवसंकल्पमंत्रेण वक्ष्यमाणै-श्च मंत्रकैः ॥ वक्ष्यमाणैः श्लोकैः । ते च प्रयोगे वक्ष्यंते । तच्छंयोरभिषेकं तु सर्वदोषोपशांतिदं । सर्वकामप्रदं दिव्यं मंगलानां च मंगलं ॥ वस्त्रांऽतरितकुंभाभ्यां पश्चात्तु स्नपयेद्बुधः । ततः शुक्लांबरधरः शुक्लमाल्यानुलेपनः ॥ यजमानो दक्षिणाभिस्तोषयेदृत्विगादिकान् । धेनुं पय-स्विनीं दद्यादाचार्याय सवत्सकां ॥ निर्ऋतिप्रतिमां वस्त्रं कुंभं हेम च दापयेत् । " शां० सा० वस्त्रकुंभौ निर्ऋतिसंबंधिनौ । हेम स्वतंत्रं यथाशक्ति देयं " ग्रहार्थवस्त्रप्रतिमास्तत्तदुक्ताश्च दक्षिणाः । कश्यपेन तु । आचार्याय वृषं लोहपिंडं दद्यात्सदक्षिणमित्युक्तं । श्रीरुद्रजापिने देयः कृष्णोऽनड्वान् प्रयत्नतः ॥ तत्कुंभवस्त्रप्रतिमां तस्मै दद्यात्प्रयत्नतः । इतरेभ्योऽपि विप्रेभ्यः शक्त्या दद्याच्च दक्षिणां ॥ उक्ताऽलाभे ततो दद्यादाचार्यब्रह्मऋत्विजां । तत्तन्मूल्यं प्रदातव्यं शक्त्या वाऽथ प्रदापयेत् ॥ " शां० सा० उत्तमपक्षेण मूल्यं दातव्यं । तदशक्ता-वधमपक्षेणेत्यर्थः । अथवा शक्त्यावेत्यनेन गवादिमूल्यादप्यल्पीयसी दक्षिणा विधीयते " आचार्याय तु यद्दत्तं तदर्धं ब्रह्मणे भवेत् । ब्रह्म-णोऽर्धं सदस्याय ऋत्विग्भ्यश्च तदर्धकं ॥ " शां० सा० मुख्यदक्षिणाया अभावेऽर्धादिकल्पना " ज्योतिर्निबंधे त्वत्र शतमूलहोमोऽप्युक्तः । प्रच्छादनोर्णावस्त्रादि दद्याद्धेनुं च कांचनं । दानांते होमयेद्विप्रः सर्वमूलानि तत्र वै इति । देवता चाऽत्र मूलमेव । गृह्णीयादाशिषं तेभ्यः

प्रणम्याऽथ क्षमापयेत् । दद्यादन्नं पायसादि ब्राह्मणान्भोजयेच्छतं ॥ अलाभे सति पंचाशद्दशकं तदलाभतः । सर्वशांतेश्च पठनं ब्राह्मणैरा-
शिषस्तथा ॥ गृही क्षमापयेद्विद्वान् निर्ऋतिः प्रीयतामिति । विधाने चरितेऽस्मिंस्तु ततः शांतिर्भवेद्ध्रुवं । गंडांतेऽप्येवमेव स्यात्पुष्यार्धे तद्वदेव
तु ॥ पुष्याद्यार्धे प्रसवेऽप्येवं शांतिः कार्येत्यर्थः । इत्युक्तं मनुना सम्यङ् मूलजातहिताय च । मातापित्रोर्धनस्याऽपि बंधुदोषोपशांत-
ये ॥ इति मदनरत्ने शौनकोक्तमूलशांतिः ॥ ॥ शतमूलानि दैवज्ञमनोहरे पुराणसमुच्चये । बर्हिशिखा १ हरिक्रांता २ सहदेवी ३
पुनर्नवा ४ । शरपुंखा ५ वराही च ६ काकजंघा ७ सुलक्षणा ८ ॥ तुंबिका चैव ९ कर्कंधूः १० कर्पूरी ११ कारवल्लिका १२ । क-
र्कोटिका च १३ चक्रांका १४ श्वेतार्को १५ व्याघ्रपत्रिका १६ ॥ रुदंती १७ चाऽश्वगंधा च १८ मुसली १९ गिरिकर्णिका २० ।
इंद्रवारुण्य २१ पामार्गः २२ शंखपुष्पी २३ कुमारिका २४ ॥ शल्लकी चाऽथ २५ गांधारी २६ निर्गुंडी २७ देवदालिका २८ ।
वटः २९ शमी ३० तथा प्लक्षः ३१ पलाशोऽ ३२ श्वत्थ एव च ३३ ॥ चूतश्चो ३४ दुंबरो ३५ जंबू ३६ र्नंदीवृक्षोऽथ ३७ वेतसः
३८ । पुन्नागोऽथाऽ ३९ र्जुनोऽ ४० शोको ४१ बकुलोऽ ४२ श्मंतकस्तथा ४३ ॥ शाल ४४ स्ताल ४५ स्तमालश्च ४६ पाटला ४७
शतपत्रिका ४८ । मधूकश्च ४९ शिरीषश्च ५० श्रीवृक्षो ५१ बृहतीद्वयं ५२ । ५३ ॥ बला ५४ चाऽतिबला चैव ५५ पाठा ५६ नागबला तथा
५७ । जाती च ५८ बकुलश्चैव ५९ केतकी ६० कदली तथा ६१ ॥ मातुलिंगी ६२ जयंती च ६३ यवानी ६४ पुंड्रिका तथा ६५ । द्रो-
णपुष्पी ६६ तथा कुंभी ६७ श्रीपर्णी ६८ दमनस्तथा ६९ ॥ चंपकः ७० पद्मकं चैव ७१ तथा कांचनपुष्पिका ७२ । सिद्धेश्वरी च ७३ ब-
दरी ७४ राजवृक्षो ७५ धवस्तथा ७६ ॥ कुंदश्च ७७ मुचुकुंदश्च ७८ गोजिव्हा ७९ क्षीरकंदकः ८० । दाडिमी ८१ बीजपूरी च ८२ ब्राह्मी

८३ चाऽऽमलकी तथा ८४ ॥ भृंगराज ८५ स्त्वधःपुष्पी ८६ मत्स्याक्षी ८७ चाऽटरूषकः ८८ । तरंगिणी ८९ गुडूची च ९० निशाह्वा ९१ शतमूलिका ९२ ॥ बाकुची ९३ काकजंघा च ९४ बर्बरी ९५ तुलसी तथा ९६ । कुशः ९७ काशः ९८ श्वेक्षुमूलं ९९ तथा सर्षपमूलकं १०० ॥ अलाभे चोक्तवृक्षाणां सद्वृक्षाणां समाहरेत् । एतेषां महाराष्ट्रभाषया नामानि । मण्यारशिखा । विष्णुक्रांता । महाबला । घेंटुळी । सरफोका । कळलावी । कांग । श्वेतरिंगणी । भोंपळी । घोंटी । कापरी । कारली । कर्टुली । तरवड । पांढरी रुई । विषमुंगसी । रुदंती । आस्कंद । मुसळीकंद । सुपली । कौंडळ । आघाडा । सांखवेल । कोरफड । साळई । धमासा । निगडी । देवडांगर । वड । शमी । पिंपरी । पळस । पिंपळ।आंबा । उंबर । जांबुळ । राळेचा वृक्ष । वेत । नागकेशर । अर्जुनसादडा । अशोक । बोलसरी । आपटा । हेद । ताड । तमाल । पाडळी । शेवती । मोहा । शिरस । बेल । रिंगणी । डोरली । कांसोळी । मोठा चिकणा । पाहाडमूळ । गाडेधामण । जाई । बकुळी । केतकी । केळी । माहाळुंगी । टांकळी । ओंवा । मधुमाधवी । कुंभा । देवकुंभा । शिवणी । दवणा । चांपा । कमळ । भुईचांपा । ईश्वरीपाहाड । बोरी । बाहवा । धावडा । कुंद । मुचकुंद । गलकुंभी । भुईकोहळी । डाळिंबी । लिंबुणी । भारंगी । आंवळी । माका । अधहुली । कांगोणी । अडुळसा । शेवाळ । गुळवेल । हळदी । शतावरी । बांवची । कावळी । बाबरी । तुळसी । कुश । काश । ऊंस । राई । १०० । स्पष्टमन्यत् । मदनरत्ने हेमाद्रौ च गर्गस्त्वन्यथाऽऽह । स्वयमुत्पाटयेत्प्राज्ञो मूलानां च शतं पिता । लक्ष्मणा शतमूला च शिरीषो वेतसस्तथा ॥ सहका श्वेतमूला च विष्णुक्रांता च शंखिनी । सर्पाक्षी मीननेत्रा च पुत्रपारा कृतांजली ॥ पलाशो बिल्वकश्चैव रोचनं चंदनद्वयं । कृष्णमांसी मुरोशीरं बालकं च तथाऽऽमला ॥ गोजिह्वा तुलसी हृष्या शतपुष्पा सलांगली । ब्रह्मदंडी द्रोणपुष्पी प्रियंगुः सि-

तसर्षपः ॥ पिप्पली काकजंघा च त्रायमाणा हुहूस्तथा । ज्योतिष्मती च गांधारी निर्गंधः पूर्णकौशिकी । भगक्षमा सुभद्रा च गुडूची सें-
द्रवारुणी ॥ अलंबुका रुदंती च कदली केतकी तथा । गोक्षुरा शतपर्वा चाऽरिष्टिका चाऽपराजिता ॥ छिन्नरुहा शतपत्रा निकुंभा च सुवर्च-
ला। अश्वगंधा हस्तिकर्णी हरिद्राद्वितयं तथा । उष्ट्रवो मधुकारश्च अश्वत्थो बकुलस्तथा॥ नष्टक्षीरा त्वपामार्गो मंदारश्चाऽतिमुक्तकः । मालती
स्वर्णपुष्पी च श्रीपर्णी श्रीफलं तथा ॥ दर्भमूलं करवीरं मदयंती विकंकता । पाटला सुरदारुश्च अर्धसूदनिकस्तथा ॥ फलं मन्मथवृक्षस्य प-
लाशस्य च पल्लवाः । रास्ना नदीवृक्षमूलं सुरदारुर्विदारिका ॥ श्वेतवीर्या श्वेतपाका नीलोत्पलं तथैव च । नागकेसरसिंदूरीकुमारीश्चैव नि-
क्षिपेत् ॥ शतमूला शतावरी । वेतसो वंजुलः । सहका सहदेवी। श्वेतमूला पुनर्नवा । मीननेत्रा मत्स्याक्षी । पुत्रपारा पुत्रजीवः । कृतांजली
अंजलिनी हातजोडाइति प्रसिद्धा । पलाशं कट्फलं । चंदनद्वयं श्वेतं पीतं च । उशीरं वीरणं । आमला भूम्यामलकी । गोजिह्वा ग-
लकुंभीति प्रसिद्धा । लांगली कलिहारीति प्रसिद्धा । ब्रह्मदंडी अधःपुष्पी । द्रोणपुष्पी कंबुकः । काकजंघा एकांगी । ज्योतिष्मती मा-
लकांगुणी । गांधारी देवगांधारी । पूर्णकौशिकी कोशातकी । भगक्षमा शिग्रुः । सुभद्रा सारिवा । अलंबुका तुंबी । शतपर्वा वचा ।
अरिष्टिका नागबला । छिन्नरुहा पिंडगुडूची । शतपत्रा कमलिनी । निकुंभा दंतिभेदः । सुवर्चला सूर्यभक्ता । हस्तिकर्णी एरंडः । उष्ट्रवः
पीलुः । मधुकरो मधूकः । सर्जरा बीजकः । अतिमुक्तकः माधवीजाती । स्वर्णपुष्पी कुशली। श्रीफलं बिल्वं। मदयंती यूथिका। अर्धसूदनि-
का पालंकी । मन्मथवृक्षः आम्रः । सुरदारुः देवदारुः । विदारिका भूकूष्मांडी। श्वेतवीर्या गिरिकर्णिका । श्वेतपाका गुंजा । स्पष्टमन्यत् । सर्वौ-
षध्यस्तु। मुरा मांसी वचा कुष्ठं शैलेयं रजनीद्वयं। सटी चंपकमुस्ता च सर्वौषधिगणः स्मृतः ॥ मुरा एकांगी । मांसी जटामांसी। शैलेयं मनः

शिला । सटी कचोरा । स्पष्टमन्यत् । कात्यायनः । मूलनक्षत्रे मूलविधानं कुर्यात्सर्वौषध्या सर्वगंधैश्च संयुक्तमुदकुंभं सवस्त्रं गंधपुष्परत्नसहितं श्वेतसिद्धार्थकुसुमयुक्तं च कुर्यात्तस्मिन्रुद्रमभ्यर्च्य रुद्रान्जपित्वाऽप्रतिरथं राक्षोघ्नं सूक्तं चाऽथ द्वितीयोदकुंभं कृत्वा चतुःप्रस्रवणसंयुक्तमुपरिष्टान्मूलानि धारयेद्वंशपात्रे कृत्वा वस्त्रे बध्वा तस्मिन्प्रधानानि मूलानि वक्ष्याम्यष्टादशमाषं हिरण्मयमूलं सप्तधान्यानि कार्ष्मर्या सहदेव्यपराजिता वाला पाठा शंखपुष्पाऽधःपुष्पी मधुयष्टिका चक्रांकिता मयूरशिखा काकजंघा कुमारीद्वयं जीवंत्यपामार्गभृंगराजलक्ष्मणासुलक्ष्मणाजाती-व्याघ्रपत्रश्चक्रमर्दकसिद्धेश्वराऽश्वत्थोदुंबरपलाशप्लक्षवटाऽर्कदूर्वा रोहितकशतावरीशमीत्यादिमूलानि पूरयित्वा तस्मिन्निषिद्धानि मूलानि वक्ष्यामि बिल्वधवनिंबकदंबराजवृक्षाऽक्षशेलुप्रियालुदधिकपित्थकोविदारश्लेष्मातकबिभीतकशाल्मलिसरलसर्वकंटकिवर्जं तत्राऽभिषेकं कुर्यात्पितुः शिशोर्जनन्या देवस्यत्वेत्यौदुंबरीमासंदीमुदगग्रामास्तृणाति तत्रासीनान्संपातेनाऽभिषिंचति शिरसोऽध्यनुलोमं शिरो मे श्रीर्यश इति यथालिंगमंगानि संस्पृशति स्नानादूर्ध्वं नैर्ऋतं पायसं श्रपयित्वा कार्ष्मर्यमयं स्रुक्स्रुवं प्रताप्य संमृज्याऽन्वारब्ध आघारावाज्यभागौ हुत्वाऽसुन्वंतमयजमानामिति चतस्रः स्थालीपाकेन जुहुयात्कृणुष्वपाजइति पंचदशाज्याहुतीश्चतुर्गृहीतेन जुहुयान्मानस्तोकइति द्वाभ्यां यातेरुद्रशिवातनूरिति षडग्नेरक्षांसिसेधति शुक्रशोचिरमर्त्यः । शुचिःपावकईड्य इति । त्वंनःसोमविश्वतो रक्षाराजन्नघायतः । नरिष्येत्वावतःसखेति स्विष्टकृदादिप्राशनांते कृष्णागौः कृष्णाश्च तिला हेममयमूलं सप्तधान्यसमेतमाचार्याय दद्यात्कृष्णोऽनड्वान्ब्रह्मणे देयो नक्षत्रसूचकेभ्यो वासो दद्यादन्येभ्यो ब्राह्मणेभ्यः सुवर्णं दद्यात्कृसरपायसेन ब्राह्मणान्भोजयेत्सार्पदैवते गंडजाते एष विधिः कात्यायनोक्तः कृते शांतिर्भवति शांतिर्भवतीति ॥ अष्टादशमाषं तत्परिमितस्वर्णकृतं मूलं । केचित्तु अष्टादशमाषमिति न पठंति । मूलनामानि तु । कार्ष्मर्या गंभारी । वाला उशीरं ।

अधःपुष्पी अधहुली । मधुयष्टिका ज्येष्ठमधु । चक्रांकिता अतिबला । काकजंघा कौवाठोठी । कुमारिकाद्वयं धिधुकुरी बडी धीडकुवारी छोटी । जीवंती चिडुचिरा । भृंगराजः भैंगारिया । सुलक्ष्मणा पुत्तलीसदृशी । जाती चंबेली । व्याघ्रपत्री हंसी । सिद्धेश्वरा जैती । रोहितकं सुगंधितृणं । अन्यानि तत्तन्नाम्ना प्रसिद्धानि । एतानि द्वात्रिंशदावश्यकानि । अन्यानि शतमूलांऽतर्गतानि ग्राह्याणि । तदभावे कानिचिदप्रतिषिद्धानि । यानि विहितानि निषिद्धानि च तेषु विकल्पः ॥ ॥ अथ शौनकोक्तमूलशांतिप्रयोगः । अभुक्तमूलोत्पत्तौ वर्षाष्टकसहितद्वादशाहांते वर्षाष्टकांते द्वादशाब्दांते वा तदन्यमूलोत्पत्तौ तु द्वादशाहे अव्यवहिताऽऽगामिमूलनक्षत्रयुते शुभदिने वा गोप्रसवशांतिमुक्तविधिना कृत्वा द्विराचमनादिदेशकालकीर्तनांते ममाऽस्य कुमारस्य ( कुमार्या वा ) मूलप्रथमचरणोत्पत्तिसूचितसकलारिष्टपरिहारद्वाराश्रीप० शौनकोक्तां सग्रहमखां मूलजननशांतिं करिष्ये इति संकल्प्य ( द्वितीयादिचरणोत्पत्तौ संकल्पे ऊहो बोध्यः ) गणेशपूजाद्याचार्यऋत्विग्वरणांतं कुर्यात् । ब्रह्मसदस्यौ कृताकृतौ । ऋत्विजश्च षोडश द्वादशाऽष्टौ वा । अल्पशक्तौ चत्वारोऽपि । ततस्तान्मधुपर्केण वस्त्राऽलंकारादिभिर्यथाविभवं वा संपूज्य प्रार्थयेत् । तत आचार्यः आचमनादिप्रादेशकरणांते मंडपपक्षे मंडपदेवतापूजनमुक्तविधिना कृत्वा तस्य प्रोक्षितभूमेर्वा ऐशान्यां स्वस्तिके महीद्यौरिति भूमिं स्पृष्ट्वा ओषधयःसमिति द्रोणपरिमितव्रीहिराशिं कृत्वा तत्रोक्तलक्षणं प्रक्षालितं रक्तवर्णं कलशं आकलशेष्विति संस्थाप्य इमंमेगंगइति तीर्थोदकेनापूर्य युवंवस्त्राणीति वस्त्रेणावेष्टय शरासइति दर्भकूर्चं हिरण्यरूपइति हिरण्यं अश्वत्थेवइति चूतक्षीरद्रुमपल्लवान् साहिरत्नानीति पंचरत्नानि याओषधीरित्योषधीः गंधद्वारामिति गंधं याःफलिनीरिति पुष्पफले ओषधयःसमिति यवान् कांडात्कांडादिति दूर्वाः स्योनेति मृदः आपोहिष्ठेतितृचेन पंचगव्यं च निक्षिप्य पूर्णादर्वीति पूर्णपात्रं निधाय तस्मात्कलशाच्चतुर्दिक्षु महीद्यौरित्या-

दिमंत्रावृत्त्या चतुरः कुंभान्संस्थाप्य तत्रोदकपूरणादिपूर्णपात्रनिधानांते मध्यकुंभे स्वर्णप्रतिमायां त्र्यंबकंवसिष्ठो० । इति रुद्रमावाह्य तेनैव संपूज्याऽन्येषु वरुणं पूजयेत् । तत एक ऋत्विक् रुद्रकुंभं स्पृशन् याजुषो यजमानश्चेद्रुद्रैकादशिनीं षडंगसहितां बह्वृचश्चेत्त्रीणि रुद्रसूक्तानि छंदोगश्चेत्त्रीणि रुद्रसामानि जपेत् । सूक्तसाम्नामेकादशाऽष्टत्रिद्व्येकसंख्यावृत्तिः शक्तितो ज्ञेया । तत्र रुद्रस्य षडंगसंज्ञाः षण्न्यासा अस्मद्गुरुकृतरुद्रपद्धतौ द्रष्टव्याः । केचित्तु रुद्रः सर्वसाधारणो बह्वृचच्छंदोगयोस्तु सूक्तसाम्नो रुद्रेण सह विकल्प इत्याहुः । अथैषामृष्यादि । नमकानुवाकानामग्नी रुद्रो महाविराट् । चमकानुवाकानामग्निः कांड ऋषिः । आद्याग्नावैष्णवी गायत्री । शिष्टानां वाजादयोन्नादिविशेषा देवताः । यजुश्छंदः । जपे विनि० । कद्रुद्रायेति नवर्चस्य सूक्तस्य कण्वो रुद्रो गायत्र्यंत्यानुष्टुप् । इमारुद्रायेत्येकादशर्चस्य सूक्तस्य कुत्सो रुद्रो जगत्यंत्ये त्रिष्टुभौ । आतेपितरिति पंचदशर्चस्य सूक्तस्य गृत्समदो रुद्रस्त्रिष्टुप् । जपे वि० । अत्र सूक्तांतरसत्त्वेऽपि न तज्जपः । बहुवचनस्य तिसृषूपपत्तेः । आवोराजानमित्यादित्रयाणां रुद्रसाम्नां वामदेवो रुद्रस्त्रिष्टुबंत्ययोर्गायत्री । जपेवि० । तत आशुःशिशानइत्यादिचतुर्णामपि जपस्तत्रैव केनचित्कार्यः । तत्रत्यजपसंदंशपाठात् । आशुःशिशानइति त्रयोदशर्चस्य सूक्तस्याऽप्रतिरथ इंद्रश्चतुर्थ्या बृहस्पतिर्द्वादश्या अप्वांऽत्याया मरुतस्त्रिष्टुबंत्यानुष्टुप् । त्वमग्नेरुद्र इत्यनुवाकस्य हव्यवाडग्न्यात्मा रुद्र आद्या जगती शिष्टानि यजूंषि । रक्षाणो अग्ने वामदेवोग्निस्त्रिष्टुप् । रक्षोहणमिति पंचविंशर्चस्य सूक्तस्य पायुरग्निस्त्रिष्टुप् चतस्रोंत्या अनुष्टुभः । जपे० । अत्रापि शक्त्या पूर्वोक्तसंख्यास्वीकारः । ततस्त्र्यंबकमंत्रमष्टोत्तरसहस्रं तिस्रः पावमानीश्च तत्रैव जपेत् । ताश्च । स्वादिष्ठयेति तिसृणां मधुच्छंदाः पवमानसोमो गायत्री । जपे० । ततश्चतुर्षु कलशेषु पूर्वादिक्रमेण आनोभद्राः स्वस्तिनोमिमीतां शंनइंद्राग्नी यतइंद्रेति चत्वारि शांतिसू-

क्तानि जपेत् ( अयं जपः शिष्टाचाराऽनुमितः ) एवं पंचकुंभाऽसंभवे कुंभद्वयं स्थाप्यं । तत्राद्ये रुद्रपूजा पूर्वोक्तरुद्रादिसर्वजपश्च । तदुत्तरस्थे तु वरुणमावाह्य शांतिजपं कुर्यात् । यद्वा कुंभपंचकस्थाने एक एव चतुःप्रस्रवणः । तत्र मध्यकुंभकार्याणि मध्यमुखे । कुंभचतुष्टयकार्याणि चतुर्षु प्रस्रवणेष्विति व्यवस्था । ततः स्थापितकुंभोत्तरतः रक्तवर्णैः शुक्लैर्वा व्रीहितंडुलैश्चतुर्विंशतिदलोपेतं सकर्णिकं पंकजं विरच्य तत्र कर्णिकायां सौवर्णं राजतं मृन्मयं वा कलशं महीद्यौरित्यादिविधिना संस्थाप्य इमंमेगंगइति जलेनापूर्य गंधद्वारामिति गंधं कुंकुमं च क्षिप्त्वा याओषधीरिति शतमूलानि तदलाभे विष्णुक्रांता सहदेवी तुलसी शतावरीति चतस्रो वा शरासइति कुशांश्च निक्षिप्य कांडात्कांडादित्यादिपूर्णपात्रनिधानांतं कृत्वा तदुपरि साष्टदलवस्त्रे उक्तलक्षणप्रतिमात्रयं पंचामृतक्षालितं संस्थाप्य तत्र देवता आवाहयेत् । मोषुणः कण्वो निर्ऋ० इति निर्ऋतिमावाह्योक्तरूपं ध्यात्वा तद्दक्षिणे । इंद्रंवो मधुच्छंदा० इतींद्रं । उत्तरे अप्सुमे मेधातिथि० इत्यपश्चावाह्य पूर्वादिचतुर्विंशतिदलेषु नाममंत्रैरुत्तराषाढाद्यनुराधांतानि नक्षत्राणि तद्देवता वा स्थापयेत् । ताश्चेत्थं । विश्वेभ्योदेवेभ्यो नमः । विश्वान्देवानावाहयामि । विष्णवे० विष्णुं० । वसुभ्यो० वसून्० । वरुणाय० वरुणं० । अजायैकपदे० अजमेकपादं० । अहयेबुध्न्याय० अहिंबुध्न्यं० । पूष्णे० पूषणं० । अश्विभ्यां० अश्विनौ० । यमाय० यमं० । अग्नये० अग्निं० । प्रजापतये० प्रजापतिं० । सोमाय० सोमं० । रुद्राय० रुद्रं० । अदित्यै० अदितिं० । बृहस्पतये० बृहस्पतिं० । सर्पेभ्यो० सर्पान्० । पितृभ्यो० पितॄन्० । भगाय० भगं० । अर्यम्णे० अर्यमणं० । सवित्रे० सवितारं० । त्वष्ट्रे० त्वष्टारं० । वायवे० वायुं० । इंद्राग्निभ्यां० इंद्राग्नी० । मित्राय० मित्रं० । ततो नाममंत्रैरिंद्रादिलोकपालानावाह्य रुद्रकुंभान्नैर्ऋतप्रदेशे स्थंडिलेऽग्निं प्रतिष्ठाप्य स्थापितकुंभोत्तरतो ग्रहस्थापनादिकलशप्रार्थनांतं कृत्वाऽन्वादध्यात् । ग्रहा-

दिदेवतोत्कीर्तनांते निर्ऋतिं प्रधानदेवं घृताक्तपायससमिदाज्यचरुभिः प्रतिद्रव्यं अष्टोत्तरशतसंख्याहुतिभिः ( समिदाज्यचरूणां न्यूनसंख्याक-
रणपक्षे तथैव निर्देशः ) इंद्रं अपश्च तैरेव द्रव्यैः प्रत्येकं प्रतिद्रव्यं अष्टाविंशातेसंख्या० । विश्वदेवादिचतुर्विंशतिदेवताः पायसेन प्रत्येकं अष्ट-
सं० । रक्षोहणमग्निं कृसरेण विंशत्यधिकशतसंख्या० । सवितारं दुर्गां त्र्यंबकं कवीन् दुर्गां वास्तोष्पतिं अग्निं क्षेत्राधिपतिं मित्रावरुणौ अग्निं
एता देवताः कृसरेण अष्टसं० । श्रियं सामिदाज्यचरुभिः प्रतिद्रव्यं विंशत्यधिकशतसं० । सोमं पायसेन त्रयोदशसं० । रुद्रं स्वराजं च-
तुर्गृहीताज्येन । अग्निं पृथिवीं महातं । वायुमंतरिक्षं महांतं । आदित्यं दिवं महांतं । चंद्रमसं नक्षत्राणि दिशो महांतं चाज्येन शेषेणेत्यादि-
पूर्णपात्रनिधानांते निर्ऋत्यादीनां षोडशोपचारैः पंचोपचारैर्वा तत्तन्मंत्रैः पूजां कुर्यात्। निर्ऋतये वस्त्रयुग्मं रक्तचंदनं कृष्णसितादिपुष्पाणि मेषशृंगधूपः
घृतदीपः पोलिकौदनसुरामत्स्यमांसात्मकं पुरुषाहारपर्याप्तं नैवेद्यं । तत्र ब्राह्मणेन सुरास्थाने सैंधवमिश्रं क्षीरं मांसस्थाने च लवणमिश्रं पायसं देयं।
अन्यैस्तु सति संभवे मुख्यमेव सर्वं । पुष्पांजल्यंतपूजने कृते अमुष्मैत्वाजुष्टंनिर्वपामीत्याद्यन्वाधानक्रमेण पायसकृसरचरून् श्रपयित्वा आज्यभाग-
होमांते यजमानेन यथान्वाधानं द्रव्यत्यागे कृते सर्त्विगाचार्यो ग्रहादिहोमोत्तरं मोषुण इति मंत्रेण घृताक्तपायससामिदाज्यचरूनुक्तसंख्यया
हुत्वा इंद्रंवो अप्सुमे इत्येताभ्यामष्टाविंशतिसंख्यया तान्येव जुहुयात् । तत्र पायसचर्वोरवदानधर्मेण होमः । ततः विश्वेभ्योदेवेभ्यः-
स्वाहेत्येवमुक्तचतुर्विंशतिनाममंत्रैः प्रत्येकमष्टाष्टसंख्यया पायसहोमांते वक्ष्यमाणमंत्रैः कृसराहुतीर्जुहुयात् । कृणुष्वेति पंचदशर्चस्य सूक्तस्य
वामदेवो रक्षोहाग्निस्त्रिष्टुप् । कृसरहोमे० । प्रत्यृचमष्टाष्टसंख्यया होमः । गायत्र्या विश्वामित्रः० कृसरहोमे० । एवमग्रेपि । जातवेदसे कश्यपो दुर्गा
त्रिष्टुप् । त्र्यंबकं वसिष्ठो० । सीरायुंजंतीत्यस्य बुधः कवयो गायत्री । तामग्निवर्णां सोभरिर्दुर्गा त्रिष्टुप् । वास्तोष्पते वसिष्ठो वास्तोष्पतिस्त्रिष्टुप् ।

अग्निंदूतं मेधातिथिरग्निर्गायत्री । क्षेत्रस्यपतिना वामदेवः क्षेत्राधिपतिरनुष्टुप् । गृणाना जमदग्निर्मित्रावरुणौ गायत्री । अग्निंदूतंपुरोदधे विरूपोऽग्नि-
र्गायत्री । एभिर्मंत्रैः प्रत्येकमष्टाष्टसंख्यया कृसरं हुत्वा हिरण्यवर्णामिति पंचदशर्चस्य सूक्तस्य कर्दमानंदचिक्लीतेंदिरासुताः श्रीरनुष्टुप् । पं-
चमी षष्ठी च त्रिष्टुभौ चतुर्थ्यंत्या च प्रस्तारपंक्तिः । होमे० । इति प्रत्यृचं समिदाज्यचरून् अष्टाष्टसंख्यया जुहुयात् । त्वंनःसोमविश्वतो-
वयोधाः प्रगाथः सोमस्त्रिष्टुप् । पायसहोमे० । अनेन त्रयोदशवारं पायसं हुत्वा यातेरुद्र कश्यपो रुद्रः स्वराडनुष्टुप् । आज्यहोमे० । याते-
रुद्रशिवातनूरघोरा० । अनेन चतुर्गृहीतमाज्यं हुत्वा स्रुवेणाज्याहुतीर्जुहुयात् । भूरग्नयेचपृथिव्यैचमहतेचस्वाहा । भुवोवायवेचांतरिक्षाय-
चमहतेच० । सुवरादित्यायचदिवेचमहतेच० । भूर्भुवःसुवश्चंद्रमसेचनक्षत्रेभ्यश्चदिग्भ्यश्चमहतेच० । ततः स्विष्टकृदादिप्रायश्चित्तहोमांते
दिक्पालादिभ्यो रुद्राय निर्ऋतये इंद्रायाऽग्न्यः क्षेत्रपालाय च बलीन्दत्वा आचार्यो यजमानो वा पूर्णाहुतिं जुहुयात् । तत्र मंत्राः ।
समुद्रादूर्मिरित्येकादशर्चस्य सूक्तस्य वामदेवोग्निस्त्रिष्टुबंत्या जगती । प्रजापते हिरण्य० । पूर्णादर्वि विश्वेदेवाः शतक्रतुरनुष्टुप् । सप्ततेअग्ने सप्त-
वानग्निर्जगती । पूर्णाहुतिहोमे वि० । एतैश्चतुर्दशमंत्रैः पूर्णाहुतिं हुत्वा संस्रावहोमादिकर्मशेषं समाप्य जातारण्यग्नावेतच्छांतिकरणपक्षेऽस्मि-
न्काले समारोपः । शांत्या सह ग्रहमखाऽकरणे त्विदानीं तस्मिन्नेवाऽग्नौ पृथक् स कार्यः । ततो रुद्रकुंभं दक्षिणतः स्पृशन् त्र्यंबकमितिमंत्रं
शतवारं जप्त्वा यजमानस्य याजुषत्वादिनिमित्तकं पूर्ववद्रुद्रैकादशिन्यादिकमपि जपेत् । अत्राप्येकादशादिसंख्याविकल्पः पूर्ववत् । ततो
रुद्रं निर्ऋतिमिंद्रमपश्च पंचोपचारैः संपूज्य त्र्यंबकं मोषुण इति चोपस्थाय भवत्प्रसादेन यजमानाभिषेकं करिष्ये इति तान्प्रार्थ्य सर्वकलशो-
दकं पात्रांतरे गृहीत्वा विनायकशांतिवत् भद्रासनोपविष्टं धृतनववस्त्रं सर्वौषध्यनुलिप्तांगं यजमानं तद्वामतस्तादृशीं साऽपत्यां पत्नीं चोपवेश्य

सर्त्विगाचार्यस्तानभिषिंचेत् । मंत्रास्तु । अक्षीभ्यामिति षड्टचस्य सूक्तस्य विवृहा यक्ष्मनाशनोऽनुष्टुप् । त्रिभिष्टुमिति सप्तर्चस्य सूक्तस्य वसिष्ठ आद्यानां त्रयाणामग्निस्ततो विश्वेदेवा गायत्री द्वितीयांऽत्ये द्वे चाऽनुष्टुभः । आपोहिष्ठेति नर्वचस्य सूक्तस्य० । आपइद्वेति द्वयोः सप्तर्षयो विश्वेदेवा अनुष्टुप् । सहस्राक्षेणेति तृचस्य यक्ष्मनाशनो यक्ष्मा त्रिष्टुबंत्याऽनुष्टुप् । देवस्यत्वेति त्रिभिर्याजुषैर्मंत्रैः । यज्जाग्रत इति षण्णां प्रजापतिर्मनस्त्रिष्टुप् । अभिषेके० । एतन्मंत्रांते । योऽसौ वज्रधरो देवो महेंद्रो गजवाहनः । मूलजातशिशोर्दोषं मातापित्रोर्व्यपोहतु ॥ १ ॥ योऽसौशक्तिधरो देवो हुतभुङ् मेषवाहनः । सप्तजिह्वश्च देवोग्निर्मूलदोषं व्यपोहतु ॥२॥ योऽसौ दंडधरो देवो धर्मो महिषवाहनः । मूलजातशिशोर्दोषं व्यपोहतु यमो मम ॥ ३ ॥ योऽसौ खड्गधरो देवो निर्ऋती राक्षसाधिपः । प्रशामयतु मूलोत्थं दोषं गंडांतसंभवं ॥ ४ ॥ योऽसौ पाशधरो देवो वरुणः सलिलेश्वरः । नक्रवाहः प्रचेतानो मूलोत्थाऽघं व्यपोहतु ॥ ५ ॥ योऽसौ देवो जगत्प्राणो मारुतो मृगवाहनः । प्रशामयतु मूलोत्थं दोषं बालस्य शांतिदः ॥ ६ ॥ योऽसौ निधिपतिर्देवः खड्गभृद्वाजिवाहनः । मातापित्रोः शिशोश्चैव मूलदोषं व्यपोहतु ॥ ७ ॥ योऽसौ पशुपतिर्देवः पिनाकी वृषवाहनः । आश्लेषामूलगंडांतदोषमाशु व्यपोहतु ॥ ८ ॥ विघ्नेशः क्षेत्रपो दुर्गा लोकपाला नवग्रहाः । सर्वदोषप्रशमनं सर्वे कुर्वंतु शांतिदाः ॥ ९ ॥ ततो ग्रहादिमंत्रैः सुरास्त्वामित्यादिपौराणैश्चाऽभिषिच्य तच्छंयोः शंयुर्विश्वेदेवाः शक्करी । अभिषेके०। ततस्तूष्णीं वस्त्रवेष्टितमुखाभ्यां रुद्रनिर्ऋतिकुंभाभ्यामभिषिंचेत् । पितामहकश्यपाभ्यां तु शतच्छिद्रेणाऽभिषेक उक्तः । एवमभिषिक्तो यजमानो धृतशुक्लांबरगंधमाल्यो विभूतिं धृत्वा रुद्रादीनामुत्तरपूजांते आचार्यादीन्संपूज्य तेभ्यो दक्षिणां दद्यात् । तत्र आचार्याय सवत्सां पयस्विनीं गां ग्रहप्रीत्यर्थदक्षिणाश्च । रुद्रजापिने । धर्मस्त्वं वृषरूपेण जगदानंदकारकः । अष्टमूर्तेरधिष्ठानमतः पाहिसनातनेति कृष्ण-

मनड्वाहं । ब्रह्मणे तेनैव वृषभं । सदस्याय । उच्चैःश्रवास्त्वमश्वाना राज्ञा विजयकारकः । सूर्यवाह नमस्तुभ्यमतः शांतिं० इत्यश्वं । अन्येभ्य ऋत्विग्भ्यो हिरण्यगर्भेति हिरण्यं च दद्यात् । धेन्वनडुहोरसंभवे तन्मूल्यं दशकार्षापणाधेनावष्टावनडुहिस्मृता इत्युक्तं देयं । तस्याऽप्यसंभवे सर्वेभ्यो यथाशक्ति दद्यात् । तत्राचार्यदत्तार्धं ब्रह्मणे । तदर्धं सदस्याय । तदर्धं प्रत्येकमृत्विग्भ्य इति व्यवस्था । तत आचार्येण देवताविसर्जने कृते तस्मै निर्ऋतिप्रतिमां तत्कुंभवस्त्रहिरण्यसहितां वस्त्राद्युपस्करसहिता ग्रहप्रतिमाश्च दत्वा रुद्रजापिने रुद्रप्रतिमाः सोपस्करांस्तत्कुंभांश्च दद्यात् । अन्येभ्योपि यथाशक्ति भूयसीं दक्षिणां दत्वा ब्राह्मणैः शांतिं वाचयित्वा तान्प्रणम्य क्षमापयेत् । ततः पायसादिना शतं तदर्धं दश वा ब्राह्मणान् भोजयेत् । तेच शांतिपाठपूर्वकं भुक्त्वाशिषोदद्युः । ततो यजमानो निर्ऋतिः प्रीयतामिति क्षमाप्य कर्मेश्वरार्पणं कृत्वा सुहृद्युतो भुंजीतेति ॥ (अथ निर्ऋत्यादीनां स्थापनादि किंचिद्विचार्यते । मयूखे प्रणीतास्थापनोत्तरं कुंभस्थापनप्रभृतिनिर्ऋत्यादिपूजनांतमुक्तं । शांतिसारेऽपि पूर्णपात्रनिधानांतंकृत्वापूजांसमारभेदित्यत्र तत्सामग्रीं कुर्यात् नतु पूजां तस्या वक्ष्यमाणत्वादिति मूले व्याख्यातं । तच्च युक्तं भाति । अक्लेशेनोपपत्तेः । कौस्तुभे तु रुद्रादिसर्वजपांते विधिवत्तेषामावाहनं प्रणीतास्थापनोत्तरं च पूजनमिति वैयधिकरण्यमुक्तं । कमलाकरेणाऽप्येवमेव प्रयोगे दर्शितं । अत्र सदसत्प्राज्ञैर्विवेचनीयं ॥ अत्राऽयं प्रयोगस्तु प्रायो मूलानुसारित्वात्संप्रदायानुगतत्वाच्च कौस्तुभस्थ एव गृहीतः । ग्रंथकृता तु क्वचित्क्वचिदत्र पदार्थभेदः कृतः । सचैवं । जपकाले मध्यकुंभे चत्वारि रुद्रसूक्तानि । तत्सामानि त्वेकादश । त्र्यंबकमंत्रस्येदानीमेव जपः । ततश्चतुर्षु क्रमेणाऽप्रतिरथादिजपांते चतुर्थे पुनः पावमानजपः । यद्वा एषामपि तत्रैव जपं कृत्वा चतुर्षु शांतिजप इति । होमकाले च त्वंनःसोमाविश्वतोवयोधाः त्वंनःसोमाविश्वतोगोपाः त्वंनःसोमसुक्रतुरितिवेत्येवं सोममंत्रे विकल्पः । महाव्याहृतयस्तु व्यस्तसमस्त-

रूपाश्वतस्त्रः । होमोत्तरं रुद्रजपे चाथर्वणस्तु त्र्यंबकमंत्रमात्रं जपेदित्यधिकं । एवमत्राऽन्योन्यविसंवादिषु तत्तदुक्तप्रयोगेषु मयूखोक्त एव सम्यङ्मूलोक्तसंवादलाभाद्युक्ततर इति भाति ) इति शौनकोक्तमूलशांतिप्रयोगः॥ (अथ मयूखानुसारी प्रयोगः। कर्ता पूर्वोक्तशुभकाले आचमनादिदेशका० ममास्य कुमारस्य मूलनक्षत्र ( अ० चरण ) जन्मसूचितसकलारिष्टपरि० शौनकोक्ता सग्रहमखां शांतिं क०। इति संकल्प्य गणपतिपूजनादिऋत्विग्वरणांतं कुर्यात्।आचार्यः प्रादेशकरणांते सुसमीकृतपुण्यदेशे रचिते मंडपे शुचीवइत्यादिमंत्रैर्जलमभिमंत्र्य तेन मंडपभूमिं प्रोक्ष्य मंडपदेवतापूजनं कृत्वा प्रतिमानामग्न्युत्तारणं कुर्यात्। ततो मंडपस्य तदभावे प्रोक्षितभूमेर्वा ऐशान्यां स्वस्तिकं विरच्य तत्र महीद्यौरिति भूमिं स्पृष्ट्वा ओषधयइति षोडशप्रस्थात्मकद्रोणपरिमितव्रीहिराशिं कृत्वा यथोक्तलक्षणं प्रक्षालितं रक्तं कलशं आकलशेष्विति निधायेमंमइति तीर्थवारिणाऽऽपूर्य युवंवस्त्राणीति वाससाऽऽवेष्ट्य शरासो मैत्रावरुणिरगस्त्योऽनुष्टुप्। कूर्चप्रक्षेपे०। शरासः० इति दर्भकूर्चं हिरण्यरूपइति हिरण्यं अश्वत्थेवइति चूतक्षीरिद्रुमपल्लवान्सहिरत्नानीति पंचरत्नानि याओषधीरित्योषधीः गंधद्वारामिति गंधं याःफलिनीरिति पुष्पफलानि कांडात्कांडादिति दूर्वाश्च निक्षिप्य पूर्णादर्वीति पूर्णपात्रं निधाय ततः प्रागुदग्वा पूर्वादिचतुर्दिक्षु ऐशान्यादिविदिक्षु वा चतुरः मध्ये चैकमिति पंचकुंभान् जपार्थे पदार्थानुसमयेन कांडानुसमयेन वा प्रत्येकं मंत्रावृत्त्या भूमिस्पर्शादिपूर्णपात्रनिधानांतोक्तविधिना संस्थाप्य पूर्वस्थापितकुंभे सौवर्णप्रतिमायां रुद्रं त्र्यंबकमिति प्रतिष्ठाप्य पूजयेत्। तत एक ऋत्विक् रुद्रकुंभं स्पृशन्याजुषो यजमानश्चेद्रुद्रैकादशिनीं षडंगसहितां जपेत्। बह्वृचश्चेत्त्रीणि रुद्रसूक्तानि। छंदोगश्चेत्त्रीणि रुद्रसामानि । सूक्तसाम्नामेकादशाष्टत्रिद्व्येकसंख्यावृत्तिः शक्तितो ज्ञेया। तत्र रुद्रस्य षडंगसंज्ञाः षण्न्यासा रुद्रविधौ द्रष्टव्याः। रुद्रसूक्तानां तत्साम्नां च ऋष्यादि पूर्वप्रयोगे उक्तं। ततो-

न्यकृत्विक् जपार्थकुंभपंचके वक्ष्यमाणं जपेत् । तत्र पूर्वकुंभे आशुःशिशान इति त्रयोदशर्चस्य सूक्तस्यैंद्रोऽप्रतिरथ इंद्रश्चतुर्थ्यां बृहस्पति-र्द्वादश्या अप्वांत्याया मरुतास्त्रिष्टुबंत्यानुष्टुप् । जपे० । दक्षिणकुंभे त्वमग्नेरुद्रइत्यनुवाकस्य हव्यवाडग्न्यात्मा रुद्र आद्या जगती शिष्टानि यजूंषि । जपे० । तैत्तिरीयशाखीयोऽयं । पश्चिमकुंभे रक्षाणइत्यस्य गौतमो वामदेवोग्निस्त्रिष्टुप् । जपे० । उत्तरकुंभे अग्नेहंसीति नवर्चस्य सूक्तस्याऽऽमहीयव उरुक्षयोग्नी रक्षोहा गायत्री । जपे० । मध्यकुंभे त्र्यंबकमिति मंत्रमष्टोत्तरसहस्रं जप्त्वा स्वादिष्ठयेति तिस्रो जपेत् । एवं षट्कुंभाऽशक्तौ रुद्रकुंभश्चतुःप्रस्रवणश्चेति कुंभद्वयमुक्तविधिना संस्थाप्य चतुःप्रस्रवणे गजाश्वरथस्थानवल्मीकसंगमह्रदगोकुलराजद्वारप्र-देशेभ्य आनीताः सप्तमृदश्च निक्षिप्य रुद्रकुंभे रुद्रैकादशिनीं जप्त्वाऽप्रतिरथादीनि चत्वारि प्रागादिप्रस्रवणेषु त्र्यंबकमंत्रं पावमानीश्च म-ध्यमुखे जपेत् । एवं मूलानुसारेण षट्कुंभस्थापनमुक्तं । शांतिसारादौ तु रुद्रकुंभादैशान्यादिचतुर्दिक्षु कुंभचतुष्टयमिति पंचकुंभास्तदसंभवे कुंभद्वयं तस्याप्यसंभवे चतुःप्रस्रवण एक एवेति प्रकारांतराणि । तत्र जपव्यवस्था रुद्रकुंभातिरिक्तेषु वरुणपूजनं चेत्येतान्युक्तानि । तानि च मूलवाक्येभ्य उपलभ्यंते चेत् ग्राह्याणि । तत आचार्यो रुद्रकुंभान्नैर्ऋते देशे स्थंडिलेग्निस्थापनादि कृत्वा स्थापितकुंभोत्तरतः कुंभस्थापन-पूर्वं ग्रहादीनां स्थापनपूजने कृत्वान्वादध्यात् । तत्र चक्षुषीआज्येनेत्यंते गणपतिं आदित्यादिग्रहादींश्च उक्तरीत्योक्त्का निर्ऋतिमष्टोत्तरशतसंख्या-भिर्घृतसंमिश्रपायसाहुतिभिः अमुकसंख्याभिः समिदाज्यचर्वाहुतिभिश्च । अत्रामुकशब्दस्थाने अष्टोत्तरशताष्टाविंशत्यष्टान्यतमसंख्यामुच्चारयेत् । एवमग्रेऽपि । इंद्रं अपश्च प्रत्येकं २८ संख्याभिर्घृतसं० अमु० समिदाज्य० । यद्वाऽनयोः सर्वत्र प्रधानदशांशेन निर्दिशेत् । प्रधा-नदशांशेन पार्श्वदेवतयोरिति परिशिष्टोक्तसंख्यां सामान्यतया प्राप्तां परित्यज्य संख्यांतरकल्पने मानाभावात् । विश्वान्देवान् ।

विष्णुं । वसून् । वरुणं । अजमेकपादं । अहिं बुध्य । पूषणं । अश्विनौ । यमं । अग्निं । प्रजापतिं । सोमं । रुद्रं । अदितिं । बृहस्पतिं । सर्पान् । पितॄन् । भगं । अर्यमणं । सवितारं । त्वष्टारं । वायुं । इंद्राग्नी । मित्रं । एतादेवताः प्रत्येकं अमु० पायसाहुतिभिः । अग्निं रक्षोहणं विंशत्यधिकशतसंख्याभिः कृसराहुतिभिः । सवितारं । अग्निं जातवेदसं । रुद्रं । ऋत्विजः । दुर्गां । वास्तोष्पतिं । अग्निं । क्षेत्रपतिं । मित्रावरुणौ । अग्निं । एता देवताः प्रत्येकं अमु० कृसराहुतिभिः । श्रियं प्रतिद्रव्यं अमु० समिदाज्यचर्वाहुतिभिः । इदं सूक्तेन होमपक्षे । प्रत्यृचं तत्पक्षे तु विंशत्यधिकषोडशशतविंशत्यधिकचतुःशतविंशत्यधिकशतानामन्यतमसंख्यां कीर्तयेत् । सोमं त्रयोदशभिः पायसाहुतिभिः । रुद्रं चतुर्गृहीताज्येन । अग्निं पृथिवीं महांतं । वायुमंतरिक्षं महांतं । आदित्यं दिवं महांतं । प्रजापतिं चंद्रमसं नक्षत्राणि दिशो महांतं चाज्येन शेषेणाग्निंस्विष्टकृतमित्यादि । पात्रासादने गृहसिद्धान्नपायसचरुकृसरार्थस्थालीनां स्रुवाणामाज्यस्थालीनां शूर्पाणां चासादनादिप्रणीतास्थापनांतं कृत्वा ग्रहाणामुत्तरतो रक्तैः शुक्लैर्वा व्रीहितंडुलैः कर्णिकायुक्तचतुर्विंशतिदलोपेतं पद्ममुल्लिख्य तत्कर्णिकायां सौवर्णं राजतं मृन्मयं वा कुंभं महीद्यौरित्यादिपूर्वोक्तविधिना प्रतिष्ठाप्य पूर्णपात्रनिधानांतं कुर्यात् । तत्र याओषधीरिति पूर्वोक्तबर्हिःशिखादिशतमूलानि तदभावे विष्णुक्रांतासहदेवीतुलसीशतावरीति चतस्रो वा निक्षिपेत् । गंधक्षेपकाले कुंकुमं च क्षिपेदितिविशेषः । पूर्णपात्रे उक्तलक्षणायां सुवर्णप्रतिमायां तन्मूल्ये वा निर्ऋतिमावाहयेत् । मोषुणो घौरः कण्वो निर्ऋतिर्गायत्री । निर्ऋतिपूजने० । मोषुणः० । संस्मरेन्निर्ऋतिंश्यामंसुमुखंनरवाहनं । रक्षोधिपंखड्गहस्तंदिव्याभरणभूषितमित्युक्तरूपं स्मरन् निर्ऋतिमावाहयामीत्यावाह्य पंचामृतेन संस्नाप्य षोडशभिरुपचारैः पंचभिर्वा पूजयेत् । उभयत्रापि पुष्पातोपचारान्निवेदयेत् । तद्दक्षिणतः । इंद्रामि-

त्काण्वो मेधातिथिरिंद्रो बृहती। इंद्रपू० । इंद्रमिद्देवतातय० । इंद्रमावाहयामीत्यादि प्राग्वत् । उत्तरतः । आपोअस्मानित्यस्य यामायनो देवश्रवा आपस्त्रिष्टुप् । अप्पूजने० । आपोअस्मान्० । अप आवाहयामीत्यादि । यद्वा पदार्थानुसमयेन त्रयाणां पूजनं । तत्र वस्त्रयुगं। रक्तचंदनं । कृष्णासितादिपुष्पाणि । मेषशृंगस्य धूपः । घृतदीपः । ओदनपोलिकामांसमत्स्यसुराद्यात्मकं नैवेद्यं। ब्राह्मणस्य सुरास्थाने सैंधवमिश्रं क्षीरं । मांसस्थाने लवणयुक्तं पायसं। मत्स्यादि तु वर्ज्यमेव । क्षत्रियादीनां मुख्यमेव सर्वं सति संभवे। अत्रोक्तधूपदीपनैवेद्यानां निवेदनं त्वग्रे वक्ष्यते। ततश्चतुर्विंशतिदलेषु प्रागादितः । विश्वेभ्यो देवेभ्यो० विश्वान्देवानावा० । विष्णवे० वसुभ्यो० । वरुणाय० । अजायैकपदे० अहये बुध्न्याय० । पूष्णे० । अश्विभ्यां० । यमाय० । अग्नये० । प्रजापतये० । सोमाय० । रुद्राय० । अदित्यै० । बृहस्पतये० । सर्पेभ्यो० । पितृभ्यो० । भगाय० । अर्यम्णे० । सवित्रे० । त्वष्ट्रे० । वायवे० । इंद्राग्निभ्यां० । मित्राय० । एवं नाममंत्रैश्चतुर्विंशतिदेवताः क्रमेणावाह्य तैरेव पूजयेत । ततः शूर्पे पायसार्थं चतुरो मुष्टीन्निरुप्य शूर्पांतरे चर्वर्थं च चतुरो निर्वपेत् । पुनः पायसार्थं चतुरः । पुनश्चर्वर्थं चतुरः । पुनः पायसार्थं चतुरः । एतान्मुष्टींस्तूष्णीं निरुप्य तथैव तत्तत्संख्यया प्रोक्ष्य क्रमेणाऽवहत्य पात्रत्रये हविःश्रपणादिसंमार्गांते गृहसिद्धान्नस्याऽधिश्रयणादिबर्हिष्यासादनांतं कृत्वा पायसादीनामभिघारणादि तदंतं च कृत्वाऽग्न्यर्चनाद्याज्यभागांतं कुर्यात् । यजमानस्त्यागं कुर्यात् । तत्र ग्रहाद्युद्देशेन ग्रहयज्ञोक्तरीत्या त्यागं कृत्वाऽष्टोत्तरशताहुतिपर्याप्तो घृतसंमिश्रः पायसः इयदाहुतिपर्याप्ताः समिधः इय० स्तमाज्यं इय० स्तश्चरुश्च निर्ऋतये नमम । पूर्वन्यूनसंख्यया हविश्चतुष्टयमुच्चार्य इंद्राय नमम तथैव अद्भ्यो नमम । इयदियदाहुतिपर्याप्तः पायसः विश्वेभ्योदेवेभ्यः १—मित्राय २४ च नमम । विंशत्यधिकशताहुतिपर्याप्तं कृसरं अग्नये रक्षोघ्ने नमम० । इयदिय० कृसरं सवित्रे । अग्नये जातवेदसे । रुद्राय ।

ऋत्विग्भ्यः । दुर्गायै । वास्तोष्पतये । अग्नये । क्षेत्रपतये । मित्रावरुणाभ्यां । अग्नये च नमम । इयदाहुतिपर्याप्ताः समिधः इय० समाज्यं इय० मश्वरुश्च श्रिये नमम । सर्वत्र इयच्छब्दस्थानेऽन्वाधानानुसारेण संख्यां वदेत् । त्रयोदशाहुतिपर्याप्तं पायसं सोमाय०। चतुर्गृहीताज्यं रुद्राय० । एकाहुतिपर्याप्तमाज्यं अग्नये पृथिव्यै महते च० । एकाहु० माज्यं वायवेंऽतरिक्षाय महते० । एका० माज्यं आदित्याय दिवे महते० । एका० माज्यं प्रजापतये चंद्रमसे नक्षत्रेभ्यो दिग्भ्यो महते० । एवं त्यागे कृते साचार्यऋत्विजस्तथैव जुहुयुः । तत्र ग्रहादिहोमे जाते आचार्योऽवदानधर्मेण पायसमवदाय जुहुयात् । एवमग्रे चरुकृसरावपि । मोषुणो घोरः०। होमे० । पायसहोमे समाप्ते समिदादिहोमः । प्रधानहोमे समाप्ते एवमेवाधिप्रत्यधिदेवतयोर्होमः । इंद्रमित्काण्वो० । आपोअस्मा० । ततः ॐविश्वेभ्योदेवेभ्योनमःस्वाहेत्येवं प्रणवादिचतुर्थ्यंतनमोंतस्वाहांतनामभिर्विश्वदेवादिचतुर्विंशतेर्होमः पायसेन । चतुर्थ्यंतविष्णवादिशब्दास्त्यागे उक्ताः । ततः कृसरहोमः । कृणुष्वेतिपंचदशर्चस्य सूक्तस्य गौतमो वामदेवोऽग्नी रक्षोहा त्रिष्टुप् । इति प्रत्यृचमष्टसंख्यया होमः । गायत्र्या गाथिनो० । जातवेदसे०। त्र्यंबकं० । सीरायुंजंति सौम्यो बुध ऋत्विजो गायत्री । तामग्निवर्णां सौभरः कुशिको दुर्गा त्रिष्टुप् । वास्तोष्पते०। अग्निदूतंकाण्वो० । क्षेत्रस्य पतिना० । गृणाना भार्गवो० । अग्निदूतंपुरइत्यांगिरसो विरूपोग्निर्गायत्री । एतैरष्टाष्टसंख्यया कृसरं हुत्वा हिरण्यवर्णामिति पंचदशर्चं० । इति प्रत्यृचमष्टोत्तरशतादिसंख्यया समिदाज्यचरून् जुहुयात् । सूक्तेन होम इति शांतिसारे । तत्पक्षे सूक्तावृत्तयः । ततः पायसहोमः । त्वंनःसोम गोतमः सोमो गायत्री । होमे० । त्वंनःसोमविश्वतोरक्षा० । ( अत्र त्वंनःसोमेनेतिमूलोक्तमंत्रप्रतीकनिर्देशादुपस्थितेऽपि तुल्यविकल्पेन मंत्रचतुष्टये गायत्रीछंदस्कस्यैव ग्रहणं युक्तं । गायत्रोवैब्राह्मण इति श्रुतेः ) यातेरुद्र कश्यपो० । यातेरुद्रशिवातनूरघोरा० । इति दर्व्या

चतुर्गृहीताज्यं हुत्वा स्रुवेणाज्यं जुहुयात् । भूरग्नयेच० । भुवोवायवे० । सुवरादित्याय० । भूर्भुवःसुवश्चंद्र० । ( यद्यप्ययं होमो मयूखे भूरादिसप्तव्याहृतिभिरुक्तस्तथापि स्मृत्यपेक्षया श्रुतेर्बलीयस्त्वादिह बौधायनोक्ता एव गृहीता इति दिक् ) तत आचार्यो गृहसिद्धचर्वाज्यपायसचरुकृसरैः स्विष्टकृदादिप्रायश्चित्तहोमांते पूर्णाहुतिं जुहुयात् । तत्र मंत्राः । समुद्रादूर्मिरित्येकादशर्चस्य सूक्तस्य० । प्रजापते प्रजा० । पूर्णादर्वि विश्वे० । सप्ततेग्निःसप्तवान् जगती । पूर्णाहुतौ० । समुद्रादूर्मि० । प्रजापते० । पूर्णादर्वि० । सप्ततेअग्ने० । अद्भ्यः प्रजापतये शतक्रतवेऽग्नये सप्तवते चेदं० । ततः संस्रावहोमादिशेषं समाप्य जातारण्यग्नौ गृह्याग्नौ वा एतच्छांतिकरणपक्षेऽग्निं समारोप्य रुद्रकुंभं दक्षिणतः स्पृशन् त्र्यंबकमंत्रं शतवारं जपेत् । याजुषत्वादिनिमित्तकं च पूर्ववद्रुद्रैकादशिन्यादिकमपि । अत्रापि संख्याविकल्पः पूर्ववत् । ततो रुद्रादीन्धूपादिपुष्पांजल्यंतोपचारैः पूजयेत् । तत्र निर्ऋतये पूर्वोक्तधूपदीपनैवेद्यानि । ततः सादरमभिषेकार्थं प्रसीदंतु भवंत इति रुद्रादीन्प्रसादयेत् । शांत्या सह ग्रहमखो न कृतश्चेदिदानीं पृथक्त्केन कृत्वाभिषेकं कुर्यात् । सर्वकुंभोदकं कस्मिंश्चित्पात्रे आदाय स्वतिकचर्मपीठनिर्मिते भद्रासने उपविष्टं पत्न्यादिसहितं यजमानमाचार्यादयस्तेनोदकेन प्रतिमंत्रमभिषिंचेयुः । तेच मंत्राः । अक्षीभ्यामितिषडृचस्य सू० । यदंतियच्चेतिद्वादशानां वसिष्ठो विश्वेदेवा गायत्री सप्तम्यंत्ये चानुष्टुभः । आपोहिष्ठेतिनवर्चस्य० । आपइद्वाइति द्वयोः क्रमेण भार्गवो जमदग्निर्मैत्रावरुणिर्वसिष्ठ आपोनुष्टुप् । अनयोः स्थाने यतइंद्रेतिद्वयं वा । यतइंद्रेतिद्वयोः प्रागाथो भर्ग इंद्रो बार्हतः प्रगाथः । सहस्राक्षेणेति तिसृणां प्राजापत्यो यक्ष्मनाशनो विश्वेदेवास्त्रिष्टुबंत्यानुष्टुप् । अभिषे० । देवस्यत्वा० द्यायेत्येकेन यजुषा त्रिभिर्वा याजुषैः । तेच । देवस्यत्वा० भ्याᳬसरस्वत्यैभैषज्येन वीर्यायान्नाद्यायाभिषिं० चामि । देवस्य भ्यामश्विनोर्भैषज्येन । तेजसेब्रह्मवर्चसायाभि० । देव० भ्यामिंद्रस्येंद्रियेण । श्रियैयश-

सेबलायाभि० । यज्जाग्रतइतिषण्णा० । योसौ वज्रधरो देवो महेंद्रो गजवाहनः । मूलजातशिशोर्दोषं मातापित्रोर्व्यपोहतु । १ । योसौ शक्तिधरो देवो हुतभुङ् मेषवाहनः । सप्तजिह्वश्च देवोग्निर्मूलदोषं व्यपोहतु । २ । योसौ दंडधरो देवो धर्मो महिषवाहनः । मूलजातशिशोर्दोषं व्यपोहतु यमो मम । ३ । योसौ खड्गधरो देवो निर्ऋती राक्षसाधिपः । प्रशामयतु मूलोत्थं दोषं गंडांतसंभवं । ४ । योसौ पाशधरो देवो वरुणः सलिलेश्वरः । नक्रवाहः प्रचेतानो मूलोत्थावं व्यपो० । ५ । योसौ देवो जगत्प्राणो मारुतो मृगवाहनः । प्रशामयतु मूलोत्थं दोषं बालस्य शांतिदः । ६ । योसौ निधिपतिर्देवः खड्गभृद्वाजिवाहनः । मातापित्रोः शिशोश्चैव मूलदोषं व्य० । ७ । योसौ पशुपतिर्देवः पिनाकी वृषवाहनः । आश्लेषामूलगंडांतदोषमाशु व्यपो० । ८ । विघ्नेशः क्षेत्रपो दुर्गा लोकपाला नवग्रहाः । सर्वदोषप्रशमनं सर्वे कुर्वंतु शांतिदाः । ९ । ततो ग्रहादिमंत्रैरभिषिच्य तच्छंयोरितिबार्ह० । ततो वस्त्रांतरितमुखाभ्यां निर्ऋतिरुद्रकुंभाभ्यामभिषिक्तो यजमानः शुक्लवस्त्रगंधमाल्यधर आचार्यादीन् गंधादिभिः संपूज्याचार्याय सवत्सां पयस्विनीं धेनुं दद्यात् । तेन देवताविसर्जने कृते तस्मै निर्ऋतिप्रतिमां कुंभवस्त्रहिरण्यसहितां वस्त्राद्युपस्करसहिता ग्रहप्रतिमाश्च दद्यात् । रुद्रजापिने कृष्णमनड्वाहं सोपस्करां रुद्रप्रतिमां च दद्यात् । धेन्वनडुहोरसंभवे मूल्यं दशकार्षापणाधेनावष्टावनडुहिस्मृता इत्युक्तं देयं । एतावदसंभवे यथाशक्ति । इतरेभ्य ऋत्विग्भ्यो यथाशक्ति दक्षिणा । तत्राप्याचार्यार्धं ब्रह्मणे तदर्धं सदस्याय तदर्धमृत्विग्भ्य इति व्यवस्था । ततो ब्राह्मणान्प्रणम्य क्षमध्वमिति क्षमाप्य शतं पंचाशतं दश वा ब्राह्मणान्भोजयिष्यामीति संकल्पयेत् । तेच शांतिपाठपूर्वकं भुक्त्वाशिषो दद्युः । यजमानो निर्ऋतिः प्रीयतामिति क्षमाप्य यस्यस्मृत्येत्युक्त्वा आभिर्गीर्भिरिति जपित्वाचम्य कृतं कर्मेश्वरायार्पयेत् । अत्र गंडांतोत्पत्तौ विशेषः । कर्ता जन्मतो द्वादशाहे

आचमनादिदेशकालस्मरणांते अस्य शिशोः मूलनक्षत्रगंडांतजननसूचितसर्वारिष्टपरि० इदं धेनुप्रत्याम्नायभूतं अ० द्रव्यं ब्राह्मणायसंप्रददे । तथा मम गंडांतजातशिशुनिरीक्षणेन उत्पत्स्यमानसकलाऽशुभनिरासपूर्वकं शिशुदर्शनस्य शुभतासिद्ध्यर्थं इदं सुवर्णं ( तन्निष्क्रयद्रव्यं वा ) ब्राह्मणाय० । एवमाश्लेषादिगंडांतेऽपि धेनुदानं शांतिकात्पूर्वं शिशुदर्शने च तन्निमित्तं सुवर्णदानमपि कृत्वा गंडांतशांतिसहितां नक्षत्र शांतिं कुर्यात् । इति मयूखानुसारी मूलशांतिप्रयोगः ॥ एतच्छांतिमूलभूते शौनककारिकाख्यग्रंथेऽस्यामेव शांतौ विशिष्टविधिबोधकाः केचिदधिकाः श्लोका उपलभ्यंते । तेच निबंधकारैः सर्वैरनुक्ता अपि सुधियां पर्यालोचनार्हा इति मत्वाऽत्र लिखिताः । तेचेत्थं । बालं मूलसमीपे च त्यक्त्वा माता पराङ्मुखी । गृहीत्वा ब्राह्मणैर्बालं तन्मातुस्तेऽर्पयंति च ॥ बालेऽस्माभिरयं बालो युष्मद्दत्तः प्रगृह्यतां । दीर्घायुरपि बालोयं पूर्ववत्कुलवर्धनः ॥ एवं त्यागविधिं कृत्वा ततोऽभिषेकमारभेत् । अभिषेकविधिं० ॥ वारुणै रुद्रसूक्तैश्च आनोभद्रेतिशांतितः । ऐंद्रेण चाऽभिषेकेण शंनोवातेतिशांतितः ॥ आपोहिष्ठेति० । कांस्यपात्रस्थिते चाज्ये स्वरूपं च निरीक्षयेत् । सभार्यो यजमानश्च रूपंरूपंप्रतीत्यृचा ॥ तत्पात्रं दक्षिणायुक्तं ब्राह्मणाय निवेदयेत् । यजमानो दक्षिणाभि० ॥ चतुर्दिक्स्थापितान्कुंभांस्तेभ्यस्तेभ्यः प्रदापयेत् । इतरेभ्योपि० ॥ )

॥ अथ मदनरत्ने पितामहसंहितोक्ता मूलाश्लेषाशांतिः । मूलादौ च द्विघटिका ज्येष्ठांते च तथैव च । अभुक्तमूलं तज्ज्ञेयं तत्र जातं शिशुं त्यजेत् ॥ मूलस्यादौ पितुर्गंडं मातुर्गंडं द्वितीयकं । तृतीयं धनधान्यस्य अंत्यपादः शुभावहः ॥ विपरीतं फलं सर्वमाश्लेषास्वपि मूलवत् । शूलो व्याघातवज्रौ च व्यतीपातश्च वैधृतिः ॥ परिघं वारदोषश्च विष्टिश्च विषनाडिकाः । अवयोगादिकैर्युक्ते मूले दोषोऽधिको भवेत् ॥ अथातः संप्रवक्ष्यामि शांतिकर्मविधिं शुभं । निष्केण वा यवानष्टौ सुवर्णेन च निर्ऋतिं ॥ ( अष्टयवपरिमित सुवर्णेन वेत्यर्थः ) सर्पभे यदि

गंडं च कुर्यात्सर्पाकृतिं बुधः। कुंडं कुर्याद्धस्तमात्रं आयामे च तथैव च ॥ मेखलात्रयसंयुक्तं योन्या चैव समन्वितं। मंडपं कारयेत्तत्र यथाविभवसारतः ॥ पुण्याहं वाचयित्वा तु सुसंकल्प्य यथाविधि। अलंकृतांश्चतुःसंख्यानृत्विजो वरयेद्बुधः ॥ आचार्यं वरयेत्पश्चाद्वस्त्रादि-भिरलंकृतं। आनीय चतुरः कुंभान्कृष्णवर्णान्सुशोभनान् ॥ शतच्छिद्रसमायुक्तं बृहत्कुंभं सुशोभनं। सूत्रेण वेष्टितं मध्ये धान्यस्योपरि वि-न्यसेत् ॥ शतमूलानि पुण्यानि रत्नानि नवसंख्यया। मृत्तिका दशसंख्याकास्तथा पल्लवपंचकं ॥ पंचवृक्षकषायांश्च पंचगव्यं तथैव च। पंचसौगंधिकं चैव पुण्यं लोहत्रयं तथा ॥ तथा धान्यानि सर्वाणि कुशान्दूर्वास्तथैव च। तीर्थोदकानि सर्वाणि सर्वकुंभेषु विन्यसेत् ॥ मू-लानि नामतो वक्ष्ये शतसंख्यानि यानि च। सहदेवी शिखा पुंखा विष्णुक्रांता पुनर्नवा ॥ चंद्रवृक्षोऽसिका गुंजा दुग्धिका च तथा ब-ला। काकबंधुर्यवा दूर्वा काकमाची शतावरी ॥ कर्करं सुरसं ब्राह्मी निर्गुंडी मुसली वचा। वर्षाभूः शंखिनी पाठा समंगा बृहतीद्वयं ॥ अपामार्गः कुशा भृंगः कासखंडकरूषकाः। श्रीवृक्षेंद्रयवप्लक्षा ब्रह्मवृक्षोऽथ चाऽऽम्रकः ॥ जंबूबिल्वौ मुरा मांसी निंबाऽरिष्टनिशाद्वयं। के-तकी कदली तालः श्रीपर्णी शल्लकी तथा ॥ पाटला लोध्रकोशीरं कोशातक्यग्निमंथकः। जीवंती दाडिमी शालस्तमालं बीजपूरकं ॥ पुंनागो बकुलः कुंदो मधुरो मुचुकुंदकः। मुद्गमाषबलाश्चैव नद्यावर्तः कुरंटकः ॥ चंपकः कुब्जका कुष्ठं गुडूच्यामलकी तथा। प्रियंगुश्चं-दनं दाली देवदारुः शिरीषकं ॥ मुद्गली हेममाक्षी च शताह्वा तामली तथा। उशीरं बालखदिरं करंजं च तथैव च ॥ बदरोऽश्वत्थवृक्षश्च कराह्वा ग्रंथिपर्णिका। रास्ना च शंखिनी चैव नागाह्वा पोतकी तथा ॥ कमलं कुमुदं कोशो नीलोत्पलबृहद्द्वयं। एतानि शतमूलानि सर्वारिष्टहराणि च ॥ अभावे शतमूलानां सर्वौषध्यो विनिक्षिपेत्। सर्वौषधीनां चाऽभावे दशौषध्यो विनिक्षिपेत् ॥ अभावे दशमूलानां

हेममात्रं विनिक्षिपेत् । देवदारुर्निशायुग्मं पद्मं नीलोत्पलं तथा ॥ कुष्ठं रौद्रं प्रियंगुं च तगरं मूलमेव च । धात्रीफलं वचा कर्णी सर्षपा नागरं तथा ॥ मुरा मांसी तथा चंडी उशीरं वालकं तथा । शैलजं गृध्रपर्णी च श्रीखंडं तालकं तथा ॥ सिद्धिवृद्धिसमायुक्ताः सर्वौषध्यः प्रकीर्तिताः ॥ कुष्ठं मांसी हरिद्रे द्वे मुरा शैलेयचंदनं । वचा कर्चूरमुस्ते च सर्वौषध्यो दश स्मृताः ॥ याओषधीरितिमंत्रेण औषधानि विनिक्षिपेत् । सहिरत्नानिमंत्रेण नवरत्नानि निक्षिपेत् ॥ उद्धृतासीति मंत्रेण मृदमादाय विन्यसेत् । प्रवोयज्ञेषु मंत्रेण पल्लवानि विनिक्षिपेत् ॥ रुवतिभीममंत्रेण त्वचः पंच विनिक्षिपेत् । गायत्र्याद्यैः पंचगव्यं कांडात्कांडाच्च दूर्वकाः ॥ मधुवातेति च मधु स्वादुःपवस्व शर्करां । कलशस्य मुखे ब्रह्मा मध्ये रुद्रो ह्यधो हरिः ॥ सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः । आयांतु यजमानस्य दुरितक्षयकारकाः ॥ इमंमेवरुणेत्याद्यं तत्त्वायामि द्वितीयकं । त्वंनोअग्ने तृतीयं च सत्वंनोअग्ने चतुर्थकं ॥ आचार्यो मूलमंत्रेण बृहत्कुंभं प्रपूजयेत् । मूलंप्रजामिति मूले सार्पेदंसर्प इत्यपि ॥ शतच्छिद्रस्य पुरतो देवं तत्रैव पूजयेत् । निर्ऋतिं सर्पनाथं च वस्त्रयुग्मेन वेष्टयेत् ॥ इंद्रादिलोकपालांश्च स्वेन मंत्रेण पूजयेत् । एवं पूजां च निर्वर्त्य होमकर्म ततश्चरेत् ॥ समिदाज्येन चरुणा तिलैः सम्यक् च होमयेत् । अष्टोत्तरसहस्रं वा अष्टोत्तरशतं तु वा ॥ मूलंप्रजामित्यष्टौ च होमवाक्यान्यनुक्रमात् । अनुहोमं ततः कुर्यादाज्येन चरुणा सह ॥ प्रजापतये स्वाहा मूलाय स्वाहा । प्रजायै स्वाहेति । इदंसर्पेभ्य इति च वाक्यान्यष्टौ तु सार्पभे । सर्पेभ्यः स्वाहाश्रेषाभ्यः स्वाहा । दंदशूकेभ्यः स्वाहेति । तिलैर्व्याहृतिहोमं च कारयेत्सुसमाहितः । पूर्णाहुतिं च जुहुयादभिषेकं च कारयेत् ॥ उत्क्षिप्य च शतच्छिद्रं धारयेच्छिरसोपरि । शतच्छिद्रे क्षिपेयुस्ते मंत्रैर्वारुणसंभवैः ॥ समुद्रज्येष्ठादिमंत्रैर्देवस्यत्वा तथैव च । शिरोमेश्रीरिति मंत्रेणापोहिष्ठादिभिस्त्रिभिः ॥ पुनंतुमांदे-

वजना मंत्रैस्त्रातारमित्यथ । द्यौःशांतेत्यादिभिर्मंत्रैर्मानस्तोकेतिमंत्रतः ॥ आर्द्रवासांसि संत्यज्य आचार्याय निवेदयेत् । आज्यावलोकनं कृत्वा सद्दिप्राय निवेदयेत् ॥ आचार्याय वृषं दद्यादयःपिंडं तथैव च । सर्वाऽलंकारसंयुक्तां सवत्सां गां सदक्षिणां ॥ तदर्धं ब्रह्मणे दद्याहत्विग्भ्योऽपि तदर्धतः । ब्राह्मणान्भोजयेत्पश्चाद्यथाशक्त्यनुसारतः ॥ अनेन विधिना शांतिं यः कुर्यात्प्रीतिमान्नरः । आयुरारोग्यमैश्वर्यं तस्य शांतिर्भवेद्ध्रुवं ॥ इति मदनरत्ने मूलाश्लेषाशांतिः ॥ ॥ अथ शौनकोक्ताश्लेषाशांतिः । तत्र पादफलं प्रागुक्तं । जपार्णवे । मूर्धाऽऽस्यनेत्रगलकांऽसयुगं च बाहुहृज्जानुगुह्यपदमित्यहिदेहभागाः । बाणा ५ ऽद्रि ७ नेत्र २ हुतभुक् ३ श्रुति ४ नाग ८ रुद्र ११ षण् ६ नंद ९ पंच ५ शिरसः क्रमशस्तु नाड्यः ॥ राज्यं पितृक्षयो मातृनाशः कामक्रियारतिः । पितृभक्तो बली स्वघ्नस्त्यागी भोगी धनी क्रमात् ॥ विशेषस्तु निर्णयसिंधौ ज्ञेयः । शांतिमाह शौनकः । आश्लेषायां तु जातानां शांतिं वक्ष्याम्यतः परं । जातस्य द्वादशाहे च शांतिहोमं समाचरेत् ॥ असंभवे तु जन्मर्क्षे अन्यस्मिन्वा शुभेऽहनि । स्नातोऽभ्यंगादिभिस्तस्मिन्वरयेत्तु द्विजोत्तमान् ॥ ( ऋत्विक्संख्या तु मूलशांतिवत् ) विभवे पंचकुंभांस्तु द्वयं वा तदलाभतः । देवतास्थापने चैकमेकं रुद्राऽभिमंत्रणे ॥ " शां० सा:० चतुर्विंशतिदलोपरि प्रधानदेवतास्थापनार्थमेको द्वितीयश्चतुःप्रस्रवणः " मूलर्क्षोक्तप्रकारेण कुंभे निक्षिप्य पूजयेत् । " शां० सा० चतुप्रस्रवणे पंचरत्नादि चतुर्विंशद्दलस्थे च शतमूलानीत्यर्थः " गोमयालेपिते देशे धात्वाद्यैः [धान्याद्यैः] परिशोभिते ॥ पंकजं कारयेत्तत्र चतुर्विंशद्दलान्वितं । तंडुलैः कारयेच्चद्वा रक्तपीतसिताऽसितैः ॥ कर्णिकायां न्यसेद्व्रीहीन् स्थापयेत्तेषु कुंभकं । आकलशेष्वित्यनया कलशस्थापनं स्मृतं ॥ इमंमेगंगेमंत्रेण पूरयेत्तीर्थवारिणा । कुंभं च गंधवस्त्राद्यैस्तत्तन्मंत्रैः प्रपूजयेत् ॥ ( पूजयेदलंकुर्यादित्यर्थः ) याःफलिनीरित्यनया क्षिपेद्रत्नौषधादिकान् । कुं-

भोपरिस्थपात्रे तु आश्लेषाप्रतिमां यजेत् ॥ " शां० म० आश्लेषाप्रतिमां सर्पाख्यां " निष्कनिष्कार्धपादैर्वा कारयित्वा स्वशक्तितः । तत्पूर्वोत्तरनक्षत्रे दक्षिणोत्तरयोर्यजेत् ॥ ऐंद्रादैशानपर्यंतमितरर्क्षाणि पूजयेत् । (पूर्वफल्गुन्यादिपुनर्वस्वंतानीत्यर्थः) " शां० सा० नक्षत्रदेवता इति केचित् " मूलोक्तेन विधानेन कुंभयोरभिमंत्रणं ॥ रुद्रार्चा रुद्रकुंभे तु पूर्ववच्छेषमाचरेत् । " शां० सा० पंचामृतस्नानादि सुरादिनैवेद्यांतमित्यर्थः " नमोअस्तुसर्पेभ्यः पूजामंत्र इतीरितः ॥ सर्पो रक्तस्त्रिनेत्रश्च द्विभुजः पीतवस्त्रकः । फलकाऽसिधरस्तीक्ष्णो दिव्याभरणभूषितः ॥ एवं ध्यात्वा ततोऽभ्यर्च्य होमकर्म समारभेत् । कर्तुः शाखोक्तमार्गेण आचार्यस्याऽथवा चरेत् ॥ मुखांतं कर्म निर्वर्त्य हविरादाय शास्त्रतः । इदं सर्पेभ्यो जुहुयात्साऽधिप्रत्यधिदैवतं ॥ " शां० सा० इदं हविः " अष्टोत्तरशतं वाऽथ अष्टाविंशतिमेव वा । मूलनक्षत्रवच्छेषं होमकर्म समाचरेत् ॥ पूर्णाहुत्यंतकर्माणि कृत्वा संपातकं तथा । संपातश्चाऽऽज्यहोमेषु । कुंभे जलेषु प्रक्षिप्य अभिषेकमथाचरेत् ॥ " शां० सा० पूर्णाहुत्यंतेत्युक्त्या रुद्रकुंभादौ पुनः रुद्रादिजपो नास्ति " दारपुत्रसमेतस्य यजमानस्य पूर्ववत् । अभिषिंचेत्तथाचार्य ऋत्विग्भिः सहितस्ततः ॥ अभिमंत्रितकुंभाद्भिरभिषेकं समाचरेत् । तथा पौराणमंत्रैश्च पल्लवैरभिषेचयेत् ॥ आश्लेषाऋक्षजातस्य मातापित्रोर्धनस्य च । भ्रातृज्ञातिकुलस्थानां दोषं सर्वं व्यपोहतु ॥ योऽसौ वागीश्वरो नाम अधिदेवो बृहस्पतिः । मातापित्रोः शिशोश्चैव गंडांतं च व्यपोहतु ॥ पितरः सर्वभूतानां रक्षंतु पितरः सदा । सार्पनक्षत्रजातस्य वित्तं च ज्ञातिबांधवान् ॥ एवं कृतेऽभिषेके तु सार्पशांतिर्भवेद्ध्रुवं । ततः शुक्लांबरधरो यजमानः सुभूषितः ॥ दक्षिणाभिस्ततो विप्रान् मूलवच्च प्रतोषयेत् । भुक्तवद्भ्यश्च विप्रेभ्यः स्वीकुर्यादाशिषं गृही ॥ इत्युक्तेन विधानेन सर्वारिष्टं व्यपोहति । सर्वे कामाश्च सिध्यंति वेदोक्तायुर्भविष्यति ॥ अर्घ्यमंत्रमाह । सर्पाधीश नमस्तुभ्यं नागानां च

गणाधिप । गृहाणार्घ्यं मयादत्तं सर्वारिष्टप्रशांतये ॥ मूलनक्षत्रवत्कुर्यात्सार्पगंडे स्वनामतः । ( अभिषेके मूलशब्दस्थाने सार्पशब्द ऊह्य इत्यर्थः ) " शां० सा० यद्वा मूलगंडांते यथा गंडांतशांतिर्भिन्ना एवमत्रापि । ज्योतिर्निबंधे तु शांतौ विशेष उक्तः । नागप्रतिकृतिं कुर्यात्सौवर्णीं पलमानतः । अथवा शक्तितः कुर्याद्वित्तशाठ्यं विवर्जयेत् ॥ कद्रुद्रायप्रचेतस इति मंत्रं विशेषतः । नैवेद्यमामिषं चास्ति पूजादानकृतिः समा ॥ अयुतं हवनं चाऽत्र तिलैः साज्यैः प्रधानकैः । ब्रह्मवृक्षस्य समिधः शतमष्टोत्तरं शुभा इति " ॥ इति शौनकोक्ताश्लेषाशांतिः ॥

॥ अथ शौनकोक्त आश्लेषाशांतिप्रयोगः । द्वादशाहे तदसंभवे जन्मर्क्षेऽन्यस्मिन् शुभे दिने वा प्रातर्नित्यविधिं कृत्वा सपत्नीकस्तैलाभ्यंगोद्वर्तनादिना स्नातो गोमुखप्रसवं विधाय द्विराचमनादिदेशकालस्मरणांते अस्य शिशोः आश्लेषानक्षत्रजननसूचितसकलारिष्टपरिहारद्वारा श्री० सग्रहमखां शौनकोक्तां शांतिं करिष्ये । इति संकल्प्य गणेशपूजनादिऋत्विग्वरणांतं कुर्यात् । तत्र ऋत्विजोऽष्टौ चत्वारो वा । तत आचार्यः प्रादेशकरणांते मूलशांत्युक्तप्रकारेण कुंभपंचके चतुःप्रस्रवणे एककुंभे वा रुद्रवरुणयोरावाहनादिपूजनं विधाय रुद्रैःकादशिन्यादिशांतिसूक्तजपांते रुद्रकुंभोत्तरभागे गोमयेनोपलिप्ते धान्यादिभिः परितः शोभिते शुद्धतंडुलैः रक्तपीतसितकृष्णपिष्टकैर्वा चतुर्विंशतिदलान्वितं पंकजं विरच्य तत्कर्णिकायां महीद्यौरिति भूमिं स्पृष्ट्वा ओषधयःसमिति व्रीहिराशिं कृत्वा आकलशेष्विति कलशं संस्थाप्य इमंमइति तीर्थोदकेनापूर्य गंधद्वारामिति गंधपुष्पाणि प्रक्षिप्य युवासुवासाइति वस्त्रेणावेष्ट्य कांडात्कांडादिति दूर्वाः अश्वत्थेवइति पंचपल्लवान् स्योनेति सप्तमृदः आपोहिष्ठेति पंचगव्यं ओषधयःसमिति यवान् याओषधीरिति सर्वौषधीश्च निक्षिप्य याःफलिनीरित्यादिपूर्णपात्रनिधानांतं कृत्वा तदुपरि साष्टदलवस्त्रे उक्तलक्षणप्रतिमायां नमोअस्तु वामदेवः सर्पा अनुष्टुप् । सर्पावा० । नमोअस्तुसर्पेभ्यो० । ( अयं

मंत्रो बह्वृचैः खिलस्थो ग्राह्यः ) इति सर्पानावाह्य सर्पो रक्तस्त्रिनेत्रश्च द्विभुजः पीतवस्त्रकः । फलकाऽसिधरस्तीक्ष्णो दिव्याभरणभूषितः इ-
त्युक्तरूपान्ध्यात्वा तद्दक्षिणे बृहस्पते गृत्समदो० इति बृहस्पतिं। उत्तरे आहंपितॄन् शंखः पितरस्त्रिष्टुप् । पित्रावा०इति पितॄंश्चावाह्य चतुर्विंश-
तिदलेषु पूर्वदलमारभ्य प्रादक्षिण्येन पूर्वफल्गुन्यादिपुनर्वस्वंतानि नक्षत्राणि तद्देवता वा स्थापयेत् । भगायनमः भगमावाहयामि । एवम-
ग्रेऽपि । अर्यम्णे० सवित्रे० त्वष्ट्रे० वायवे० इंद्राग्निभ्यां० मित्राय० इंद्राय० निर्ऋतये० अद्भ्यो० विश्वेभ्योदेवेभ्यो० विष्णवे० वसुभ्यो०
वरुणाय० अजायैकपदे० अहयेबुध्न्याय० पूष्णे० अश्विभ्यां० यमाय० अग्नये० प्रजापतये० सोमाय० रुद्राय० अदित्यै० । ततः परितः
नाममंत्रैरिंद्रादिलोकपालानावाह्योक्तमंत्रैः षोडशोपचारैः सर्वान्पूजयेत् ( मयूखादौ तु लोकपालावाहनं नोक्तं । युक्तं चेदं । मूले तस्याऽ
नुपलंभात् ) तत आचार्यः रुद्रकुंभान्नैर्ऋतप्रदेशे यजमानशाखया स्वशाखया वा स्थंडिलेऽग्निं प्रतिष्ठाप्य स्थापितकुंभोत्तरतो ग्रहस्थाप-
नादि कलशप्रार्थनांतं कृत्वाऽन्वादध्यात् । तत्र ग्रहादिदेवतोत्कीर्तनांते प्रधानदेवं सर्पान् घृताक्तपायससमिदाज्यचरुभिः प्रतिद्रव्यं अ-
ष्टोत्तरशतसंख्याहुतिभिः अष्टाविंशतिसंख्या भिर्वा । बृहस्पतिं पितॄंश्च तैरेव द्रव्यैः प्रत्येकं प्रतिद्रव्यं अष्टाविंशतिसं० । अष्टसंख्याभिर्वा ।
भगादिचतुर्विंशतिदेवताः पायसेन प्रत्येकं अष्टाष्टसंख्या० । रक्षोहणमग्निं कृसरेणेत्याद्याज्यभागहोमांतं मुख्यदेवतापूजावर्जं मूलशांतिवत्कृ-
त्वा यजमानेन त्यागे कृते सर्त्विगाचार्यो यथाऽन्वाधानं होमं कुर्यात् । तत्र ग्रहादिहोमोत्तरं प्रधानाज्यहोमेषु प्रत्याहुति उत्तरतःस्थापित-
जलकुंभे संपाताख्यमाज्यशेषं प्रक्षिपेदिति विशेषः । सर्पादित्रयहोमे तु पायसचर्वोरवदानधर्मः । ततः स्विष्टकृदादिप्रायश्चित्तहोमांते लो-
कपालादिभ्यो रुद्राय सर्पेभ्यो बृहस्पतये पितृभ्यः क्षेत्रपालाय च बलीन् दद्यात् । तत आचार्यो यजमानो वा मूलशांतिवत्पूर्णाहुतिं जु-

हुयात् । तत आचार्यः संस्रावहोमादिकर्मशेषं समाप्य रुद्रकुंभं दक्षिणतः स्पृशन् त्र्यंबकमिति मंत्रं शतवारं जप्त्वा रुद्रैकादशिन्यादिकमपि जपेत् । ततो रुद्रं सर्पादिदेवतात्रयं च पंचोपचारैः संपूज्य त्र्यंबकं नमोअस्त्विति चोपस्थाय भवत्प्रसादेन यजमानाभिषेकं करिष्ये इति तान्प्रार्थयेत् ( रुद्रजपादिप्रार्थनांतं तु मूलेऽनुपलब्धत्वादनादेयमिति भाति । शांतिसारस्थव्याख्याशयोऽप्येवं ) ततः सर्वकलशोदकं संपातोदकं च पात्रांतरे आदाय ऋत्विग्भिः सह पत्नीशिशुसहितं धृतनववस्त्रं यजमानं मूलशांत्युक्तरीत्याऽभिषिंचेत् । तत्र अक्षीभ्यामित्यादियज्जाग्रतइत्यंते । योसौ वज्रधरो देवो महेंद्रो गजवाहनः । सार्पजातशिशोर्दोषं मातापित्रोर्व्यपोहतु । १ । योसौ शक्तिधरो देवो हुतभुङ् मेषवाहनः । सप्तजिह्वश्च देवोग्निः सार्पदोषं व्यपोहतु । २ । योसौ दंडधरो देवो धर्मो महिषवाहनः । सार्पजातशिशोर्दोषं व्यपोहतु यमो मम । ३ । योसौ खड्गधरो देवो निर्ऋती राक्षसाधिपः । प्रशामयतु सार्पोत्थं दोषं गंडांतसंभवं । ४ । योसौ पाशधरो देवो वरुणः सलिलेश्वरः । नक्रवाहः प्रचेतानः सार्पोत्थाघं व्यपोहतु । ५ । योसौ देवो जगत्प्राणो मारुतो मृगवाहनः । प्रशामयतु सार्पोत्थं दोषं बालस्य शांतिदः । ६ । योसौ निधिपतिर्देवः खड्गभृद्वाजिवाहनः । मातापित्रोः शिशोश्चैव सार्पदोषं व्यपोहतु । ७ । योसौ पशुपतिर्देवः पिनाकी वृषवाहनः । आश्लेषामूलगंडांतदोषमाशु व्यपोहतु । ८ । विघ्नेशः क्षेत्रपो दुर्गा लोकपाला नवग्रहाः । सर्वदोषप्रशमनं सर्वे कुर्वंतु शांतिदाः । ९ । आश्लेषाऋक्षजातस्य मातापित्रोर्धनस्य च ॥ भ्रातृज्ञातिकुलस्थानां दोषं सर्वं व्यपोहतु । १० । योसौ वागीश्वरो नाम अधिदेवो बृहस्पतिः । मातापित्रोः शिशोश्चैव गंडांतं स व्यपोहतु । ११ । पितरः सर्वभूतानां रक्षंतु पितरः सदा । सार्पनक्षत्रजातस्य वित्तं च ज्ञातिबांधवान् । १२ । ततो ग्रहादिमंत्रैः सुरास्त्वामित्यादिश्लोकैस्तच्छंयोर्देवस्यत्वेतिमंत्राभ्यां चाभिषेकांते तूष्णीं शतच्छि-

द्रांतर्धानेनाभिषिंच्य वस्त्रवेष्टितमुखाभ्यां रुद्रसर्पकुंभाभ्यामवशिष्टजलेनाभिषिंचेत् । ततो यजमानो धृतशुक्लांबरगंधमाल्यः स्नानवस्त्रमाचार्याय दत्वा विभूतिं धृत्वा रुद्रादीनामुत्तरपूजांते ताम्रपात्रे गंधाक्षतपुष्पफलादियुक्तमर्घ्यमादाय । सर्पाधीश नमस्तुभ्यं नागानां च गणाधिप । गृहाणार्घ्यं मया दत्तं सर्वारिष्टप्रशांतये इति दत्वा आचार्यादीन्संपूज्य तेभ्यो दक्षिणादानादि सर्वं मूलशांतिवत्कृत्वा कर्म समापयेत् । इति कमलाकरभट्टकृते शांतिरत्ने आश्लेषाशांतिप्रयोगः ॥ ॥ अथ नक्षत्रविशेषफलमुक्तं नृसिंहप्रसादे । चित्राद्यार्धे पुष्यमध्यद्विपादे पूर्वाषाढाधिष्ण्यपादे तृतीये । जातः पुत्रश्चोत्तराद्ये विधत्ते मातापित्रोर्भ्रातुरायुष्यनाशं ॥ सर्वनक्षत्रेषु फलावधिस्तत्रैव । द्विमासं चोत्तरादोषः पुष्ये चैव त्रिमासकः । पूर्वाषाढाऽष्टमे मासि चित्रा षाण्मासिकं फलं ॥ नवमासं तथाऽऽश्लेषा मूले चैवाऽष्टवर्षकं । ज्येष्ठा पंचदशे मासि पुत्रदर्शनवर्जिता ॥ यत्र शांतिर्नोक्ता तत्र ग्रहमखः कार्यः । तस्माच्छांतिं प्रकुर्वीत ग्रहाणां क्रूरचेतसामिति वसिष्ठेन सर्वशेषत्वोक्तेः ।

॥ अथैकनक्षत्रशांतिः ॥ वृद्धगर्गः । एकस्मिन्नेव नक्षत्रे भ्रात्रोर्वा पितृपुत्रयोः । प्रसूतिश्चेत्तयोर्मृत्युर्भवेदेकस्य निश्चयः ॥ " सं० कौ० भ्रात्रोः पितृपुत्रयोरित्यत्र पुंस्त्वमविवक्षितं । निमित्तविशेषणत्वात् । एकोदरयोर्जन्यजनकयोश्चैकनक्षत्रजनने शांतिरित्याशयः " भ्रात्रोर्भ्रातृभगिन्योरित्यर्थः । पितृपुत्रयोः पित्रोर्नक्षत्रे पुत्रदुहित्रोर्यदि प्रसूतिरित्यर्थः । भ्रात्रोः पुत्रयोरित्यत्र भ्रातृपुत्रौस्वसृदुहितृभ्यामित्येकशेषः । पित्रोरित्यत्र पितामातृभ्यामित्येकशेषः । मध्यमपदलोपी असमर्थश्च समासश्छांदसः । ज्योतिर्निबंधे । समानभे यदा देवि पितापुत्रौ च सोदरौ । भगिन्यौ वा स्वसा बंधुस्तदा पूर्वस्य नाशनं ॥ तद्दोषनाशाय तदा प्रशस्तां शांतिं च कुर्यादभिषेचनं च । संपूज्य ऋक्षप्रतिमां तदग्रे दानं च कुर्याद्विभवाऽनुरूपमिति ॥ तत्र शांतिं प्रवक्ष्यामि सर्वाचार्यमतेन तु । शुभर्क्षे शुभवारे च चंद्रताराबलान्विते ॥ रिक्ताविष्टिविवर्ज्ये

तु प्रारभेद्दिवसेसुधीः । आचार्यं वरयेत्पूर्वं चतुरोऽथ द्विजोत्तमान् ॥ " सं० कौ० पूर्वं विधित्सितपुण्याहवाचनात् । अतएव वाचयित्वे-
त्यानंतर्यार्थमुत्तरत्र " पुण्याहं वाचयित्वा तु शांतिकर्म समारभेत् ॥ अग्नेरीशानदिग्भागे नक्षत्रप्रतिमां ततः । तत्तदृक्षोक्तमंत्रेण पूजयेत्क-
लशोपरि ॥ नक्षत्रमंत्रा आपस्तंबशाखायामष्टवाक्येषु प्रसिद्धाः । नक्षत्रदेवतां वा पूजयेत् । नक्षत्रदेवता पूज्या त्वधिप्रत्यधिपूर्वकमिति ज्यो-
तिर्निबंधोक्तेः । रक्तवस्त्रेण संछाद्य वस्त्रयुग्मेन वेष्टयेत् । स्वशाखोक्तेन मार्गेण कुर्यादग्निमुखं ततः ॥ अनेनैव तु मंत्रेण हुनेदष्टोत्तरं शतं ।
तत्तदृक्षोक्तेनेत्यर्थः । प्रत्येकं समिदन्नाज्यैः प्रायश्चित्तांतमेव च । ज्योतिर्निबंधे तु । भक्त्या हरिहरौ देवौ स्वर्णरूप्यमयौ शुभौ । ( संपूज्येति
शेषः ) विविधस्याऽस्य विश्वस्य पितरौ विश्वतोमुखौ । प्रीयेतां मूर्तिदानेन देवौ हरिहरावुभौ ॥ दानं होमविधेः पश्चाद्दानादन्वभिषेचन-
मिति । अभिषेकं ततः कुर्यादाचार्यः पितृपुत्रयोः ॥ " शां० सा० पितृग्रहणमुपलक्षणं । यन्नक्षत्रे जन्म तेन सह बालस्याऽभिषेक इ-
त्यर्थः " वस्त्राऽलंकारगोदानैराचार्यं पूजयेत्पुनः । ऋत्विजां दक्षिणां दद्यान्माषत्रयसुवर्णकं ॥ देवताप्रतिमादानं धान्यवस्त्रादिभिः सह ।
यानशय्यासनादीनि दद्याद्दोषप्रशांतये ॥ भोजयेद्ब्राह्मणान्सर्वान्वित्तशाठ्यविवर्जितः । ( यद्यप्यत्र कौस्तुभे चाष्टवाक्यात्मकास्तैत्तिरीया
मंत्रा एव सर्वैर्ग्राह्या इति प्रतीयते तथापि मूले विशेषाऽदर्शनात्स्वशाखीया एव नक्षत्रमंत्राः सर्वैर्ग्राह्याः । यच्छाखायां न संति तेषां वि-
कल्पेनाऽन्यदीयाः । तत्र बह्वृचानां नक्षत्रमंत्राः शौनकेन नक्षत्रहोमे उक्ताः । तैत्तिरीयाणां तु तच्छाखीयाः । तत्रापि मंत्रेणेत्येकवचना-
च्चतुर्वाक्यात्मकमंत्रेण होमः । ऋचोभयोरन्यतरः । प्रथमोपस्थितेराद्य एव वा । नत्वष्टवाक्यात्मक एको मंत्रः । तेषां याज्याऽनुवाक्या-
युगलत्वेन मंत्रद्वयतायाः क्लृप्तत्वात् । अष्टवाक्यात्मकत्वे विशेषाऽभावाच्चेति बोध्यं । अत्र सौकर्यार्थमश्विन्यादिक्रमेण शौनकोक्तनक्ष-

त्रदेवतामंत्रा ऋष्यादिसहिता निर्दिश्यंते । अश्विनावेह सप्तवध्रिरश्विनावुष्णिक् । १ । यमायसोमं यमो० । २ । अग्निर्मूर्धा विरूपोग्निर्गायत्री । ३ । प्रजापते हिरण्य० । ४ । आप्यायस्व गोतमः० । ५ । कद्रुद्राय कण्वो रुद्रो० । ६ । अदितिर्द्यौर्गोतमोऽदितिस्त्रिष्टुप् । ७ । बृहस्पते गृत्समदो० । ८ । आयंगौः सर्पराज्ञी० । ९ । आहंपितॄन् शंखः पितरस्त्रिष्टुप् । १० । शंनोभगो वसिष्ठो भगस्त्रिष्टुप् । ११ । अनृक्षराः सूर्यासावित्र्यर्यमा त्रि० । १२ । सवितापश्चातान्नाभागः सविता त्रि० । १३ । तन्नस्तुरीपं वसिष्ठस्त्वष्टा त्रि० । १४ । वायवायाहि मधुच्छंदा वायुर्गायत्री । १५ । इंद्राग्नीरोचना विश्वामित्र इंद्राग्नी गायत्री । १६ । मित्रोजनान्विश्वामित्रो मित्रस्त्रि० । १७ । इंद्रमिन्मेधातिथिरिंद्रो बृहती । १८ । मोषुणः कण्वो निर्ऋति० । १९ । आपोअस्मान्देवश्रवा आपस्त्रि० । २० । विश्वेदेवाऋतावृध ऋजिश्वा विश्वेदेवा गायत्री । २१ । इदंविष्णुर्मेधा० । २२ । ज्मयाअत्र वसिष्ठो वसवस्त्रि० । २३ । इमंमेवरुण शुनःशेपो वरुणो गायत्री । २४ । शंनोअजएकपाद्वसिष्ठोऽजएकपात्त्रिष्टुप् । २५ । उतनोनक्तं तान्वोऽहिर्बुध्न्यः प्रस्तारपंक्तिः । २६ । संपूषन्नध्वनः कण्वः पूषा गायत्री । २७ । ) इत्येकनक्षत्रशांतिः ॥ ॥ अथ प्रयोगः । उक्तकाले मातापितृनक्षत्रोत्पत्तौ गोप्रसवं कृत्वा भ्रातृनक्षत्रोत्पत्तौ तमकृत्वा ( यद्यप्यत्र कौस्तुभादौ च भ्रातृनक्षत्रोत्पत्तौ गोप्रसवो नोक्तस्तथापि मूलवाक्ये भ्रात्रोरित्यत्रापि तयोरेकस्यमृत्युरित्यन्वयोपपत्त्या पाक्षिकसुतारिष्टयोगसंभवात्तन्नाशाय प्रकृतेऽपि स कार्य इति भाति ) द्विराचमनादिदेशकालस्मरणांते अस्य शिशोः पित्रेकनक्षत्रोत्पत्तिसूचितसर्वारिष्टपरि० सग्रहमखां वृद्धगर्गोक्तां शांतिं करिष्ये । इति संकल्प्य ( मात्रेकनक्षत्रेत्याद्यूहेनाऽन्यत्र संकल्पः । कौस्तुभमयूखयोर्नात्र ग्रहमखः ) गणेशं संपूज्य आचार्यं चतुर ऋत्विजश्च वृत्वा पुण्याहवाचनं कुर्यात् । तत आचार्यः प्रादेशकरणांते स्थंडिलादैशान्यां म-

ह्रीद्यौरित्यादिविधिना कलशं संस्थाप्य पूर्णपात्रोपरि रक्तवस्त्रे जन्मर्क्षप्रतिमा तद्देवताप्रतिमां वा पूर्वोक्ततत्तन्मंत्रेणावाह्य वस्त्रयुग्मार्पणपूर्वकं पूजेयत् । ततोऽग्निं ग्रहांश्च प्रतिष्ठाप्यान्वादध्यात् । ग्रहोत्कीर्तनांते अमुकं नक्षत्रं ( तद्देवतां वा ) समिच्चर्वाज्यैः प्रतिद्रव्यं अष्टोत्तरशतसंख्याहुतिभिः शेषेणेत्यादिप्रायश्चित्तहोमांते बलिदानं पूर्णाहुतिं च कृत्वा संस्रावहोमादिशेषं समाप्य स्थापितकलशोदकेन ययोरेकनक्षत्रे जन्म तावभिषिंचेत् । ततो यजमानो देवतोत्तरपूजनांते तत्प्रतिमाग्रे आचार्याय वस्त्रालंकारगा ऋत्विग्भ्यश्च माषत्रयसुवर्णं यथाशक्ति वा दत्वा आचार्येण देवताविसर्जने कृते तस्मै तत्प्रतिमादिदानं धान्यवस्त्रयानशय्यासनादिदानं चाचार्यादिभ्योऽन्येभ्यो वा कृत्वा ब्राह्मणान्संभोज्याशिषो गृहीत्वा कर्म समापयेत् । इति शांतिरत्ने एकनक्षत्रशांतिप्रयोगः ॥ ॥ अथ वैधृतिव्यतीपातसंक्रमप्रसवशांतिः । शौनकः । अथातः संप्रवक्ष्यामि शौनकः शांतिमुत्तमां । वैधृतौ च व्यतीपाते महादोषोऽभिजायते ॥ कुमारजन्मकाले तु व्यतीपातश्च वैधृतिः । संक्रमश्च रवेस्तत्र जातो दारिद्र्यकारकः ॥ " शां० सा० संक्रमशब्देन संक्रमकालात्पूर्वाः पराश्च षोडशघटिका गृह्यंते । द्वात्रिंशद्दंडैः संपूर्णसूर्यमंडलस्य राश्यंतरप्रवेशात् " दरिद्राणां महादुःखं व्याधिपीडा महद्भयं । अश्रियं मृत्युमाप्नोति नात्र कार्या विचारणा ॥ स्त्रीणां च शोकदुःखं च सर्वनाशकरो भवेत् । शांतिर्वा पुष्कला कार्या तत्र दोषो न कश्चन ॥ गोमुखप्रसवं कुर्याच्छांतिं कुर्यात्प्रयत्नतः । जपाऽभिषेकदानैश्च होमादपि विशेषतः ॥ नवग्रहमखं कुर्यात्तस्य दोषोपशांतये । प्रथमं गोमुखाज्जन्म ततः शांतिं समाचरेत् ॥ गृहस्य पूर्वदिग्भागे गोमयेनानुलिप्य च । अलंकृते सुदेशे तु व्रीहिराशिं प्रकल्पयेत् ॥ पंचद्रोणमितं धान्यं तदर्धं तंडुलेन च । तदर्धं तु तिलैः कुर्यादन्योन्योपरि कल्पयेत् ॥ "वि० पा० । तदर्धं० दन्योन्यं परिकल्पयेत् । धान्यं व्रीहिः । प्रथमं व्रीहिपरिधिः । तन्मध्ये तंडुलपरिधिः । तदंतस्तिलप-

रिधिरिति राशित्रयविवेकः ” द्रव्यत्रितयराशौ तु अष्टपत्रं लिखेद्बुधः । पुण्याहं वाचयित्वा तु आचार्यं वृणुयात्पुरा ॥ “ शां० सा० पुरा राशिकल्पनात्पूर्वं ” पंचांगभूषणं दद्यात्पट्टवस्त्रांगुलीयकं । राशौ प्रतिष्ठितं कुंभमव्रणं सुमनोहरं ॥ तीर्थोदकेन संपूर्य समृदौषधिपल्लवं । सगव्यगंधरत्नं च वस्त्रयुग्मेन वेष्टयेत् ॥ तस्योपरि न्यसेत्पात्रं सूक्ष्मवस्त्रेण संयुतं । प्रतिमां स्थापयेद्धीमान्साऽधिप्रत्यधिदेवतां ॥ चंद्रादित्याकृती पार्श्वे मध्ये वैधृतिमर्चयेत् । वैधृतिं तद्देवतां रुद्रं । एवमेव व्यतीपातशांतौ संक्रमणस्य च ॥ “वि०पा०।एव० संक्रमणस्य तु । वैधृतिर्व्यतीपातश्च प्रधानदेवता । उभयत्रापि सूर्योऽधिदेवश्चंद्रः प्रत्यधिदेवः । संक्रांतौ तु भानुः प्रधानदेवो रुद्रोऽधिदेवोऽग्निः प्रत्यधिदेवः ” ( मयूखे तु वैधृतिव्यतीपातयोः शांतौ मध्ये रुद्रः दक्षिणोत्तरयोः सूर्यसोमौ । संक्रांतौ च मध्ये सूर्यः दक्षिणोत्तरयोरग्निरुद्रावुक्तौ । तच्च युक्ततरं भाति । सम्यङ्मूलोक्तसंवादलाभात् ) भानोरुत्तरतो रुद्रमग्निं दक्षिणतो यजेत् । वैधृतौ मध्ये रुद्रो दक्षिणोत्तरयोश्च सूर्यचंद्रौ । संक्रमपातयोर्मध्ये सूर्यः दक्षिणोत्तरयोरग्निरुद्रावित्यर्थः । निष्कमात्रेण वाऽर्धेन पादेनाऽपि स्वशक्तितः । प्रतिमां कारयेद्धीमांस्तत्तल्लक्षणलक्षितां ॥ तच्च दानपरिभाषायां मयोक्तं । “ शां० सा० अंगप्रतिमास्वप्येतन्मानं ” प्रतिमापूजनार्थाय वस्त्रयुग्मं निवेदयेत् । अधिदेवो भवेत्सूर्यश्चंद्रः प्रत्यधिदेवता ॥ ततो व्याहृतिपूर्वेण तत्तन्मंत्रेण पूजयेत् । त्र्यंबकेण मंत्रेण प्रधानप्रतिमां यजेत् ॥ उत्सूर्यइति [ तत्सूर्यमिति ] मंत्रेण सूर्यपूजां समाचरेत् । आप्यायस्वेति मंत्रेण सोमपूजां समाचरेत् ॥ ( अग्निमंत्रस्तु तल्लिंगको ग्राह्यः ) उपचारैः षोडशभिर्यद्वा पंचोपचारकैः । अर्चितं गंधपुष्पाद्यैः फलं नैवेद्यमर्पयेत् ॥ मृत्युंजयेन मंत्रेण प्रधानप्रतिमां स्पृशन् । अष्टोत्तरसहस्रं वा अष्टोत्तरशतं तु वा ॥ अष्टाविंशति वा चाथ प्रजपेत्स्वस्य शक्तितः । सर्वसौरं प्रजप्याऽथ सोमार्थं सोममंत्रतः ॥ आनोभद्रेति सूक्तं च भद्राअग्नेश्च सु-

क्तकं । जपेच्च पौरुषं सूक्तं त्रैयंबकमतःपरं ॥ कुंभं स्पृष्ट्वा चतुर्दिक्षु जपं कुर्यु स्तथर्त्विजः । कुंभस्य पश्चिमे देशे स्थंडिलेऽग्निं प्रकल्पये-
त् ॥ स्वगृह्योक्तविधानेन कारयेत्संस्कृतानलं । त्रैयंबकेण मंत्रेण समिदाज्यचरून् हुनेत् ॥ अष्टोत्तरसहस्रं वा अष्टोत्तरशतं तु वा । अ-
ष्टाविंशति वा कुर्यात्स्वस्य शक्त्यनुसारतः ॥ ( पार्श्वदेवतयोः प्रधानतोऽल्पसंख्या । अयं समिदाज्यचरुहोमस्त्रिष्वपि तुल्यः । मंत्रास्तु तत्त-
द्देवत्याः पृथग्बोध्याः ) मृत्युंजयेन मंत्रेण तिलहोमं समाचरेत् । ( शांतित्रयेऽप्ययं होमः । संख्या तु पूर्वोक्ता ) ततः स्विष्टकृतं हुत्वा
अभिषेकं च कारयेत् ॥ समुद्रज्येष्ठासूक्तेन आपोहिष्ठतृचेन च । अक्षीभ्यामिति सूक्तेन पावमानीभिरेव च ॥ त्र्यंबकेण च उत्सूर्य आ-
प्यायस्वेति मंत्रतः । सुरास्त्वामिति मंत्रेण अभिषेकं समाचरेत् ॥ अभिषेकाप्लुतं वस्त्रमाचार्याय निवेदयेत् । श्वेतवस्त्रधरो भूत्वा भूषणाद्यै-
रलंकृतः ॥ यजमानः स्त्रियायुक्त आज्यावेक्षणमाचरेत् । आचार्यं पूजयेत्पश्चाद्वस्त्रहेमांगुलीयकैः ॥ गोदानं वस्त्रदानं च हेमदानं विशेष-
तः । तद्दोषशमनार्थाय आचार्याय प्रदापयेत् ॥ प्रच्छादनपटं दद्यात्ततः शांतिर्भविष्यति । जापकेभ्यो ब्राह्मणेभ्यो दक्षिणाभिश्च तोषयेत् ॥
दीनांधकृपणेभ्यश्च प्रदद्याद्भूरिदक्षिणां । ब्राह्मणान् शतसंख्याकान्मिष्टान्नैर्भोजयेच्च तान् ॥ " सं० कौ० तान् आचार्यमृत्विजश्चेत्यर्थः "
बंधुभिः सह भुंजीत यथाविभवसारतः । एवं यः कुरुते मर्त्यो नैव दुःखमवाप्नुयात् ॥ आयुरारोग्यमैश्वर्यं मातापित्रोः शिशोरपि । सर्व-
दुःखनिवृत्तिश्च पुत्रपौत्रप्रवर्धनं ॥ सर्वान्कामानवाप्नोति सुखी भूत्वा चिरं वसेत् ॥ इति वैधृत्यादिशांतिः ॥ ॥ अथ प्रयोगः । कर्ता
उक्तकाले गोमुखप्रसवं कृत्वा आचमनादिदेशकालकीर्तनांते अस्य शिशोर्वैधृतिजननसूचितसर्वारिष्टपरिहारद्वारा० सग्रहमखां शौनको-
क्तां शांतिं करिष्ये इति संकल्पयेत् ( व्यतीपातसंक्रमयोस्तु तत्तच्छद्बस्योहेन संकल्पः । एकदिने तयोः सत्त्वे तंत्रेणैकैव शांतिः । वैधृति-

संक्रांत्योः सत्त्वे तु शांतिद्वयं पृथक्कार्यं ) ततो गणेशपूजनपुण्याहवाचनादिऋत्विग्वरणांतं कुर्यात् । तत्राचार्याय पट्टवस्त्रादि दद्यात् । तत आचार्यः प्रादेशकरणांते गृहस्य पूर्वभागे गोमयोपलिप्ते रंगवल्ल्याद्यलंकृते महीद्यौरिति भूमिं स्पृष्ट्वा तत्र ओषधयःसमिति पंचद्रोणमितव्रीहिराशिं तदुपरि सार्धद्रोणद्वयमिततंडुलराशिं तदुपरि सपादद्रोणमिततिलराशिं च कृत्वोपरिभागं समं कृत्वा तत्राष्टदले कुंभं प्रतिष्ठाप्य तीर्थजलेनापूर्य तत्र सप्तमृदः सर्वौषधिपंचपल्लवपंचगव्याष्टगंधपंचरत्नानि निक्षिप्य वस्त्रयुग्मेनावेष्टय पूर्णपात्रोपरि सूक्ष्मवस्त्रे उक्तलक्षणप्रतिमासु व्याहृतिपूर्वकमंत्रैर्देवता आवाहयेत् । तत्र मध्ये त्र्यंबकमिति रुद्रं । तद्दक्षिणे उत्सूर्यो वसिष्ठः सूर्यस्त्रिष्टुप् । इति सूर्यं । उत्तरे आप्यायस्वेति सोममावाहयेत् । ( व्यतीपातसंक्रमशांत्योस्तु उत्सूर्यइति मध्ये सूर्यं दक्षिणेऽग्निंदूतमित्यग्निं उत्तरे च त्र्यंबकमिति रुद्रमावाहयेत् ) ततस्तान् वस्त्रयुग्मगंधपुष्पाद्यलंकृतफलनैवेद्यसहितैः षोडशोपचारैः पंचोपचारैर्वा संपूज्य रुद्रप्रतिमां स्पृशन् त्र्यंबकमितिमंत्रमष्टसहस्रमष्टशतमष्टाविंशतिं वा जप्त्वा सूर्यप्रतिमां स्पृशन् सर्वसौरमंत्रान्जपेत् । तेच । उदुत्यमिति त्रयोदशर्चस्य सूक्तस्य प्रस्कण्वो गायत्र्यंत्याश्चतस्रोऽनुष्टुभः । चित्रंदेवानामिति षड्ऋचस्य सूक्तस्य कुत्सस्त्रि० । इंद्रंमित्रमितिद्वयोर्दीर्घतमास्त्रि० । हंसःशुचिषद्वामदेवो जगती । यत्त्वासूर्योत्रिरनुष्टुप् । यदद्येत्येकस्या उत्सूर्यइति तिसृणां उद्वेतीति सार्धचतसृणां उदुत्यदिति तिसृणां च वसिष्ठस्त्रिष्टुप् । उदुत्यद्बृहती । शीर्ष्णःशीर्ष्णः सतोबृहती । तच्चक्षुः पुरउष्णिक् । बण्महानिति द्वयोर्जमदग्निर्बृहत्यंत्या सतोबृहती । नमोमित्रस्येति द्वादशर्चस्य सूक्तस्याभितपा जगती दशमी त्रिष्टुप् । सूर्योनइति पंचर्चस्य सूक्तस्य चक्षुर्गायत्री । विभ्राड्बृहदिति चतुर्ऋचस्य सूक्तस्य विभ्राड् जगत्यंत्याऽऽस्तारपंक्तिः । आयंगौरिति तृचस्य सूक्तस्य सर्पराज्ञी गायत्री । सर्वेषां सूर्यो देवता । जपे० । ततः सोमप्रतिमां स्पृशन्नाप्यायस्वेति जपेत् । (व्यतीपातसंक्रमयोस्तु पूर्वं सौरजपस्ततस्त्र्यंबकमंत्रजपः )

ततश्चतुर्दिक्षु ऋत्विजः कुंभं स्पृष्ट्वा क्रमेण सूक्तानि जपेयुः। पूर्वे आनोभद्राइति दशर्चस्य सूक्तस्य गोतमो विश्वेदेवा जगती। षष्ठीविराट्।
तिस्रोंत्यास्त्रिष्टुभः। दक्षिणे भद्राअग्नेरिति द्वादशर्चस्य सूक्तस्य सुमित्रोग्निस्त्रि०। आद्ये जगत्यौ। पश्चिमे सहस्रशीर्षेति षोडशर्चस्य०। उत्तरे
त्र्यंबकं वसिष्ठो०। ( मयूखे तु त्र्यंबकमंत्रस्थाने कद्रुद्रायेति सूक्तमुक्तं। तच्च युक्तं। मूले तथैवोपलंभात्। तत आचार्योग्निं ग्रहांश्च प्रतिष्ठाप्या-
न्वादध्यात्। ग्रहोत्कीर्तनांते रुद्रं प्रधानदेवं समिदाज्यचरुभिः प्रतिद्रव्यमष्टोत्तरसहस्रसंख्याभिराहुतिभिः। अष्टोत्तरशतसं०। अष्टाविंशतिसं-
ख्याभिर्वा। सूर्यं सोमं च तैरेव द्रव्यैः प्रत्येकं प्रतिद्रव्यं अष्टोत्तरशतसंख्या०। अष्टाविंशतिसं०। अष्टसंख्याभिर्वा। ( व्यतीपातसंक्रमयोस्तु
सूर्यं अष्टोत्तरसहस्राद्यन्यतमसंख्यया अग्निं रुद्रं च अष्टोत्तरशतादिसंख्यया ) मृत्युंजयं तिलैः अष्टोत्तरसहस्राद्यन्यतमसं०। शेषेणेत्यादिग्रहादि-
होमांते यथान्वाधानं देवतात्रयहोमोत्तरं त्र्यंबकमंत्रेण तिलान् हुत्वा स्विष्टकृदादिप्रायश्चित्तहोमांते बलिदानं पूर्णाहुतिं च कृत्वा संस्रावहोमादि-
शेषं समाप्य धृतनववस्त्रं पत्नीशिशुसहितं यजमानमभिषिंचेत्। तत्र मंत्राः। समुद्रज्येष्ठाइति चतसृणां०। आपोहिष्ठेतितिसृणां०। अक्षीभ्यामि-
तिषड्चस्य०। स्वादिष्ठयेति तिसृणां०। ततः प्रधानांगदेवतामंत्रैर्ग्रहमंत्रैः सुरास्त्वामित्यादिपौराणैश्चाभिषिक्तो यजमानः शुक्लांबरगंधमाल्यधरोऽभि-
षेकवस्त्रमाचार्यायदत्वा विभूतिं धृत्वा पत्न्या सह रूपंरूपमित्याज्यमवलोक्य तत्पात्रं सदक्षिणं ब्राह्मणाय दत्वा वस्त्रहेमांगुलीयकैः आचार्यं संपू-
ज्य वैधृत्यादिजननदोषशांत्यर्थं गोवस्त्रस्वर्णानि प्रच्छादनपटं च ( तन्निष्क्रयं वा ) तुभ्यमहं संप्रददे इति तस्मै दत्वा ऋत्विग्भ्यो यथाशक्ति
दक्षिणां दीनांधकृपणेभ्यश्च भूयसीं दत्वोत्तरपूजां कृत्वा विसर्जितदेवतापीठमाचार्यहस्ते प्रतिपाद्य मिष्टान्नैः शतं ब्राह्मणानाचार्यमृत्विजश्च
भोजयित्वा कर्मेश्वरार्पणं कृत्वा सुहृद्युतो भुंजीत। इति वैधृतिव्यतीपातसंक्रमशांतिप्रयोगः॥ ॥ अथ भद्राजननशांतिः संगृह्यते। गर्गः।

अतः परं प्रवक्ष्यामि महतीं शांतिमुत्तमां। भद्रायां तद्दिने वाऽपि जायते बालकं यदि ॥ कुलारिष्टं विजानीयान्मातापित्रोस्तथैव च। अत्र मातापित्रोररिष्टश्रवणात् गोमुखप्रसवोऽपि कार्यः। पित्ररिष्टेइत्यादितत्प्रकरणोक्तेः। तद्दोषपरिहारार्थं शांतिं कुर्याद्विधानतः ॥ सुलग्ने समुहूर्ते च तत्तत्कालेऽथवा पुनः। शांतिं कुर्यात्प्रयत्नेन ग्रहयज्ञपुरःसरं॥ पुण्याहादित्रयं कुर्यादाचार्यं वरयेत्सुधीः। गृहस्य पूर्वदिग्भागे पंचपल्लवसंयुतं॥ पंचरत्नयुतं चैव कलशं स्थापयेन्महत्। पूर्णपात्रनिधानांतं कृत्वा तत्पूर्वतः क्रमात् ॥ स्थापयेत्कलशानेवं चतुर्दिक्षु समंततः। पूर्णपात्रोपरि न्यस्य प्रतिमापंचकं शुभं ॥ भद्राअग्नेरिति मंत्रेण मध्ये भद्रां समर्चयेत्। आकृष्णेनेति मंत्रेण सूर्यं प्राक्कलशे यजेत् ॥ कद्रुद्रायेति रुद्रं वै दक्षिणे कलशे यजेत् । पश्चिमे गणपः पूज्यो गणानांत्वेति मंत्रतः ॥ उत्तरे ऋषभंमेति ऋषभं पूजयेत्सुधीः । पूजयेद्देवताः सम्यक् कलशानपि भूषयेत् ॥ ततोग्निस्थापनं कृत्वा ग्रहान्संस्थापयेत्सुधीः । तत्रत्यं कलशं प्रार्थ्य अन्वाधानं समाचरेत् ॥ ततो होमं च चरुणा समिदाज्यतिलैरपि। अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वा ॥ अष्टाविंशति वा कुर्याद्यथाविभवसारतः। तत्तद्दैवतमंत्रेण होमं कुर्यादतंद्रितः ॥ बलिदानं ततः कृत्वा अभिषेकं समाचरेत्। अभिषेकाप्लुतं वस्त्रमाचार्याय निवेदयेत् ॥ आचार्यं च सपत्नीकं पूजयेद्वस्त्रभूषणैः । उत्थाप्य प्रतिमाः पंच आचार्याय निवेदयेत् ॥ गुरवे दक्षिणां दद्याद्गोयुग्मं दोषशांतये। ऋत्विजां च यथाशक्ति दद्याद्दै दक्षिणां ततः ॥ आज्यावलोकनं कृत्वा कर्मशेषं समापयेत्। ब्राह्मणान्भोजयेत्सम्यग्घृतपायसलड्डुकैः ॥ एवं यः कुरुते मर्त्यः सोऽक्षय्यं सुखमश्नुते ॥ इति भद्राजननशांतिः ॥

॥ अथ प्रयोगः। कर्ता उक्तकाले गोमुखप्रसवं कृत्वा देशकालौ संकीर्त्य अस्य शिशोः भद्राजननसूचितसकलारिष्टपरिहारद्वारा० सग्रहमखां गर्गोक्तां शांतिं० इति संकल्प्य गणेशपूजनादिनांदीश्राद्धांते आचार्यादीन्वृणुयात्। तत आचार्यः प्रादेशकरणांते गृहस्य पूर्वभागे

स्थंडिलात्प्राच्यां महीद्यौरित्यादिमंत्रावृत्त्या मध्ये एकं पूर्वादिदिक्षु च चतुर इत्यवं पंचकुंभान्संस्थाप्य तत्र जलपूरणादिपूर्णपात्रनिधानांते प्रति-
मासु देवता आवाहयेत् । मध्यकुंभे भद्राअग्नेः सुमित्रो भद्रा जगती । भद्रावा०। इति भद्रां । पूर्वे। आकृष्णेन हिरण्य०इति सूर्यं। दक्षिणे । क-
द्रुद्राय कण्वो रुद्रो गा० इति रुद्रं । पश्चिमे । गणानांत्वा गृत्समदो० इति गणपतिं । उत्तरे । ऋषभंमा ऋषभ ऋषभोनुष्टुप् । इति ऋषभं
चावाह्य सर्वान्संपूज्य पुष्पमालादिभिः कलशान्भूषयित्वाऽग्निं ग्रहांश्च प्रतिष्ठाप्याऽन्वादध्यात्। ग्रहोत्कीर्तनांते भद्रां सूर्यं रुद्रं गणपतिं ऋषभं चैताः
प्रधानदेवताः समिच्चर्वाज्यातिलैः प्रत्येकं प्रतिद्रव्यं अष्टोत्तरसहस्रसंख्याहुतिभिः। अष्टोत्तरशतसं०।अष्टाविंशतिसंख्याभिर्वा। शेषेणेत्यादिप्रायश्चित्त-
होमांते बलिदानं पूर्णाहुतिं च कृत्वा संस्रावहोमादिशेषं समाप्य धृतनववस्त्रं पत्नीशिशुसहितं यजमानं समुद्रज्येष्ठाइत्यादिवारुणैर्ग्रहादिमं-
त्रैश्चाऽभिषिंचेत् । ततो यजमानो धृतशुक्लांबरोऽभिषेकवस्त्रमाचार्याय दत्वा विभूतिं धृत्वोत्तरपूजां कृत्वा सपत्नीकमाचार्यं वस्त्रभूषणैः सं-
पूज्य तस्मै भद्राजननदोषशांत्यर्थं गोयुग्मं ( तन्निष्क्रयं वा ) दक्षिणां तुभ्यमहं० इति दत्वा ऋत्विग्भ्योऽन्येभ्यश्च यथाशक्तिदक्षिणादानां-
ते रूपंरूपमिति सपत्नीक आज्यमवेक्ष्य सदक्षिणं तत्पात्रं ब्राम्हणाय दत्वा विसर्जितदेवतापीठं सोपस्करमाचार्यहस्ते प्रतिपाद्य पायसलड्डु-
कादिभिर्विप्रान्संभोज्याशिषो गृहीत्वा कर्म समापयेत् । इति भद्राशांतिप्रयोगः ॥ ॥ अथ ग्रहणशांतिः । शौनकः । ग्रहणे चंद्रसूर्यस्य
प्रसूतिर्यदि जायते । ( चंद्रसूर्ययोरित्यर्थः ) व्याधिपीडा तदा स्त्रीणामादौ तु ऋतुदर्शनात् ॥ इत्थं संजायते यस्तु तस्य मृत्युर्न संशयः ।
व्याधिपीडा च दारिद्र्यं शोकश्च कलहो भवेत् ॥ शांतिं तेषां प्रवक्ष्यामि नराणां हितकाम्यया। यस्मिन्नृक्षे विशेषेण ग्रहणं संप्रजायते ॥ तद्दक्षा-
धिपते रूपं सुवर्णेन प्रकल्पयेत् । यथाशक्त्यनुसारेण वित्तशाठ्यं न कारयेत् ॥ सूर्यग्रहे सूर्यरूपं सुवर्णेन स्वशक्तितः । चंद्रं चंद्रग्रहे धीमान्

रजतेन विशेषतः ॥ राहुरूपं प्रकुर्वीत सीसकेन विचक्षणः । शुचौ देशे प्रयत्नेन गोमयेन प्रलेपयेत् ॥ तस्योपरि न्यसेद्धीमान्नववस्त्रं सुशोभनं । त्रयाणां चैव देवानां स्थापनं तत्र कारयेत् ॥ रक्ताक्षतं रक्तगंधं रक्तपुष्पांबराणि च । सूर्यग्रहे प्रदातव्यं सूर्यप्रीतिकरं हि यत् ॥ श्वेतवस्त्रं श्वेतमाल्यं श्वेतगंधाक्षतादि च । चंद्रग्रहे प्रदातव्यं चंद्रप्रीतिकरं च यत् ॥ राहवे चैव दातव्यं कृष्णपुष्पांबरादि च । दद्यान्नक्षत्र [illegible]था-य श्वेतगंधानुलेपनं ॥ सूर्यं संपूजयेद्धीमानाकृष्णेनेति मंत्रतः । चंद्रग्रहे तथा सम्यगाप्यायस्वेति मंत्रतः ॥ स्वर्भानोरितिमंत्रेण राहुं यत्नेन पूजयेत् । एवं संपूजयेद्धीमान् समिद्भिश्चाऽर्कसंभवैः ॥ ( सूर्यग्रहे इत्यर्थः ) चंद्रग्रहे च पालाशैः समिद्भिर्जुहुयान्नरः । दूर्वाभिर्जुहुयाद्धीमान् राहोः संप्रीणनाय च ॥ समिद्भिर्ब्रह्मवृक्षोत्थैर्भेशाय जुहुयाद्बुधः । ( भेशो नक्षत्राधिपः ) आज्येन चरुणा चैव तिलैश्च जुहुयात्ततः ॥ इदं सर्वेभ्यः । पंचगव्यैः पंचरत्नैः पंचत्वक्पंचपल्लवैः । जलैरोषधिकल्कैश्च सहितैः कलशोदकैः ॥ अभिषेकं प्रकुर्वीत यजमानस्य यत्नतः । मंत्रैर्वारुणसंभूतैरापोहिष्ठादिभिस्त्रिभिः ॥ इमंमेगंगे परतस्तत्त्वायामीति मंत्रतः । अभिषेके निवृत्ते तु यजमानः समाहितः ॥ आचार्यं पूजयेत्पश्चात्सुशांतो विजितेंद्रियः । तस्मै दद्यात्प्रयत्नेन भक्त्या प्रतिकृतित्रयं ॥ ( प्रतिकृतिः प्रतिमा ) दक्षिणाभिश्च संयुक्तं यथाशक्त्यनुसारतः । ब्राह्मणान् भोजयित्वा तु प्रणिपत्य क्षमापयेत् ॥ तेभ्योऽपि दक्षिणां दद्याद्यजमानः स्वशक्तितः । अनेन विधिना शांतिं कृत्वा सम्यग्विशेषतः ॥ अकालमृत्युं शोकं च व्याधिपीडां नचाप्नुयात् । सौख्यं सौमनसं नित्यं सौभाग्यं लभते नरः ॥ इत्थं ग्रहणजातानां सर्वारिष्टविनाशनं । कथितं भार्गवेणेदं शौनकाय महात्मने ॥ " ध० सिं० वेधकाले जन्मनि नैव शांतिः । किंतु दुष्टकालत्वादुद्राभिषेकः कार्य इति भाति " । इति ग्रहणप्रसवशांतिः ॥ ॥ अथ प्रयोगः । सूर्यग्रहणोत्पत्तौ तत्कालस्थितनक्षत्रदेवतायाः सूर्यस्य च यथाशक्तिहेम्ना प्रतिमे विधाय रा-

हो: सीसेन नागाकृतिं कुर्यात् । चंद्रग्रहे तु सूर्यस्थाने राजतं चंद्रबिंबमिति विशेषः। कर्ता उक्तकाले गोमुखप्रसवं विधाय आचमनादिदेशका-
लकीर्तनांते ममास्यशिशोः सूर्यग्रहणकालोत्पत्तिसूचितसर्वारिष्टपरिहारद्वारा० शौनकोक्तां सग्रहमखां शांतिं० । (चंद्रग्रहे तु चंद्रग्रहणेत्यूहः)
गणेशपूजादिकृत्विग्वरणांतं कुर्यात् । तत आचार्यः प्रादेशकरणांते स्थंडिलात्पूर्वे गोमयेनोपलिप्ते शुचिदेशे नववस्त्रं प्रसार्य तत्र उक्तलक्षण-
प्रतिमात्रये देवता आवाहयेत् । आकृष्णेन हिरण्य० इति सूर्यं । (चंद्रग्रहे तु आप्यायस्व गोतम० इति सोमं) तद्दक्षिणे स्वर्भानोरत्री राहुस्त्रि-
ष्टुप् । राह्वावा० । स्वर्भानोरधयदिंद्र० इति राहुं । उत्तरे प्रसूतिकालस्थितनक्षत्रदेवतामावाहयेत् । तन्मंत्रस्तु बह्वृचैरेकनक्षत्रशांतौ शौनकोक्तो
द्रष्टव्यः । ततस्तान् षोडशोपचारैः पूजयेत् । तत्र वस्त्रगंधाक्षतपुष्पादि रक्तवर्णं सूर्याय। शुक्लवर्णं चंद्रनक्षत्रनाथाभ्यां । कृष्णवर्णं च राहवे इति
विशेषः । ततोऽग्निं ग्रहांश्च प्रतिष्ठाप्यान्वादध्यात् । ग्रहोत्कीर्तनांते सूर्यं प्रधानदेवं अर्कसमिदाज्यचरुतिलैः प्रतिद्रव्यं अष्टोत्तरशतसंख्याभिराहु
तिभिः । अष्टाविंशतिसंख्याभिर्वा ( चंद्रग्रहे तु चंद्रं पलाशसमिदाज्य० ) राहुं दूर्वाज्यचरुतिलैः प्रतिद्रव्यं अष्टाविंशतिसं०अष्टसंख्याभिर्वा ।
अमुकं नक्षत्रदेवतां पलाशसमिदाज्यचरुतिलैः अष्टाविं० । अष्टसंख्याभिर्वा । शेषेणेत्यादिप्रायश्चित्तहोमांते बलिदानपूर्णाहुती कृत्वा संस्राव
होमादिशेषं समाप्य पंचगव्यपंचरत्नपंचत्वक्पंचपल्लवैरोषधिकल्कैश्च मिश्रितलौकिकजलैर्ग्रहकलशोदकसहितैः पत्नीशिशुसहितं यजमा-
नमभिषिंचेत् । तत्र मंत्राः । आपोहिष्ठेति तृचस्य०। इमंमेगंगे सिंधुक्षित्प्रियो जगती । तत्त्वायामि शुनः०। ततो ग्रहादिमंत्रैरभिषिक्तो यजमानो
विभूतिं धृत्वोत्तरपूजांते आचार्यादीन्संपूज्य तेभ्यो दक्षिणां दत्वा आचार्येण देवताविसर्जने कृते तस्मै प्रतिमात्रयं सोपस्करं ग्रहपीठं च दत्वा
ब्राह्मणान्संभोज्य भूयसीं दक्षिणां दत्वा तान्प्रणम्य क्षम्यतामिति क्षमाप्याशिषो गृहीत्वा कर्मेश्वरार्पणं कुर्यात् । इति ग्रहणशांतिप्रयोगः ॥

॥ अथ यमलोत्पत्तिशांतिः । " वि० मा० काशीखंडे सूतशौनकसंवादे । त्रिविधा यमलोत्पत्तिर्जायते योषितामिह । सुतौ च सुत-
कन्ये च कन्ये एव तथा पुनः ॥ एकलिंगौ विनाशाय द्विलिंगौ मध्यमौ स्मृतौ । यमौ विघ्नकरौ ज्ञेयौ तत्र शांतिर्विधीयते ॥ हेममूर्ती
विधातव्ये द्वयोश्चैव द्विजोत्तम । पलेन वा तदर्धेन तदर्धार्धेन वा पुनः ॥ ब्रह्मवृक्षस्य पत्रे च स्थापयेद्रक्तवाससी । स्वस्तिके तंडुलानां च न्यसे-
त्पीठं द्विजोत्तम ॥ पूजयेद्रक्तपुष्पैश्च चंदनेनाऽनुलेपयेत् । दशांगेनैव धूपेन धूपयेत्प्रयतः पुमान् ॥ दीपैर्नीराजयेच्चैव नैवेद्यं परिकल्पयेत् ।
यस्मैत्वंसुकृतेमंत्रेणाक्षतादिभिरर्चयेत् ॥ अनेनैव तु मंत्रेण होमंकुर्यादतंद्रितः । अष्टोत्तरसहस्रं च पायसेन च सर्पिषा ॥ शांतिसूक्तं पठे-
द्विद्वान् सूर्यसूक्तं जपेत्ततः । विष्णुसूक्तं तथा गाथां वैश्वदेवीं जपेद्बुधः ॥ अश्वदानं ततो दद्यादाचार्याय कुटुंबिने । तयोर्मूर्ती प्रदातव्ये
यजमानेन धीमता ॥ दानमंत्रः । अश्वरूपौ महाबाहू अश्विनौ दिव्यचक्षुषौ । अनेन वाजिदानेन प्रीयेतां मे यशस्विनौ ॥ इति वाजिदान-
मंत्रः । आचार्यः प्रथमो मेधा विष्णुस्तु सविता भगः । दस्रमूर्तिप्रदानेन प्रीयतां मेऽश्विनौ भगः ॥ इति मूर्तिप्रतिमादानं । ततोऽभिषेचनं
कार्यं दंपत्योर्विधिवद्बुधैः । ब्राह्मणान्भोजयेत्पश्चाद्दक्षिणाभिश्च तोषयेत् ॥ सालंकारैश्च वस्त्रैश्च प्रार्थयेद्वचनैः शुभैः । एवं कृते विधाने च यम-
लोत्पत्तिशांतिकं ॥ जायते नाऽत्र संदेहः सत्यमेतद्ब्रवीमि ते । इति काशीखंडे सूतशौनकसंवादे यमलोत्पत्तिशांतिः ।" भारतवृद्धगर्गौ । स्त्रि-
या गोर्वडवायाश्च यमलं चैव जायते । जानीयाद्यमतो भीतिं मारुतीं शांतिमाचरेत् ॥ मयूरचित्रे । घोटिका हस्तिनी चैव महिषी यमलौ
यदि । प्रसूयते तदा नाशः संग्रामश्च महान्भवेत् ॥ कारयेल्लक्षहोमं च बहुदानं च कारयेत् । भोजनं ब्राह्मणानां च दद्याद्गां चैव दक्षिणां ॥
महिषीयमलोत्पत्तौ वन्यानां चैव जन्मनि । दद्याच्चैव तु तामैंद्रीं शांतिं यद्वा प्रयोजयेत् ॥ कात्यायनः । अथातो यमलजनने प्रा-

यश्चित्तविधिं व्याख्यास्यामो यस्य भार्या गौर्दासी महिषी वडवा वा विकृतिं प्रसवेत्स प्रायश्चित्ती भवेत्पूर्णे दशाहे चतुर्णां क्षीरवृक्षाणां कषाया-
नुपाहरेत् प्लक्षवटोदुंबराश्वत्थशमीदेवदारुगौरसर्षपास्तेषां मिश्रमपो हिरण्यदूर्वांकुरैराम्रपल्लवैः सर्वौषधीभिरष्टौ कलशान् प्रपूर्य दंपती स्नपये-
दापोहिष्ठेति तिसृभिः कयानश्चित्रइति द्वाभ्यां पंचैंद्रेण पंचवारुणेनेदमापःप्रवहतेत्यपाघमिति स्नापयित्वाऽलंकृत्य तौ दर्भेषूपवेश्य मारुतं स्था-
लीपाकं श्रपयित्वाज्यभागाविष्ट्वाज्याहुतीर्जुहोति पूर्वोक्तैः स्नपनमंत्रैः स्थालीपाकस्य जुहोत्यग्नयेस्वाहा सोमायस्वाहा पवमानायस्वाहा पाव-
कायस्वाहा मारुतायस्वाहा मरुद्भ्यःस्वाहा यमायस्वाहांऽतकायस्वाहा मृत्यवेस्वाहाऽग्नयेस्विष्टकृतेस्वाहेत्येतदेव ग्रहोत्पातेषूलूको गृध्रः कपोतः
श्येनो वा गृहं प्रविशेत्स्तंभो वा प्ररोहेद्वल्मीकं मधुजालं वा भवेदुदकुंभप्रज्वलने आसनशयनयानभंगे गृहगोधिकाकृकलासशरीरसर्पणे छत्र-
ध्वजविनाशेऽन्येष्वप्युत्पातेषु भूकंपोल्कापातकाकसर्पसंगमप्रेक्षणादिष्वेतदेव प्रायश्चित्तं ग्रहशांतिं चोक्तविधिना कृत्वाचार्याय वरं दत्वा ब्राह्म-
णान् भोजयित्वा स्वस्ति वाच्याशिषः प्रतिगृह्य शांतिर्भवतीति । बह्वृचकारिकायां । अथ यस्य वधूर्गौर्वा जनयेद्यमलौ ततः । स मरुद्भ्य-
श्चरुं कुर्यात्पूर्णाहुतिमथापिवेति । ऐतरेय ब्राह्मणे तु । सोग्नये मरुत्वते त्रयोदशकपालं पुरोळाशं निर्वपेदाहुतिं वा जुहुयादित्युक्तं । अत्राहिताग्नेः श्रौतेन
मारुतत्रयोदशकपालेन समुच्चयः " सं० कौ० आहिताग्नेः कृतप्रकृत्यारंभस्येष्टिरकृततदारंभस्य पूर्णाहुतिरिति वृत्तिकारः । आश्वलायनसूत्रकारेण तु
यस्यभार्यागौर्वायमौजनयेदिष्टिर्मरुतइति मारुतयाग उक्तः । वृत्तिकृद्देवत्राताभ्यां मरुत एवात्र देवतेत्युक्तेः।एवकारवशेन सिद्धांतभाष्यकृताऽपि त-
दुपपादनाच्च न पूर्णाहुतिरिति तदीयमेवकारख्याख्यांतरं वृत्तिकृदाद्यनादरादुपेक्षणीयं । अनाहिताग्नेस्तु गृह्याग्निमत आह कारिकाकारः।अथ यस्य
वधूर्गौर्वा जययेच्चेद्यमौ ततः । स मरुद्भ्यश्चरुं कुर्यात्पूर्णाहुतिमथापि वेति । गृह्याग्निनाऽपि शून्यो बह्वृचस्तु कात्यायनोक्तप्रायश्चित्तं कुर्या-

त् । स्वगृह्योक्ताऽभावे परगृह्योक्तस्य लौकिकाग्नौ संभवात् । तच्च तदीयगृह्ये पठितं । अथातोयमलजनने० । विकृतिप्रसवो यमलोत्पत्तिः । अद्भिः पूरितेषु कलशेषु कषायैः प्लक्षादिशाखाभिर्गौरसर्षपैर्मिश्रितं हिरण्यं प्रक्षिप्य दुर्वांकुराणां सर्वौषधीनां च प्रक्षेपः कार्यः । पंचैंद्रा मंत्रा यस्मिन् तत्पंचैंद्रं सूक्तं । एवमन्यत् । इदमापइति ऋक् । अपाघं अपनःशोशुचदघमिति सूक्तं । उत्पातेष्वित्यनंतरं भूकंपोल्कापातकाकसर्पसंगमप्रेक्षणादिष्विति क्वचित्पाठः । आहिताग्न्यधिकारिकमारुतपुरोडाशस्थाने विहितस्य मारुतस्थालीपाकस्य प्रायश्चित्तसमाख्यया तुल्यकार्यस्य पुरोडाशेन सह समुच्चयं वदद्भ्यो नमो मान्येभ्यः ॥ ॥ अथ प्रयोगः । मम भार्यायाः यमलजननसूचितसर्वारिष्टपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं इष्ट्या यक्ष्ये इति श्रौताग्निमतः । गृह्याग्निमतस्तु मारुतस्थालीपाकेन यक्ष्य इति संकल्पः । अकृतप्रकृत्यारंभस्य तत्स्थाने पूर्णाहुतिं होष्यामीति । अग्निशून्यस्तु सग्रहमखं कात्यायनोक्तं प्रायश्चित्तं करिष्ये इति संकल्प्य गणेशपूजनाद्याचार्यवरणांतं कुर्यात् । आचार्यो यदत्रेत्यादिना भूमिशुद्धिं विधाय प्रागादिक्रमेण ऐशान्यंतासु दिक्षु महीद्यौरित्यादिविधिना कलशाष्टकपूरणांतं कृत्वाहिरण्यरूपइति हिरण्यं कषायादिसहितं कांडात्कांडादिति दूर्वा याओषधीरिति सर्वौषधीश्च प्रक्षिप्य गंधप्रक्षेपादिवरुणपूजांतं कुर्यात् । अथ कलशोदकैराचार्यो दंपत्योरभिषेकं कुर्यात् । आपोहिष्ठेतितिसृणामांबरीषः सिंधुद्वीप आपो गायत्री । कयानइति द्वयोर्वामदेव इंद्रो गायत्री । आनस्तुतइति पंचानां वामदेव इंद्रस्त्रिष्टुप् । मोषुवरुणेति पंचानां वसिष्ठो वरुणो गायत्री । अंत्या जगती । इदमापइत्यस्य सिंधुद्वीप आपोऽनुष्टुप् । अपनःशोशुचदित्यष्टर्चस्य सूक्तस्य कुत्सोग्निर्गायत्री । आभिषेके० । एवमभिषक्तौ दंपती श्वेतैर्वस्त्रचंदनपुष्पैः सौवर्णभूषणैश्चाऽलंकृत्य दर्भेषूपवेशयति । तौ तत्रोदङ्मुखौ तिष्ठतः । तत्समीपे प्राङ्मुख आचार्यः स्थंडिलेऽग्निं प्रतिष्ठाप्यैशान्यां ग्रहपूजाकलशस्थापनांतं

कृत्वाऽन्वाधानं कुर्यात् । ग्रहोत्कीर्तनांते अपस्तिसृभिः इंद्रं सप्तभिः वरुणं पंचभिः अप एकया अग्निमष्टाभिराज्याहुतिभिः अग्निं सोमं पवमानं पावकं मारुतं मरुतः यमं अंतकं मृत्युं च एकैकया चर्वाहुत्या शेषेणेत्यादि । तूष्णीं षट्त्रिंशद्वारं निर्वापप्रोक्षणे । यथान्वाधानमाज्याहुतिषु त्यागः । अग्नयेस्वाहेत्यवदानसंपदा नवाहुतयः । यथालिंगं त्यजताऽपि अग्न्याद्यात्मना मरुतो ध्येयाः । प्रयाजेषु समिध्यइति त्यागेऽपि समिदाद्यात्मना निरुक्तोक्ताग्निध्यानवत् । ततः स्विष्टकृदादिबलिदानांते पूर्णाहुतिः पूर्णपात्रनिनयनं ग्रहकलशेनाभिषेकः । आचार्याय दक्षिणादानं स्थापितदेवतानां पूजनादि आचार्यहस्ते प्रतिपादनांतं च कृत्वा ब्राह्मणान् भोजयित्वा स्वस्तिभवंतोब्रुवंत्विति वाचयीत । तेच स्वस्तीति वदेयुः। ततस्तेभ्य आशिषो गृहीत्वा कर्मेश्वरार्पणं कुर्यात्" इति यमलजननशांतिप्रयोगः ॥ ॥ अथ त्रिकप्रसवशांतिः । शांतिसर्वस्वे गर्गः । सुतत्रये सुता चेत्स्यात्तत्त्रये वा सुतो यदि । पितृमातृकुलस्याऽपि तदाऽनिष्टं महद्भवेत् ॥ (रिष्टमिति पीयूषधारायां पाठः) ज्येष्ठनाशो धने हानिर्दुःखं वा सुमहद्भवेत् । (नाशः अदर्शनं । तच्च दर्शनसामान्याऽभावः । मरणमिति यावत्) तत्र शांतिं प्रकुर्वीत वित्तशाठ्यविवर्जितः ॥ जातस्यैकादशाहे वा द्वादशाहे शुभे दिने । आचार्यमृत्विजो वृत्वा ग्रहयज्ञपुरःसरं ॥ सह वा ग्रहयज्ञः स्यात्स्वस्य वित्तानुसारतः । ब्रह्मविष्णुमहेशेंद्रप्रतिमाः स्वर्णतः कृताः ॥ पूजयेद्धान्यराशिस्थकलशोपरि शक्तितः । पंचमे कलशे रुद्रं पूजयेद्रुद्रसंख्यया ॥ ( पूजयेदिति पृथगुपदेशाद्देवताचतुष्टयपूजांते रुद्रकलशस्थापनादि कार्यमिति भाति ) रुद्रसूक्तानि चत्वारि शांतिसूक्तानि सर्वशः । द्विज एको जपेद्धोमकाले शुचिः समाहितः ॥ आचार्यो जुहुयात्तत्र समिदाज्यतिलांश्चरुं । अष्टोत्तरं सहस्रं वा शतं वा त्रिशतं तु वा ॥ (पीयूषधारामयूखयोस्तु त्रिशतमित्यत्र विंशतिमिति पाठः। अत्राऽष्टोत्तरमिति पृथक्पदं । तच्चोत्तरयोरपि विशेषणमिति कौस्तुभकाराशयः ) देवताभ्यश्चतुर्वक्त्रादिभ्यो ग्रहपुरःसरं । ब्रह्मादि-

मंत्रैरिंद्रस्य यतइंद्रभयामहे ॥ ततः स्विष्टकृतं हुत्वा बलिं पूर्णाहुतिं तथा । अभिषेकं कुटुंबस्य कृत्वाचार्यं प्रपूजयेत् ॥ हिरण्यं धेनुरेका च ऋत्विजां दक्षिणा ततः । प्रतिमा गुरवे देया उपस्करसमन्विताः ॥ आज्यस्याऽवेक्षणं कृत्वा शांतिपाठं तु कारयेत् । ब्राह्मणान्भोजयेच्छक्त्या दीनाऽनाथांश्च तर्पयेत् ॥ एवं शांतिविधानेन सर्वारिष्टं विलीयते । इति त्रिकप्रसवशांतिः ॥ ॥ अथ प्रयोगः । कर्ता उक्तकाले गोप्रसवं विधाय देशकालौ स्मृत्वा मम सुतत्रयजन्मानंतरं सुताजननसूचितसर्वारिष्टपरिहार० । सग्रहमखां गर्गोक्तां शांतिं करिष्ये इति संकल्प्य ( निमित्तांतरे तु सुतात्रयजन्मानंतरं सुतजननेत्यूहः । पूर्वं ग्रहमखः कृतश्चेत्तदुल्लेखवर्जं संकल्पः ) गणेशपूजनादिऋत्विग्वरणांतं कुर्यात् । तत आचार्यः प्रादेशकरणांते स्थंडिलात्पूर्वे महीद्यौरित्यादिविधिना प्राक्संस्थमुदक्संस्थं वा कलशपंचकं संस्थाप्य पूर्णपात्रनिधानांते प्रतिमासु देवता आवाहयेत् । ब्रह्मजज्ञानं वामदेवो ब्रह्मा त्रिष्टुप् । इति ब्रह्माणं । इदंविष्णुर्मेधा० इति विष्णुं । तत्पुरुषाय वामदेवो महेशो गायत्री । महेशावाह० । तत्पुरुषायविद्महे० । इति महेशं । यतइंद्र भर्ग इंद्रो बृहती । इतींद्रं । कद्रुद्राय कण्वो० । इति रुद्रं चावाह्य षोडशोपचारैः सर्वान्संपूज्याग्निं ग्रहांश्च प्रतिष्ठाप्यान्वादध्यात् । ग्रहाद्युत्कीर्तनांते ब्रह्माणं विष्णुं महेशं इंद्रं रुद्रं चैताः प्रधानदेवताः समिदाज्यतिलचरुभिः प्रत्येकं प्रतिद्रव्यं अष्टोत्तरसहस्रसंख्याहुतिभिः । अष्टोत्तरशत० । अष्टोत्तरत्रिशतसंख्याभिर्वा (यद्वा मयूखस्थपाठानुरोधेन अष्टत्रिशतस्थाने अष्टाविंशतिसंख्या ग्राह्या ) शेषेणेत्यादिग्रहादिहोमांते ब्रह्मादिमंत्रैः प्रधानहोमं कुर्यात् । होमकाले च कश्चिदृत्विक् रुद्रसूक्तान्येकादशवारं जप्त्वा शांतिसूक्तानि सर्वाणि जपेत् । कद्रुद्रायेति नवर्चस्य सूक्तस्य कण्वो रुद्रो गायत्र्यंत्याऽनुष्टुप् । इमारुद्रायतवसइत्येकादशर्चस्य सूक्तस्य कुत्सो रुद्रो जगत्यंत्ये त्रिष्टुभौ । आतेपितरिति पंचदशर्चस्य सूक्तस्य गृत्समदो रुद्रस्त्रिष्टुप् । इमारुद्राये-

ति चतुर्ऋचस्य सूक्तस्य वसिष्ठो रुद्रो जगत्यंत्या त्रिष्टुप् । आनोभद्राइति दशर्चस्य सूक्तस्य गोतमो विश्वेदेवा जगती षष्ठी विराट् तिस्रों-त्यास्त्रिष्टुभः । स्वस्तिनइति पंचानां स्वस्त्यात्रेयो विश्वेदेवास्त्रिष्टुबंत्ये द्वे अनुष्टुभौ । शंनइंद्राग्नीइति पंचदशर्चस्य सूक्तस्य वसिष्ठो विश्वेदेवा-स्त्रिष्टुप् । यतइंद्रेति षण्णां भर्ग इंद्रो बृहती । समानां सतोबृहती पंक्तिः । आशुःशिशानइति त्रयोदशर्चस्य सूक्तस्याऽप्रतिरथ इंद्रश्चतुर्थ्या बृहस्पतिर्द्वादश्या अप्वांत्याया मरुतस्त्रिष्टुबंत्याऽनुष्टुप् । जपे० । ततः स्विष्टकृदादिप्रायश्चित्तहोमांते बलिदानं पूर्णाहुतिं च कृत्वा संस्रावहो-मादिशेषं समाप्य सकुटुंबं यजमानं स्थापितकलशोदकैः समुद्रज्येष्ठाइत्यादिमंत्रैर्ग्रहादिमंत्रैश्चाभिषिंचेत् । ततो यजमानो विभूतिं धृत्वोत्तरपूजां विधायाचार्यं संपूज्य तस्मै सहिरण्यां धेनुं ऋत्विग्भ्यश्च यथाशक्ति दक्षिणां दत्वा विसर्जितदेवताप्रतिमाः सोपस्करा आचार्यहस्ते प्रतिपाद्य पत्न्या सहाज्यावेक्षणं ब्राह्मणाय तद्दानं च कृत्वा शक्त्या विप्रान्संभोज्य भूयसीं दत्वा दीनाऽनाथांश्च संतर्प्य शांतिपाठं ब्राह्मणैः कारयित्वाऽऽ-शिषो गृहीत्वा कर्मेश्वरार्पणं कुर्यात् । इति त्रिकप्रसवशांतिप्रयोगः ॥ ॥ अथ प्रथमोर्ध्वदंतोत्पत्त्यादिशांतिः । पाद्मे विष्णुधर्मोत्तरे च पुष्करः । दंतजन्मनि बालानां लक्षणं तन्निबोध मे । उपरि प्रथमं यस्य जायंते च शिशोर्द्विजाः ॥ दंतैर्वा सह यस्य स्याज्जन्म भार्गवसत्तम । द्वितीये च तृतीये च चतुर्थे पंचमे तथा ॥ यदा दंताश्च जायंते मासे चैव महद्भयं । मासेचैवेति चकारात्पर्यायेऽपि । द्वितीये पर्याये त्वदोषः । नित्ये नैमित्तिकत्वाऽयोगात् । मातरं पितरं वाऽथ खादेदात्मानमेव वा । तत्र शांतिं प्रवक्ष्यामि तां मे निगदतः शृणु ॥ गजपृष्ठगतं बालं नौस्थं वा स्नापयेद्द्विजः । तदभावे तु धर्मज्ञ कांचने तु वरासने ॥ सर्वौषधैः सर्वगंधैर्बीजैः पुष्पैः फलैस्तथा । पंचगव्येन रत्नैश्च मृत्तिका-भिश्च भार्गव ॥ स्नापयेदित्यन्वयः । स्थालीपाकेन धातारं पूजयेत्तदनंतरं । सप्ताहं चाऽत्र कर्तव्यं तथा ब्राह्मणभोजनं ॥ अष्टमेऽहनि विप्रा-

णां तथा देयाऽथ दक्षिणा । स्थालीपाकोऽपि सप्ताहं कर्तव्य इति केचित् । कांचनं रजतं गाश्च भुवं वा धनमेव च ॥ दद्यादिति शेषः । अद्भुतसागरे तु सदंतोत्पत्तौ पंचदशीशांतिरुक्ता । अत्र साधारण्येन प्रकारांतरमुक्तं पाद्मे । दंतजन्मनि सामान्ये शृणु स्नानमतःपरं " शां० सा० सामान्ये निषिद्धे " भद्रासने निवेश्यैनं मूर्ध्नि मूलफलैस्तथा ॥ सर्वौषधैः सर्वबीजैः सर्वगंधैस्तथैव च । स्नापयेत्पूजयेच्चाऽत्र वह्निं सोमं समीरणं ॥ पर्वतांश्च तथा ख्यातान्देवदेवं च केशवं । एतेषामेव जुहुयाद् घृतमग्नौ यथाविधि ॥ ब्राह्मणानां च दातव्या यथाशक्त्या च दक्षिणेति । इति प्रथमोर्ध्वदंतोत्पत्त्यादिशांतिः ॥ " वि० मा ० बालस्योर्ध्वदंतोद्गमजन्यविघ्नहरं विधानं । ब्रह्मयामले । प्रथमं दंतनिष्पत्तिरूर्ध्वं बालस्य चेद्भवेत् । क्लेशाय मातुलस्येह तदा प्रोक्ता मनीषिभिः ॥ विघ्नभंगे प्रवक्ष्यामि विधानं विधिपूर्वकं । सौवर्णं राजतं वाऽपि ताम्रं कांस्यमयं तथा ॥ दध्योदनेन पूर्णं तु पात्रं दद्याच्छिशोः करे । समंत्रं भाजनं दत्वा संपश्येन्मातुलः शिशुं ॥ सालंकारं सवस्त्रं च शिशुमालिंग्य सादरं । तत्र मंत्रः । रक्ष मां भागिनेय त्वं रक्ष मे सकलं कुलं । गृहीत्वा भाजनं साऽन्नं प्रसन्नो भव मे सदा ॥ निर्विघ्नं कुरु कल्याण निर्विघ्नां च स्वमातरं । त्वमप्यात्मानमातिष्ठ चिरं जीव मया सह ॥ इति भाजनदानमंत्रः । ततोऽभिनंदयेद्विद्वान् भगिनीं भगिनीपतिं । ज्येष्ठान् श्रेष्ठान्गुरूंन्विप्रान् पवित्रानभिवादयेत् ॥ एवं कृते विधाने च विघ्नः कोऽपि न जायते । ऊर्ध्वदंतोद्भवं पापं सर्वं नश्यति तत्क्षणात् ॥ बालको जननी चैव चिरं जीवति मातुलः । तस्मात्प्रयत्नतो विद्वान् विधानं सम्यगाचरेत् ॥ " ॥ अथ प्रयोगः । कर्ता उक्तकाले गोप्रसवं कृत्वा देशकालौ स्मृत्वा ममास्य शिशोः प्रथममूर्ध्वदंतोत्पत्तिसूचितसर्वारिष्टपरिहारद्वारा० सग्रहमखां पुष्करोक्तां शांतिं करिष्ये इति संकल्प्य ( निमित्तांतरे तु सदंतोत्पत्तीत्यूहः । द्वितीयादिपंचमांतमासेषु दंतोत्पत्तौ च तत्तत्पदस्योहेन संकल्पः ) गणेशपूजनाद्या-

चार्यवरणांतं कुर्यात् । तत आचार्यः प्रादेशकरणांते स्थंडिलस्योत्तरतः गजपृष्ठे नौकायां सुवर्णपीठे वा बालमुपवेश्य सर्वौषधिसर्वगंधैरनिषिद्धतरूणां पुष्पफलबीजैः पंचगव्यपंचरत्नमृत्तिकाभिश्च मिश्रितजलैः स्नापयित्वा स्थंडिलात्पूर्वे महीद्यौरित्यादिविधिना कलशं संस्थाप्य पूर्णपात्रे प्रतिमायां धातारं नाममंत्रेणावाह्य संपूज्याग्निं ग्रहांश्च प्रतिष्ठाप्यान्वादध्यात् । ग्रहादिकीर्तनांते धातारं प्रधानदेवं चरुणा । शेषेणेत्यादिप्रणीतास्थापनांते धात्रेत्वाजुष्टंनिर्वपामि । धात्रेत्वाजुष्टंप्रोक्षामीति चतुर्वारं निर्वापप्रोक्षणे कृत्वा चरुश्रपणाद्याज्यभागहोमांते ग्रहादिहोमं कृत्वा अवदानधर्मेण चरुमवदाय धात्रेस्वाहेति सकृदाहुतिं हुत्वा स्विष्टकृदादिप्रायश्चित्तहोमांते बलिदानं पूर्णाहुतिं च कृत्वा संस्रावहोमादिशेषं समाप्य स्थापितकलशोदकैः पत्नीपुत्रसहितं यजमानं समुद्रज्येष्ठादिमंत्रैरभिषिंचेत् । ततो यजमानो विभूतिं धृत्वा देवतोत्तरपूजां आचार्यादिभ्यो दक्षिणादानं आचार्याय विसर्जितदेवतापीठदानं च कृत्वा सप्ताहं यथाशक्ति ब्राम्हणान्भोजयेत् । अष्टमेऽहनि ब्राह्मणेभ्यो यथाशक्ति भूयसीं दक्षिणां दत्वा कांचनादिदानं च कृत्वाऽऽशिषो गृहीत्वा कर्म समापयेत् । अत्र दिनाष्टकं ब्रह्मचर्यादिनियमाचरणं कार्यं । एवं विस्तराऽसंभवे पाद्मोक्ता शांतिः कार्या । तत्र प्रयोगः । देशकालस्मरणांते ममास्य शिशोः प्रथममूर्ध्वदंतोत्पत्तिसूचितसर्वा० पाद्मोक्तविधिना सग्रहमखां शांतिं करिष्ये । इति संकल्प्य ( निमित्तांतरे तूहः पूर्ववत् ) गणेशपूजादि । आचार्यः प्रादेशांते स्थंडिलोत्तरतः भद्रासने बालमुपवेश्य प्रशस्ततरुमूलफलैः सर्वौषधिसर्वबीजसर्वगंधैश्च मिश्रितोदकैस्तं स्नापयित्वा स्थंडिलात्पूर्वे पीठादौ प्रतिमासु अग्निं सोमं वायुं पर्वतान् केशवं च नाममंत्रेणोदक्संस्थमावाह्य संपूज्याग्निं ग्रहांश्च प्रतिष्ठाप्यान्वादध्यात् । ग्रहाद्युत्कीर्तनांते अग्निं सोमं वायुं पर्वतान् केशवं च एकैकयाज्याहुत्या शेषेणेत्यादिग्रहादिहोमांते अग्न्यादिदेवताभ्यो नाममंत्रैरेकैकामाज्याहुतिं

हुत्वा स्विष्टकृदादिपीठदानांतं पूर्ववत्कृत्वा यथाशक्ति ब्राह्मणान्संभोज्य भूयसीं दत्वाशिषो गृहीत्वा कर्मेश्वरायार्पयेत् । इति प्रथमोर्ध्वदंतोत्पत्त्यादिशांतिप्रयोगः ॥ ॥ अथ षष्ठाष्टममासयोर्दंतोत्पत्तिशांतिः । अद्भुतसागरे बृहस्पतिः । बालानामष्टमे मासि षष्ठे मासि तथा पुनः । दंता यस्य च जायंते माता वा म्रियते पिता ॥ बालकः पीड्यते तत्र स्वयमेव न संशयः । दधिक्षौद्रघृताक्तानामश्वत्थसमिधां ततः ॥ हुनेदष्टशतं प्राज्ञः समंत्रेण तु मंत्रवित् । धेनुं च दक्षिणां दद्यात्ततः संपद्यते शुभं ॥ यत्तु ज्योतिर्निबंधे अष्टमादिषुमासेषुदंतोत्थानंशुभावहमित्युक्तं तदतद्गुणसंविज्ञानबहुव्रीहिणा नवमादिपरं । इति षष्ठाष्टममासयोर्दंतोत्पत्तिशांतिः ॥ ॥ अथ प्रयोगः । उक्तकाले गोप्रसवं कृत्वा देशकालस्मरणांते ममास्य शिशोः षष्ठे ( अष्टमे वा ) मासि दंतोत्पत्तिसूचितसर्वारिष्ट० सग्रहमखां बृहस्पत्युक्तां शांतिं करिष्ये । गणेशपूजादि । आचार्यः प्रादेशांते स्थंडिलात्पूर्वे पीठादौ प्रतिमायां बृहस्पते गृत्स० इति बृहस्पतिमावाह्य संपूज्याग्निं ग्रहांश्च प्रतिष्ठाप्यान्वादध्यात् । ग्रहाद्युत्कीर्तनांते बृहस्पतिं दधिमधुघृताक्ताश्वत्थसमिद्भिः अष्टोत्तरशतसं० । शेषेणेत्यादिप्रायश्चित्तहोमांते बलिदानं पूर्णाहुतिं च कृत्वा संस्रावहोमादिशेषं समाप्य यजमानमभिषिंचेत् । ततो यजमानः उत्तरपूजां विधायाचार्याय धेनुं ऋत्विग्भ्यश्च दक्षिणां दत्वा पीठदानांते विप्रान्संभोज्य भूयसीं दत्वाऽऽशिषो गृहीत्वा कर्म समापयेत् । इति षष्ठाष्टममासयोर्दंतोत्पत्तिशांतिप्रयोगः ॥ ॥ अथ प्रसववैकृतशांतिः । विष्णुधर्मोत्तरे मात्स्ये । अकालप्रसवा नार्यः कालातीतप्रजास्तथा । विकृतप्रसवाश्चैव युग्मप्रसवकास्तथा ॥ अमानुषा अमुंडाश्च अजातव्यंजनास्तथा । हीनांगा अधिकांगाश्च जायंते यदि वा स्त्रियः ॥ पशवः पक्षिणश्चैव तथैव च सरीसृपाः । विनाशं तस्य देहस्य कुलस्य च विनिर्दिशेत् ॥ निर्वासयेत्तान्नृपतिः स्वराष्ट्रात्स्त्रियश्च पूज्याश्च ततो द्विजेंद्राः । चिकित्सनैर्ब्राह्मणतर्पणैश्च ततोऽस्य शांतिं समुपैति

पापं ॥ उशना । मानुषी जनयेद्यत्र द्वित्रिशीर्षं तथा पशून् । षण्मासोर्ध्वं भयं तीव्रं जायते नात्र संशयः ॥ वाराहेऽपि । अमानुषान्मानुषी च मानुषांश्चाऽप्यमानुषी । प्रसूयते प्रजानीयात्परचक्रागमो भवेत् ॥ नारी खरवृषोष्ट्रांश्च शुनः सूकरगर्दभान् । राक्षसांश्च पिशाचांश्च यदाप्येवं प्रसूयते ॥ चतुर्विधं भयं घोरं क्षिप्रमेव प्रवर्तते । भारतमयूरचित्रवृद्धगर्गाः । यत्र गर्भे विपर्यासो मानुषाणां गवामपि । अद्भुतानि प्रसूयंते तत्र देशस्य विप्लवः ॥ अत्रापि दिव्यजा शांतिः कार्या पंचदशी बुधैः । मानुषाऽमानुषाणां च गोऽजाऽश्वमृगपक्षिणां ॥ जायंते जातिभेदाश्च सदंता विकृतास्तथा । बहशीर्षा अशीर्षा वा बहुकर्णा अकर्णकाः ॥ एकशृंगा द्वित्रिशृंगास्तथैव त्रिचतुर्भुजाः । दीर्घकर्णा महाकर्णा गजकर्णाश्च मानवाः ॥ वानरश्वापदव्याघ्रमार्जारतनुधारिणः । जायंते पुरुषा यत्र तत्र संग्राममादिशेत् ॥ राजश्रेष्ठ कुले नाशो धनस्य च कुलस्य च । यमला यत्र जायंते नारीणां गजवाजिनां ॥ ब्रह्मशांतिं ततः कुर्याद्यत्र ब्रह्मा प्रशासिता । अष्टोत्तरसहस्राणि चरुं वै जुहुयाद् घृतं ॥ समिधां तु पलाशीनां तर्पयेत्पूर्ववद्द्विजान् । दासीदाससमायुक्तो गोधान्यफलसंयुतं ॥ कांचनं वृषभं वस्त्रं दद्याद्विप्राय दक्षिणां । अशिरा जायते जंतुस्तथा द्वित्रिशिरा अपि ॥ सूर्याद्भुतं विजानीयात्पूजयित्वा दिवाकरं । दध्याज्यमधुसंयुक्ताः समिधस्त्वर्कसंभवाः ॥ यद्वा जनः प्रस्रातिभिर्जुहुयाद् घृतमेव च । धेनुं सुवर्णं वस्त्रं च दद्याद्धोत्रे च दक्षिणां ॥ सर्वे दोषा विनश्यंति ततः संपद्यते शुभं । मृगी जनयते सर्पान्मंडूकांश्चाऽथ मानुषान् ॥ बृहस्पत्यद्भुतमिदं तद्वारे तं प्रपूजयेत् । उदुंबरस्य समिधो दधिसर्पिःसमन्विताः ॥ दोषोपशमनार्थाय जुहुयान्नियमे स्थितः । वस्त्रं सुवर्णं धेनुं च दद्याद्विप्राय दक्षिणां ॥ स्त्रीगर्भपातो यमलं प्रसूयंतेऽथवा स्त्रियः । सदंताश्चैव जायंते जातमात्रा हसंति च ॥ बुधाद्भुतं विजानीयात्तद्वारे तं प्रपूजयेत् । वस्त्रं गां च सुवर्णं च दद्याद्विप्राय दक्षिणां ॥ गर्गः । वडवा हस्तिनी गौर्वा यदि युग्मं प्रसूयते ।

विजाति विकृतं वाऽपि षड्भिर्मासैर्म्रियेत सा ॥ वियोनिष्वधिगच्छंति मैथुनं देशनाशनं । अन्यत्र वेसरोत्पत्तेर्नृणां वा जातिमैथुनात् ॥ सर्वे मूषकमार्जारमत्स्यश्वानविवर्जिताः । ज्ञेया दुर्भिक्षकर्तारः स्वजातिपिशिताशनाः ॥ अकालजो मदोद्रेकश्चतुष्पान्मृगपक्षिणां । अन्यजातिभयं तस्माद्धेनुश्वानौ विशेषतः ॥ अथाऽनड्वाननड्वाहं धेनुर्धेनुं पिबेद्यदि । शुनी वा धयते धेनुं शुनीं धेनुरथापि वा ॥ तिर्यग्योनिं मानुषी वा परचक्रागमो भवेत् । अमानुषा मानुषाणि जल्पंति प्राणिनो यदि ॥ विकृतं वा प्रसूयंते परचक्रागमो भवेत् । जंगमे स्थावरं जातं स्थावरे वाऽथ जंगमं ॥ तस्मिन्योनिविपर्यासे परचक्रागमो भवेत् । त्यागो विवासो दानं वा तेषां कार्यं विजानता ॥ तर्पयेद्ब्राह्मणांश्चैव जपहोमांश्च कारयेत् । मृदंगवाद्यैः पटहैः सुशोभनैः पूजा च कार्या त्रिदशेश्वराणां । धातुस्तथेज्या विधिना च कार्या देयं तथाऽन्नं बहु च द्विजेभ्यः ॥ नारदः । कृष्णा गौः कपिला वासः कपिलं कृष्णमेव च । तच्छांतये तु विप्राय दातव्यास्तत्क्षणान्नरैः ॥ ततो होमं प्रकुर्वीत शांत्यर्थं तु यवैस्तिलैः । नमस्तेरुद्रमंत्रेण दक्षिणां तु प्रदापयेत् ॥ यथावित्तानुसारेण ततः शांतिर्भविष्यति । येन मंत्रेण होतव्यं तन्मंत्रं च तथा जपेत् ॥ शतावृत्तेन मंत्रेण जुहुयाच्चैव मंत्रवित् । श्रीफलस्याऽपि समिधः शिवार्थं जुहुयात्ततः ॥ अष्टोत्तरशतं चाऽपि गायत्र्या जप उत्तमः । शांतिकं च जपेद्विप्र इदंविष्णुर्विचक्रमे ॥ सहस्रशीर्षामंत्रेण जपेत्पौष्टिकशांतये । आपस्तंबः । चतुष्पादं पंचपादं वा भवति तान्येतानि सर्वाणि सूर्यदेवत्यान्यद्भुतानि प्रायश्चित्तानि भवंत्युदुत्यंजातवेदसमिति स्थालीपाकं हुत्वा पंचभिराज्याहुतिभिर्जुहोति सूर्यायस्वाहा सर्वग्रहाधिपतयेस्वाहा किरणायस्वाहेश्वरायस्वाहा सर्वपापशमनायस्वाहेति व्याहृतिभिर्हुत्वाऽथ साम गायेत् । ( अत्र प्रयोगाः प्रायेण सुगमा लोके विरलप्रचाराश्चेति न लिखिताः ) इति कमलाकरभट्टकृते शांतिरत्ने प्रसववैकृतशांतिः ॥ ॥ अथ सुखप्रसवोपायः । मदनरत्ने नारा-

यणीयटीकायां । करंकीभूतगोमूर्धा सूतिकाभवनोपरि । तत्कालनिहितो नार्याः सुखप्रसवकारकः ॥ अस्थिमात्राऽवशिष्टगोमस्तक इत्यर्थः । उपोदक्यास्तु मूलानि तैलयुक्तानि कारयेत् । योनिप्रलेपो दातव्यः सुखं नारी प्रसूयते ॥ अथ वंशनिंबयोस्त्वक् तुलसीमूलं कपित्थपत्रं च । करवीरबीजमेतत्पिष्ट्वा क्षीरेण माहिषेणैव ॥ समतोलितं सतैलं योनिं लिप्त्वा च तेनाऽपि । मृतगर्भं निःसारयति किमत्र चित्रं सुखप्रसवे ॥ "वि० मा० प्रलेपमंत्रस्तु । हिमवदुत्तरपार्श्वे शबरी नाम यक्षिणी । तस्या नूपुरशब्देन विशल्या भवतु गर्भिणीस्वाहेति । अन्यच्च । प्र मंदिने०। इति मंत्रेण पानीयं पाययेदभिमंत्रितं । ध० सिं० प्रसवप्रतिबंधे ऋग्विधाने । प्रमंदिने इत्यृचं विजिहीष्वेति सूक्तं वा जपेत् । एताभ्यामभिमंत्रितजलं वा पाययेत् । तेन सुखप्रसवः" इति सुखप्रसवोपायः ॥ ॥ अथाऽधोमुखजननशांतिः । बृहच्छौनकीये । प्रसवेच्च यदा नारी बालकं तु अधोमुखं । वंशारिष्टकरं चैव मातापित्रोर्विशेषतः ॥ बालकं तु परित्यज्य यावच्चूडोपकर्मणी । माता पिता विशेषेण तन्मुखं नावलोकयेत् ॥ तस्यारिष्टविनाशार्थं कुर्याच्छांतिं यथाविधि । जन्माहाद्द्वादशाहे तु प्रयत्नेन च कारयेत् ॥ अथवा जन्मदिवसे शुभे काले शुभे दिने । शांतं दांतं कुटुंबं च शास्त्रज्ञं वेदपारगं ॥ आचार्यं वरयेद्धीमानृत्विजश्चतुरोऽपि च । गृहस्येशानदिग्भागे स्थंडिलं तत्र कारयेत् ॥ तस्मात्तु पूर्वदिग्भागे व्रीहिराशिं च कारयेत् । सौवर्णीं प्रतिमां कुर्यान्मृत्युंजयेन नामतः ॥ कलशोपरि संस्थाप्य वस्त्रयुग्मेन वेष्टयेत् । त्रैयंबकेण मंत्रेण पूजयेच्च यथाविधि ॥ ततोऽग्निस्थापनं कृत्वा ग्रहयज्ञं समारभेत् । कुंभं स्पृष्ट्वा ततो जप्त्वा रुद्रसूक्तानि मंत्रतः ॥ ( मंत्रत इति सार्वविभक्तिकस्तसिः । मंत्रैः सहेत्यर्थः । तेच आवोराजानमित्यादयश्चत्वारः । रुद्रसूक्तानिचत्वारिचतुर्मंत्रोत्तराणिचेति ऋतुशांतौ दर्शनात् ) अथवा रुद्रजाप्येन एकादशावृत्तिस्तथा । अन्वाधानं ततः कृत्वा चरुनिर्वपणं तथा ॥ समिच्चरुतिलाज्यानां प्रत्येकं जुहुयादथ । अष्टोत्तरसहस्रं तु शतमष्टोत्तरं तथा ॥

अष्टाविंशति वा संख्या यथाशक्ति तु होमयेत् । त्रैयंबकेण मंत्रेण जुहुयाच्च हुताशने ॥ होमांते च बलिं दत्वा पूर्णाहुतिमथाचरेत् । होमशेषं समाप्यैवं बालस्य च परिग्रहः ॥ बालं मूलसमीपे च [तूले च संस्थाप्य] त्यक्का माता पराङ्मुखी । गृहीत्वा ब्राह्मणा बालं तं मातुस्तेऽर्पयंति च ॥ बालेऽस्माभिरयं बालो युष्मद्दत्तः प्रगृह्य च । दीर्घायुरपि बालोयं पूर्ववत्कुलवर्धनः ॥ एवं त्यागविधिं कृत्वा ततोभिषेकमारभेत् । समुद्रज्येष्ठादिभिर्मंत्रैः सुरास्त्वादिपुराणतः ॥ ऋत्विग्भ्यश्च ततो दद्याद्यथाशक्ति च दक्षिणां । ब्राह्मणान्भोजयेत्पश्चाद्दशकं तु स्वशक्तितः ॥ एवं च शांतिकं कृत्वा सर्वारिष्टनिवारणं । ( अत्रोक्तं बालंमूलेत्यादिसार्धश्लोकद्वयं प्रक्षिप्तमिव दृश्यते । शौनककारिकाग्रंथे मूलशांतिप्रकरणेऽस्योपलंभात् । मूलशब्दस्य निर्ऋतिवाचकत्वेन तत्तार्थोपपत्तिलाभाच्च । अत्र तु तदसंभवात् तूलेचसंस्थाप्येत्येवं पाठभेदः केनचित्प्रयोगकुशलेन कल्पित इति भाति । तादृशपाठस्य प्राचीनपुस्तकेष्वनुपलंभात् । तत्वं तु बृहच्छौनकीयादवगंतव्यं ) इत्यधोमुखजननशांतिः ॥

॥ अथ प्रयोगः । जन्मतो द्वादशाहे जन्मनक्षत्रेऽन्यस्मिन् शुभदिने वा कर्ता गोमुखप्रसवं कृत्वा देशकालौ संकीर्त्य अस्य शिशोः अधोमुखजननसूचितसर्वारिष्टपरिहारद्वारा० सग्रहमखां बृहच्छौनकोक्तां शांतिं करिष्ये इति संकल्प्य गणेशपूजादि ऋत्विग्वरणांतं कुर्यात् । अत्र ऋत्विजश्चत्वारः । ततो गृहस्यैशानभागे स्थंडिलं कृत्वा आचार्यः प्रादेशांते तत्पूर्वभागे महीद्यौरिति भूमिं स्पृष्ट्वा ओषधयःसमिति व्रीहिराशिं कृत्वा तत्र कलशस्थापनादिपूर्णपात्रनिधानांते सुवर्णप्रतिमायां त्र्यंबकं वसिष्ठो० इति रुद्रमावाह्य वस्त्रयुग्मसहितोपचारैः संपूज्याग्निं ग्रहांश्च प्रतिष्ठापयेत् । तत एक ऋत्विक् रुद्रकुंभं स्पृष्ट्वा चत्वारि रुद्रसूक्तानि मंत्रचतुष्टयसहितानि रुद्रं वा जपेत् । रुद्रजपस्त्वेकादशवारं कार्यः । तत आचार्योन्वाधानं कुर्यात् । ग्रहाद्युत्कीर्तनांते रुद्रं प्रधानदेवं समिदाज्यतिलचरुभिः प्रतिद्रव्यं अष्टोत्तरसहस्रसंख्या-

भिराहुतिभिः । १०८।२८ वा । शेषेणेत्यादिप्रणीताप्रणयनांते तूष्णीं निर्वापप्रोक्षणे कृत्वा चरुं श्रपयित्वाऽऽज्यसंस्कारादिग्रहादिहोमांते त्र्यंबकमंत्रेणोक्तसंख्यया समिच्चरुतिलाज्यैः प्रधानहोमं कृत्वा स्विष्टकृदादिप्रायश्चित्तहोमांते बलिदानपूर्णाहुतिपूर्वकं संस्रावहोमादिशेषं समापयेत् । अथ माता बालं कार्पासराशौ संस्थाप्य पराङ्मुखी भवेत् । विप्रास्तं गृहीत्वा स्वाभिमुख्यै मात्रे दद्युः । तत्र मंत्रः । बालेऽस्माभिरयं बालो युष्मद्दत्तः प्रगृह्य च । दीर्घायुरपि बालोयं पूर्ववत्कुलवर्धनः ॥ ततो यजमानं पत्नीशिशुसहितं कलशोदकैः समुद्रज्येष्ठादिमंत्रैः सुरास्त्वामित्यादिभिश्चाभिषिंचेत् । ततो यजमानोऽग्निं संपूज्य विभूतिं धृत्वोत्तरपूजां विधायाऽऽचार्यादिभ्यो यथाशक्ति दक्षिणां दत्वा विसर्जितदेवतापीठमाचार्यहस्ते प्रतिपाद्य दश ब्राह्मणान् यथाशक्ति वा संभोज्याशिषो गृहीत्वा कर्मेश्वरार्पणं कुर्यात् । इत्यधोमुखजननशांतिप्रयोगः॥

॥ अथ पौषे स्त्रीप्रथमप्रसवे सिंहादौ गवादिप्रसवे च शांतिः । शौनकः । सिंहे तु गावो महिषी तु माघे नभे तु मासे वडवाप्रसूतिः । पौषे तु भार्या प्रथमप्रसूतिः कृत्वा तु शांतिं स्वगृहेऽश्नुते सुखं ॥ अथ शांतिं प्रवक्ष्यामि शौनकोऽहं द्विजातये । शुभेऽह्नि कुर्याद्विधिवदात्मनः सुखमश्नुते ॥ अकुर्वाणोऽथ शांतिं च गृहे दुःखमवाप्नुयात् । कृत्वा स्नानं समभ्यर्च्य आत्मनः कुलदेवतां ॥ स्वस्तिवाचनपूर्वं तु ब्राह्मणानर्चयेदथ । अष्टौ वा चतुरः शक्त्या पूजयेद्विधिपूर्वकं ॥ ततो होमं प्रकुर्वीत शुद्धदेशे समाहितः । गृहस्येशानदिग्भागे व्रीहिराशिं च कारयेत् ॥ सौवर्णं राजतं ताम्रं कलशं स्थापयेत्ततः । कुंभं स्पृष्ट्वा ऋत्विजश्च वस्त्रयुग्मेन वेष्टयेत् ॥ प्रक्षिपेत्पल्लवान्पंच पंचत्वक्प्रक्षिपेत्तथा । सर्वौषधीः सप्तमृदः पुण्यतीर्थेन पूरयेत् ॥ मूर्तिद्वयं प्रकुर्वीत रुद्रसूर्यौ प्रयत्नतः । सौवर्णौ राजतौ कार्यौ ताम्रलोहमयौ तथा ॥ कलशोपरि संस्थाप्य तन्मंत्राभ्यां प्रपूजयेत् । ऋत्विजश्च ततो जप्त्वा रुद्रसूक्तानि सौरतः॥ अथवा मूलमंत्रेण यावद्धोमं समापयेत् । ततोग्नि-

स्थापनं कृत्वा ग्रहयज्ञं समारभेत् ॥ अन्वाधानं ततः कृत्वा चरुनिर्वपणं तथा । ततो होमं प्रकुर्वीत तिलाज्यचरुभिः सह ॥ कद्रुद्रायेतिमंत्रेण आकृष्णेनेति मंत्रतः । अष्टोत्तरशतं चाऽथ अष्टाविंशतिमेव वा ॥ प्रतिद्रव्येण प्रतिमंत्रेण जुहुयादित्यर्थः । कुर्याच्च विधिवद्धोमं गां दद्याच्च पयस्विनीं । ( गामिति महिष्यादेरप्युपलक्षणं । तासामपि दानस्य वक्ष्यमाणत्वात् ) कलशोदकमादाय ततोऽभिषेकमादरात् ॥ समुद्रज्येष्ठादिभिर्मंत्रैः सुरास्त्वादिपुराणतः । होमांतेदक्षिणां दद्याद्रुद्रसूर्यौ प्रपूज्य च ॥ ( इयं दक्षिणा रुद्रसूर्यप्रीत्यर्था । गांदद्यादिति यदुक्तं तत्र विशेषमाह ) आचार्यं पूजयित्वा तु यन्निमित्तं कृतो विधिः । तस्य दानं प्रकर्तव्यं विना भार्यां च तत्स्मृतं ॥ सुवर्णस्य प्रदानेन भार्यारिष्टं विनश्यति । ऋत्विग्भ्यश्च ततो दद्याद्यथाशक्त्या च दक्षिणां ॥ ब्राह्मणान्भोजयेत्पश्चाच्छतमष्टोत्तरं तथा । शक्त्या वा भोजयेच्चैकं दक्षिणाभिस्तु तोषयेत् ॥ अनेन विधिना कुर्याच्छांतिकं तु द्विजोत्तमः । तस्यारिष्टं शमं याति स्वगृहे सुखमेधते ॥ अद्भुतसागरे नारदः । भानौ सिंहगते चैव यस्य गौः संप्रसूयते । मरणं तस्य निर्दिष्टं षड्भिर्मासैर्न संशयः ॥ तत्र शांतिं प्रवक्ष्यामि येन संपद्यते शिवं । प्रसूतां तत्क्षणादेव तां गां विप्राय दापयेत् ॥ ततो होमं प्रकुर्वीत घृताक्तै राजसर्षपैः । मधुसर्षपैरिति शांतिसारपाठेऽपि मधुवर्णैः पीतसर्षपैरित्यर्थः । आहुतीनां घृताक्तानामयुतं जुहुयात्ततः ॥ ( वस्तुतस्तु वक्ष्यमाणस्य ब्रह्मदैवतमंत्रेणेत्यस्य विनियोगांतराऽकथनाद्धोमे मंत्राऽनुपदेशेन तदाकांक्षासत्त्वाच्च ब्रह्मदैवतमंत्रेणैव होमो युक्त इति भाति ) सोपवासः प्रयत्नेन दद्याद्विप्राय दक्षिणां । वस्त्रयुग्मं यवांश्चैव सुवर्णं च प्रदापयेत् ॥ ब्रह्मदैवतमंत्रेण ततः शांतिर्भविष्यति । प्रकारांतरं सएवाह । सिंहराशौ गते सूर्ये गोप्रसूतिर्यदा भवेत् ॥ पौषे च महिषी सूते दिवैवाऽश्वतरी तथा । ( पौषेचेत्यत्र अतीते इत्यध्याहृत्य पौषेऽतीते माघमासे इत्यर्थ इति व्याख्येयं । नामकरणे दशमे

ऽतीते इतिवत् । उक्तवक्ष्यमाणबहुवचोऽनुरोधात् । यद्वा महिषीपदेन श्रेष्ठस्त्रीवाचिना मानुष्येव ग्राह्या । सूते इत्यनेन च प्रथमः प्रसवः । शौनकीयादिषु तस्यैव दुष्टत्वोक्तेः ) । तदाऽनिष्टं भवेत्किंचित्तच्छांत्यै शांतिकं चरेत् ॥ अस्यवामेतिसूक्तेन तद्विष्णोरितिमंत्रतः । जुहुयाच्च तिलाज्येन शतमष्टोत्तरादिकं ॥ ( आदिनाऽष्टोत्तरसहस्रं ) मृत्युंजयविधानेन जुहुयाच्च तथाऽयुतं । श्रीसूक्तेन ततः स्नायाच्छांतिसूक्तेन वा पुनः ॥ मध्यरात्रे निशीथे वा यदा गौः क्रंदते तदा । ग्रामे वा स्वगृहे वाऽपि शांतिकं पूर्ववद्विशेदिति । एवं श्रावणे वडवाप्रसवो दिने निषिद्धः । तदुक्तं अथर्ववेदिनां गार्ग्यपरिशिष्टे । माघे बुधे च महिषी श्रावणे वडवा दिवा । सिंहे गावः प्रसूयंते स्वामिनो मृत्युदायिकाः ॥ अत्र तदुक्ताऽमृताख्या शांतिः कार्या । गर्गः । दिवा प्रसूता वडवा श्रावणे च विशेषतः । माघमासे बुधे चैव प्रसवेन्महिषी यदि ॥ सिंहे गावः प्रसूयंते स्वामिनो मृत्युदायिकाः । त्यागो विवासो दानं वा कृत्वाऽप्याशु शुभं लभेत् ॥ ( माघेबुधेचेत्यत्र चकारोपादानान्माघबुधयोः समुच्चयः । दिवेत्यस्याऽनंतरमपि चकारोऽनुषंजनीयः । माघे निषिद्धा महिषी प्रसूता सिंहे च गावो वडवा दिवा च । पौषे च नारी प्रथमप्रसूता देया द्विजेभ्यः सहदक्षिणास्ता इति निर्णयसिंधौ दर्शनात् । द्योते विशेषः । अत्र माघबुधयोः श्रावणदिनयोश्च विशिष्टयोर्निमित्तता । नच विशिष्टोद्देशे वाक्यभेदात्प्रत्येकं निमित्ततेति वाच्यं । महिषीप्रसवस्योद्देश्यत्वेनाऽन्यतरविवक्षायामपि वाक्यभेदात् । अतः पौरुषेयत्वाद्वाक्यभेदो नेति समाधेयमिति । विधानमालायां तु प्रकारांतरं । माघे बुधे च महिषी० दायिकाः ॥ विधानं तत्र कर्तव्यं स्वामिविघ्नविनाशनं । कृष्णपक्षे मध्यमासु कुर्यात्तिथिषु पंचसु ॥ कालायसे तु महिषे स्थितं हेममयं यमं । कालदंडधरं कृत्वा यमिन्या सहितं नृप ॥ पीठे संस्थापयेद्देवं यमायेति च मंत्रतः । दूर्वातिलाज्यद्रव्यैश्च शतमष्टोत्तरं हुनेत् ॥ मृत्युंजयेन मंत्रेण जुहुयाद् घृतपायसं । [ दूर्वासमित्तिलाज्यानि तथैव घृतपाय-

सं। हुनेदष्टोत्तरशतं यमायेति पृथक्पृथक् ] बलिं दत्वा तु राक्षोघ्नैः सूक्तैः शंनादिभिस्तथा ॥ निर्गुंडीपल्लवैः स्निग्धैरभिषेकं प्रकारयेत् । आचार्याय प्रदातव्या यममूर्तिः सदक्षिणा ॥ सदक्षिणं श्राद्धदेवं यमिन्या सहितं यमं । सोपस्करं गृहाण त्वं मम विघ्नहरो भवेति दानमंत्रः ॥ ततः शिशुं प्रजातं तं प्रदद्यादग्रजन्मने । सदक्षिणं नृपश्रेष्ठ तस्माद्विघ्नो विनश्यति ॥ ततः संतर्पयेद्विप्रान्पायसैर्मोदकैर्घृतैः । अपूपैः शर्करायुक्तैर्दक्षिणाभिर्विशेषतः॥ एवं कृते विधाने तु मृत्युस्तुष्यति पूजितः । निष्प्रत्यूहो भवेन्नूनं यजमानो नराधिपेति । अत्र बहुषु वचनेषूक्तत्वान्माघे महिष्याः श्रावणे वडवायाश्च प्रसवो दुष्टः । पौषे मानुष्याः प्रथम एव प्रसवो दुष्टः। श्रावणेतरमासेष्वपि वडवाप्रसवो दिवा चेद्दुष्टः । सिंधूक्तवचनद्वये निषेधात् । श्रावणांतर्गते दिवसे वडवाप्रसवश्चेद्विशेषतो दुष्टः । माघे महिषीप्रसवोऽपि बुधे चेत्तथा । गर्गोक्तौ गार्ग्यपरिशिष्टोक्तौ च द्वयोरपि मृत्युफलश्रवणात् । माघेतरमासेषु बुधे महिषीप्रसवस्य दुष्टत्वे तु न मानं । सिंहेऽर्के गोप्रसवोऽपि विशेषतो दुष्टः । सर्वत्र मृत्युफलश्रवणात् । अत्राऽयं निर्गलितोऽर्थः । सिंहेऽर्के गोः माघस्थबुधे महिष्याः श्रावणस्थदिनेऽश्विन्याश्च प्रसवो विशेषतो दुष्टः । बुधरहिते माघे महिष्याः श्रावणे रात्रौ तदितरमासे दिवा चाऽश्विन्याः प्रसवः पौषे मानुष्याः प्रथमप्रसवश्चाऽल्पदोषः) इति पौषे स्त्रीप्रथमप्रसवादिशांतिः॥

॥ अथ प्रयोगः । कर्ता दशाहोत्तरं शुभदिने स्नात्वा कुलदेवतामभ्यर्च्य आचमनादिदेशकालस्मरणांते मम पत्न्याः पौषे प्रथमप्रसूतिसूचितसर्वारिष्टपरिहारद्वारा० सग्रहमखां शौनकोक्तां शांतिं करिष्ये इति संकल्प्य ( गवादिशांतौ तु सिंहस्थे रवौ गोप्रसूतिसू० । माघे महिषीप्रसूति० । श्रावणे वडवाप्रसूति० इत्यूहः ) गणेशपूजनस्वस्तिवाचनादिऋत्विग्वरणांतं कुर्यात् । अत्र ऋत्विजोऽष्टौ चत्वारो वा । तत आचार्यः प्रादेशकरणांते गृहस्यैशानभागे महीद्यौरिति भूमिं स्पृष्ट्वा ओषधयःसमिति व्रीहिराशिं कृत्वा आकलशेष्विति सौवर्णं राजतं

ताम्रमयं वा कलशं संस्थाप्य इमंमइति तीर्थोदकेनापूर्य गंधादिप्रक्षेपांते रुवतिभीमइति पंचत्वचः याओषधीरिति सर्वौषधीः स्योनेति सप्तमृदश्च प्रक्षिप्य युवासुवासाइति वस्त्रयुग्मेनावेष्टय पूर्णपात्रे सौवर्णौ राजतौ ताम्रमयौ वा रुद्रसूर्यौ कद्रुद्राय कण्वो रुद्रो० । आकृष्णेन हिरण्य० । इतिमंत्राभ्यामावाह्य पूजयेत् । तत एकऋत्विक् होमसमाप्त्यंतं रुद्रसूक्तान्यपरश्च सौरमंत्रान्जपेत् । एषामृष्यादि वैधृत्यादिशांतौ द्रष्टव्यं । यद्वा तत्तन्मूलमंत्रजपः कार्यः । ततोऽग्निं ग्रहांश्च प्रतिष्ठाप्यान्वादध्यात् । ग्रहादिकीर्तनांते रुद्रं सूर्यं च प्रधानदेवते तिलाज्यचरुभिः प्रत्येकं प्रतिद्रव्यं अष्टोत्तरशतसंख्याहुतिभिः । २८ वा । शेषेणेत्यादिप्रणीतास्थापनांते तूष्णीं निर्वापप्रोक्षणे कृत्वा आज्यसंस्कारादिग्रहादिहोमांते पूजामंत्राभ्यां तिलाज्यचरुभिः प्रधानहोमं कुर्यात् । ततः स्विष्टकृदादिप्रायश्चित्तहोमांते बलिदानं पूर्णाहुतिं च कृत्वा संस्रावहोमादिशेषं समाप्य स्थापितकलशोदकेन सकुटुंबं यजमानं समुद्रज्येष्ठादिमंत्रैः सुरास्त्वामित्यादिभिश्चाभिषिंचेत् । ततो यजमानो विभूतिं धृत्वा रुद्रसूर्यादीनामुत्तरपूजां विधाय तेभ्यो दक्षिणां समर्प्याचार्यं संपूज्य तस्मै यथाशक्ति सुवर्णं दत्वा ( गवादिप्रसवे तु प्रसूतां गां महिषीं वडवां वा दत्वा ) ऋत्विग्भ्यो दक्षिणामाचार्याय विसर्जितदेवतापीठं च दत्वाऽष्टशतं शक्त्या वा विप्रान्संभोज्य भूयसीं दत्वाऽऽशिषो गृहीत्वा कर्म समापयेत् । अत्र यद्यपि सिंधूक्तवाक्ये नार्या दानं प्रतीयते तथापि शौनकीये तस्य पर्युदासात्तदकृत्वा तत्स्थाने यथाशक्ति सुवर्णमाचार्याय देयं । सिंधौ तस्या उपादानं तु निषिद्धताकथनमात्रार्थमिति बोध्यं । तथाच गवादिप्रसवे शांतिदानयोः समुच्चयाऽशक्तौ सिंधूक्तवचोऽनुरोधेन तासां दानमात्रं कार्यं । गोप्रसूतौ शौनकनारदोक्तयोरन्यतरा शांतिः कार्या । निमित्ते विशेषाऽभावात् । माघस्थबुधे महिष्याः श्रावणस्थदिने वडवायाश्च प्रसूतेस्तु विशेषतो दुष्टत्वात्तासां त्यागं विवासं दानं वा कृत्वा नारदोक्तां शांतिं कुर्यात् । तत्र प्रयोगः । आचमनादिदेशकाल-

स्मरणांते मम माघांतर्गतबुधे महिषीप्रसवसूचित० सग्रहमखां नारदोक्ता शांतिं० । ( श्रावणे दिवा वडवाप्रसव० इत्यन्यत्र संकल्पः )
गणेशपूजादिऋत्विग्वरणांतं कुर्यात् । आचार्यवरणमैच्छिकं । ततः प्रादेशांतेऽग्निं ग्रहांश्च प्रतिष्ठाप्यान्वादध्यात् । ग्रहादिकीर्तनांते अस्यवाम-
स्येतिसूक्तमंत्रदेवताः विष्णुं च घृताक्ततिलैः अष्टोत्तरसहस्रसं० । १०८ वा । मृत्युंजयं रुद्रं घृताक्ततिलैः अयुतसंख्या० । शेषेणेत्यादि
ग्रहादिहोमांते अस्यवामस्येतिसूक्तमंत्रैस्तद्विष्णोरित्यनेन च १००८।१०८ वा । त्र्यंबकमितिमंत्रेण चाऽयुतं घृताक्ततिलहोमं कृत्वा स्विष्ट-
कृदादिहोमशेषे समाप्ते श्रीसूक्तेन शांतिसूक्तेन च स्नात्वा ग्रहादीनामुत्तरपूजां विधाय ऋत्विग्भ्यो दक्षिणां दत्वा विसर्जितदेवतापीठं सोपस्कर-
माचार्यस्य तदभावेऽन्यस्य वा हस्ते प्रतिपाद्य विप्रान्संभोज्य भूयसीं दत्वाऽऽशिषो गृहीत्वा कर्म समापयेत् । अत्र त्यागादेर्होमस्य च
समुच्चयाऽशक्तावन्यतरत्कार्यं । गर्गवाक्ये त्यागादीनां वचनांतरे होमस्य चेति वाक्यद्वयेन पृथग्विधानात् । ग्रामे स्वगृहे वा रात्रेर्मध्यभागे
निशीथे वा गोः क्रंदने इयमेव शांतिः कार्या । नाऽत्र त्यागादि । अत्यशक्तस्तु गवादिप्रसवे विधानमालोक्तां शांतिं कृत्वा शिशुं दद्यात् ।
तत्र प्रयोगः । कृष्णपक्षे षष्ठ्यादिपंचतिथिषु शांतिकयोग्यकाले प्राग्वत् संकल्पादि कुर्यात् । आचार्यः प्रादेशांते स्थंडिलात्पूर्वे कुंभे लोहमय-
महिषारूढं हैमं यमिन्या सहितं यमं यमायसोममित्यावाह्य संपूज्याऽग्निं ग्रहांश्च प्रतिष्ठाप्याऽन्वादध्यात् । ग्रहादिकीर्तनांते यमिन्या सहितं यमं
प्रधानदेवं दूर्वातिलाज्यैः प्रतिद्रव्यं अष्टोत्तरशतसं० । रुद्रं प्रधा० घृताक्तपायसेन अष्टोत्तरशतसं० ( यद्वा यमिन्या सहितं यमं दूर्वासमि-
त्तिलाज्यघृताक्तपायसैः प्रतिद्रव्यं १०८ ) शेषेणेत्यादिप्रायश्चित्तहोमांते बलिदानपूर्णाहुतिपूर्वकं संस्रावहोमादिशेषं समाप्य कलशोदकेन
राक्षोघ्नसूक्तैः शंनइंद्राग्नीसूक्तेन ग्रहादिमंत्रैश्च निर्गुंडीपल्लवैर्यजमानमभिषिंचेत् । ततः कर्ता देवतोत्तरपूजां विधाय दक्षिणादानांते विसर्जित-

प्रतिमादानमाचार्याय कुर्यात् । तत्र मंत्रः । सदक्षिणंश्राद्धदेवंयमिन्यासहितंयमं । सोपस्करंगृहाणत्वंममविघ्नहरोभव ॥ ततः प्रसूतं शिशुं सदक्षिणं विप्राय दत्वा त्र्यवरान्ब्राह्मणान्पायसादिभिः संभोज्य दक्षिणाभिर्विशेषतः संतोष्य कर्म समापयेत् । इति पौषे स्त्रीप्रथमप्रसवादिशांतिप्रयोगः ॥

अथ बालरक्षा । मदनरत्ने क्रियाकालगुणोत्तरे । प्रथमेऽहनि गृह्णाति बालकं गंधिनी [पापिनी] ग्रही । तया गृहीतमात्रस्य चेष्टितान्युपलक्षयेत् ॥ " शां० सा० ग्रीवायां पृष्ठभागे च ललाटे श्रवणे मुखे । उद्वेजयति गात्राणि आहारं च न गृह्णते ॥ " गात्रोद्वेगो निराहारो लाला ग्रीवानिवर्तनं ॥ लिंपेत धातकीलोध्रमंजिष्ठातालचंदनैः । धूपयेन्महिषाक्षेण ततो मुंचति सा ग्रही ॥ ( महिषाक्षो गुग्गुलुः ) " शां० म० लेपनधूपने बालस्य । शां० सा० भोगं दद्यात्तु मातॄणां सर्वकालं विचक्षणः । गंधं माल्यं च कृसरं सुरा मांसं यथेच्छया ॥ भोगो बलिः । सर्वकालं संध्यात्रयं । निमित्तानंतरं चेति मदनरत्ने " बलिस्तत्रैव । मत्स्यमांससुराभक्ष्यगंधाऽस्रग्धूपदीपकैः । मंत्रस्तु प्रयोगसारे । ॐनमश्चामुंडे भगवति विद्युज्जिह्वे हांहां हींहीं अपसरंतु दुष्टग्रहा हुं तद्यथा गच्छंतु याताऽन्यतः स्थाने रुद्रो ज्ञापयति स्वाहा विद्युज्जिह्वे हां हीं हूं हूं मुंचमुंचस्वाहा । बालग्रहाणां विधेयं शस्ता बलिनिवेदने । नारायणीयेऽन्यो मंत्रः । कामुंडे यवश्वीकंडिचे ॐभगवति हिहि हुहु रक्षां कुरु कुरु बलिं गृहाण गृहाण फट् ठठेति । बालग्रहेषु सर्वत्र बलिमंत्रस्त्वयं स्मृतः । " शां० म० बलिश्च रवेरुदयेऽस्ते दिनार्धे वा देयः " बलिस्थानानि प्रयोगसारे । कदंबश्च करंजश्च बिभीतो निंब एव च । अश्वत्थोदुंबरौ चैव श्लेष्मातकवटौ तथा ॥ मातृवृक्षाः क्रमेणोक्ताः पूर्वादीशांतदिग्गताः । तेषामेकं समाश्रित्य बलिं दद्याद्यथोदितं ॥ प्रतिस्थूलं [ कूलं ] प्रत्युदकं प्रतिवृक्षमथापि वा । "शां०म० स्थूलं तटं । शां०सा० स्थूलमुच्चदेशः" अत्राशायामनुक्तायां प्राक्प्रोक्ताशानुसारतः ॥ यत्र वा रोचते तत्र मातॄणां बलिमाहरेत् ।

कृत्वा नीराजनांतं बलिमिति विधिवद्बालमाहूय तत्र संपृश्याद्भिः समंत्रं शिरसि सकुसुमैरक्षतैर्भ्रामयित्वा । क्षिप्त्वाऽग्रे देवताया विधिवदुपहितैस्तत्र गीतैः सुमंत्रैः कुर्याद्रक्षां समीक्ष्य क्षणमिव विलयं याति दुष्टग्रहार्तिः ॥ नीराजनमंत्रस्तु नारायणीये । ब्रह्मा विष्णुश्च रुद्रश्च स्कंदो वैश्रवणस्तथा । रक्षंतु त्वरितं बालं मुंच मुंच कुमारकं ॥ "शां० म० कालगुणोत्तरे । पलाशाऽश्वत्थकापित्थबिल्वोदुंबरपल्लवाः । पंचभंगाः स्मृता ह्येते बालानां हितकारकाः ॥ स्नापितं धूपितं बालं ततो मुंचति सा ग्रही । प्रयोगसारेऽपि । पलाशोदुंबराश्वत्थबिल्वन्यग्रोधपल्लवाः । क्वथितेन कषायेण परिषिंचेत्प्रशांतये ॥ परिषिंचेत्स्नापयेदिति मदनः । अत्र मंत्रः । ॐ नमश्चामुंडेइत्यादिर्बलिदाने पूर्वमुक्तः । रक्षामंत्रः प्रयोगसारे । रक्ष रक्ष महादेव नीलग्रीव जटाधर । ग्रहैस्तु सहितो रक्ष मुंच मुंच कुमारकं ॥ अमुं मंत्रं भूर्जपत्रे विलिख्य तत्पत्रं भुजे बध्नीयादिति मदनः । बालकशिखास्पर्शपूर्वकं जपे मंत्र उक्तः प्रयोगसारे । ॐ सर्वामातर इमं ग्रहं संहरंतु हुं रोदय रोदय स्फोटय २ स्वाहा २ गर्ज २ सर २ गृह्ण २ आमर्दय २ हिम २ हन २ एवं सिद्धिं रुद्रो ज्ञापयति स्वाहा । अत्र होमोपि प्रयोगसारे । ॐ कूष्मांडि भगवति सुरागिणि सुमुंडिते मुंच मुंच दह २ पच २ सर २ गच्छ २ स्वाहा । कृत्वा चतुष्पथे कुंडं मंत्रेणानेन मंत्रवित् । त्रिरात्रं पंचरात्रं वा सहस्रं जुहुयात्तिलैः ॥ यांति दुष्टग्रहाः शांतिं बलिना चाऽनुमोदिताः । बालरोदनपरिहारार्थं यंत्रमुक्तं प्रयोगसारे । षडस्रमध्ये ह्रींकारं तन्मध्ये शिशोर्नाम विलिख्य षट्सु अस्रेषु ॐलुलुवेस्वाहेतिमंत्रस्य षडक्षराणि विलिख्य तद्बहिर्नेमिवद्वृत्तद्वयं विलिख्य तद्बहिरधोमुखैरर्धचंद्रैरावेष्ट्य पंचोपचारैः संपूज्य बालहस्ते बध्नीयादिति । अथ बालग्रहस्तवः प्रयोगसारे । प्रणम्य शिरसा शांतं गणेशानं तमीश्वरं । बालग्रहस्तवं वक्ष्ये समस्ताभ्युदयप्रदं ॥ तपसा यशसा दीप्त्या वपुषा विक्रमेण च । निर्दिष्टो यः सदा स्कंदः स नो देवः प्रसीदतु ॥ रक्तमाल्यांबरधरो रक्तगंधानुलेपनः । रक्ता-

दिव्योज्ज्वलः शांतः स नो देवः प्रसीदतु ॥ यो नंदनः पशुपतेर्मातॄणां पावकस्य च । गंगोमाकृत्तिकानां च स नो देवः० ॥ देवसेनापरिवृतो देवसेनाऽर्चितः सदा । देवसेनापतिः श्रीमान् स नो दे० ॥ शक्तः शक्तिधरापूरः कुमारः शिखिवाहनः । सुरारिहा महासेनः स नो दे० ॥ प्रकृत्या सुंदरो दांतो दिव्यैश्वर्यो दयान्वितः । नानाविनोदसंपन्नः स नो दे० ॥ प्रबोधा सुप्रबोधा च बोधना सुप्रबोधना । प्रबुद्धा च प्रबोधा च सुप्रीता सुमनास्तथा ॥ मनोन्मनीति विख्याता योगिन्यः पांतु बालकं । सुव्रता रुक्मिणी चैव मंदवेगा विभीषणा ॥ विद्युज्जिव्हा महानासा शतानंदा तथा परा । बालदा प्रमदा चेति योगिन्यः पांतु बालकं ॥ हरिणी चाथ वाराही वानरी क्रोष्टुकी तथा । कुबेरी कोटराक्षी च कुंभकर्णा च चंडिनी ॥ बलाह्विकारिणी चेति योगिन्यः ० । शुद्धा विशुद्धा श्रद्धा च योगसिद्धा मितंवदा ॥ सुभगा शुभदा गौरी बला विकारिणीति च । नानाविज्ञानविख्याता योगिन्यः० ॥ लंबा प्रलंबा च तथा लंबकर्णा च लंबिका । ज्वाला कराली कालिंदी कालिकेति यथोदिताः ॥ स्वच्छंदाचारसंपन्ना योगिन्यः ० । प्रणीता सुप्रणीता च मालिनी विश्वमालिनी ॥ विमला कमला माली लोला रौद्री च विश्रुता । विचरंत्यो यथाकामं योगिन्यः ० ॥ वायुवेगा महावेगा सुवेगा वेगवाहिनी । शशिनी हंसिनी हृष्टिः पुष्टिः पौष्टिकसिद्धिदा ॥ दिव्यानुभावा वाहिन्यो योगिन्यः० । भ्रमिणी भामिनी नित्या निर्भिन्ना सुभगा गुहा ॥ क्लेदिनी द्राविणी वामा योगिन्यः० । रुद्रशक्तिविनिष्क्रांतमेकाशीतिक्रमोदितं ॥ योगिनीवृंदमेतद्धि सिद्धविद्याधरार्चितं । स्कंदग्रहाधिदेवं तद्बालकं पातु सर्वदा ॥ शकुनी रेवती देवी शिखा च मुखचंडिका । प्रलंबा पूतनाख्या च कटपूतनिका पुनः ॥ विजया गोमुखी धूम्रा मुंडमाला तथा परा । अधोलंबा च पाशा च कुमुदाऽप्यथ चांऽबिका ॥ मानिनी चैककाली च देवी प्रेतमुखी तथा ।

ऐंद्री मार्जारिका भूयः कुरंगी च शुभा कृशा ॥ कालरात्रिश्च माया च लोहिता गिलिर्पिचिका । भीतारणी चक्रवादा भीषणा दुर्जया परा ॥ तापिनी कटकोली च मुक्तकेशी महाबला । अहंकारी जया तद्दजमेषा त्रिदंडिका ॥ रोदिनी मुकुटाऽभिख्या ललाटा पिंगला तथा । शीतला वालिनी चैव तापसी पापराक्षसी ॥ मानसी धनदा देवी बलना वर्तिनी तथा । यमुना जातवेदा च मा-लिनी कलहंसिनी ॥ बालिका देवहूती च वायसी पक्षिणी तथा । स्वच्छंदा पालिका चैव वासिनी चांबिकेति च ॥ पंचाशत्तु कुलोत्पन्ना-श्चतुःषष्टिः समीरिताः । योगिन्यो नित्यसंतुष्टाः स्कंदापस्मारदेवताः ॥ नानारक्षाधिकारस्था बालकं पांतु सर्वदा । महालक्ष्मीर्महानंगा महासेना महाबला ॥ महाकंपा महाभीमा महातेजा महोत्सवा । महासेना महाचंडा मोहिनी वीरनायिका ॥ एकवीरा विशालाक्षी सुकेशी सुमनास्तथा । सुकेशिनी च संतुष्टा दांडिनी च विलंबिनी ॥ भामिनी चाऽथ सौवर्णी सिंहवक्रा करंकिणी । भ्रमरा चंचला चंपा चंडाला सिद्धिदा परा ॥ शाकोदरी धृतिः स्वाहा स्वधाख्या च सनातनी । शंबरा च तथा देवी नीलग्रीवा तथांऽबिका ॥ वितला गंधिनी वामा क्रीडंती चैव वाहिनी । कर्षणी मालती फुल्ला कालकर्षी च चंडिका ॥ चित्रानना गुहा चेति पार्वती संगतिर्गता । पंचाशत्तत्वसंपन्ना शकुनी दैवतप्रिया ॥ योगिन्यः कामरूपिण्यो बालकं पांतु सर्वदा । विश्वंतपा प्रभावज्ञा सर्वज्ञा सर्वगा गुहा ॥ दुर्गा सरस्वती ज्येष्ठा श्रेष्ठा पद्मा पराऽपरा । प्रमदा रोहिणी शीता प्रह्वा प्रल्हादिनी विभा ॥ विभूतिर्विततिः प्रीतिः प्रकृतिः प्रमतिर्यथा । एता भगवता सृष्टा योगिन्यो योगसिद्धिदाः ॥ पंचविंशतिराख्याता रेवती शक्तिगोचरा । जगदाप्यायनकरी बालकं पातु सर्वदा ॥ नंदश्चैवोपनंदश्च गोमतिः सुमतिस्तथा । विद्युजिह्वो महाकालः कराकस्ति-मिलोचनः ॥ तेजहोडा विरूपाक्षो गोमुखो वडवामुखः । कालाननः करालश्च शंकुकर्णो विभीषणः ॥ एते सकुंदनोत्पन्ना वीराः षोडशराक्षसाः ।

पूतनादेवताजुष्टा बालकं पांतु सर्वदा ॥ वज्रिणी शक्तिनी चाढ्या दंडिनी खड्गिनी तथा । पाशिनी ध्वजिनी देवी गदिनी शूलिनी परा ॥ वज्रिणी चक्रिणी चेति सर्वाकारा भयप्रदा । एता दिङ्निर्मिता देव्यो योगिन्यो देवकीर्तिताः ॥ अधिभूतप्रधाना या पायात्सा शांतपूतना । प्रसन्ना मातरः सर्वा बालकं पांतु सर्वदा ॥ अर्थको जनको भूमा उग्रः स्कंदश्च कीर्तितः । वीरेशाः पितृभिः सृष्टा नैगमेयाधिदेवताः ॥ पंचशक्तिप्रधानास्ता बालकं पांतु सर्वदा । भैरवा वीरभूताश्च क्षेत्रपाला विनायकाः ॥ डाकिन्यो रुद्रशाकिन्यो यक्षरक्षांसि पन्नगाः । वराश्चाऽवांतरा भूता मनुष्याः पशवो मृगाः ॥ सरीसृपाश्च संतुष्टा बालकं पांतु सर्वदा । आदित्या वसवो रुद्राः पितरो मरुतस्तथा ॥ मुनयो मनवः काला ग्रहयोगाः सनातनाः । सिद्धाः साध्याश्च गंधर्वा देव्यश्चाऽप्सरसां वराः ॥ विद्याधरा महादैत्या बालकं पांतु सर्वदा । सहजा योगजा चैव वीरजा मंत्रजा तथा ॥ योगिन्यो योगविनियो नानाविभवगोचराः । भवानी नाम संतुष्टा बालकं पांतु सर्वदा ॥ भूर्लोके च भुवर्लोके स्वर्लोके याश्च मातरः । अधश्चोर्ध्वं च तिर्यक् च क्रीडंत्योऽनंतमूर्तयः ॥ प्रपन्नयोगसंपन्ना दिव्यैश्वर्यसमन्विताः । स्वच्छंदयोगसंभूतैर्भैरवैः परिवारिताः ॥ रक्षंतु बालकं प्रीताः शांतिं यच्छंतु चेतसा ॥ दिव्यं स्तोत्रमिदं पुण्यं बालरक्षाधिकारकं । जपेत्संतानरक्षार्थं बालद्रोहोपशांतिदं॥ इति बालग्रहस्तवः । इदं स्तवांतं कृत्यमाद्यमासवर्षयोर्द्वितीयादिदिनमासवर्षेष्वपि कार्यं । विशेषस्तूच्यते । कौमारतंत्रे । प्रथमे दिवसे० । ” मदनरत्ने कौमारतंत्रे । प्रथमे दिवसे मासे वर्षे वा योगिनी तदा । अथवा नंदिनी नाम्ना पूतनाऽऽक्रमते शिशुं ॥ तद्गृहीतस्य बालस्य ज्वरः स्यात्प्रथमं ततः । गात्रशोषश्च वैवर्ण्यं नाऽऽहारेच्छा भृशं भवेत् ॥ छर्दिर्मूर्छा च कंपश्च ग्रहीज्वरयुतस्तथा । विधानं तत्र वक्ष्यामि येन मुंचति पूतना ॥ नदीमृत्तिकया कुर्याच्छोभनां पुत्तिकां ततः । शुक्लौदनं शुक्लगंधस्तथा शुक्लानुलेपनं ॥ शुक्लपुष्पाणि वै पंचध्वजाः

पंचप्रदीपकाः । स्वस्तिकाः पंच पूर्वाह्णे पूर्वस्यां दिशि संयतः ॥ बलिं दद्यादथो श्वेतसर्षपोशीरमेव वा । शिवनिर्माल्यमार्जारनृकेशान्निंब-
पत्रकं ॥ गव्यं घृतं चेत्येतेन धूपयेच्चैव बालकं । एवं दिनत्रयं कृत्वा चतुर्थे शांतिवारिणा ॥ स्नापयेद्बालकं पश्चाद्भोजयेच्चाऽपि भिक्षुकं । क्षीरेण
भोजयेदेवं सुस्थो भवति बालकः ॥ " शां० म० शांतिवारिणेति शंनइंद्राग्नीशंनोवातइत्यादिकैः स्वस्वशाखापठितैर्मंत्रैरभिमंत्रितं वारि
शांतिवारि । अथवा वक्ष्यमाणमंत्रेण शतकृत्वोऽभिमंत्रितं वारि शांतिवारि "॥ १ ॥ द्वितीये दिवसे मासे हायने वा सुनंदना । गृह्णाति पूतना बालं
योगिनी स्वस्तनापि वा ॥ ततो भवेज्ज्वरः पूर्वं संकोचो हस्तपादयोः । दंतान्प्रखादत्यनिशं निमीलयति चक्षुषी ॥ आहारं च न गृह्णाति दिवारा-
त्रं च रोदिति । अक्षिरोगश्छर्दनं च भवेद्भीतिः पुनःपुनः ॥ कृशत्वं च प्रजायेत इत्येतच्छिशुलक्षणं । तंडुलप्रस्थपिष्टेन विनिर्माय्याऽथ
पुत्रिकां ॥ ( पुत्रिकां पुत्तलिकां ) त्रयोदश ध्वजा दीपाः स्वस्तिका यवलौदनः । प्रस्थप्रमाणपिष्टेन सिद्धाऽपूपाश्च मत्स्यकाः ॥ मांसं चेत्येत-
दखिलं पश्चिमायां दिशि क्षिपेत् । पश्चिमायां च संध्यायामेतद्दद्याद्दिनत्रयं ॥" शां० सा० द्वितीयग्रहगृहीतेऽपि प्रथमदिनादिगृहीतवद्रूपस्नान-
ब्राह्मणभोजनादि कार्यमिति मदनरत्ने " ॥ २ ॥ तृतीये दिवसे मासे वर्षे वा पूतनाऽभिधा । गृह्णीयाद्योगिनी बालं ततः पूर्वं ज्वरो भवेत् ॥
प्रस्थप्रमाणपिष्टेन पुत्रिकां कारयेत्तु तां । रक्तौदनं ध्वजो रक्तो रक्तः स्वस्तिक एव च ॥ रक्तपुष्पं रक्तगंधस्तथा रक्तानुलेपनं । पश्चिमायां च
संध्यायामुदीच्यां निक्षिपेद्बलिं ॥ ३ ॥ चतुर्थेऽहनि मासे तु वर्षे गृह्णाति बालकं । तुषमंडनिका नाम पूतना वाऽथ योगिनी ॥ भीषणाख्या
ततस्तस्या जायते प्रथमं ज्वरः । गात्रभंगोऽस्थितिर्मूर्च्छा वैवर्ण्यं चाऽक्षिमीलनं ॥ वैकल्यं श्यामता श्वासः कंपोऽ [ कासो ] रुचिरितींगितं ।
तिलपिष्टमयैः कृत्वा पुत्रिकां बिल्वकंटकैः ॥ अष्टांगं रचयेत्पुष्पं शुक्लं शुक्लध्वजोऽर्जुनः । स्वस्तिकोऽर्धप्रस्थसिद्धं भक्तं तावदपूपकाः ॥

" शां० म० तावदिति अर्धप्रस्थपरिमितेनाऽन्नेन कृता इत्यर्थः " त्रिसंध्यं पश्चिमायां च बलिं दद्यात्प्रयत्नतः । गोशृंगं सर्पनिर्मोकं लशुनं निंबपत्रकं ॥ मनुष्यकेशमार्जारलोमान्याजघृतं तथा । एतैश्च धूपयेदेकनिशि संध्यात्रयेऽपि च ॥ " शां० म० एकनिशि एकस्मिन्नेव दिने बलिरित्यर्थः" ॥ ४ ॥ पंचमे दिवसे मासे वर्षे वा पूतना शिशुं । बिडालिकाख्या गृह्णीयात्प्रथमं जायते ज्वरः ॥ हिक्का श्वासश्च शूलश्च गात्रभंगोऽरुचिस्तथा । तंडुलप्रस्थपिष्टेन निर्मायाऽथ तु पुत्रिकां ॥ शुक्लौदनं ध्वजाः पंच स्वस्तिकाः पंच चोज्ज्वलाः । पंच दोषारशुक्लानि कुसुमानि च चंदनं ॥ अपराह्णे वृक्षमूले पश्चिमायां दिशि क्षिपेत् । पंचमादिषु चतुर्थदिनोक्तो धूपोऽपीति मदनरत्ने ॥५॥ षष्ठेऽहनि तथा मासे हायने वाऽपि बालकं । पूतना शकुनिर्नाम गृह्णीयात्तदनंतरं ॥ ज्वर उद्वेजनं गात्रे शोषः श्वासोऽरुचिस्तथा । कासश्च हस्तपादाऽक्षिसंकोचश्चेति लक्षणं ॥ तंडुलप्रस्थपिष्टेन विनिर्मायाऽथ पुत्रिकां । कृष्णौदनं ध्वजाः पंच कृष्णाः स्वस्तिकपंचकं ॥ कृष्णमेवाऽथ मत्स्याश्च पायसं दुग्धमेव च । मांसं चाऽपूपकास्त्वर्धप्रस्थपिष्टविनिर्मिताः ॥ अपराह्णे पश्चिमायां निक्षिपेद्बलिपुत्रिकां । पुत्रिकां पूर्ववत्कृत्वा पललं शूलपाचितं ॥ मत्स्याः पर्पटिकाश्चैव रक्तं च प्रस्थसंमितं । उदीच्यां पूर्वसंध्यायां बलिर्देयः प्रशांतये ॥ " शां० म० बलिदानपूजायां मंत्रस्तु ॐफट्स्वाहेति " ॥६॥ सप्तमे दिवसे मासे वर्षे वा शुष्करेवती । गृह्णाति पूतना बालं ततः स्यात्प्रथमं ज्वरः ॥ गात्रभंगोऽथ विद्वेष आहारे कंपरोदने । प्रस्थसंमितपिष्टेन सम्यक् कृत्वाऽथ पुत्रिकां ॥ सप्तध्वजाः सप्तदीपाः स्वस्तिकाः सप्त वै तथा ॥ पुष्पाणि मत्स्यमांसं च भक्तं चेत्युदगाहरेत् ॥ " शां० म० मंत्रस्तु ॐह्रीं फट् स्वाहेति " ॥ ७ ॥ अष्टमे दिवसे मासे वर्षे वाऽऽक्रमते शिशुं । बिडालिकानामधेया पूतनाऽस्य ततो ज्वरः ॥ गात्रभेदोऽतरुदितं रोदनं नेत्रमीलनं । जिह्वाशोषः शिरःस्फोट आहारद्वेष एव च ॥ तंडुलप्रस्थपिष्टेन पुत्तलीं कारयेत्ततः । पायसं

मधु सर्पिश्च क्षीरलाजाश्च शष्कुलीः ॥ गुग्गुलुं मेषमांसं च तथा पर्पटिका अपि । ध्वजा दीपाश्च चत्वारो गंधा नानाविधा अपि ॥ सुमनांसि च रक्तानीत्येवमत्रोदितो बलिः । अमुं समाहरेत्पूर्वं संध्यायां दक्षिणादिशि ॥ कृष्णाष्टम्यां वक्ष्यमाणमंत्रेणाऽनेन संयतः । “ शां० म० ॐ-नमोनारायणाय त्रैलोक्यविद्रावणाय ॐर्‍हींफट्स्वाहा । अननैव च मंत्रेण पूजादिबलिहरणांतं कर्मकुर्यात् । धूपस्तु गोशृंगमित्यादिः । अत्र कृष्णाष्टम्यां बलिहरणमिति न नियमार्थं । किंतु सति संभवे प्राशस्त्यार्थं । अन्यथा तत्प्रतीक्षायां शिशुविनाशापत्तेः ” ॥ ८ ॥ नवमे दिवसे वर्षे हायने वाऽपि बालकं । गृह्णाति मदनानाम्नी पूतना तदनंतरं ॥ ज्वरश्छर्दिर्घृणाऽऽध्मानं कासः श्वासः सतृष्णता । गात्रभंगश्च शूलं च चिह्नान्येतानि बालके ॥ प्रस्थमात्रेण पिष्टेन विनिर्मायाऽत्र पुत्तिकां । ओदनं मत्स्यमांसं च पर्पटी चेक्षुमूलकं ॥ निक्षिपेत्पूर्वसंध्यायामुत्तरस्यां बलिं दिशि । तत्र मंत्रः । ॐ नमोभगवते वासुदेवाय हुंफट्स्वाहा ॥ ९ ॥ दशमे दिवसे मासे हायने वाऽथ बालकं । पूतना रेवतीनाम्नी गृह्णीयाद्बालकं ततः ॥ ज्वरश्छर्दिः श्वासकासौ शूलं चेत्येतदीरितं । प्रस्थप्रमाणपिष्टेन पुत्रिकां तत्र कल्पयेत् ॥ अष्टांगं लेखयेत्तत्र बिल्ववृक्षस्य कंटकैः । गुडौदनं च सर्पिश्च ध्वजानां पंचविंशतिः ॥ स्वस्तिकानां प्रदीपानां पंचविंशतिरेव च । चत्वारि रक्तपुष्पाणीत्येतद्दक्षिणदिग्गतः ॥ संध्यात्रये वक्ष्यमाणमंत्रेणाऽनेन निक्षिपेत् । ॐ नमोभगवते वासुदेवाय हन हुंफट्स्वाहा ॥ १० ॥ एकादशे दिने मासे हायने पूतनाऽर्चिका । गृह्णाति बालकं पश्चाज्ज्वरस्तस्य प्रजायते ॥ अन्नद्वेषो मुखे शोषो गात्रभंगश्च रोदनं । ऊर्ध्वदृष्टिरपीत्येतल्लक्षणं तद्ग्रहाच्छिशोः ॥ पुत्रिका माषपिष्टेन रचिता शुक्लमोदनं । पुष्पाण्यपि च शुक्लानि ध्वजानां पंचविंशतिः ॥ स्वस्तिकानां प्रदीपानां पंचविंशतिरेव च । एतत्सर्वं यमाशायां संध्यायां प्रातराहरेत् । मंत्रस्तु । ॐ नमोभगवते वज्रहस्ताय ॐफट्स्वाहा । “ शां० म० ॐनमोभगवते ताराय चंद्रहासवज्र-

हस्ताय ज्वलदुष्टग्रहाय ॐफट्स्वाहा " ॥ ११ ॥ द्वादशे दिवसे मासे वर्षे वा पूतना शिशुं । अद्भुताख्या प्रगृह्णाति ज्वरः स्यात्प्रथमं ततः ॥ रोदनं सर्वदा दंतखादनं रक्तनेत्रता । रोमांचस्ताप इत्येतदखिलं तस्य लक्षणं ॥ तंडुलप्रस्थपिष्टेन कृत्वा तत्राऽथ पुत्रिकां । त्रयोदशस्त्वस्तिकाश्च ध्वजा दीपास्त्रयोदश ॥ अपूपा मत्स्यमांसं च तथा पर्पटिका अपि । एतत्सर्वं दक्षिणस्यां दिशि मंत्रेण निक्षिपेत् ॥ ॐनमोनारायणाय हन दुष्टसत्वानां फट्स्वाहा । " शां० म० ॐनमोनारायणाय प्रज्वलद्वज्रहस्ताय हरहर शोषय २ मर्दय २ पातय २ हन २ दुष्टसत्वानां फट्स्वाहा " ॥ १२ ॥ मदनरत्ने प्रयोगसारे । वर्षे त्रयोदशे बालं ग्रही गृह्णाति यक्षिणी । तच्चेष्टा किल त्वक्छूलज्वररोदनहासनं ॥ शाल्योदनसुरामांसमत्स्यकुल्माषपायसैः । दद्यात्सकृसरं प्रोक्तैर्मध्याह्ने त्रिदिनं बलिं ॥ पिबेच्चाऽभ्यंजयेत्सर्पिस्ततो मुंचाति सा ग्रही ॥ १३ ॥ वर्षे चतुर्दशे बालं स्वच्छंदा नामतो ग्रही ॥ गृह्णाति चेष्टा तत्र स्याच्छोणितस्रवणं तथा ॥ १४ ॥ शूलं च नाभिदेशे स्यात्तत्र नास्ति प्रतिक्रिया ॥ वैद्यवंशकेतुना तु अत्र पूर्वोक्तमेव विधानमित्युक्तं । वर्षे पंचदशे बालं ग्रही गृह्णति वारुणी । तत्रेदं चेष्टितं विद्याज्ज्वरो निद्रा विहस्तता ॥ ( विहस्तता व्याकुलत्वं ) कुल्माषकृसरापूपपोलिकापायसाऽऽसवैः । सपूगकैर्बलिं दद्यात्त्रिरात्रं चापि धूपयेत् ॥ चंदनेनाज्यसंयुक्तं ततो मुंचति सा ग्रही ॥ १५ ॥ षोडशे वत्सरे बालं ग्रही गृह्णाति दुर्जया । तच्चेष्टा हसनं कोपो यास्यामीति वचो मुहुः ॥ कुल्माषकृसरापूपतिलपिष्टान्नफल्गुकैः । दध्ना सह बलिं दद्यात्प्राच्यां दिशि दिनत्रयं ॥ १६ ॥ वर्षे सप्तदशे बालं ग्रही गृह्णाति बालकी । कासश्वासौ च विज्ञेयौ तत्र नास्ति प्रतिक्रिया ॥ संवत्सरग्रहा ह्येते कुमारपदपूर्वकाः । अत्राऽवशिष्टं समानं । इति कमलाकरभट्टकृते शांतिरत्ने मदनरत्नोक्ता बालग्रहशांतयः ॥ अथ पूतनाविधानं । तत्र लुब्धजातके

स्कांदे सूर्यंप्रति स्कंदवाक्यं । येन कर्मविपाकेन शिशूनां जायते गदः [ ग्रहः ] । तत्सर्वं कथयिष्यामि पृच्छतस्ते दिवाकर ॥ लंकायां रावणो नाम पौलस्त्यो राक्षसेश्वरः । स्वसारस्तस्य वीरस्य द्वादशाऽऽसन्महाभयाः ॥ ताभिः कृतं तपो घोरं सर्वलोकभयप्रदं । पीडितं ताभिरखिलं जगत्तीव्रतपोबलात् ॥ रुद्र आराधितस्ताभिस्तपसा तीव्रतेजसा । प्रसन्नोऽभूत्तदा देवस्ताभ्य एवं वरं ददौ ॥ रुद्र उवाच । वरदोऽहं वरार्हाभ्यो युष्मभ्यं रजनीचराः । ताभिर्वृतं तदा भक्ष्यं बालानां देहसंभवं ॥ वसाऽसृङ्मांसमेदोऽस्थिमज्जाशुक्रात्मकं रवे । देहि देवेश सर्वं भो जीवतामेव शंकर ॥ तच्छ्रुत्वा वचनं तासां चुकोप परमेश्वरः । ब्रह्मवंशसमुद्भूतास्तपोवृत्तिपरायणाः ॥ तत्कथं बालघाताय चेतो वः परिवर्तते । सर्वलोकमतं देयं प्रार्थितं तु मनीषिभिः ॥ राक्षस्य ऊचुः । यदि प्रसन्नो भगवान् ददात्वस्मत्प्रियं शिवः । सर्वेषामेव बालानां मेदसा तृप्तिरेव नः ॥ रुद्र उवाच । या स्त्री निशामुखे स्नाति बालं स्पृशति भुंजती । प्रसूतिसमयेऽभ्यंगं न करोति प्रमादतः ॥ नग्ना निद्राति रात्रौ वा निष्पन्नसुरता सती । तस्या बालं दिने मासे वर्षेऽपि च विशेषतः ॥ आद्ये तु दिवसे मासे वर्षे वाऽपि विमोचनी । गृह्णातु मत्प्रसादेन ज्वराद्यैर्वेदनोच्चयैः ॥ द्वितीये मोहिनी नाम सुनंदा तु तृतीयके । चतुर्थे पूतना नाम पंचमे ह्यासुरी तथा ॥ षष्ठे तु रेवती देवी बालं गृह्णातु सत्वरं । सप्तमे शकुनी नाम त्वष्टमे च पिशाचिका ॥ नवमे पाशिनी देवी शिशुं गृह्णातु सत्वरं । महामारी तु दशमे कालिका तु ततःपरं ॥ द्वादशे भामिनी देवी पीडाकरणतत्परा । यूयमेवं कुरुध्वं भोः पीडां बालकविग्रहे ॥ आत्मनो दिवसे मासे वर्षे चाऽपि पृथक्पृथक् । निमित्ते सति राक्षस्यः शुचौ च न कदाचन ॥ युष्मभ्यं बलिदानं ये विदधत्यखिलं परं । गृहीतमपि बालं तं संतुष्टाः परिमुंचत ॥ इति लब्धवराः सर्वाः पीडयंति शिशून्हि ताः । दिनमासाऽब्दमानेन नात्र कार्या विचारणा ॥ प्रथमे दिवसे मासे वर्षे देवी विमो-

चनी । तस्यास्तु जायते पीडा शिशूनां तीव्रवेदना ॥ ज्वरस्तु प्रथमं तावन्नेत्ररोगस्ततः परं । न गृह्णाति स्तनं डिंभो वांतिरात्यंतिकी भवेत् ॥ ( डिंभो बालः ) मुष्टीर्बध्नाति वेगेन दंतान्दंतैर्दशत्यलं । इत्थं प्रजायते पीडा विमोचिन्या दिवाकर ॥ तस्याः पूजां प्रवक्ष्यामि बालानां शांतिकारिणीं । करवीरं रक्तपुष्पं चंदनं रक्तपूर्वकं ॥ धूपस्तु शिवनिर्माल्यं साज्यं विल्वदलं स्मृतं । दीपास्तु पंच विज्ञेयास्तथा पंचैव पोलिकाः ॥ मुष्टिकाः पंच विज्ञेया ध्वजाः पंच सुपीतकाः । तांबूलबीटिकाः पंच पूगीफलसमन्विताः ॥ रक्ततंडुलभक्तश्च प्रोक्तः साज्यगुडस्तथा । शरावे नूतने प्राज्ञ निधेयं सर्वमेव तत् ॥ ततस्तु पुत्तलीं कुर्यान्नद्या उभयतोमृदा । निदध्यात्तत्र वै धीमान् पीतवस्त्रसमावृतां ॥ पीतसूत्रोपवीतां तां पूजयेद्भक्तिमान्नरः । पूर्वोक्तैरेव संभारैर्गंधधूपादिभिर्बुधः ॥ वक्ष्यमाणेन मंत्रेण प्रार्थयेत्तां समाहितः । तत्र मंत्रः । ॐ नमो भक्तवत्सले विमोचनि स्वाहा । एवं मंत्रं समुच्चार्य सर्वां पूजां प्रकल्पयेत् ॥ एक एव यदा नेता भवति तदा पुत्तलीं शरावे आदौ निधाय तस्याः पुरतः सर्वं निक्षिप्य तत्रैव गंधादितांबूलांतोपचारान्निधाय पंचपल्लवानेकीकृत्य बालकांगेभ्यः समुत्तार्य सोदकान् ततः पुनर्नीराजनं विधाय तत्सर्वं सकंबलः सशस्त्रो मंत्रमुच्चारयन्नयेत् । ते च पल्लवाः । जंब्वाम्रोदुंबराश्वत्थवटानां पल्लवास्तथा । सर्वांगेभ्यः समुत्तार्य पीडा बालस्य संव्रजेत् ॥ इदं नद्यां चतुष्पथे वा क्षिपेदिति शिष्टाः । इत्थं रात्रित्रये कुर्याद्विधानं सुसमाहितः । ग्रामादुत्तरतो नित्यं पूर्वरात्रे विचक्षणः ॥ तस्मिन्स्थाने जपेन्मंत्रं बालानां शांतिहेतवे । एवं प्रशांतिमायाति शिशुपीडा न संशयः ॥ इति प्रथमदिवसमासाब्देषु पीडाशमनविधानं ॥ ॥ स्कंद उवाच । द्वितीये दिवसे मासे वर्षे चैव दिवाकर । मोहिनी नाम देव्यत्र कुरुते पीडनं शिशोः ॥ ज्वरं नेत्ररुजं कासं श्वासं चैव विशेषतः । छर्दनं ग्रह-

र्णीं द्वेषं जनयत्यनिशं शिशोः ॥ तत्र शांतिविधानं च प्रवक्ष्यामि समासतः । मालतीकुसुमैः पूजा चंदनं मलयोद्भवं ॥ कुंकुमं केसरं दि-
व्यं कर्पूरं सुविलेपनं । (केसरं नागकेसरं) देव्या भक्तिसमाचाराद्दशांगं धूपनं तथा ॥ नैवेद्यं पूर्ववद्देयं तथा स्यात्पूर्ववत्क्रिया । पूर्ववत्पुत्तलीं कृत्वा
शरावे संनिवेशयेत् ॥ वक्ष्यमाणेन मंत्रेण कुर्यात्सर्वमतंद्रितः । तत्र मंत्रः । ॐ सर्वेश्वरि सर्वजनप्रियंकरि त्राहि त्राहि जगत्सर्वं ॐ नमोभगव-
तिस्वाहा । इत्यनेनैव मंत्रेण सर्वं कृत्वा विधानकं ॥ रात्रित्रये निधातव्यं पश्चिमे ग्रामतो बहिः । प्रथमे यामिनीयामे कृतं भवति सौख्यदं ॥ इति
द्वितीयदिवसादिपीडाशमनविधानं ॥ ॥ स्कंद उवाच । तृतीये दिवसे मासे वर्षे शृणु विधिं रवे । सुनंदा नाम देव्यत्र बालानां भयदा
भवेत् ॥ अवस्थां कुरुते घोरां सुनंदा चैव भामिनी । हृद्रोगं छर्दनं श्वासो ज्वरेण सह जायते ॥ आकुंचयति गात्राणि शिशू रोदित्यहर्निशं ।
इत्थं संजायते पीडा सुनंदाकोपसंभवा ॥ तस्याः शांतिविधानं च प्रवक्ष्यामि समासतः । शतपत्राणि पुष्पाणि चंदनस्यानुलेपनं ॥ हरिद्रा
कुंकुमं नागकेसरं वालकान्वितं । गंधार्थं धूपनं दद्याद्गुग्गुलुं चाऽतिशोभनं ॥ घृताक्तं खदिरांगारैः संप्रताप्य विरोचनं । पूर्ववत्पुत्तलीं कृत्वा
शरावे संनिवेशयेत् ॥ प्रसृतत्रयशालीनामोदनं सर्पिषा युतं । दीपकाः पोलिकाः पंच तावंतो मुष्टिकाः स्मृताः ॥ ध्वजाः पंचैव विज्ञेयाः सहि-
ताः पंचपल्लवैः । वक्ष्यमाणेन मंत्रेण बलिं सर्वं समाहरेत् ॥ तत्र मंत्रः । ॐ नमः सुनंदायै हुं फट् स्वाहा । इत्यनेन प्रकारेण ग्रामात्पूर्वे विनि-
क्षिपेत् । त्रिरात्रं रजनीपूर्वयामे बालोपशांतये ॥ एवं कृते विधाने च व्याधिमात्रं विनश्यति । वर्धते दीपवद्बालः शुक्लपक्षाब्जवत्सुखं ॥ अ-
ब्जश्चंद्रः । इति तृतीयदिनादिपीडाशमनविधानं ॥ ॥ स्कंद उवाच । चतुर्थे दिवसे मासे वर्षे चैव विभाकर । पूतना नाम देव्यत्र पीडां
प्रकुरुते शिशोः ॥ संतापो जायते पूर्वमतिसारस्ततःपरं । मुष्टीर्बध्नाति कंपश्च वारंवारं प्रजायते ॥ तस्याः शांतिं प्रवक्ष्यामि पीडाया उष्ण-

दीधिते। पूर्ववत्पुत्तलीं कृत्वा शरावे संनिवेशयेत् ॥ वेष्टयेद्रक्तसूत्रेण कुंकुमेनानुलेपयेत्। पूजयेद्रक्तपुष्पैस्तु बर्बरीपत्रसंयुतैः ॥ मत्स्यमांसस्य धूपोऽत्र गव्येनाज्येन संयुतः। त्रयो दीपास्त्रिकोणास्तु साज्यवर्तिसमन्विताः ॥ तिस्रस्तु पोलिका ज्ञेया मुष्टयस्तु त्रयः स्मृताः। ध्वजास्त्रयः समाख्याता नात्र कार्या विचारणा ॥ प्रसृतित्रयमुद्दिष्टं तंडुलानां प्रभाकर। तद्रक्तं सर्पिषा युक्तं शरावे संनिवेशयेत् ॥ रक्तवस्त्रेण संवीतां नमस्कृत्वा तु पुत्तलीं। दध्यक्षतासमारोपंविदध्यात्तु समाहितः ॥ पल्लवैः पंचभिर्बालं सर्वांगेषु प्रमार्जयेत्। मंत्रः। ॐनमः पूतने मातर्बलिं गृह्ण सुशोभनं। बालकं मुंच वेगेन बलिदानेन हर्षिता ॥ इति मंत्रं समुच्चार्य सर्वं बलिमुपाहरेत्। प्रदोषे क्षणनिर्वृत्ते सप्तसप्ते विधिं शृणु ॥ दक्षिणां दिशमाश्रित्य निक्षिपेद् ग्रामतो बहिः। एवं कृते बलौ सम्यग्बालकः सुखमाप्नुयात् ॥ इति चतुर्थदिवसादिपीडाशमनविधानं ॥ ॥ स्कंद उवाच। पंचमे दिवसे मासे वर्षे चैव प्रभाकर। आसुरी नाम देव्यत्र बालकं बाधते भृशं ॥ तत्र चिह्नं प्रवक्ष्यामि बालांगे यत्प्रजायते। ज्वरस्तु प्रथमं पश्चाद्धृद्रोगो ग्रहणी ततः ॥ मुष्टिबंधः प्रलापः स्यादुद्वेगोऽनशनं तथा। शिरोरुग्जायतेऽत्यंतमेतत्तल्लक्षणं रवे ॥ पूर्ववत्पुत्तलीं कृत्वा पीतसूत्रेण वेष्टयेत्। पीतवासो वसानां तां शरावे संनिवेशयेत् ॥ घृताभ्यंगो विधेयोऽत्र हरिद्रालेपने कृते। ततः पूजां प्रकुर्वीत कुसुमैः करवीरजैः ॥ जपापुष्पैर्बंधुजीवैः पुत्तल्याश्च तथाऽनघ। चंदनेनानुलिप्तां तां दिव्यगंधोपशोभितां ॥ राजसर्षपधूपो वै घृताक्तोऽत्र प्रशस्यते। दीपकाः सप्त विज्ञेया ध्वजास्तावंत एव च ॥ मुष्टिकाः पोलिकाः सप्त सप्त सौहालिकास्तथा। नैवेद्यार्थं समुद्दिष्टमोदनं सघृतं बलिः ॥ पल्लवैस्तु यथापूर्वं कारयेन्मार्जनं शिशोः। मंत्रमेतं समुच्चार्य त्रिवारं प्रतिपूजने ॥ मंत्रः। सुकले सुभगे देवि सर्वशत्रुनिवारिणि। कुरु शांतिं शिशोश्चास्य बलिदानेन राक्षसि ॥ इत्युच्चार्य क्षिपेत्पूर्वं मध्यरात्रे

त्रिवासरं । पश्चिमां दिशमाश्रित्य ग्रामाद्धन्वंतरं रवे ॥ इति पंचमदिवसादिपीडाशमनविधानं ॥ ॥ स्कंद उवाच । अथ षष्ठे दिने मासे वर्षे चापि दिवाकर । रेवती नाम देव्यत्र शिशुं गृह्णात्यसंशयं॥ आदौ तु जायते पीडा व्रणानां शिशुमूर्धनि । ज्वरस्तु मुखशोषोऽपि तृषा समभिजायते ॥ प्रकंपंतेच गात्राणि रुदंति च पुनः पुनः । तत्रः शांतिं प्रवक्ष्यामि श्रृणु सूर्य समाहितः ॥ पूर्ववत्पुत्तलीं कृत्वा शरावे संनिवेशयेत् । गंगातोयेन संस्नाप्य शुक्लसूत्रेण वेष्टितां ॥ शुक्लवस्त्रेण संवीतां शुक्लमाल्यानुलेपनां । शुक्लधूपोऽत्र निर्दिष्टो बिल्वपत्रैः सहाऽनघ ॥ आज्येनाक्तास्तु विश्वात्मन् दीपाः पंच प्रकीर्तिताः । तावंतो मुष्टिका ज्ञेयाः पोलिकाभिः समन्विताः ॥ प्रसृतित्रयमात्राणां व्रीहीणामोदनं स्मृतं । दध्ना सह गुडेनाक्तं बलिं कुर्यात्प्रयत्नतः ॥ ध्वजैश्च पंचभिर्युक्तं बलिमेतं समर्पयेत् । वक्ष्यमाणेन मंत्रेण प्रक्षिपेच्च समाहितः ॥ मंत्रस्तु । राक्षसि त्वं महाभागे बालं मुंच शुभानने । क्षेमं कुरु जगत्यस्मिन् शोभना भव रेवति ॥ इतिमंत्रेण संमंत्र्य प्रदोषे बलिमाहरेत् । संस्नाप्य बालकं पंचपल्लवैः सुसमाहितः ॥ नगरादुत्तरे देशे रेवत्यै बलिमाहरेत् । एवं प्रशांतिमायांति बालपीडाः प्रभाकर ॥ इति षष्ठदिनादिपीडाशमनविधानं ॥ ॥ स्कंद उवाच । सप्तमे दिवसे मासे वर्षे चैव दिवाकर । शकुनिर्नाम देव्यत्र बालं गृह्णाति दारुणा ॥ ज्वरस्तु प्रथमं तावच्छिरोरोगस्ततःपरः । प्रलापस्त्वतिसारश्च वांतिरात्यंतिकी भवेत् ॥ अक्ष्णोर्निमीलनं चापि गात्रकंपोऽभिजायते । तत्र शांतिं प्रवक्ष्यामि शकुनिप्रीतिवर्धनीं ॥ रक्तचंदनलिप्तांगीं पूर्ववत्पुत्तलीं कृतां । यथाकालोद्भवैः पुष्पैः पूजयेद्यत्नतः सुधीः ॥ धूपस्तु गुग्गुलुः श्रेयान्दीपाः पंच प्रकीर्तिताः । पोलिका मुष्टिकाः पंच ध्वजाः पंच सुशोभनाः ॥ नैवेद्यमोदनं सर्पिःसहितं प्रसृतेर्मतं । तंडुलानां सुरश्रेष्ठ मंत्रपूतं प्रकल्पयेत् ॥ मंत्रः। ॐनमः पद्मपत्राक्षि विशालवदने शिवे । संगृह्य बलिमेतं त्वं बालं मुंच सुशोभने ॥ इत्युच्चार्य ततो धीमान् बलिं निशि

समाहरेत् । दक्षिणां दिशमाश्रित्य विदध्यात्पल्लवक्रियां ॥ एवं कृते विधाने तु त्रिरात्रं सुरसत्तम । व्याधिमुक्तो भवेद्बालो नात्र कार्या विचारणा ॥ इति सप्तमदिनादिपीडाशमनविधानं ॥ ॥ स्कंद उवाच । अष्टमे दिवसे मासे वर्षे देवी पिशाचिका । पीडयत्येव बालानि ज्वरच्छर्दिशिरोर्तिभिः ॥ नेत्रपीडांऽगसंकोचो त्वद्रोगश्चाभिजायते । शृणु तस्य प्रतीकारं येन तुष्येत्पिशाचिका ॥ प्रकुर्याच्च त्रिरात्रेण शांतिं बालार्तिहारिणीं । पूर्ववत्पुत्तलीं कृत्वा शरावे संनिवेशयेत् ॥ पंचामृतैस्तु संस्नाप्य देवीं तां शिशुना सह । चंदनेनानुलिप्तांगीं श्वेतपुष्पैः प्रपूजयेत् ॥ ध्वजाः सप्त समाख्यातास्तावत्यः पोलिकाः स्मृताः । मुष्टिकाश्चापि विज्ञेया हरिद्राक्ताः शुभाः स्मृताः ॥ पीतवर्णेन वस्त्रेण सूत्रेणाऽपि सुसंस्कृताः । विजयाचूर्णधूपोऽत्र घृताक्तः संप्रकीर्तितः ॥ दीपाः सप्त घृतेनैव पूरयित्वा नियोजयेत् । प्रसृतित्रयभक्तस्य घृताक्तस्य विशेषतः ॥ नैवेद्यं कल्पयेद्धीमान्देव्यै भक्त्या न संशयः । तांबूलं च सकर्पूरं भक्त्याऽभ्याशे निधीयते ॥(अभ्याशे समीपे) शक्त्या च दक्षिणा तत्र देवताप्रीतये रवे । वक्ष्यमाणेन मंत्रेण सर्वमेव विधीयते ॥ मंत्रः । ॐ नमः सर्वभूतेशि शोभने त्वं पिशाचिके । बलिं चैतमुरीकृत्य त्वरितं मुंच बालकं ॥ यथा पूर्वं तथा कार्या पंचपल्लववत्क्रिया । त्रिरात्रं रजनीवक्त्रे पूर्वे ग्रामाद्बहिः क्षिपेत् ॥ एवं कृते विधाने तु रोगशांतिः प्रजायते । इत्यष्टमदिवसादिपीडाशमनविधानं ॥ ॥ स्कंद उवाच । नवमे दिवसे मासे वर्षे चैव प्रभाकर । देवता पाशिनी नाम बालार्तिं कुरुते भृशं ॥ तत्र चिह्नं प्रवक्ष्यामि समासेन दिवाकर । ज्वरश्छर्दिर्गले पीडा संकोचो नेत्रयोस्तथा ॥ तर्जनीमध्ययोर्योगमग्राभ्यां कुरुते भृशं । अन्नत्यागेन संतोषो मुखे गंधोऽभिजायते ॥ तत्र शांतिं प्रवक्ष्यामि पाशिनीप्रीतये रवे । पूर्ववत्पुत्तलीं कृत्वा शरावे संनिवेशयेत् ॥ शुक्लसूत्रेण संवीतां शुक्लवस्त्रेण वेष्टितां । पूजयेच्छुक्लपुष्पैस्तु मंदाराद्यैः सुगंधिभिः ॥ गंधार्थे घनसारेण युक्तं चंदनमर्पयेत् । दशांगो धूपने धूपस्ततो दीपान्प्र-

कल्पयेत् ॥ नव वा सप्त वाऽपूपान्पोलिका वा नवोत्तमाः । उत्तमा अंगारपक्का अदग्धा इत्यर्थः । तावंतो मुष्टिका देया ध्वजाश्चैव तथैव च ॥ नवप्रसृतिमानेन तंडुलौदनमुत्तमं । दध्ना क्षीरेण चाभ्युक्ष्य नैवेद्यं परिकल्पयेत् ॥ मध्यरात्रत्रये ग्रामात्पश्चिमे प्रक्षिपेद्बलिं । मंत्रेणाऽनेन पाशिन्यै मंत्रोच्चारणपूर्वकं ॥ मंत्रः । ॐनमः पाशहस्तायै रुद्रदत्तवरे शुभे । गृहाणेमं बलिं दत्तं बालकं मुंच रोगतः ॥ एतावता विधानेन रोगमुक्तो भवेच्छिशुः । पंचानां पल्लवानां तु पूर्ववत्क्रियते क्रिया ॥ इति नवमदिनादिपीडाशमनविधानं ॥ ॥ स्कंद उवाच । दशमे दिवसे मासे वर्षे चैव दिवाकर । शक्तिरत्र महामारी राक्षसी घोररूपिणी ॥ मृत्युकल्पं ज्वरं शूलं विदधाति दिवानिशं । विष्टंभं कुरुतेऽत्यर्थं हिक्कां कासमतिक्षयं ॥ तस्य शांतिं प्रवक्ष्यामि बालानां हितकाम्यया । पूर्ववत्पुत्तलीं कृत्वा शरावे संनिवेशयेत् ॥ स्नापयेत्सरितो वार्भिश्चंदनेनानुलेपयेत् । पीतवस्त्रेण संवीतां पुष्पमालोपशोभितां ॥ दशांगं धूपने धूपं महामायै प्रकल्पयेत् । दीपास्तु पंच विज्ञेयास्तावंतः क्षीरषष्टिकाः ॥ मुष्टिकाः पंच वै शस्ता ध्वजाः पंच सुशोभनाः । संस्कृतं सर्पिषा भक्तं तंडुलानां च पुष्कलं ॥ नैवेद्यार्थे न्यसेत्तत्र शरावे सुमनोहरं । तांबूलसहितं भानो दक्षिणासहितं तथा ॥ दक्षिणार्थे नवं वस्त्रं रजतं शक्तितोऽपि वा । पल्लवैः पंचभिर्युक्तं बलिं सर्वं समर्पयेत् ॥ मध्यरात्रादधस्तात्तं बलिं कुर्याद्दिनत्रयं । दक्षिणां दिशमाश्रित्य प्रक्षिपेन्नगराद्बहिः ॥ मंत्रेणानेन मार्तंड वक्ष्यमाणेन ते मया । मंत्रः । ॐ नमो रक्तवर्णाक्षि रक्तपद्मनिभानने । रक्तोष्ठे रक्तदशने महामारि महाभये ॥ महाबले महाकाये महाभयनिवारिके । अनेन बलिदानेन तुष्टा भव सुशोभने ॥ व्याधिना पीडितं बालं रक्ष त्वं परमेश्वरि । इमं मंत्रं समुच्चार्य सर्वं बलिमुपाहरेत् ॥ क्षेमाय बालकानां हि नात्र कार्या विचारणा ॥ इति दशमदिनादिपीडाशमनविधानं ॥ ॥ स्कंद उवाच । एकादशे दिने मासे वर्षे चापि दिवाकर । कालिका नाम देव्यत्र तत्पीडा

जायते शिशोः ॥ ज्वरस्तु प्रथमं तावद्भूद्रोगस्तदनंतरं । मुखशोषो महाग्लानिस्ततः स्याच्चित्तविभ्रमः ॥ तुदंति सर्वगात्राणि वेपंते च पुनः-पुनः । अवस्था मृत्युकल्पा स्यात्कालिकाकोपसंभवा ॥ तत्र शांतिं प्रवक्ष्यामि बालानां हितकाम्यया । पूर्ववत्पुत्तलीं कृत्वा शरावे संनिवे-शयेत् ॥ गंगातोयेन संस्नाप्य चंदनेनानुलेपयेत् । करवीरस्य पुष्पैश्च पूजयेद्बर्बरीदलैः ॥ धूपयेत्पुत्रकेशैश्च सर्पनिर्मोकसर्षपैः । वचालशुन-फेनैश्च घृतयुक्तैः ससर्जकैः । दीपैस्तु पंचभिः सूर्ये तैस्तु नीराजयेच्च तां ॥ नैवेद्यं पायसं क्षीरषष्टिकास्तिलमोदकाः ॥ अपूपा मुष्टिकाः पोलीः पंच पंच प्रकल्पयेत् । ध्वजाश्च पंच विज्ञेयाः शरावे सर्वमेव तत् ॥ निवेश्य सकलं देव्यै कालिकायै निवेदयेत् । मंत्रेणानेन सप्ताश्च वक्ष्य-माणेन ते मया ॥ मंत्रः । ॐनमो घोररूपायै घोरायै घोरदर्शने । त्राहि सर्वं जगद्धात्रि बालं मुंच बलिप्रिये ॥ एवंविधं विधिं कुर्यात्पूर्वत्र-त्पल्लवक्रियां । एवं कृते विधाने तु रोगमुक्तिर्भवेच्छिशोः ॥ बलिप्रदोषसमये ग्रामाद्दक्षिणतो बहिः । निधेयो मंत्रमुच्चार्य नरेणैव सहेतिना ॥ ( सहेतिना सशस्त्रेण ) इत्येकादशादिनादिपीडाशमनविधानं ॥ ॥ स्कंद उवाच । द्वादशे दिवसे मासे वर्षे चैव दिवाकर । भामिनी नाम देव्यत्र पीडयत्यनिशं शिशुं ॥ आदौ ज्वरं प्रकुर्याच्च त्द्रोगं तदनंतरं । कासं श्वासमतीसारं प्रलापं जृंभणं तथा ॥ कंपंते सर्वगात्राणि तथा जाड्यं च नेत्रयोः । इत्थं नानाप्रकारैश्च शिशूनां जायते गदः ॥ तत्र शांतिं प्रवक्ष्यामि बालानां हितकारिणीं । पूर्ववत्पुत्तलीं कृत्वा शरावे संनिवेशयेत् ॥ गंधपुष्पाक्षता धूपदीपाश्च विविधा मताः । नैवेद्यं विविधं चात्र भामिन्यै परिकल्पयेत् ॥ वस्त्रं सूत्रं ध्वजांश्छत्रमोदनं पायसान्वितं । अपूपैः पायसैः क्षीरषष्टिकाभिश्च संयुतं ॥ नैवेद्यं कल्पयेद्भक्त्या संध्याकाले निशामुखे । ग्रामादुत्तरतो देशे बलिं दद्यान्न संशयः ॥ इत्थं पंचदिनेष्वेव कर्तव्यं रोगमुक्तये । मंत्रेणानेन सप्ताश्च मंत्रयेत्सर्वतो बलिं ॥ बलिं गृहाण बालस्य व्याधीन्संहर संहर । पंचवक्त्रप्रसा-

देन प्रसन्ना भव भामिनि ॥ एवं कृते विधाने तु बालकः क्षेममाप्नुयात् । इत्थं ते कथितं सूर्य शांतिकृल्लुब्धजातकं ॥ सूर्य उवाच । येन पापेन बालानामज्ञानानां गदो भवेत् । तत्सर्वं पूर्वमेवेत्थमुक्तवानसि षण्मुख ॥ इति द्वादशादिनमासाब्देषु स्कांदोक्तं शिशुपीडाशमनविधानं ॥ मदनरत्ने रावणसूनुकृते कौमारतंत्रे दिनमासवर्षग्रहहराणि । संभेदकूलद्वयमृत्तिकाभ्यां मूर्तिं विधायैककरप्रमाणां । त्रिलोचनां शूलकपालपाणिं जटाधरां रुद्रतनुं दधानां ॥ भुजंगभूषां भसितोज्ज्वलांगीमंगीकृताऽशेषललामलीलां । ( संभेदः संगमः । कूलं तीरं ) अत्र मूर्तौ समावाह्य रुद्रं सर्वग्रहाधिपं । स्कंदादिपूतनायुक्तं पूजयेच्चंदनादिभिः ॥ विरच्य तंडुलैश्चूर्णैश्चतुरस्रं करद्वयं । तत्र संस्थाप्य पूर्वस्यां तां तदर्चाविधिं चरेत् ॥ तत्तन्मंत्रैर्विचित्रैश्च नानोपकरणादिभिः । ततः सोपस्करां तां तु निक्षिपेच्च चतुष्पथे ॥ कार्पासास्थिमयूरपिच्छबृहतीनिर्माल्यपिंडातकत्वङ्मांसीविषदंशविट्तुषवचाकेशाऽहिनिर्मोककैः । नागेंद्रद्विजाहिंगुश्रृंगमरिचैस्तुल्यैश्च धूपः कृतः स्कंदोन्मादपिशाचराक्षससुराऽऽवेशज्वरघ्नः स्मृतः ॥ रक्षामंत्र उक्तो हरिवंशे । नंदोऽकमेनमारोप्य भूरेणुं परिगृह्य च । शिरः प्रदक्षिणं कुर्वन्मंत्रमेनं जजाप सः ॥ विष्णुस्ते पूर्वतः पातु रुद्रो रक्षतु दक्षिणे । ब्रह्मा च पश्चिमे पायाच्चंद्रो रक्षत्वथोत्तरे ॥ उपरिष्टात्तथा सूर्यः पायाच्चाऽधश्च वासुकिः । तिर्यगूर्ध्वमधो वत्सं शिष्टं पातु समीरणः ॥ स्वस्तिं करोतु भगवान्पिनाकी वृषभध्वजः । गावो रक्षंतु सर्वत्र भूमिः पातु सदा शिखां ॥ एवमुच्चार्य नंदस्तु कृष्णं पस्पर्श सर्वतः । एष मंत्रो हि बालानां रक्षायै परिकीर्तित इति । प्रयोगपारिजाते तु । वासुदेवो जगन्नाथः पूतनांतकरो हरिः । रक्षंतु त्वरितं बालं मुंच मुंच कुमारकं ॥ कृष्ण कृष्ण शिशुं रक्ष मधुकैटभमर्दन । प्रातःसंगवमध्याह्नसायाह्नेषु च संध्ययोः ॥ महानिशि सदा रक्ष कंसादीनां निषूदन । यक्षोरगपिशाचांश्च ग्रहान्मातृग्रहानपि ॥ बालग्रहान्विशेषेण छिंधि छिंधि महाभयान् । त्राहि त्राहि हरे नित्यं त्वद्रक्षाभूषितं

शिशुं ॥ इति भस्माऽभिमंत्र्यैवं भूषयेत्तेन भस्मना । शिरो ललाटाद्यंगेषु रक्षा कुर्याद्यथाविधि ॥ मंत्रसंरक्षणादेव शिशुः संवर्धतेऽन्वहं । इति बालरक्षा ॥ ॥ अथ बालग्रहशांतिप्रयोगः । कर्ता प्रदोषाद्युक्तकाले आचमनादिदेशकालस्मरणांते अस्य शिशोः शरीरे अमुकाख्यपूतनाग्रहणजन्यज्वरच्छर्दिकासश्वासमूर्छाग्रहणशूलाहिक्कांऽगसंकोचाऽऽकस्मिकभयप्रकंपाक्षिमीलनगात्रभंगमुखशोषदंतखादनतनुवैवर्ण्यशिरःस्फोटपुलकव्रणोद्गमत्वद्दोगवैकल्याहारद्वेषदिवारात्रिरोदनाद्यनेकविधव्याधिपीडानां सद्योनिरासेन आरोग्यावाप्तिपूर्वकं क्षेमायुरभिवृद्धिद्वारा श्री० तत्कल्पोक्तविधिना शांतिं करिष्ये इति संकल्प्य (अत्राऽमुकपदस्थाने पूतनायाः दिनमासाब्दभेदानुसारेण तत्तन्नाम कीर्तयेत्) गणेशं संपूज्य पुण्याहवाचनं कृत्वा नदीतीरस्थमृदाद्युक्तद्रव्येण पुत्तलिकां विधाय नवे शरावे संस्थाप्य प्राणप्रतिष्ठांते ॐ नमो भक्तवत्सलेविमोचनिस्वाहेति मंत्रेण नाममंत्रेण वा षोडशोपचारैः पूजयेत् । तत्र वस्त्रगंधपुष्पधूपदीपनैवेद्यादि तत्तदुक्तं ग्राह्यं । ततस्तस्याः पुरतो भक्तपोलिकामुष्टिकमत्स्यमांससुराद्युक्तद्रव्यात्मकं बलिं निधाय तत्रैव तत्तद्वर्णध्वजान्पिष्टदीपांश्च यथोक्तसंख्यया संस्थाप्य देव्यै निवेदयेत् । तत्र साधारणो मंत्रः । ॐ नमश्चामुंडे भगवतिविद्युज्जिह्वे हांहां हींहीं अपसरंतुदुष्टग्रहा हुं तद्यथागच्छंतु यातान्यतःस्थाने रुद्रोज्ञापयतिस्वाहा विद्युज्जिह्वे हांहीं हूंहूं मुंचमुंचस्वाहा । यत्र विशेषमंत्र उक्तस्तत्र सोऽपि ग्राह्यः । मंत्रांते अमुकाख्यपूतनायै सांगायै० अमुं सदीपं सर्वोपस्करयुतं बलिं समर्पयामि । भोभोः अ० पूतने इमं बलिं गृहाण ममास्य बालकस्य आयुःकर्त्री० । ततः कश्चिद्वटाम्रोदुंबराश्वत्थजंबूपल्लवानार्द्रान् कुसुमाक्षतानेकीकृत्य बालकांगेभ्यः समुत्तार्य शरावे निक्षिप्य बालं नीराजयेत् । मंत्रस्तु । ब्रह्मा विष्णुश्च रुद्रश्च स्कंदो वैश्रवणस्तथा । रक्षंतु त्वरितं बालं मुंच मुंच कुमारकमिति । ततस्तत्सर्वमादाय सशस्त्रकंबलः ॐनमो भक्तवत्सले त्रिमोचनिस्वाहेतिमंत्रमुच्चारयन्नप्रमत्तो ग्रामाद्बहिर्गत्वा चतुष्पथनदीतीरा

युक्तस्थले निक्षिपेत् । कर्ता च तं द्वारप्रदेशांतमनुव्रजन्सर्षपविकिरणं जलसेकं च कृत्वा भार्यापुत्राभ्यां सह हस्तपादं प्रक्षाल्य गृहं प्रविश्य ब्राह्मणैः शांतिं पाठयेत् । ततः पलाशोदुंबराश्वत्थबिल्ववटपल्लवकषायेण नमश्चामुंडे इत्यादिपूर्वोक्तमंत्रेण बालं संस्नाप्य गंधादिनाऽलंकृत्य धातकीलोध्रमंजिष्ठातालचंदनचूर्णेन तस्यांगान्यनुलिप्य गुग्गुलुधूपेन धूपयेत् । ततो भूर्जपत्रे रक्षरक्षमहादेव नीलग्रीवजटाधर । ग्रहैस्तुसहितोरक्ष मुंचमुंचकुमारकमितिमंत्रं लिखित्वा तत्पत्रं शिशोर्दक्षिणभुजे बध्वा तस्य शिखां स्पृशन्मंत्रं जपेत् । ॐ सर्वामातर इमं ग्रहं संहरंतु हुं रोदय रोदय स्फोटय २ स्वाहा गर्ज २ सर २ गृह्ण २ आमर्दय २ हिम २ हन २ एवंसिद्धिं रुद्रो ज्ञापयतिस्वाहा । ततः सति संभवे चतुष्पथे कुंडं स्थंडिलं वा कृत्वा ॐकूष्मांडि भगवति सुरागिणि सुमुंडिते मुंच २ दह २ पच २ सर २ गच्छ २ स्वाहेतिमंत्रेण सहस्रसंख्यया पूतनायै विधिवत्तिलहोमः कार्यः । ततो बालरोदनपरिहारार्थं भूर्जपत्रादौ षडस्रं तन्मध्ये ह्रींकारं तत्र शिशोर्नाम च लिखित्वा षट्सु कोणेषु क्रमेण आं लु लु वे स्वा हा इति षडक्षराणि तद्बाह्ये नेमिवद्वर्तुलद्वयं तद्बहिरधोमुखानर्धचंद्रांश्च विलिख्य पंचोपचारैः संपूज्य तद्यंत्रं बालहस्ते बध्नीयात् । ततः पूर्वोक्तं बालग्रहस्तवं पठित्वा हरिवंशोक्तेन पारिजातोक्तेन वा रक्षामंत्रेण विभूतिमभिमंत्र्य बालस्यांगे लेपयेत् । ततो ब्राह्मणेभ्यो दक्षिणां दत्वा भोजनं च संकल्प्य तान्प्रणम्याशिषो गृहीत्वा कर्मेश्वरायार्पयेत् । इति बालग्रहशांतिप्रयोगः॥ ॥ अथ ज्वरोत्पत्तौ नक्षत्रशांतयः। तत्र मदनरत्ने हेमाद्रौ च आत्रेय उवाच। अथ नक्षत्रपरिघूनं वक्ष्ये । अश्विनी त्रितारा। स्त्री। अश्वमुखी। तिर्यङ्मुखी। पीतवर्णा। कांची वृक्षः । कनकपक्षी । लघुः । अश्विनौ देवते। देवगणः । योनिर्वाजी । अक्षरे अकारआकारौ । ऋतुगमनचौलश्राद्धवस्त्राभरणाऽन्नप्राशनभैषज्यबीजवापननालिकेरेक्षुस्थापनाश्वसंग्रहणादि कुर्यात्। पंचाशन्नाडिकांते चतस्रो विषनाड्यः । मकरमासे शून्यं । बुधवारे मृत्युयोगः । अर्क-

वारे आनंदयोगः । केचित्कलहयोगमिच्छंति । भौमवारे सिद्धियोगः । मुद्गान्नभोजनं कृत्वा यात्रां गच्छेत् । आयुधश्रमं कुर्यात् । मध्याह्ने रक्तमेघोत्पत्तिश्चेत्पंचदिनेऽष्टदिने वा वृष्टिः स्यात् । तद्दिने कुजवारे विघ्नो ज्वरोत्पत्तिश्चेद्दशदिनानि पीडा। नीलोत्पलपुष्पैः पूजा । गुग्गुलुर्धूपः । क्षीरलड्डुकं नैवेद्यं । देवस्यत्वेति पूजामंत्रः । क्षीरवृक्षसमित्प्रधानद्रव्यं । गायत्र्याऽष्टशतं हुत्वा दध्योदनबलिं दद्यात् । एकादशदिनादारभ्य पंचविंशतिदिनांते सुखी स्यात् । संक्रमे मध्यमोऽर्घः ॥ १ ॥ भरणी त्रितारा । त्रिकोणाकृतिः । स्त्री । अधोमुखी । यमो देवता । उग्रा । मनुष्यगणः । गजयोनिः । आमलको वृक्षः । पक्षी कुक्कुटः । अक्षरे इकारईकारौ । श्राद्धं कुर्यात् । मध्याह्ने रक्तमेघोत्पत्तिश्चेत्षोडशदिने वृष्टिः स्यात् । कुजवारे विघ्नं । द्रव्यसंग्रहणं । बृहतीकारवेल्लिकास्थापनं कुर्यात् । चतुर्विंशतिनाड्यंते विषनाड्यः । फाल्गुनमासि शून्यं । बुधसप्तमीभ्यां सह विषयोगः । बुधवारे नाशयोगः । अर्कवारे यमघंटः । अंत्यांशे दिनमृत्युः । कर्कटचापलग्ने कुजांशके धान्यसंग्रहणं । तस्मिँल्लग्ने च कृषिं कुर्यात् । द्रव्यं न दद्यात् । ज्वरोत्पत्तिश्चेन्मृत्युः संदेहो वा । गुडापूपं नैवेद्यं । कृष्णसुरभिपुष्पं । महिषाक्षो धूपः । त्र्यंबकमिति पूजामंत्रः । घृतमधुतिला होमद्रव्यं । पंचदिनांते गायत्र्याऽष्टोत्तरशतं यमाय जुहुयात् । एकविंशतिदिनांते सुखी स्यात् । न शांतिश्चेन्मृत्युः । वृषभवृश्चिककन्यासु भद्रां नवमीं विना सोमांगारकबुधास्तेषामुदयवारेषु च भूमिदर्शनं । संक्रमेऽल्पोऽर्घः ॥ २ ॥ कृत्तिका षट्तारा । क्षुराकृतिः । अधोमुखी । अग्निर्देवता । मिश्रा । राक्षसगणः । पीतवर्णः । अजयोनिः । उदुंबरो वृक्षः । पक्षिणौ क्रौंचकाकौ । अक्षरे उकारऊकारौ । दधि प्राश्य यात्रां गच्छेत् । मुद्गान्नं श्यामं पीतं च दद्यात् । भूषणं दद्यात् । त्रिंशन्नाडिकांते विषनाडिका । कार्तिके मासि शून्यं । बुधवारे मृत्युयोगः । नालिकेरक्रमुकैलालवंगेक्षुस्थापनं कुर्यात् । ज्वरश्चेन्नवदिनानि पीडा । घृतौदनं

नैवेद्यं । यूथिकापुष्पपूजा । सर्पिर्धूपः । पुनंतुमांदेवजनाइति पूजामंत्रः । सावित्र्याऽष्टोत्तरशतं घृतं दध्योदनं च हुत्वा हुतशेषेण बलिं दद्यात् ।
पंचदिनादारभ्य एकविंशतिदिनांते सुखी स्यात् । संक्रमेऽल्पोऽर्घः ॥ ३ ॥ रोहिणी पंचतारा । त्रिकोणाकृतिः । स्त्री । ऊर्ध्वमुखी । प्रजाप-
तिर्देवता । ध्रुवा । पीतवर्णा । मनुष्यगणः । सर्पयोनिः । जंबूवृक्षः । पक्षिणौ मयूरकुक्कुटौ । अक्षरे ऋकारॠकारौ । ऋतुगमनसीमंतनाम-
करणाऽन्नप्राशनचौलोपनयनविद्यारंभस्नानविवाहयज्ञवाहनवस्त्राभरणाऽभिषेकदेवतास्थापनसाधुकर्माणि कुर्यात् । चैत्रमासे शून्यं । चत्वारिं-
शन्नाडयंते विषघटिका । रिक्तापूर्णे विषयोगः । तृतीयया सहोग्रयोगः । गुरुवारे विषयोगः । शुक्रवारे मृत्युयोगः । मंदवारे सिद्धियोगः ।
स्थिरराश्यंशे विलग्नस्थेऽर्कजे धान्यसंग्रहं कुर्यात् । ज्वरश्चेद्दिनानि त्रीणि नव वा पीडा । क्षीरान्नं नैवेद्यं । कमलपुष्पपूजा । सरलो धूपः ।
नमोब्रह्मणइति पूजामंत्रः । घृतं सर्वधान्यानि च होमद्रव्यं । सावित्र्याऽष्टोत्तरशतं हुत्वा क्षीरान्नेन प्रजापतये बलिं दद्यात् । त्रिदिनादार-
भ्य नवदिनांते सुखी स्यात् । संक्रमेऽर्घवृद्धिः ॥ ४ ॥ मृगशिरस्त्रितारा । मृगशिरआकृतिः । नपुंसकं । सोमो देवता । मृदुः । देवगणः । योनिः सर्पिणी ।
खदिरो वृक्षः । मयूरः पक्षी । एकारोऽक्षरं । तिर्यङ्मुखी । मृगमांसभक्षणं कृत्वा यात्रां गच्छेत् । इंद्रचापं चेदष्टदिने वृष्टिः स्यात् । ऋतुग-
मनसीमंतनामकरणान्नप्राशनवेदोपक्रमयागविद्यारंभकर्णवेधस्नानविवाहबीजवापनाभिषेकवास्तुकर्मगोसंग्रहणानि श्राद्धं च कुर्यात् । चतुर्दश-
नाडिकांते विषघटिका । कार्तिकमासे शून्यं । गुरुवारे मरणयोगः । मृतिश्च । षष्ठ्या सहोग्रयोगः । रविवारे आनंदयोगः ।
चंद्रे सिद्धियोगः । चंद्रवारे चंद्रोदये वृषभलग्ने मध्यस्तंभस्थापनं कुर्यात् । घृतादिवृद्धिः स्यात् । अस्मिँल्लग्ने विवाहभूमौ
मृत्संग्रहणं कुर्यात् । आत्मसाद्भवति । सस्यस्थापनं च कुर्यात् । ज्वरश्चेत्पंचदिनानि पीडा । पायसं नैवेद्यं । कुमुदोत्पलपुष्पपूजा ।

दशांगो धूपः। नवोनवइति पूजामंत्रः। मुद्गतिलपंचगव्यं होमद्रव्यं। सावित्र्याऽष्टोत्तरशतं हुत्वा मुद्गतिलैश्चंद्राय बलिं दद्यात्। पंचदिनादारभ्य नवदिनांते सुखी स्यात्। संक्रमे मध्यमोऽर्घः॥ ५॥ आर्द्रा एकतारा। स्त्री। रुद्रो देवता। तीक्ष्णा। पीतवर्णा। ऊर्ध्वमुखी। मनुष्यगणः। श्वयोनिः। कृष्णखदिरो वृक्षः। पक्षी पिंगलः। ऐकारोऽक्षरं। असृजं पीत्वा यात्रां गच्छेत्। इंद्रचापश्चेद्वृष्टिर्नास्ति। मेषलग्ने मेघपरिवेषश्चेत्पंचादिने सप्तदिने वा वृष्टिः स्यात्। तत्कालकुजोदये वृषलग्ने द्रव्यसंग्रहणं विद्याकर्णवेधश्राद्धं च कुर्यात्। एकादशनाडिकांते विषघटिका। आषाढे मासि शून्यं। गुरुवारे मृत्युयोगः। सानंदार्केषु वरयोगः। द्वितीयांशे दिनमृत्युः। मंदवारे मंदोदये सेतुबंधनं। अर्ककुजवारे कर्कटलग्ने औषधसेवां कुर्यात्। अस्मिँल्लग्ने विद्यारंभश्च। ज्वरश्चेन्मृत्युः। दिनान्येकत्रिंशत्पीडा वा। सोहलकं नैवेद्यं। धत्तूरपुष्पपूजा। अगुरुर्धूपः। नमःशंभवेइति पूजामंत्रः। मध्वाज्यं होमद्रव्यं। सावित्र्याऽष्टोत्तरशतं हुत्वा पायसान्नेन रुद्राय बलिं दद्यात्। पंचदिनादारभ्य दशदिनांते सुखी स्यात्। अथवा मृतिः। संक्रमे समोऽर्घः॥ ६॥ पुनर्वसू षट्तारा। नावाकृतिः। अदितिर्देवता। चरा। देवगणः। मार्जारयोनिः। वेणुवृक्षः। वायसः पक्षी। अक्षरे ओंकारऔकारौ। पुमान्। तिर्यङ्मुखी। ऋतुगमनसीमंतनामकरणान्नप्राशनचौलोपनयनविद्यारंभसूतिकाभैषज्यवास्तुकर्मदेवताप्रतिष्ठावस्त्राभरणाभिषेकबीजवापनं यागादि च कुर्यात्। त्रिंशन्नाडिकांते विषनाडिका। मिथुनमासि शून्यं। गुरुवारे अमृतयोगः। अर्कवारेऽर्थसाधनयोगः। सिद्धिश्चेति केचित्। ज्वरश्चेत्सप्तदिनानि पीडा। गुडौदनं नैवेद्यं। मल्लिकापुष्पपूजा। मलयजो धूपः। अदितिर्द्यौरिति पूजामंत्रः। घृततंडुलं द्रव्यं। गायत्र्याऽष्टोत्तरशतं हुत्वा अदितये गंधमाल्यौदनैर्बलिं दद्यात्। सप्तदिनादारभ्य सप्तविंशतिदिनांते सुखी स्यात्। संक्रमेऽर्घवृद्धिः॥ ७॥ पुष्योऽष्टतारा। शराकृतिः। पुमान्। तिर्यङ्मुखी। ऊर्ध्वमुखी च।

बृहस्पतिर्देवता । लघुः । देवगणः । अजो योनिः । अश्वत्थो वृक्षः । जीवंजीवः पक्षी । अक्षरं ककारः । घृतपानं कृत्वा यात्रां गच्छेत् । विंशतिनाड्यंते विषनाडी । ऋतुगमनसीमंतनामकरणाऽन्नप्राशनचौलोपनयनकर्णवेधनविद्यारंभस्थानाभिषेकबीजावापनवास्तुकर्मवस्त्राभरणधारणगोभिलेयदेवतास्थापनश्राद्धानि कुर्यात् । कार्तिके मासि शून्यं । सितवारे विषयोगः । केचिन्नाशयोगमिच्छंति । दशम्या सहोग्रयोगः । सोमार्कयोर्यमकंटकः । अर्के गुरौ सिद्धियोगः । अस्मिन्दिने गृहं कृत्वा प्रवेशनं चित्रलिखनं च । प्रसूतिश्चेत्पितृमरणं । तृतीयांशे सर्वं श्रेयः । चतुर्थांशे बंधुमरणं । ज्वरश्चेत्सप्तदिनानि पीडा । खंडमंडका नैवेद्यं । मल्लिकापुष्पं सरोरुहं वा । गुग्गुलुर्धूपः । बृहस्पतेअतीति मंत्रः । घृतपायसं द्रव्यं । सावित्र्याष्टोत्तरशतं हुत्वा गंधमाल्यौदनैर्बृहस्पतये बलिं दद्यात् । दिनत्रयादारभ्य सप्तदिनांते सुखी स्यात् । संक्रमेऽर्घवृद्धिः ॥ ८ ॥ आश्लेषा चतुस्तारा । लांगूलाकारा । सर्पा देवता । तीक्ष्णा । स्त्री । अधोमुखी । राक्षसगणः । मार्जारयोनिः । नागवृक्षः । द्रोणकाकः पक्षी । अक्षरे खकारगकारौ । पायसं प्राश्य यात्रां गच्छेत् । त्रिंशन्नाडिकांते विषनाडी । तृतीयांशे दिनमृत्युः । शत्रुजयश्च । असितवारे मरणयोगः । कुजबुधयोर्यमकंटकः । केचित्कुजवारे नाशमिच्छंति । कुजवारेण सह मृत्युयोगः । कृष्णरक्तसूर्योदये अस्यार्धघटिकांतरे कार्मुकोदये सर्पमुहूर्ते लग्ने अवाङ्मुखो भूत्वा विवाहनक्षत्रे शयितो मृद्ग्रहणं तत्फलं वा गृह्णीयात् । आत्मसाद्भवति । बृहस्पत्युदये अस्यांशके षट्कर्मारंभं कुर्यात् । सर्वमचिरात्सिध्यति । द्रव्यसंग्रहणं च । अस्यादिवारे इक्षुस्थापनं कृषिकलमप्रसारणं । व्रीहिवृद्धिः स्यात् । कूपादिखननं च कुर्यात् । ज्वरश्चेन्नवदिनानि पीडा । पायसं नैवेद्यं । अतसीपुष्पपूजा । घृतमंडो गुडो वा धूपः । मधुवाता मंत्रः । दधिघृताक्तं कृसरान्नं शालयो यवाश्च द्रव्यं । गायत्र्याऽष्टोत्तरशतं हुत्वा सक्तुसरान्नं नागाय बलिं दद्यात् । न शांतिश्चेदष्टदिने मरणं । संक्रमेऽल्पोऽर्घः ॥ ९ ॥ मघा चतुस्तारा ।

युगाकृतिः। पितरो देवता। उग्रा। राक्षसगणः। मूषकयोनिः। पलाशो वृक्षः। अक्षरे घङौ। स्त्री। अधोमुखी। तित्तिरिमांसभक्षणं कृत्वा यात्रां गच्छेत्। त्रिंशन्नाडिकांते विषघटिका। कृषिबीजावापनधान्यसंग्रहणं विवाहमाश्रयणं कृत्वा सहस्रगुणं भवेत्। व्ययं न कुर्यात्। कार्तिके मासि शून्यं। शुक्रवारे मरणयोगः। सूर्यसोमयोर्यमघंटकः। पंचम्या सह मरणयोगः। अर्के मृत्युयोगः। चंद्रोदये सस्यारंभः। अस्मिँल्लग्ने विवाहभूमौ मृद्ग्रहणं लवणं च कुर्यात्। ज्वरश्चेन्मृत्युः। एकविंशतिदिनानि पीडा। घृतपूरकं नैवेद्यं। चंपकपुष्पपूजा। गुग्गुलुर्धूपः। पितृंनुस्तोषमिति मंत्रः। घृतमधुमिश्रतिलाक्षतवटपत्राणि द्रव्यं। सावित्र्याऽष्टोत्तरशतं हुत्वाऽक्षततिलैः पितृभ्यो बलिं दद्यात्। न शांतिश्चेद्दशदिनांते मृत्युः। संक्रमे मध्यमोऽर्घः ॥ १० ॥ पूर्वाफल्गुनी द्वितारा। स्त्री। अधोमुखी। अर्यमा देवता। उग्रा। मनुष्यगणः। मूषकयोनिः। पलाशो वृक्षः। काकः पक्षी। अक्षरं चकारः। श्यामाकान्नभोजनं कृत्वा यात्रां गच्छेत्। जयो भवेत्। ऋणं दद्यात्। आषाढे मासि शून्यं। शुक्रवारे मृत्युयोगः। स्वर्णसंग्रहणविद्यारंभगृहाच्छादनं कुर्यात्। अस्मिन्मासे तन्नक्षत्रपरिवेष इंद्रचापो वा दृष्टश्चेद्दशदिने वृष्टिः स्यात्। विंशति घटिकांते विषघटिका। ज्वरश्चेद्दिनानि नव पंच वा पीडा। रक्तमाल्यौदनं नैवेद्यं। श्वेतकरंजपुष्पं। बिल्वफलं धूपः। अर्यमणंनुदेवमिति पूजा मंत्रः। घृतप्रियंगुद्रव्यं। सावित्र्याऽष्टोत्तरशतं हुत्वा गंधपुष्पेण बलिं दद्यात्। षड्दिनादारभ्याऽष्टदिनांते सुखी स्यात्। न शांतिश्चेन्मृतिः। संक्रमे मध्यमोऽर्घः ॥ ११ ॥ उत्तराफल्गुनी द्वितारा। स्त्री। ऊर्ध्वमुखी। भगो देवता। ध्रुवा। मनुष्यगणः। वृषयोनिः। प्लक्षो वृक्षः। क्रौंचः पक्षी। अक्षरे छजौ। पयः पीत्वा यात्रां गच्छेत्। अष्टादशघटिकांते विषघटिका। ऋतुगमनसीमंतनामकरणान्नप्राशनचौलोपनयनविद्यारंभविवाहस्नानवस्त्राभरणग्रामादिवास्तु-

बीजावापनाभिषेकगोसंग्रहणानि कुर्यात् । पौष्टिकं च कुर्यात् । मार्गशीर्षे शून्यं । वस्त्राभरणे महासिद्धिः । अर्कवारे सिद्धियोगः । मंदवारे विषयोगः । शून्यं चेति केचित् । चतुर्थ्या सह मृत्युयोगः । शुक्रवारे कलहयोगः । गुरुवारे नाशयोगः । परिवेषेंद्रचापौ दृष्टौ चेत्पंचदिने सप्तदिने वा वृष्टिः । ज्वरश्चेदेकविंशतिदिनानि पीडा । कृसरं नैवेद्यं । श्वेतकरवीरपुष्पपूजा । बिल्वफलं धूपः । भगप्रणेतरिति मंत्रः । तिलमाषसर्पिर्व्रीहियवद्रव्यं । सावित्र्याष्टोत्तरशतं हुत्वा तैरेव बलिं दद्यात् । अष्टादशदिनादारभ्य एकविंशतिदिनांते वा ज्वरमोक्षः । संक्रमेऽर्धवृद्धिः ॥ १ २ ॥ हस्तः पंचतारा । कवचाकारः । पुमान् । तिर्यङ्मुखः । सविता देवता । लघुः । प्रियंगुसमप्रभः । अक्षरे झकारञकारौ । देवगणः । महिषयोनिः । अरिष्टो वृक्षः । घंटकी पक्षी । पयोमिश्रमसूरकं भुक्त्वा यात्रां गच्छेत् । द्वात्रिंशन्नाडिकांते विषघटिका । ऋतुगमनादि शुभकर्म पूर्ववत् । मकरमासे शून्यं । मंदवारे मरणयोगः । विषयोग इत्यपरे । अर्कवारे सिद्धियोगः । वस्त्राभरणधारणे महासिद्धिः । सप्तम्या सह मरणयोगः । अर्कसितवारेणाऽतिवृद्धिः । चतुर्थ्या सह मृत्युयोगः । गुरुवारे कलहयोगः । बुधवारे आनंदयोगः । श्राद्धदेवतास्थापनसैनापत्यादि कुर्यात् । द्रव्यं न दद्यात् । संगृह्णीयादेव । गोसंग्रहणं च । आद्यांशे दिनमृत्युः । इंद्रचापे दृष्टे एकविंशतिदिने वृष्टिः स्यात् । ज्वरश्चेन्मृत्युः संदेहो वा । दिनानि पंचदश पीडा । अपूपं नैवेद्यं । रक्तकरवीरपुष्पपूजा । दशांगो धूपः । उदुत्यमिति मंत्रः । दधिघृतद्रव्यं । सावित्र्याऽष्टोत्तरशतं हुत्वा गंधपुष्पेण बलिं दद्यात् । पंचदशदिनादारभ्य एकविंशतिदिनांते सुखी स्यात् । संक्रमे मध्यमोऽर्धः ॥ १ ३ ॥ चित्रा एकतारा । तिर्यङ्मुखी । त्वष्टा देवता । मृदुः । व्याघ्रयोनिः । राक्षसगणः । बिल्वो वृक्षः । हंसः पक्षी । अक्षरे टठौ । चित्रान्नभोजनं कृत्वा यात्रां गच्छेत् । एकविंशतिनाड्यंते विषनाडिका । अन्नप्राशनकर्णवेधचौलोपनयनवस्त्राभरणाभिषेकश्राद्धकर्मकृषिबीजावापनानि कुर्यात् । वैशाखे

मासि शून्यं । कुजवारे नाशयोगः । सनंदार्ककुजेषु वरयोगः । इंदुवारे द्वितीयया सह विषयोगः । त्रयोदश्या मरणयोगः । बुधवारे यमकंटकः । मंदवारे नाशयोगः । माघमासे पूर्वाह्णे इंद्रचापे दृष्टे दशदिने वृष्टिः । चैत्रमासि सायाह्ने विशेषमेघे उत्पन्ने विंशतिदिने वृष्टिः । ज्वरश्चेद्दिनानि दश पंच वा पीडा । मोदकं नैवेद्यं । जपापुष्पपूजा । दशांगो धूपः । चित्रंदेवानामिति मंत्रः । जलमिश्रं घृतं चित्रौदनं च द्रव्यं । सावित्र्याऽष्टोत्तरशतं हुत्वा त्वष्ट्रे घृतमिश्रमुद्गैर्बलिं दद्यात् । सप्तदिनादारभ्य विंशतिदिनांते सुखी स्यात् । संक्रमे मध्यमोऽर्घः ॥ १४ ॥ स्वाती एकतारा । रक्तवर्णा । वायुर्देवता । चरा । तिर्यङ्मुखी । देवगणः । महिषयोनिः । उन्मत्तो वृक्षः । मयूरः पक्षी । अक्षरं डकारः । आमलकभक्षणं कृत्वा यात्रां गच्छेत् । चतुर्दशनाड्यंते विषनाडी । ऋतुगमनादिशुभकर्म पूर्ववत् । वैशाखे मासि शून्यं । चंद्रवारे सिद्धियोगः । मंदवारे अमृतयोगः । रविवारे सिद्धियोगः । शुक्रवारे यमकंटकः । त्रयोदश्या सह मरणयोगः । नंदाकुजयोर्वरयोगः । द्रव्यं न दद्यात् । पूर्वपक्षपंचम्यां विजयः । मंदवारे वृषोदये सेतुबंधनं कुर्यात् । ज्वरश्चेत्षष्टिदिनानि पीडा । दध्योदनं नैवेद्यं । दमनकपुष्पपूजा । श्वेतागुरुर्धूपः । सनःपितेवेति मंत्रः । घृताक्तयावकं द्रव्यं । सावित्र्याऽष्टोत्तरशतं हुत्वा गंधपुष्पेण वायवे बलिं दद्यात् । दशदिनादारभ्य चत्वारिंशद्दिनांते सुखी स्यात् । संक्रमे मध्यमोऽर्घः ॥ १५ ॥ विशाखा चतुस्तारा । स्त्री । शूर्पाकारा । अधोमुखी । इंद्राग्नी देवते । मिश्रा । व्याघ्रयोनिः । वैकंकतो वृक्षः । पिंगलः पक्षी । अक्षरे ढकारणकारौ । पिष्टांबुपानं कृत्वा यात्रां गच्छेत् । चतुर्दशनाड्यंते विषनाडी । शुभकर्माणि पूर्ववत् । बीजावापनवस्त्राभरणग्रहणं च कुर्यात् । द्रव्यं न दद्यात् । गृह्णीयादेव । मार्गशीर्षे शून्यं । अर्के नाशयोगः । केचिद्विषयोगमिच्छंति । बुधगुरुवारयोर्यमकंटकः । द्वितीयांशे दिनमृत्युः । शुक्रवारे शुक्रोदये कृष्यारंभं कुर्यात् । शत्रुदर्शनं चेच्छुभं भवति । मंदवारेऽस्मिँल्लग्ने कर्का-

लिचापलग्ने कुजांशके वा धान्यसंग्रहणं कुर्यात् । तत्काले भूमिविवादश्चेजयः । इंद्रचापे दृष्टेऽष्टदिने वृष्टिः । ज्वरश्चेद्विंशतिदिनानि पीडा । गुडकं नैवेद्यं । बंधूकपुष्पपूजा । देवदारुर्धूपः । शंनइंद्राग्नी पूजामंत्रः । दुग्धौदनं घृतं द्रव्यं । सावित्र्याऽष्टोत्तरशतं हुत्वा पयोमिश्रान्नैर्गंध-माल्यैरिंद्राग्निभ्यां बलिं दद्यात् । दशदिनादारभ्य विंशतिदिनांते सुखी स्यात् । संक्रमेऽल्पोऽर्घः ॥ १६ ॥ अनुराधा षट्तारा । चक्रमाला-कृतिः । पुमान् । तिर्यङ्मुखः । मित्रो देवता । देवगणः । मृगयोनिः । बकुलो वृक्षः । पक्षिणौ परपुष्टकाकौ । अक्षराणि तकारथकारदकाराः । द्वादशनाड्यंते विषघटी । कुलित्थभक्षणं कृत्वा यात्रां गच्छेत् । ऋतुगमनसीमंतकर्णान्नप्राशनोपनयनविद्यारंभश्राद्धबीजावापनादीनि कुर्यात् । मार्गशीर्षे मासि शून्यं । अर्कवारे मरणयोगः । केचिन्मृत्युयोगमिच्छंति । बुधवारे सिद्धियोगः । शुक्रे आनंदयोगः । मंदे मृत्युयोगः । दश-म्यामुग्रयोगः । तृतीयांशे दिनमृत्युः । तत्काले चापलग्ने कुजांशके धान्यसंग्रहणं । तत्काले व्यवहारजयो भवति । विवाहभूमौ मृद्ग्रहणं च कुर्यात् । करवीरपुष्पसदृशो मेघो दृश्यते चेत्तृतीयदिने वृष्टिर्भवति । ज्वरश्चेत्पंचविंशतिदिनानि पीडा दश वा । मित्रस्यचर्षणीति पूजामंत्रः । कुंकुमगंधः । पद्मं पुष्पं । साज्यं पायसं नैवेद्यं । चंदनं धूपः । सूरणकंदः प्रधानद्रव्यं । सावित्र्याऽष्टोत्तरशतं हुत्वा मित्राय साज्यपायसमुद्ग-माषैर्बलिं दद्यात् । अष्टदिनादारभ्य पंचविंशतिदिनांते सुखी स्यात् । संक्रमे मध्यमोऽर्घः ॥ १७ ॥ ज्येष्ठा त्रितारा । कुंडलाकृतिः । तिर्य-ङ्मुखी । इंद्रो देवता । तीक्ष्णा । राक्षसगणः । मृगयोनिः । विषवृक्षः । पक्षी कुक्कुटी । धकारोऽक्षरं । तिलभक्षणं कृत्वा यात्रां गच्छेत् । चतुर्दशनाडिकांते विषघटी । केचित्सैनापत्यं श्राद्धं शालिवापनं चाहुः । फाल्गुने मासि शून्यं । अर्कवारे नाशयोगः । गुरुप्रतिपदि विषयोगः । इंदुवारे भौमलग्ने कूपादिखननं कुर्यात् । करवीरपुष्पसदृशो मेघो दृष्टश्चेद्दशदिने वृष्टिः ।

ज्वरश्चेन्मृत्युः संदेहो वा । दश पंच वा दिनानि पीडा । चित्रौदनं नैवेद्यं । पटोलीपुष्पपूजा । कर्पूरागुरुर्धूपः । इंद्रंवइति पूजामंत्रः । घृतं सूरणकंदमूलं द्रव्यं । सावित्र्याष्टोत्तरशतं हुत्वा गंधपुष्पेणेंद्राय बलिं दद्यात् । न शांतिश्चेन्मृत्युः । अन्यतरां गतिं गच्छतीत्याश्वलायनो मांडव्यश्च । संक्रमेऽल्पोऽर्घः ॥१८॥ मूलं नवतारा । पश्वाकृतिः । हंसवर्णः । अधोमुखी । नपुंसकं । निर्ऋतिर्देवता । तीक्ष्णा । राक्षसगणः । श्वयोनिः । सर्जो वृक्षः । जीवंजीवः पक्षी । शाकभक्षणं कृत्वा यात्रां गच्छेत् । तिलभक्षणं वेति केचित् । विंशतिनाड्यंते विषघटी । अंत्यांशे दिनमृत्युः । ऋतुसंगमनामकरणान्नप्राशनाग्रयणविवाहबीजवापनगोसंग्रहणानि कुर्यात् । उग्रकर्माणि च कुर्यात् । द्रव्यं न दद्यात् । गृह्णीयादेव । माघे शून्यं । अर्कवारे मृत्युयोगः । नंदार्ककुजयोर्वरयोगः । कार्मुकोदये नगरस्थापनं च । रक्तमेघे दृष्टेऽष्टदिने वृष्टिः । ज्वरश्चेन्मृत्युः संदेहो वा । दशदिनानि पीडा । मत्स्यमांससुरापोलिका नैवेद्यं । रक्ताशोकपुष्पपूजा । मेषशृंगो धूपः । मोषुणःपरापरेति मंत्रः । सघृतं कंदमूलं द्रव्यं । सावित्र्याष्टोत्तरशतं हुत्वा निर्ऋतये पायसान्नेन बलिं दद्यात् । संक्रमेऽर्घवृद्धिः ॥१९॥ पूर्वाषाढा द्वितारा । स्त्री । अधोमुखी । आपो देवता । उग्रा । मनुष्यगणः । कपियोनिः । वानीरो वृक्षः । शक्रः पक्षी । अक्षराणि नकारादिबांतानि । कंदभक्षणं कृत्वा यात्रां गच्छेत् । चतुर्दशनाड्यंते विषघटी । गोसंग्रहणं शालिवापनं च कुर्यात् । कूपादिखननविद्यारंभव्रतबंधनानुलेपनमुखानि कर्माणि कुर्यात् । द्रव्यं न दद्यात् । गृह्णीयादेव । श्रावणे मासि शून्यं । चंद्रवारे विषयोगः । कुजवारे यमोदये प्राकारारंभं च कुर्यात् । बंधमालापररक्षाकर्माणि च । अस्मिँल्लग्ने कूपादिखननं च । रक्तमेघे दृष्टे पंचादिने वृष्टिः । ज्वरश्चेत्पंचविंशातिदिनानि पीडा । मंडका नैवेद्यं । कह्लारपुष्पपूजा । मनःशिला धूपः । आपोहिष्ठेति पूजामंत्रः । रक्तशालिर्द्रव्यं । सावित्र्याष्टोत्तरशतं हुत्वा वरुणाय पायसान्नेन बलिं दद्यात् । चतुर्दशदिनादारभ्य विंशतिदिनांते सुखी स्यात् । संक्रमेऽ

ल्पोऽर्घः ॥२०॥ उत्तराषाढा द्वितारा । स्त्री । ऊर्ध्वमुखी । विश्वेदेवा देवता । ध्रुवा । मनुष्यगणः । गौर्योनिः । शमलो [ पनसो ] वृक्षः । पिंगलः पक्षी । अक्षरं भकारः । गजविक्रयणं गजारोहणं च कुर्यात् । शंकुस्थापनं शक्रध्वजं [ शक्रव्रतं ] च कुर्यात् । तिलभक्षणं कृत्वा यात्रां गच्छेत् । विंशतिनाड्यंते विषघटी । ऋतुगमनादिशुभकर्माणि कुर्यात् । वैशाखे मासि शून्यं । चंद्रवारे मरणयोगः । अर्कवारे सिद्धियोगः । कुजवारे कलहयोगः । मंदवारे मृत्युः । शुक्रवारे आनंदः । तृतीयया सह मरणयोगः । रक्तमेघे दृष्टे एकादशदिने वृष्टिः । ज्वरश्चेद्विंशतिदिनानि पीडा । पंचभक्ष्यं नैवेद्यं । पंचवर्णपुष्पैः पूजा । लाक्षा धूपः । विश्वेदेवासआगतेति मंत्रः । घृतं सल्लकीखंडानि द्रव्यं । सावित्र्याष्टोत्तरशतं हुत्वा विश्वेभ्योदेवेभ्यः पायसान्नेन बलिं दद्यात् । एकादशदिनादारभ्य विंशतिदिनांते सुखी स्यात् । संक्रमेऽर्घवृद्धिः ॥ २१ ॥ श्रवणं त्रितारा । दंडाकृतिः । पुमान् । ऊर्ध्वमुखः । विष्णुर्देवता । चरः । देवगणः । वानरयोनिः । न्यग्रोधो वृक्षः । मयूरः पक्षी । अक्षरं मकारः । दशनाड्यंते विषघटी । जलं पीत्वा यात्रां गच्छेत् । ऋतुगमनपुंसवनसीमंतनामकरणान्नप्राशनचौलोपनयनाभिषेकाभरणकृषिबीजावापनकर्णसंधानानि कुर्यात् । श्राद्धं च यज्ञं च । माघे शून्यं । अर्कवारे सिद्धियोगः । चंद्रवारे मृत्युयोगः । मंदवारे यमकंटकः । शुक्रवारे षष्ठ्या सहोग्रयोगः । पंचम्या सह कर्कालिचापलग्ने चंद्रांशके धान्यसंग्रहणं कुर्यात् । व्यवहारारंभे जयो भवति । सोमवारे द्वितीयांशे सूर्योदये गृहारंभं कृत्वा प्रवेशनं च कुर्यात् । सकलाभीष्टसिद्धिर्भवति । ज्वरश्चेन्मासद्वयं पीडा मृत्युः संदेहो वा । क्षीरशर्कराघृतमंडका नैवेद्यं । जातीपुष्पपूजा । दशांगो धूपः । अतोदेवाइति मंत्रः । रक्ततंडुलद्रव्यं । सावित्र्याष्टोत्तरशतं हुत्वा गंधपुष्पेण विष्णवे बलिं दद्यात् । मासांते संवत्सरांते वा सुखी स्यात् । संक्रमेऽर्घवृद्धिः ॥ २२ ॥ धनिष्ठा पंचतारा । चक्राकारा । मृदंगाकारा । स्त्री । ऊर्ध्वमुखी । वसवो देवता । चरा । राक्षसगणः । सिंह-

योनिः । शमी वृक्षः । काकः पक्षी । अक्षरं यकारः । सक्तुभक्षणं कृत्वा यात्रां गच्छेत् । दशनाड्यंते विषनाडी । ऋतुगमनादिशुभकर्माणि पूर्ववत् । आषाढे शून्यं । कुजवारे विषयोगः । केचिन्नाशयोगः । मंदवारे मंदोदये आराममूमिसंचयं कुर्यात् । अस्मिँल्लग्ने युद्धं च कुर्यात् । जयो भवति । कुजोदये व्यापारं द्रव्यसंग्रहणं युद्धं च कुर्यात् । आद्यांशे दिनमृत्युः । रक्तमेघे दृष्टे विंशतिदिने वृष्टिः । ज्वरश्चेत्पंचदश-दिनानि पीडा । पायसं नैवेद्यं । शतपत्रपुष्पपूजा । घृतगुग्गुलुर्धूपः । त्रायंतामिहदेवाइति मंत्रः । बिल्वोदुंबराश्वत्थसमिधो द्रव्यं । सावि-त्र्याऽष्टोत्तरशतं हुत्वा घृतमिश्रमुद्गैर्वसुभ्यो बलिं दद्यात् । दशदिनादारभ्य पंचदशदिनांते सुखी स्यात् । त्रयोदशमासांते वा । संक्रमे मध्य-मोऽर्घः ॥ २३ ॥ शतभिषक् शततारा । पुष्पपुंजनिभाकृतिः । नपुंसकं । ऊर्ध्वमुखी । वरुणो देवता । चरा । राक्षसगणः । तुरगयोनिः । कदंबो वृक्षः । कंटकी पक्षी । अक्षरे रेफलकारौ । अन्नप्राशनचौलपुंसवनकर्णवेधसंधानधान्यवापनश्राद्धशस्त्रारंभांश्च कुर्यात् । प्रोष्ठपदे मासि शून्यं । कुजवारे मरणयोगः । केचिन्मृत्युयोगः । मंदवारे यमकंटकः । सनंदाऽर्ककुजयोर्मरणयोगः । गुरुवारे मृत्युयोगः । अर्के कुज-वारे कुलीरलग्ने त्वौषधोपयोगं कुर्यात् । अस्मिँल्लग्ने कृषिलवनं कुर्यात् । अपूपभक्षणं कृत्वा यात्रां गच्छेत् । अष्टादशनाड्यंते विषघटी । ज्वरश्चेद्दशदिनानि पीडा । घृतमंडका नैवेद्यं । साविच्याऽष्टोत्तरशतं जलोद्भवैर्वरुणाय हुत्वा पायसेन बलिं दद्यात् । षष्ठदिनादारभ्य द्वादश-दिनांते सुखी स्यात् । संक्रमेऽल्पोऽर्घः ॥ २४ ॥ पूर्वाभाद्रपदा द्वितारा । स्त्री । अधोमुखी । अजएकपाद्देवता । उग्रा । मनुष्यगणः । सिंह-योनिः । आम्रो वृक्षः । अक्षरे वशौ । कपोतः पक्षी । गुडभक्षणं कृत्वा यात्रां गच्छेत् । षोडशनाड्यंते विषनाडी । अश्वयुजि शून्यं । गोसंग्रहणं विद्यारंभं च कुर्यात् । द्रव्यं न दद्यात् । गृह्णीयादेव । कुजवारे नाशयोगः । अंत्यांशे नागवल्ल्यादिस्थापनं ।

द्वितीयांशे शुक्रोदये कूपादिखननं। रक्तमेघे दृष्टेऽष्टदिने वृष्टिः। ज्वरश्चेन्मृत्युः संदेहो वा। द्वाविंशतिदिनानि पीडा। दधिघृतं नैवेद्यं। अर्कपुष्पपूजा। सर्वौषधिर्धूपः। शंनोअजएकपादिति मंत्रः। घृतकूष्मांडखंडं द्रव्यं। सावित्र्याऽष्टोत्तरशतं हुत्वा गंधमाल्यौदनैरजैकपदे बलिं दद्यात्। दशदिनांते शांतिर्मृतिर्वा भवति। संक्रमे मध्यमोऽर्घः॥२५॥ उत्तराभाद्रपदा द्वितारा। पुमान्। ऊर्ध्वमुखः। अहिर्बुध्न्यो देवता। ध्रुवः। गौर्योनिः। निंबो वृक्षः। चक्रवाकः पक्षी। अक्षरे षसौ। मांसभक्षणं कृत्वा यात्रां गच्छेत्। चतुर्विंशतिनाडयंते विषघटी। ऋतुगमनसीमंतनामकरणान्नप्राशनचौलोपनयनस्नानाविवाहवास्तुबीजावापनवस्त्राभरणाभिषेकगोसंग्रहणानि कुर्यात्। रोगी स्नातश्चेत्सुखी स्यात्। श्रावणमार्गशीर्षयोः शून्यं। तृतीयया सह मरणयोगः। कुजवारे मृत्युयोगः। अर्कवारे सिद्धियोगः। तृतीयपादे दिनमृत्युः। रक्तमेघो दृष्टश्चेदेकादशादिने वृष्टिः। ज्वरश्चेत्पंचदिनानि पीडा। गुडपललघृतौदनं नैवेद्यं। कंजपत्राणि पुष्पं। घृतनिंबपत्रधूपः। विष्णुर्योनिमिति पूजामंत्रः। घृतप्लुतमाषचरुमुद्गानि द्रव्यं। सावित्र्याऽष्टोत्तरशतं हुत्वा गंधपुष्पेणाऽहिर्बुध्न्याय बलिं दद्यात्। संक्रमेऽर्घवृद्धिः॥२६॥ रेवती द्वात्रिंशत्तारा। पीठाकृतिः। स्त्री। तिर्यङ्मुखी। पूषा देवता। मृदुः। देवगणः। गजयोनिः। मधूको वृक्षः। पिंगलः पक्षी। अक्षरं हकारः। क्षीरपानं कृत्वा यात्रां गच्छेत्। त्रिंशन्नाडयंते विषघटी। प्रोष्ठपदे मासि शून्यं। ऋतुसंगमाद्युत्तराभाद्रोक्तकर्माणि कुर्यात्। अर्के सिद्धियोगः। बुधे सोमे च विषयोगः। मंदे नाशयोगः। अष्टम्या सह विषयोगः। नंदार्ककुजयोर्वैरयोगः। शुक्रवारे सिद्धियोगः। सप्तम्या सहोग्रयोगः। ज्वरश्चेद्दशदिनानि पीडा। तिलतंडुलपिष्टं नैवेद्यं। मंदारपुष्पपूजा। गुग्गुलुर्धूपः। हंसःशुचिषदिति मंत्रः। घृताम्रफलसहितकदलीफलानि द्रव्यं। सावित्र्याऽष्टोत्तरशतं हुत्वा गंधपुष्पादिभिः पूष्णे बलिं दद्यात्। पंचदिनादारभ्य विंशतिदिनांते सुखी स्यात्। संक्रमे मध्यमोऽर्घः।

अर्घवृद्धिरिति गार्ग्यमांडव्यादयः ॥२७॥ इति कमलाकरभट्टकृते शांतिरत्ने हेमाद्रिमदनरत्नोक्ता ज्वरोत्पत्तौ नक्षत्रशांतयः ॥ ॥ अथ प्रयोगः । कर्ता देशकालौ स्मृत्वा ममाऽमुकनक्षत्रे ज्वरोत्पत्तिसूचितसर्वारिष्टशांतिपूर्वकक्षिप्रारोग्यावाप्तिद्वारा श्रीप० अमुकनक्षत्रशांतिं करिष्य इति संकल्प्य गणेशं संपूज्याचार्यं वृणुयात् । आचार्यः प्रादेशकरणांते स्थंडिलादैशान्यां महीद्यौरित्यादिविधिना कलशं संस्थाप्य पूर्णपात्रोपरि वस्त्रे द्वादशदलं पद्मं कृत्वा तत्र प्रतिमायां नक्षत्रदेवतां तन्मंत्रेणावाह्य द्वादशदलेषु संकर्षणादिद्वादशदेवानष्टदिक्षु लोकपालांश्चावाह्य तत्तदुक्तगंधपुष्पधूपदीपनैवेद्यैः संपूज्याग्निं प्रतिष्ठाप्य तत्तदुक्तद्रव्यैर्गायत्र्याऽष्टोत्तरशतं नक्षत्रदेवतायै संकर्षणादिभ्योऽष्टौ चतस्र एकां वाऽऽहुतिं हुत्वा स्विष्टकृदादिप्रणीताविसर्जनांते तत्तद्द्रव्यैर्बलीन्दत्वाऽभ्युपस्थानादिशेषं समाप्य स्थापितकुंभोदकेन यजमानमभिषिंचेत् । ततः कर्ता विभूतिधारणांते देवतोत्तरपूजां विधायाचार्यं संपूज्य तस्मै दक्षिणां विसर्जितदेवतापीठं सोपस्करं च दत्वा विप्रान्संभोज्याशिषो गृहीत्वा कर्म समापयेत् । इति ज्वरोत्पत्तौ नक्षत्रशांतिप्रयोगः ॥ ॥ अथ रोगोत्पत्तौ नक्षत्रतिथिवारशांतयः । वसिष्ठसंहितायां । रोगशांतिं प्रवक्ष्यामि रोगार्तानां शरीरिणां । बलिपूजांगहोमैश्च जपब्राह्मणभोजनैः ॥ यस्मिन् धिष्ण्ये यदा नृणां रोगः संजायते तदा । तद्धिष्ण्यपूजा कर्तव्या तदीश्वरसुतुष्टये ॥ सुवर्णेन प्रमाणेन तदर्धार्धेन वा पुनः । धिष्ण्येशप्रतिमा कार्या यथावित्तानुसारतः ॥ ऐशान्यामथवा प्राच्यामुदीच्यां दिशि संलिखेत् । तंडुलोपर्यष्टदलं पद्मं गोमयमंडले॥पंचामृतैश्च सलिलैस्तत्तन्मंत्रैः पृथक्पृथक् । स्नाप्य कल्पोक्तमंत्रेण प्रतिमां स्थापयेत्ततः॥ कर्णिकायां सुसंस्थाप्य ध्यात्वा देवं समर्चयेत् । तद्वर्णवस्त्रगंधाद्यैरुक्तधूपोपहारकैः ॥ आरक्तवर्णं कुंभं च पल्लवैः पंचभिर्युतं । शुक्लवस्त्रस्वर्णरत्नशतौषधिसमन्वितं ॥ मृत्पंचगव्यसद्बीजफलक्षौद्रकुशान्वितं । देवस्य पूर्वतः स्थाप्य जलमंत्रैः समर्चयेत् ॥ तत्प्राच्यां [ प्रतीच्यां ] स्थंडिले वह्निं वि-

धिवत्स्थापयेत्ततः । मुखांते जुहुयादुक्तद्रव्येणाष्टसहस्रकं ॥ उक्तद्रव्येण तत्तन्नक्षत्रशांतावुक्तेन। तिलैर्हुत्वा व्याहृतिभिरष्टोत्तरसहस्रकं । पूर्णाहुतिं च जुहुयात्सम्यग्जपितपूर्वकं ॥ ततः शुद्धोपविष्टस्य रोगिणः प्राङ्मुखस्य च । मंत्रपूतैः कुंभजलैर्बिल्वगैर्वारिमंत्रकैः ॥ मार्जनं कारयेत्तस्य सम्यक्संकल्पपूर्वकं । नीराजनं च शुद्धात्मा पूजास्थानं समागतः ॥ देवं हुताशनं भक्त्या प्रणम्य प्रार्थयेदिति । अमृतोद्भव धिष्ण्येश यतस्त्वं शंकरात्मकः । रोगादस्माच्च मां रक्ष तव वश्याश्च धिष्ण्यपाः ॥ इति प्रार्थ्य ततो दद्यात्प्रतिमां वस्त्रसंयुतां । दक्षिणासहितां भक्त्या आचार्याय कुटुंबिने । ब्रह्मणे च यथाशक्त्या ब्राह्मणान्भोजयेत्ततः ॥ कृत्वा नक्षत्रपूजां च तिथिवासरयोरपि । सर्वान्कामानवाप्नोति रोगी रोगात्प्रमुच्यते ॥ पूर्वोक्तं विधिं कृत्वा तिथिवासरयोः शांतिं च कुर्यादित्यर्थः । अश्विन्यामुत्थितो व्याधिर्नवरात्रेण मुंचति । देवस्यत्वेतिमंत्रस्य गायत्री काश्यपोऽश्विनौ ॥ श्वेतवर्णौ सुधापूर्णकुंभांभोजधरौ पृथक् । चंदनोत्पलपुष्पाज्यगुग्गुलेक्षुगुडाप्रियौ ॥ क्षीरलड्डुकभोक्तारौ समिधः क्षीरवृक्षजाः । आज्यं गुग्गुलुश्च धूपः । समिद्भिर्होमः । एवमग्रेऽपि। गुडौदनबलिं दद्याद्दीपैः सार्धं निशामुखे ॥ १ ॥ भरण्यामुत्थितो व्याधिरचिरान्निधनप्रदः । मासेन मुंचत्यथवा दैवस्य कुटिला गतिः ॥ त्र्यंबकस्य तु मंत्रस्य प्रोक्ताश्छंदर्षिदेवताः । गंधोऽगुरुः करवीरं पुष्पं धूपश्च गुग्गुलुः ॥ आज्यदीपं च सर्वेषां नैवेद्यं च गुडौदनं । पाशदंडधरो रक्तस्त्वाज्यमध्वक्षता हविः ॥ महिषीनायकारूढः कृसरान्नं बलिं हरेत् । वक्ष्यमाणेन मंत्रेण बलिं सम्यक् प्रदापयेत् ॥ २ ॥ कृत्तिकासूत्थितो व्याधिर्दशरात्रेण मुंचति । स्रुक्स्रुवाऽभयवरदः सुवर्चा मेषवाहनः ॥ मेधातिथिर्जगत्यग्निः पुनंतुमामित्यस्यच । चंदनं यूथिकापुष्पं घृतधूपः सगुग्गुलुः ॥ नैवेद्यं तिलमाषान्नं वटकाद्येन संयुतं। गुडौदनं हविस्तत्र पायसेन बलिं हरेत् ॥ ३ ॥ रोहिण्यामुत्थितो व्याधिर्दशरात्रेण मुंचति । नमोब्रह्मणेमंत्रस्य गायत्री विधिरीश्वरः ॥ शुक्लः कमंडलुस्त्वक्षसूत्राऽभयवरप्रदः ।

चंदनं कमलं पुष्पं सदशांगं च गुग्गुलुं ॥ नैवेद्यं पायसं साज्यं सर्वदाऽन्नैर्हविर्भवेत् । दधिक्षीरघृतक्षौद्रशाल्यन्नेन बलिं हरेत् ॥ ४ ॥ चंद्रभे चोत्थितो व्याधिः पंचरात्रेण मुंचति । गदावरदपाणिश्च श्वेनोऽसौ रथवाहनः ॥ नवोनवोभवत्यस्य गायत्री गौतमः शशी । चंदनं कुमुदं पुष्पं दशांगं पायसौदनं ॥ नैवेद्यं मंडकाऽपूपघृतक्षौद्रसमन्वितं । शर्करादधिमिश्रेण शुक्लान्नेन बलिं हरेत् ॥ ५ ॥ आर्द्रायामुत्थितो व्याधिरचिरान्निधनप्रदः । मासेन मुंचत्यथवा दैवस्य कुटिलागतिः ॥ शुद्धस्फटिकसंकाशः शूलखड्गभयेष्टदः । नमःशंकरायेत्यस्य बृहतीशो विधिर्ऋषिः ॥ चंदनं सौरभं पुष्पं दशांगं पायसौदनं । समध्वाज्यं हविस्तत्र दध्योदनबलिं हरेत् ॥ ६ ॥ पुनर्वसौ भवेद्व्याधिर्नवरात्रेण मुंचति । कमंडल्वक्षसूत्रेध्मदर्भस्रुक्स्रुवभृत्सदा ॥ आदितिर्द्यौश्च मंत्रस्य त्रिष्टुभो द्रुहिणोऽदितिः । हरिद्राकुंकुमं गंधः पुष्पं सेवंतिकाह्वयं ॥ धूपो मलयजं पिष्टं घृतान्नं पीतवर्णकं । घृताक्तं तंडुलहविः पीतान्नेन बलिं हरेत् ॥ ७ ॥ पुष्ये समुत्थितो व्याधिः सप्तरात्रेण मुंचति । पीतो दंडकमंडल्वक्षसूत्रेष्टाऽभयोद्यतः ॥ बृहस्पतेपरीत्यस्य त्रिष्टुब् जीवोंऽगिरा ऋषिः । कुंकुमं वारिजं पुष्पं नैवेद्यं घृतपायसं ॥ मंडका गुडसंयुक्तमेतदेव हविर्भवेत् । समंडकघृतान्नेन बलिं तत्र प्रदापयेत् ॥ ८ ॥ आश्लेषासूत्थितो व्याधिः क्लेशान्मासेन मुंचति । नमोअस्त्विवति मंत्रस्य हव्यवाडथ सर्पराट् ॥ मधुवर्णो भोगयुक्तः खड्गचर्मधरः शुभः । सकुंकुमाऽगुरुर्गंधः पुष्पं चाऽगस्तिसंभवं ॥ घृतगुग्गुलुधूपोऽत्र नैवेद्यं क्षीरसर्पिषा । हविः साज्यं सदध्यन्नं दध्योदनबलिं हरेत् ॥ ९ ॥ पितृभे चोत्थितो व्याधिरचिरान्निधनप्रदः । अथवा सार्धमासेन धूम्रो दंडविचित्रधृक् ॥ आयंतुनस्त्विवति चास्य जगती पितरोऽब्जजः । चंदनं चंपकं पुष्पं धूपः सघृतगुग्गुलुः ॥ नैवेद्यं घृतपिष्टान्नं तिलान्नं सघृतं हविः । सतिलाज्यं च मुद्गान्नं बलिं च पितृतृप्तये ॥ १० ॥ पूर्वफाल्गुनभे व्याधिरर्धमासेन मुंचति ।

भगएवभगवानित्यस्य त्रिष्टुब् भगो विधिः ॥ पद्माऽभयकरः पद्मवर्णः सिंहासने स्थितः । चंदनं मालतीपुष्पं बिल्वधूपो घृतौदनं ॥ नैवेद्यं शर्कराऽपूपलड्डुकाभिश्च संयुतं । घृतौदनं हविस्तत्र पायसेन बलिं हरेत् ॥ ११ ॥ अर्यमर्क्षे भवेद्व्याधिरर्धमासेन मुंचति । पद्मवर्णः पद्मसंस्थः पद्मगर्भसमद्युतिः ॥ अर्यमाणेतिमंत्रस्य अर्यमा त्रिष्टुबब्जजः । कर्पूरं कुंकुमं गंधं पुष्पं धूपकसंज्ञकं ॥ घृतगुग्गुलुधूपोऽत्र नैवेद्यं घृतपायसं । होमद्रव्यं घृतान्नं स्याच्छाल्यन्नेन बलिं हरेत् ॥ १२ ॥ हस्ते समुत्थितो व्याधिर्नवरात्रेण मुंचति । उदुत्यमिति हिरण्यस्तूपो गायत्र्यदितिं जपेत् ॥ रक्तगंधं कुंकुमं च पुष्पं राजीवसंज्ञकं । गंधगुग्गुलुधूपोऽत्र नैवेद्यं घृतपायसं ॥ मधुपुष्पं तिलाज्यान्नं दूर्वाभिः सहितं हविः । गुडशर्करमध्वाज्यपिष्टान्नेन बलिं हरेत् ॥ १३ ॥ चित्रायामुत्थितो व्याधिर्दशरात्रेण मुंचति । चित्रंदेवानामित्यस्य त्वष्टा त्रिष्टुप् पितामहः ॥ अक्षसूत्राऽभयकरश्चित्रवर्णः शिवे रतः । सकुंकुमाऽगुरुर्गंधः कुसुमं चित्रवर्णकं ॥ नैवेद्यं मोदकाज्यान्नं चित्रान्नं सघृतं हविः । तदन्नेन बलिं दद्यात्सर्वरोगापनुत्तये ॥ १४ ॥ स्वात्यृक्षे चोत्थितो व्याधिः सर्वदा निधनप्रदः । एकद्वित्रिचतुष्पंचमासैर्वाऽपि विमुंचति ॥ सनःपितेतिमंत्रस्य गायत्री मरुदंगिराः । खड्गचर्मधरः कृष्णो गंधः कृष्णागुरुर्भृशं ॥ पुष्पं दमनकं धूपश्चंदनाऽगुरुगुग्गुलुः । नैवेद्यं पायसं साज्यं हविस्तेन बलिं हरेत् ॥ १५ ॥ द्विदैवभे भवेद्व्याधिर्मासैनैकेन मुंचति । इंद्राग्नीआगतमिति गायत्री चास्य चैव हि ॥ मधुच्छंदर्षिरिंद्राग्नी तयोर्ध्यानं च पूर्ववत् । श्रीखंडं कुंकुमं गंधं तयोः पुष्पं सरोरुहं ॥ देवदारुस्तयोर्धूपो नैवेद्यं घृतपायसं । तदेवाऽन्नं हविस्तत्र चित्रान्नेन बलिं हरेत ॥ १६ ॥ मित्रभे चोत्थितो व्याधिर्दशरात्रेण मुंचति । मित्रस्यचर्षणीधृतो गायत्री चास्य चैव हि ॥ ऋषिर्हिरण्यस्तूपाख्यस्तत्र मित्रोऽधिदेवता । द्विभुजः पद्मगर्भाभः पद्मभृत्पद्मसंस्थितः ॥ कुंकुमं पुंडरीकाख्यं पुष्पं धूपं च चंदनं । नैवेद्यं पायसं साज्यं हविः कंदस्तु सूरणः ॥

बलिस्तत्र प्रदातव्यो मधुशर्करपायसं । घृतपूरकमाषान्नं मुद्गगर्भैश्च संयुतं ॥ १७ ॥ ज्येष्ठायामुत्थितो व्याधिर्मृत्युरेव न संशयः । इंद्रंवइति मंत्रस्य गायत्रींद्रोऽगिरा ऋषिः ॥ इंद्राय पूर्ववद्गंधं चंदनं कुसुमं शुभं । कर्पूरधूपो नैवेद्यं चित्रान्नं सुमनोहरं ॥ हविस्तु सूरणं कंदं मधुकंदं सुपायसं । विचित्रपुष्पगंधेन दध्यन्नेन बलिं हरेत् ॥ १८ ॥ मूलभे चोत्थितो व्याधिर्मासार्धेन विमुंचति । खड्गचर्मधरः कृष्णः करालवदनः प्रभुः ॥ मोषुणोऽस्य च गायत्री घौरः कण्वोऽथ निर्ऋतिः । गंधः कृष्णागुरुः पुष्पं पद्मं नीलोत्पलं शुभं ॥ धूपः कृष्णागुरुर्माषमिश्रान्नमुपहारकं । तदेवान्नं हविस्तत्र माषान्नेन बलिं हरेत् ॥ १९ ॥ वारिभे चोत्थितो व्याधी रोगिणो निधनप्रदः । विमुंचत्यथवा मासैर्द्वित्रिषट्पंचसप्तभिः ॥ आप्यायस्वेतिमंत्रस्य गायत्री पद्मजो जलं । सुवर्णो द्विभुजः पद्मपाणिर्गंधस्तु चंदनं ॥ पद्मं शैलेयधूपोऽत्र नैवेद्यं घृतपायसं । हविर्मसूरपिष्टान्नं तदन्नेन बलिं हरेत् ॥ २० ॥ विश्वभे चोत्थितो व्याधिः सार्धमासेन मुंचति । विश्वेदेवासइत्यस्य गायत्री विश्वदेवताः ॥ कमंडल्वभयांऽभोजवरदश्च कुशासनः । चंदनं कमलं पुष्पं धूपः सघृतगुग्गुलुः ॥ नैवेद्यं पायसाज्यान्नं हविरप्येतदेव हि । समिद्भिर्निचुलैः सार्धं तदन्नेन बलिं हरेत् ॥ २१ ॥ श्रवणे चोत्थितो व्याधिर्दशरात्रेण मुंचति । अतोदेवेतिमंत्रस्य गायत्री पद्मजो हरिः ॥ पीतांबरः कृष्णवर्णः शंखचक्रगदाब्जधृक् । चंदनं मालतीपुष्पं धूपः कर्पूरगुग्गुलुः ॥ शाल्यन्नं षड्रसोपेतं भक्ष्यभोज्यादिभिः सह । नैवेद्यं हविरप्येतत्पायसेन बलिं हरेत् ॥ २२ ॥ वसुभे चोत्थितो व्याधिर्दशरात्रेण मुंचति । त्रायंतामिहमंत्रस्याऽनुष्टब् व्यासो वसुस्ततः ॥ चापत्राणधरः शुक्लगंधः कर्पूरचंदनं । वारिजं गुग्गुलुर्धूपो नैवेद्यं घृतपायसं ॥ हविश्चोदुंबरसमिद्गुडान्नेन बलिं हरेत् । " शां० म० हविश्चोदुंबरसमिद्गुडपायससंयुतं । लड्डुकापूपमध्वाज्यतिलपिष्टबलिं हरेत् " ॥२३॥ वारुणे चोत्थितो व्याधिरष्टरात्रेण

मुंचति। इमंमेवरुणेत्यस्य गायत्री कण्ववारिपः ॥ नागपाशधरः श्रीमान्नवरत्नविभूषितः। मकरस्थोऽगुरुर्गंधः पुष्पं च कमलोत्पलं ॥ कर्पूरं चंदनं धूपो नैवेद्यं घृतपोलिकाः । हविरश्वत्थसमिधश्चित्रान्नेन बलिं हरेत् ॥ २४ ॥ अजपाद्रे भवो व्याधिः सर्वदा निधनप्रदः । अथवा बहुभिर्मासैर्दिवसैर्वा विमुंचति ॥ वामपादकरं भूम्यामाकाशे त्वपरं द्वयं । प्रसादप्रांजलिः साक्षादीश्वरं चिंतयन् स्थितः ॥ शमग्निरित्यस्याजपाद्गायत्री चतुराननः । कुंकुमं चंदनं गंधं पुष्पं श्वेतार्कसंभवं ॥ धूपः शतौषधीमिश्रो नैवेद्यं दधिपायसं । हविः कूष्मांडखंडः स्याद्दध्यन्नेन बलिं हरेत् ॥ २५ ॥ अहिबुध्न्ये भवो व्याधिः सार्धमासेन मुंचति । नमस्तेरुद्रइत्यस्य सर्वे तत्रैव संस्थिताः ॥ गंधं चंदनकर्पूरं पुष्पं पद्मोत्पलं शुभं । सबिल्वगुग्गुलुर्धूपो नैवेद्यं घृतपायसं ॥ मुद्गमाषतिलान्नाज्ययवव्रीहिमयं हविः । [हविस्तदेव सजलमन्नेन च बलिं हरेत् ] ॥२६॥ रेवत्यामुत्थितो व्याधिरष्टरात्रेण मुंचति । हंसःशुचिषदित्यस्य जगती वामदेवकः ॥ पूषा च देवतांऽभोजवर्णोऽभोजधरः शुभः । रक्तचंदनगंधोऽत्र पुष्पं मंदारसंज्ञकं ॥ धूपस्तु गुग्गुलुः साज्यो नैवेद्यं घृतपायसं। हविस्तदेव सजलं दध्यन्नेन बलिं हरेत् ॥ मंत्रस्तु। भूतेशानुसृतो यस्माद्रोगनाथ महाज्वर । रोगादस्माच्च मां त्राहि त्वं गृहीत्वोत्तमं बलिं ॥ २७ ॥ प्रतिपद्युत्थितो व्याधिर्द्वादशाहेन मुंचति । अग्निस्तु देवता तत्र कृसरान्नं बलिं हरेत् ॥ १ ॥ द्वितीयायां भवेद्व्याधिः पंचरात्रेण मुंचति । ब्रह्मा तु देवता तत्र पायसेन बलिं हरेत् ॥ २ ॥ तृतीयायां भवेद्व्याधिः सप्तरात्रेण मुंचति । कामस्तु देवता तत्र घृतान्नेन बलिं हरेत् ॥ ३ ॥ चतुर्थ्यामुत्थितो व्याधिर्दशरात्रेण मुंचति । चंद्रस्तु देवता तत्र घृतान्नेन बलिं हरेत् ॥ ४ ॥ पंचम्यामुत्थितो व्याधिर्नवरात्रेण मुंचति । नागस्तु देवता तत्र दुग्धान्नेन बलिं हरेत् ॥ ५ ॥ षष्ठ्यां समुत्थितो व्याधिश्चतूरात्रेण मुंचति । स्कंदस्तु देवता तत्र मुद्गान्नेन बलिं हरेत् ॥ ६ ॥ सप्तम्यामुत्थितो व्याधिरष्टरात्रेण मुंचति । अर्यमा देवता तत्र गुडान्नेन बलिं

हरेत् ॥ ७ ॥ अष्टम्यामुत्थितो व्याधिर्दशरात्रेण मुंचति । बृहस्पतिर्देवताऽत्र पायसान्नं बलिं हरेत् ॥ ८ ॥ नवम्यामुत्थितो व्याधिर्मरणं नि-
श्चितं भवेत् । यमस्तु देवता तत्र माषान्नेन बलिं हरेत् ॥ ९ ॥ दशम्यामुत्थितो व्याधिः पंचरात्रेण मुंचति । सविता देवता तत्र घृतान्नेन
बलिं हरेत् ॥ १० ॥ एकादश्युत्थितो व्याधिस्त्रिरात्रेणैव मुंचति । विष्णुश्च देवता तत्र पायसेन बलिं हरेत् ॥ ११ ॥ द्वादश्यामुत्थितो
व्याधिर्मरणं निश्चितं भवेत् । रोगी रोगान्न मुच्येत यमलोकं स गच्छति ॥ १२ ॥ त्रयोदश्युत्थितो व्याधिः सप्तरात्रेण मुंचति । वरुणो
देवता तत्र लड्डुकान्नैर्बलिं हरेत् ॥ १३ ॥ चतुर्दश्यां भवेद्व्याधिर्मृत्युदो वा द्विमासतः । मुंचंति देवताः सर्वाः पिष्टान्नेन बलिं हरेत् ॥ १४ ॥
पूर्णिमायां भवेद्व्याधिस्त्रिरात्रेणैव मुंचति । चंद्रस्तु देवता तत्र दध्योदनबलिं हरेत्॥१५॥अमावास्याभवो व्याधिरेकमासेन मुंचति । अथवाऽष्टाच-
त्वारिंशद्दिनानि दाहपीडितः ॥ महामृत्युर्भवेत्तस्य यमलोकं स गच्छति । तत्र शांतिं प्रवक्ष्यामि सर्वदोषोपशांतये ॥ पितॄणां प्रतिमा कार्या
सौवर्णी कर्षसंमिता । येचेहपितरश्चेति पूजामंत्र उदीरितः ॥ कृष्णागुरुश्चंदनं च कृष्णपुष्पैस्तु पूजयेत् । समिदाज्यतिलैर्माषचर्वाज्येन च
होमयेत् ॥ अष्टोत्तरशतं वाऽपि अष्टाविंशतिरेव वा । कृष्णा गौश्च प्रदातव्या आचार्याय सदक्षिणा ॥ ब्राह्मणान्भोजयेत्पश्चादेकादश स्वशक्तितः
। सर्वारिष्टप्रशांत्यर्थं दीर्घायुश्च सुखी भवेत् ॥ १६ ॥ रविवारे भवेद्व्याधिर्दशरात्रेण मुंचति । सविता देवता तत्र पायसेन बलिं हरेत् ॥ १ ॥
इंदुवारे भवेद्व्याधिः सप्तरात्रेण मुंचति। सोमस्तु देवता तत्र घृतान्नेन बलिं हरेत् ॥ २ ॥ भौमवारे भवेद्व्याधिः क्लेशाय मरणाय वा । कुजस्तु
देवता तत्र रक्तान्नेन बलिं हरेत् ॥ ३ ॥ बुधवारे भवेव्द्याधिः सप्तरात्रेण मुंचति । बुधस्तु देवता तत्र मुद्गान्नेन बलिं हरेत् ॥ ४ ॥ गुरुवारे
भवेव्द्याधिः पंचरात्रेण मुंचति । गुरुस्तु देवता तत्र हरिद्रान्नं बलिं हरेत् ॥ ५ ॥ भृगुवारे भवेव्द्याधिः सप्तरात्रेण मुंचति । भृगुश्च देवता

तत्र हरिद्रान्नं बलिं हरेत् ॥ ६ ॥ शनिवारे भवेव्द्याधिर्मासार्धेन विमुंचति । शनिस्तु देवता तत्र माषान्नेन बलिं हरेत् ॥ ७ ॥ पंचराश्यादि-
षड्वर्गाद् बलिं दद्यात्तदीश्वरे । यो बलिं कुरुते सम्यग् रोगी रोगात्प्रमुच्यते ॥ आधाननिधनप्रत्यग्जन्माह्वयविपत्करे । नक्षत्रे जनितो व्याधिः क्ले-
शाय मरणाय च ॥ आश्लेषार्द्रात्रिपूर्वायमवरुणमरुच्छक्रताराऽनलाः स्युर्द्वादश्यां स्कंदरिक्तातिथिषु च रविजाऽऽराऽर्कवारेषु येषां । रोगः सं-
जायते ते यमपुरमचिरात्प्राप्नुवंत्येव चंद्रे जन्मन्यष्टाख्यबंधुव्ययभवनगते मृत्युलग्ने च राशौ ॥ इति शांतिरत्ने रोगोत्पत्तौ नक्षत्रतिथिवा-
रशांतयः ॥ ॥ अथ प्रयोगः । कर्ता शुभकाले आचमनादिदेशकालस्मरणांते ममोत्पन्नस्य व्याधेर्जीवच्छरीराविरोधेन समूलनाशपूर्वक-
क्षिप्रारोग्यसिद्धिद्वारा श्री० अमुकनक्षत्रतिथिवाराधिपमंत्रस्य अष्टोत्तरसहस्राादिसंख्यया जपं करिष्ये इति संकल्प्य जपं कुर्यात् । अन्यद्वारा
तच्चिकीर्षायां तु तथैव संकल्प्य तदर्थं ब्राह्मणवरणाद्यंते पुन[illegible]मोत्पन्नस्य व्याधे० सग्रहमखां वृद्धवसिष्ठोक्तां
शांतिं० । गणेशपूजनाद्याचार्यऋत्विग्वरणांतं कुर्यात् । आचार्यः प्रादेशकरणांते गृहस्य प्राच्यामुदीच्यामैशान्यां वा गोमयोपलिप्ते
शुचिदेशे तंडुलोपरि कुंकुमादिनाऽष्टदलं पद्मं विरच्य तत्कर्णिकायां यथाशक्तिसुवर्णनिर्मितं पंचामृतैः शुद्धोदकैश्च प्रक्षालितं प्रति-
मात्रयं निधाय तत्र तिथिवारनक्षत्राधिपांस्तत्तन्मंत्रैरावाह्य ध्यात्वा षोडशोपचारैः पूजयेत् । तत्र वस्त्रगंधादि तत्तदुक्तं ग्राह्यं ( उक्तगंधा
ऽभावे चंदनं । पुष्पाऽभावे शतपत्रं । धूपाऽभावे गुग्गुलुः । नैवेद्याऽभावे घृतौदनं । मंत्राऽपरिज्ञाने च गायत्रीति दिक् )
ततस्तत्पूर्वे महीद्यौरित्यादिविधिना रक्तवर्णं कलशं संस्थाप्य जलेनापूर्य गंधादिक्षेपांते शतौषधिमृत्पंचगव्यसद्बीजमधुकुशांश्च तत्तन्मंत्रैः
क्षिप्त्वा शुक्लवस्त्रेणावेष्ट्य तत्र सर्वेसमुद्राइति तीर्थानि तत्त्वायामीति वरुणं चावाह्य पूजयेत् । ततोऽग्निं ग्रहांश्च प्रतिष्ठाप्यान्वाधानाद्याज्य-

भागहोमांते ग्रहादिहोमोत्तरं स्थापितदेवताभ्यस्तत्तन्मंत्रैरुक्तद्रव्यैरष्टसहस्रसंख्यया होमं कृत्वा समस्तव्याहृतिभिस्तावतीरेव तिलाहुतीर्जुहुयात् ( अत्र सर्वत्र मृत्युनिर्देशेऽष्टसहस्रमन्यत्राऽष्टशतमष्टाविंशतिर्वेति संख्यायां विवेकः । उक्तद्रव्याऽलाभे द्रव्याऽनुक्तौ च तिलैरेव होमः ) ततः स्विष्टकृदादिप्रायश्चित्तहोमांते बलिदानपूर्णाहुती कृत्वा संस्रावहोमादिशेषं समाप्य शुद्धवस्त्रादिधरं प्राङ्मुखोपविष्टं रोगिणं स्थापितकलशोदकेन समुद्रज्येष्ठादिमंत्रैर्ग्रहमंत्रैः सुरास्त्वामित्यादिपौराणैश्चाभिषिंचेत् । ततः कर्ता पूजास्थानमागत्याऽग्निं संपूज्य प्रणम्य विभूतिं धृत्वा देवतोत्तरपूजां विधाय नीराजनांते कृतांजलिः प्रार्थयेत् । तत्र मंत्रः । अमृतोद्भव धिष्ण्येश यतस्त्वं शंकरात्मकः । रोगादस्माच्च मां रक्ष तव वश्याश्च धिष्ण्यपाः ॥ तत आचार्यादिभ्यो गवादिदक्षिणादानांते विसर्जितदेवताप्रतिमा वस्त्रदक्षिणासहिता आचार्यहस्ते प्रतिपाद्य विप्रान्संभोज्य भूयसीं दत्वा तैः शांतिं वाचयित्वाशिषो गृहीत्वा कर्मेश्वरायार्प[illegible]ो नक्षत्रतिथिवारशांतिप्रयोगः॥ ॥अथ ग्रहशांतयः । तत्रादौ रविशांतिः । मदनरत्ने भविष्ये। अतःपरं प्रवक्ष्यामि रहस्यं त्वेतदुत्तमं । य[illegible] लक्ष्मीर्धृतिस्तुष्टिः पुष्टिः कांतिश्च जायते ॥ आदित्यवारं हस्तेन पूर्वं गृह्य विचक्षणः । ( हस्तयुक्ते भानुवारे प्रारंभं कुर्यादित्यर्थः ) मंत्रोक्तविधिना सर्वं कुर्यात्पूजादिकं रवेः ॥ प्रत्यर्कं सप्त नक्तानि कृत्वा भक्तिपरो नरः । ततस्तु सप्तमे प्राप्ते कुर्याद्ब्राह्मणभोजनं ॥ भास्करं शुद्धसौवर्णं कृत्वा यत्नेन मानवः । ताम्रपात्रे स्थापयित्वा रक्तपुष्पैः-प्रपूजयेत् ॥ रक्तवस्त्रयुगच्छन्नं छत्रोपानद्युगान्वितं । घृतेन स्नापयित्वा च लड्डुकान्विनिवेद्य च । होमं घृततिलैः कुर्याद्रविनाम्ना च मंत्रवित् । समिधोऽष्टोत्तरशतमष्टाविंशतिरेव वा । होतव्या मधुसर्पिर्भ्यां दध्ना चैव घृतेन च । दध्ना घृतेन च भिन्नो होमः । समिधोऽर्कसमिधः । मंत्रेणानेन विदुषे ब्राह्मणाय प्रदापयेत् ॥ आदिदेव नमस्तुभ्यं सप्तसप्ते दिवाकर । त्वं रवे तारयस्वास्मानस्मात्संसारसागरात् ॥

व्रतेनानेन राजेंद्र भवेदारोग्यमुत्तमं । द्रव्यसंपत्सुतप्राप्तिरिति पौराणिका विदुः ॥ अपि संवादिनी चेयं शांतिः पुष्टिः सदा नृणां। सूर्यपीडासु घोरासु कृता शांतिः शुभप्रदा ॥ ॥ अथ चंद्रशांतिः । तत्रैव । तद्दच्चित्रासु संगृह्य सोमवारं विचक्षणः । तद्दद्धस्तार्कवत् । अनेनैवोक्तविधिना कुर्यात्पूजादिकं विधोः ॥ सप्तमे तु ततः प्राप्ते कुर्याद्ब्राह्मणभोजनं । सप्तमे नक्ते । कांस्यपात्रेऽथ संस्थाप्य सोमं रजतसंभवं । श्वेतवस्त्रयुगच्छन्नं श्वेतपुष्पैः प्रपूजितं ॥ पादुकोपानहौ छत्रं भाजनासनसंयुतं । होमं घृततिलैः कुर्यात्सोमनाम्ना च मंत्रवित् ॥ समिधोऽष्टोत्तरशतमष्टाविंशतिरेव वा । होतव्या मधुसर्पिर्भ्यां दध्ना चैव घृतेन च ॥ समिधः पालाशयः । दध्यन्नं शशिने कृत्वा ब्रा[illegible]णाय निवेदयेत् । मंत्रेणानेन राजेंद्र सम्यग्भक्तिसमन्वितः ॥ महादेवप्रियोऽसि त्वं शुद्धगोक्षीरपांडर । सोम सौम्यो भवाऽस्माकं सर्वदा ते नमो नमः ॥ एवं कृते महासौम्यः सोमस्तुष्टिकरो भवेत् । संतुष्टेऽत्रिसुते तस्मिन् स[illegible]हाः ॥ ॥ अथांगारकशांतिः । तत्रैव । स्वात्यामंगारकं गृह्य क्षमायां नक्तभोजनं । क्षमायां भूमौ । सप्तमे त्वथ संप्राप्ते हे[illegible] ताम्रे निवेश्य च ॥ रक्तवस्त्रयुगच्छन्नं कुंकुमेनानुलेपितं । निवेद्य भक्त्या कृसरं पूष्पधूपाक्षतादिभिः ॥ होमं तिलघृतैः कुर्यात्कुजनाम्ना च मंत्रवित् । समिधोऽष्टोत्तरशतमष्टाविंशतिरेव वा ॥ होतव्या मधुसर्पिर्भ्यां दध्ना चैव घृतेन च । समिधः खादिर्यः । मंत्रेणानेन तं दद्याद्ब्राह्मणाय कुटुंबिने । कुज कुप्रभवोऽपि त्वं मंगलः परिपठ्यसे । अमंगलं निहत्याशु सर्वदा यच्छ मंगलं ॥ एवं कृते भौमकृतं दुष्कृतं शांतिमाप्नुयात् । कर्तव्यं भौमपीडासु तस्मात्प्रयतमानसैः ॥ ॥ अथ बुधशांतिः। तत्रैव । विशाखासु बुधं गृह्य सप्तनक्तान्यथाचरेत् । गृह्य आरभ्य । बुधं हेममयं कृत्वा स्थापितं कांस्यभाजने ॥ शुक्लवस्त्रयुगच्छन्नं शुक्लमाल्यानुलेपनं । गुडौदनं सोपहारं ब्राह्मणाय निवेदयेत् ॥ बुध त्वं बुद्धिजननो बोधवान्सर्वदा नृणां । तत्वावबोधं कुरु मे सोम-

पुत्र नमो नमः ॥ होमं घृततिलैः कुर्याद्बुधनाम्ना च मंत्रवित् । समिधोऽष्टोत्तरशतमष्टाविंशतिरेव वा ॥ होतव्या मधुसर्पिर्भ्यां दध्ना चैव घृतेन च । समिधोऽपामार्गस्य । बुधशांतिरियं प्रोक्ता बुधवैकृतनाशिनी । बुधदोषेषु कर्तव्या तथा शांतिकपौष्टिके ॥ ॥ अथ गुरुशांतिः । तत्रैव । गुरुं चैवाऽनुराधासु पूजयेद्भक्तितो नरः । पूर्वोक्तविधियोगेन सप्त नक्षत्रान्यथाचरेत् ॥ हैमं हेममये पात्रे स्थापयित्वा बृहस्पतिं । पीतांबरयुगच्छन्नं पीतयज्ञोपवीतिनं ॥ पादुकोपानहच्छत्रकमंडलुविभूषितं । पूजयेत्पीतकुसुमैः कुंकुमेन विलेपितं ॥ धूपदीपादिभिर्द्रव्यैः फलैश्चंदनतंडुलैः । खंडखाद्योपहारैश्च गुरोरग्रे निवेदयेत् ॥ धर्मशास्त्रार्थतत्वज्ञ ज्ञानविज्ञानपारग । विबुधार्तिहराऽचिंत्य देवाचार्य नमोस्तु ते ॥ अनेन मंत्रेण दद्यात् । होमस्तु पूर्ववत् घृततिलैरश्वत्थसमिद्भिर्गुरुनाम्ना । विषमस्थे गुरौ कार्या महाशांतिरियं नृभिः ॥ ॥ अथ शुक्रशांतिः । तत्रैव । शुक्रं ज्येष्ठासु संगृह्य [illegible]जनं । गुरूक्तक्रममार्गेण द्विजसंतर्पणेन च ॥ सप्तमे त्वथ संप्राप्ते रौप्यं शुक्रं तु कारयेत् । वंशपात्रे च संस्थाप्य पूजयेत्सितपंकजैः ॥ तदभावे सितैः पुष्पैस्तांबूलैश्चंदनेन च । अग्रे तस्य प्रदातव्यं पायसं घृतसंप्लुतं ॥ भार्गवो भर्गशुक्रश्च श्रुतिस्मृतिविशारदः । हित्वा ग्रहकृतान्दोषानायुरारोग्यदोऽस्तु नः ॥ अनेन मं[illegible] दद्यात् । होमस्तु पूर्ववत् घृततिलैः उदुंबरसमिद्भिः शुक्रनाम्ना कार्यः ॥ ॥ अथ शनैश्चरादिशांतिः । तत्रैव । शनैश्चरं राहुकेतूँल्लोहपात्रेषु विन्यसेत् । कृष्णागुरुः स्मृतो धूपो दक्षिणा च स्वशक्तितः ॥ यथाक्रमं शमीदूर्वाकुशानां समिधः स्मृताः । सप्तमे त्वथ संप्राप्ते सौवर्णानथ कारयेत् ॥ कृष्णवस्त्रयुगच्छन्नमेकैकं कारयेद्बुधः । मृगनाभ्या समालभ्य कृसरान्नं निवेद्य च ॥ होमावसाने तत्सर्वं ब्राह्मणाय निवेदयेत् । होमस्तूक्तसमिद्भिश्च तेषां नाम्ना च कारयेत् ॥ शनैश्चर नमस्तेस्तु नमस्ते राहवे तथा । केतवे च नमस्तुभ्यं सर्वे शांतिं प्रयच्छत ॥

अनेन मंत्रेण दद्यात् । इति ग्रहशांतयः ॥ ॥ अथ नवग्रहदानानि । जातकाभरणे सारावल्यां च । ये खेचरा गोचरतोऽष्टवर्गाद्-शाक्रमाद्वाऽप्यशुभा भवंति । दानादिना ते सुतरां प्रसन्नास्तेनाऽधुना दानविधिं प्रवक्ष्ये ॥ माणिक्यगोधूमसवत्सधेनुकौसुंभवासो गुडहेमताम्रं । आरक्तकं चंदनमंबुजं च वदंति दानं हि विरोचनाय ॥ १ ॥ सद्वंशपात्रस्थिततंडुलांश्च कर्पूरमुक्ताफलशुभ्रवस्त्रं । युगोपयुक्तं वृषभं च रौप्यं चंद्राय दद्याद् घृतपूर्णकुंभं ॥ २ ॥ प्रवालगोधूममसूरिकाश्च वृषोऽरुणश्चापि गुडः सुवर्णं । आरक्तवस्त्रं करवीरपुष्पं ताम्रं च भौमाय वदंति दानं ॥ ३ ॥ चैलं च नीलं कलधौतकांस्यं मुद्गाज्यगारुत्मतसर्वपुष्पं । दासी च दंतो द्विरदस्य नूनं वदंति दानं विधुनंदनाय ॥ ४ ॥ शर्करा च रजनी तुरंगमः पीतधान्यमपि पीतमंबरं । पुष्परागलवणं सकांचनं प्रीतये सुरगुरोः प्रदीयते ॥ ५ ॥ चित्रांबरं शुभ्रतरस्तुरंगो धेनुश्च वज्रं र-जतं सुवर्णं । सतंडुलाज्योत्तमगंधयुक्तं वदंति दानं भृगुनंदनाय ॥ ६ ॥ माषाश्च तैलं विमलेंद्रनीलस्तिलाः कुलित्था महिषी च लोहं । कृष्णा च धेनुः प्रवदंति नूनं दुष्टाय दानं रविनंदनाय ॥ ७ ॥ गोमेदरत्नं च तुरंगमश्च सुनीलचैलामलकंबलोऽजः । तिलाश्च तैलं खलु लो-हमिश्रं स्वर्भानवे दानमिदं वदंति ॥ ८ ॥ वैदूर्यरत्नं सतिलं च तैलं सुकंबलश्चापि मदो मृगस्य । शस्त्रं च केतोः परितोषहेतोश्छागश्च दानं कथितं मुनींद्रैः ॥ ९ ॥ एषां दानमंत्रा विधिश्च मत्कृते दानकमलाकरे ज्ञेयः । इति नवग्रहदानानि । " दा० क० ब्रह्मांडे । ग्र-हदानक्रमं वक्ष्ये सर्वसिद्धिकरं परं । सर्वशांतिकरं नृणां सर्वपापप्रणाशनं ॥ तथा । हस्तमात्रं द्विहस्तं वा त्रिहस्तं वाऽथ नारद । चतुरस्रां स-मां भूमिं गोमयेनोपलेपयेत् ॥ रेखाः प्राच्य उदीच्यस्तु चतस्रस्तु तथा समाः । नवकोष्ठेषु पद्मानि विन्यसेच्छ्वेततंडुलैः ॥ आदित्यश्चंद्रमा भौ-मो बुधो जीवः सितोऽर्कजः । राहुः केतुरिति प्रोक्ता ग्रहा लोकसुखावहाः ॥ एषां हिरण्यरूपाणि कारयित्वा यथाविधि । त्रिनिष्केणाथवा

कुर्याद्यथाशक्त्या पृथक्पृथक् ॥ रूपाणि मंत्रेषु वक्ष्यंते । तद्वर्णगंधपुष्पाद्यैरर्चयेत्स्वस्वमंत्रकैः । दानं शूद्रोऽथवा कुर्यात्स्त्री वा तत्र तु नारद ॥ भूलेपनादि यत्कार्यं सर्वं विप्रेण कारयेत् । स्नानकाले तु संप्राप्ते स्नात्वा कुशतिलोदकैः ॥ अर्चयित्वा स्वयं दद्यादहस्करमुखान् ग्रहान् । प्रत्येकमेकविप्राय स्ववर्णं मंत्रमीरयन् ॥ पद्मासनः पद्मकरो द्विबाहुः पद्मद्युतिः सप्ततुरंगवाहः । दिवाकरो लोकगुरुः किरीटी मयि प्रसादं विदधातु देवः ॥ १ ॥ श्वेतांबरः श्वेतविभूषणश्च श्वेतद्युतिर्दंडधरो द्विबाहुः । चंद्रोऽमृतात्मा वरदः किरीटी श्रेयांसि मह्यं प्रददातु देवः ॥ २ ॥ रक्तांबरो रक्तवपुः किरीटी चतुर्भुजो मेषगमो गदाभृत् । धरासुतः शक्तिधरश्च शूली सदा मम स्याद्वरदः प्रशांतः ॥ ३ ॥ पीतांबरः पीतवपुः किरीटी चतुर्भुजो दंडधरश्च हारी । चर्मासिधृक् सोमसुतः सदा मे सिंहाधिरूढो वरदो बुधोऽस्तु ॥ ४ ॥ पीताबरः पीतवपुः किरीटी चतुर्भुजो देवगुरुः प्रशांतः । दधाति दंडं च कमंडलुं च तथाऽक्षसूत्रं वरदोऽस्तु मह्यं ॥ ५ ॥ श्वेतांबरः श्वेतवपुः किरीटी चतुर्भुजो दैत्यगुरुः प्रशांतः । तथाऽक्षसूत्रं च कमंडलुं च दंडं च बिभ्रद्वरदोऽस्तु मह्यं ॥ ६ ॥ नीलद्युतिः शूलधरः किरीटी गृध्रस्थितस्त्रासकरो धनुष्मान् । चतुर्भुजः सूर्यसुतः प्रशांतः स चास्तु मह्यं वरमंदगामी ॥ ७ ॥ नीलांबरो नीलवपुः किरीटी करालवक्त्रः करवालशूली । चतुर्भुजश्चर्मधरश्च राहुः सिंहासनस्थो वरदोऽस्तु मह्यं ॥ ८ ॥ धूम्रो द्विबाहुर्वरदो गदाभृद् गृध्रासनस्थो विकृताननश्च । किरीटकेयूरविभूषितांगः सदाऽस्तु मे केतुगणः प्रशांतः ॥ ९ ॥ इत्युक्त्वा दापयेत्सर्वानादित्यादीन्नवग्रहान् । पुरुषो वाऽथ नारी वा यथोक्तं फलमाप्नुयात् ॥ मध्यमं गुरवे दद्यादन्यस्मै वा प्रदापयेत् । अथवा दक्षिणा देया सुवर्णं वाससी शुभे ॥ इति ग्रहदानविधिः ॥ ”

अथ रत्नधारणं । तत्रैव । माणिक्यं तरणेः सुजातममलं मुक्ताफलं शीतगोर्माहेयस्य च विद्रुमं मरकतं सौम्यस्य गारुत्मतं । देवेज्यस्य च

पुष्परागमसुरामात्यस्य वज्रं शनेर्नीलं निर्मलमन्ययोश्च गदिते गोमेदवैदूर्यके ॥ ( महामूल्यरत्नधारणाऽशक्तौ । धार्यं तुष्टयै विद्रुमं भौमभा-
न्वो रूप्यं शुक्रेंद्वोश्च हेमेंदुजस्य । मुक्ता सूरेर्लोहमर्कात्मजस्य लाजावर्तः कीर्तितः शेषयोश्चेति श्रीपत्युक्तं धार्यं । केचित्तु औषधिमूलानि
धार्याणीत्याहुः । तानि तु । मूलं धार्यं त्रिशूल्याः सवितरि विगुणे क्षीरिकामूलमिंदौ जिह्वाऽहेर्भूमिपुत्रे रजनिकरसुते वृद्धदारोश्च मूलं ।
भार्ङ्गी जीवेऽथ शुक्रे भवति शुभकरं सिंहपुच्छस्य मूलं विच्छोलं चाऽर्कपुत्रे तमसि मलयजं केतुदोषेऽश्वगंधं ॥ त्रिशूली विल्वः ।
क्षीरिका क्षीरिणी । अहिजिह्वा मनःशिला । वृद्धदारुर्विधारः । भार्ङ्गी प्रसिद्धा । सिंहपुच्छं वाघोटं । मलयजं चंदनं । अश्वगंधं प्रसिद्धं )

॥ अथ ग्रहस्नानानि । विष्णुधर्मोत्तरे । मंजिष्ठा मदमातंगं कुंकुमं रक्तचंदनं । पूर्णकुंभे कृतं ताम्रे सूर्यस्नानं विधीयते ॥
मदमातंगं गजमदः । उशीरं च शिरीषं च कुंकुमं रक्तचंदनं । शंखन्यस्तमिदं स्नानं चंद्रदोषविनाशनं ॥ खदिरं देवदारुं
च तिलानामलकानि च । पूर्णकुंभे कृतं रौप्ये भौमपीडाविनाशनं ॥ नदीसंगमतोयानि तन्मृदा सहितानि च । न्यस्तानि कुंभे
माहेये बुधपीडाविनाशनं ॥ माहेये मृन्मये । औदुंबरं तथा बिल्वं वटमामलकं तथा । न्यस्तं तु कुंभे सौवर्णे जीवपीडा-
विनाशनं ॥ गोरोचना नागमदः शतपुष्पा शतावरी । विन्यस्ता राजते कुंभे शुक्रपीडाविनाशनं ॥ तिलान्माषान्प्रियंगुं च
गंधपुष्पं तथैव च । न्यस्तं कार्ष्णायसे कुंभे सौरिपीडाविनाशनं ॥ गुग्गुलुं हिंगुलं तालं शुभां चैव मनःशिलां । शृंगे च माहिषे न्यस्ये-
द्राहुपीडाविनाशनं ॥ तालं हरितालं । वराहविहतां राजन्पर्वताग्रमृदं तथा । छागीक्षीरं खड्गपात्रे केतुपीडाविनाशनं ॥ ग्रहस्नानमिदं प्रोक्तं
सर्वपीडाविनाशनं । इति ग्रहस्नानानि ॥

॥ अथ स्कांदे गुरुपूजा । मदनरत्ने पिप्पलाद उवाच । गुरुपूजां प्रवक्ष्यामि यथोक्तां ब्रह्मणा

पुरा । लोकानामुपकाराय सर्वोपद्रवशांतये ॥ कन्याविवाहकाले तु गुरोः शुद्धिर्न विद्यते । ब्राह्मणस्योपनयने यस्य स्याद्दुःस्थितो गुरुः ॥ (दुःस्थितः अष्टमादिस्थानास्थितः ) एभिः पूजा गुरोः कार्या विधिवद्भक्तिभावितैः । मदंतीकामपुष्पाणि पत्रं पालाशसर्षपाः ॥ मदंती यूथिका । कामो दमनं । गुडूची चाप्यपामार्गं विडंगं शंखिनी वचा । सहदेवी विष्णुक्रांता सर्वौषध्यः शतावरी ॥ कुष्ठं मांसी हरिद्रे द्वे मुरा शैलेयचंदनं । वचा कचोरमुस्तं च सर्वौषध्यः प्रकीर्तिताः ॥ तथैवाऽश्वत्थभृंगाश्च पंचगव्यं जलं तथा । नूतनं सोदकुंभं च पीतवस्त्रसमन्वितं ॥ पंचरत्नैः समायुक्तमैशान्यां स्थापितेऽनलात् । याओषधीरितिमंत्रेण सर्वास्त्वस्मिन्विनिक्षिपेत् ॥ कुंभस्योपरिभागे तु स्थापयित्वा बृहस्पतिं । सुवर्णपात्रे सौवर्णीं प्रतिमां तु युधिष्ठिर ॥ कारयेत्तु यथाशक्त्या वित्तशाठ्यविवर्जितः । पीतवस्त्रयुगच्छन्नं पीतयज्ञोपवीतिनं ॥ पूजयेद्गंधपुष्पाद्यैस्ततो होमं समाचरेत् । समिधोऽश्वत्थवृक्षस्य हुनेदष्टोत्तरं शतं ॥ तिलव्रीहियवं मिश्रं होतव्यं च यथाक्रमं । “ सं० कौ० अनेन ग्रहमखदृष्टस्य समिद्धोमानंतरभाविनश्चर्वाज्यहोमस्यानंतरमागंतुरयं होमः कार्य इति ज्ञाप्यते ” बृहस्पतेतिमंत्रेण ऋषिच्छंदःसमन्वितं ॥ मंत्रेणानेन जुहुयाद्धान्यपूर्वं च यत्नतः । ततो होमावसाने तु पूजयेच्च बृहस्पतिं ॥ पीतगंधैस्तथापुष्पैर्धूपैर्दीपैश्च भक्तितः । दध्योदनं च नैवेद्यं फलतांबूलसंयुतं ॥ मंत्रेणानेन कौंतेय समभ्यर्च्य पुनःपुनः । नमस्तेऽगिरसां नाथ वाक्पतेऽथ बृहस्पते । क्रूरग्रहैः पीडितानाममृताय नमो नमः ॥ पूजयित्वा सुराचार्यं पश्चादर्घ्यं निवेदयेत् । तत्र मंत्रः । गंभीरदृढरूपांग देवेज्य सुमते प्रभो । नमस्ते वाक्पते शांत गृहाणार्घ्यं बृहस्पते ॥ अर्घ्यं दत्वा सुरेशस्य जपहोमं समापयेत् ॥ भक्त्या यत्ते सुराचार्य होमपूजादि सत्कृतं । तत्त्वं गृहाण शांत्यर्थं बृहस्पते नमो नमः ॥ मंत्रेणानेन संकल्प्य पश्चात्संप्रार्थयेन्नृप । जीवो बृहस्पतिः सूरिराचार्यो गुरुरंगिराः । वाचस्पतिर्देवमंत्री शुभं कुर्यात्सदा मम ॥ एवं संप्रार्थयेद्देवमाचा-

र्यं च प्रपूजयेत् । सर्वोपस्करसंयुक्तां प्रतिमां तां युधिष्ठिर ॥ प्रणम्य च गवा युक्तामाचार्याय निवेदयेत् । अथाचार्यस्तु नियतो वेदवेदांगपारगः ॥ यजमानं सपत्नीकं शांतचित्तं जितेंद्रियं । कुंभोदकं गृहीत्वा तु मंत्रैरेतैः प्रसिंचयेत् ॥ इदमापोऽथ मंत्रेण तामग्नीतिऋचा तथा । याओषधीरश्वावतीः कूष्मांडैश्चाभिषेचयेत् ॥ पश्चात्संभोजयेद्विप्रान् यथाशक्त्या युधिष्ठिर । एवं कृत्वा गुरोः पूजां सर्वान्कामानवाप्नुयात् ॥ संक्रांतौ गुरुसंक्रांतौ । “ सं॰ कौ॰ शौनकः । कन्यकोद्वाहकाले तु आनुकूल्यं न विद्यते । ब्राह्मणस्योपनयने गुरोर्विधिरुदाहृतः ॥ सुवर्णेन गुरुं कृत्वा पीतवस्त्रेण वेष्टयेत् । ऐशान्यां धवलं कुंभं धान्योपरि निधाय च ॥ दमनं मधुपुष्पाणि पत्रपालाशसर्षपान् । मांसीगुडूच्यपामार्गविडंगं शंखिनीं वचां ॥ सहदेवीविष्णुक्रांतासर्वौषधिशतावरीः । कुंभे निक्षिपेदिति शेषः । कृत्वाज्यभागपर्यंतं स्वशाखोक्तविधानतः ॥ ग्रहोक्तमंडलेऽभ्यर्च्य पीतपुष्पाक्षतादिभिः । देवपूजोत्तरे काले ततः कुंभानुमंत्रणं ॥ अश्वत्थसमिधश्चाज्यं पायसं सर्पिषा युतं । यवव्रीहितिलाः साज्या मंत्रेणैव बृहस्पतेः ॥ अष्टोत्तरशतं सर्वं होमशेषं समापयेत् । पुत्रदारसमेतस्य अभिषेकं समाचरेत् ॥ कुंभाभिमंत्रणोक्तैश्च समुद्रज्येष्ठामंत्रतः । प्रतिमां कुंभवस्त्रं च आचार्याय निवेदयेत् ॥ ब्राह्मणान्भोजयेत्पश्चाच्छुभदः स्यान्न संशयः । अत्र च शौनकोक्तौ स्कांदोक्तौ च शाखाभेदेन द्वादशकपालैकादशकपालादिभेदस्येव यूथिकासदसत्त्वादिप्रयुक्तषड्वैलक्षण्यस्यापि कर्मभेदकत्वाऽसंभवादुभयगतगुणोपसंहारेण कुंभानुमंत्रणादिसाधारणधर्माणां दीर्घचतुरस्राद्यसाधारणधर्माणां विनियोगवशेनापेक्षितानां ग्रहमखात्स्वीकारेण तावद्भिरेव ग्रहमेधीयवन्नैराकांक्ष्यसंभवेनाऽवियुक्ततत्त्वत्यधर्मानादरेण प्रयोगं वदामः । इति बृहस्पतिशांतिः ॥ ॥अथ प्रयोगः । कर्ता देशकालौ स्मृत्व अस्यकुमारस्योपनयनकाले बृहस्पत्यानुकूल्यसिद्धिद्वारा श्री॰ बृहस्पतिशांतिं करिष्ये इति संकल्प्य ( कन्याविवाहे तु अस्याः कन्यायाः वि

वाहकाले इत्यूहः ) गणेशपूजनाद्याचार्यऋत्विग्वरणांतं कुर्यात् । आचार्यः प्रादेशांते स्थंडिलादैशान्यां महीद्यौरित्यादिविधिना स्थापिते धवलकुंभे जलपूरणगंधादिक्षेपांते गायत्र्यादिमंत्रैः पंचगव्यं देवस्यत्वा० मभिषिंचामीति कुशोदकं याओषधीरिति यूथिकादमनमधुपुष्पाणि पत्रं (पत्तजमिति प्रसिद्धं) पलाशसर्षपजटामांसीगुडूच्यपामार्गविडंगशंखिनीवचासहदेवीविष्णुक्रांताशतावरीः सर्वौषधीश्च निक्षिप्य पीतवस्त्रेणावेष्टय पूर्णपात्रेऽष्टदलं विलिख्य तत्रोत्तरदले हरिताक्षतनिर्मितदीर्घचतुरस्रपीठे उक्तलक्षणसौवर्णप्रतिमायां बृहस्पते गृत्स० इति बृहस्पतिमावाहयेत् । ततः स्थंडिलेऽग्निं प्रतिष्ठाप्यान्वादध्यात् । चक्षुषीआज्येनेत्यंते बृहस्पतिं प्रधानदेवं अश्वत्थसमिदाज्यघृताक्तपायसैः घृताक्तसंमिश्रयवव्रीहितिलैश्च प्रतिद्रव्यमष्टोत्तरशतसंख्याभिराहुतिभिः शेषेणेत्याद्याज्यभागहोमांते बृहस्पतिं षोडशोपचारैः पूजयेत् । तत्र विशेषाः । पीतवर्णानि वस्त्रयुगोपवीतचंदनाक्षतचंपकादिपुष्पाणि बिल्वमज्जाधूपः घृतदीपः दध्योदनं नैवेद्यं पुष्परागमाणिक्यहेम्नामन्यतमं दक्षिणा । पूजांते कुंभमभिमंत्रयेत । तत्र मंत्राः। आपोहिष्ठेतितिसृणां० । मोषुवरुणेतिपंचानां वसिष्ठो वरुणो गायत्र्यंत्या जगती । स्वादिष्ठयेतितिसृणां मधुच्छंदाः० । कुंभानुमंत्रणे० । ततो यजमानेन त्यागे कृते यथान्वाधानमुक्तद्रव्यैर्बृहस्पतिमंत्रेण होमं कृत्वा स्विष्टकृदादिहोमशेषं समापयेत् । ततो यजमानः पूर्वोक्तैर्गंधाद्युपचारैर्बृहस्पतिं संपूज्य नमस्कृत्य ताम्रपात्रे शुद्धोदकं पीतवर्णानि गंधाक्षतपुष्पाणि फलं हिरण्यं चादाय गंभीरदृढरूपांग देवेज्यसुमतेप्रभो । नमस्तेवाक्पतेशांत गृहाणार्घ्यंबृहस्पते । इत्यर्घ्यं दत्वा । भक्त्यायत्तेसुराचार्य होमपूजादिसत्कृतं । तत्त्वंगृहाणशांत्यर्थं बृहस्पतेनमोनमः इति कृतं कर्म तस्मै निवेद्य । जीवोबृहस्पतिःसूरिराचार्योगुरुरंगिराः । वाचस्पतिर्देवमंत्रीशुभंकुर्यात्सदाममेति प्रार्थ्य आचार्यं संपूज्य गोयुक्तां सोपस्करां विसर्जितबृहस्पतिप्रतिमां दक्षिणात्वेन तस्मै दत्वा ऋत्विग्भ्यो यथाशक्तिदक्षिणां दद्यात् । तत

आचार्यः कलशोदकेन सपत्नीकं सापत्यं यजमानं मंत्रैरभिषिंचेत् । तेच । आपोहिष्ठेतितिसृणां० । मोषुवरुणेति पंचाना० । स्वादिष्ठयेति तिसृणां० । समुद्रज्येष्ठाइतिचतसृणां० । इदमापः सिंधु० । तामग्निवर्णा सोभरि० । याओषधीभिंषगोधयोऽनुष्टुप् । अश्वावतीर्गोमतीर्वसिष्ठ उषसस्त्रिष्टुप् । अभिषेके० । ततो यद्देवादेवहेडनंयददीव्यमायुष्टेविश्वतोदधदित्यापस्तंबशाखीयैरनुवाकैस्तच्छंयोरिति सुरास्त्वामित्यादिभिश्चा-भिषिक्तो यजमानोऽग्निं संपूज्य विभूतिं धृत्वा यथाशक्तिविप्रान्संभोज्य भूयसीं दत्वाशिषो गृहीत्वा कर्म समापयेत् । इति कौस्तुभानुसारी बृहस्पति-शांतिप्रयोगः ॥ ॥ अथ प्रतिशुक्रादिविधिः । वृद्धवसिष्ठः । शुक्रे चाऽस्तंगते यात्रा जीवे वाऽस्तमुपागते । तयोर्बाल्ये च वार्ध्ये च सा यात्रा भयरोग-दा ॥ प्रतिशुक्रं प्रतिबुधं प्रतिभौमं च गर्हिता । तीर्थयात्राविधौ तेषां प्रतिशुक्रो न विद्यते ॥ कश्यपेषु वसिष्ठेषु भृगुष्वांगिरसेषु च । भरद्वाजेषु वत्सेषु प्रतिशुक्रो न विद्यते ॥ अन्येषां संमुखे दोषः प्रतिशुक्रस्य सर्वदा । कृत्वा शांतिं प्रयत्नेन पश्चात्सर्वं समाचरेत् ॥ उपोष्य भृगुवारे च यावच्छुक्रोदयं व्रती । रजतेन च शुद्धेन कारयेत्प्रतिमां भृगोः ॥ लिखेदष्टदलं पद्मं कांस्यपात्रे च तंडुलैः । शुक्लपुष्पाक्षतैर्गंधैः प्रतिमां तत्र पूजयेत् ॥ उपचारान्निवेद्याथ शुक्रंतेअन्यदित्यृचा । तन्मंत्रेण जपं कुर्यात्सम्यगष्टोत्तरं शतं ॥ क्षीरगंधाक्षतैः पुष्पैर्भक्त्या चार्घ्यं प्रदापयेत् । दैत्यमंत्री दिव्यदर्शी चोशना भार्गवः कविः ॥ श्वेतोऽथ मंडली काव्यो विधिस्थो भृगवे नमः । दत्वेत्यर्घ्यं प्रयत्नेन प्रार्थयेच्चैव भक्तितः ॥ त्वत्पूजयाऽनया शुक्र संमुखत्वसमुद्भवं । दोषं विनाशय क्षिप्रं रक्ष मां तेजसां निधे ॥ दैवज्ञाय ततो दद्यात्प्रतिमां श्वेतगोयुतां । एवं कृते न दोषः स्याद्द्विजयी चार्थवान्भवेत् ॥ मात्स्येऽपि विशेष उक्तः । अथातः श्रृणु भूपाल प्रतिशुक्रप्रशांतये । यात्रारंभेऽवसाने च तथा शुक्रोदये सति ॥ शुक्रपूजा प्रकर्तव्या ता निशामय भारत । राजते वाऽथ सौवर्णे कांस्यपात्रेऽथवा पुनः ॥ शुक्लपुष्पांबरयुते श्वेततंडुलपू-

रिते। निधाय राजतं शुक्रं शुचि [ भुवि ] मुक्ताफलान्वितं ॥ महाश्वेतगवा युक्तं सामगाय निवेदयेत्। सह तेन सवत्सां गामिति क्वचि-
त्पाठः। नमस्ते सर्वलोकेश नमस्ते भृगुनंदन। कवे सर्वार्थसिद्ध्यर्थं गृहाणार्घ्यं नमोस्तु ते ॥ दत्वैवमर्घ्यं कौंतेय प्रणिपत्य विसर्जयेत्। याव-
च्छुक्रस्य न कृता पूजा सोहलकैः शुभैः ॥ वटकैः पोलिकाभिश्च गोधूमैश्चणकैरपि। तावत्फलं कथं लभ्यं नृभिः कामार्थसिद्धये ॥ एवं
शुक्रोदये कुर्वन् यात्रादिषु च भारत। अर्वाग्राश्यागमे चैव अभीष्टं स तदाप्नुयात् ॥ तद्वद्वाचस्पतेः पूजां प्रवक्ष्यामि युधिष्ठिर। सौवर्णपात्रे
सौवर्णममरेशपुरोहितं ॥ पीतपुष्पांबरधरं कृत्वा स्नात्वाऽथ सर्षपैः। पलाशाश्वत्थभंगेन पंचगव्यतिलेन तु ॥ भंगः पल्लवः। पीतांगरागव-
सनो घृतहोमं तु कारयेत्। प्रणम्य च गवा सार्धं ब्राह्मणाय निवेदयेत् ॥ नमस्तेंऽगिरसां नाथ वाक्पते तु बृहस्पते। क्रूर-
ग्रहैः पीडितानाममृताय नमो नमः ॥ इत्यर्घ्यमंत्रः। संक्रांतावपि कौंतेय यात्रास्वभ्युदयेषु च। कुर्वन् बृहस्पतेः पूजां
सर्वान्कामान्समश्नुते ॥ संक्रांतौ गुरोः। अथवा मौक्तिकान्येव सुवृत्तानि बृहंति च। भार्गवांगिरसौ चिंत्य तान्येव प्रतिपादयेत् ॥
भक्त्या मौक्तिकदानेन दत्तेन कुरुनंदन। कुरूपता दृशोः पुंसां न कदाचित्प्रजायते ॥ ये भार्गवोदयमवाप्य सवस्त्रपुष्पं कुर्वंत्यनन्यमनसों-
ऽगिरसश्च पूजां। तेषां गृहं प्रवसतां प्रतिशुक्रजातो विघ्नो न संभवति भारत पुण्यभाजां ॥ इति प्रतिशुक्रादिविधिः ॥ ॥ अथ शनि-
शांतयः। मदनरत्ने भविष्ये। ततो मंदस्य दिवसे स्नानमभ्यंगपूर्वकं। कार्यं देयं च विप्राय तैलमभ्यंगहेतवे ॥ यस्तु संवत्सरं यावत्प्रा-
प्ते शनिदिने नरः। तैलं ददाति विप्रेभ्यः स्वशक्त्याऽभ्यंजनेऽपि वा ॥ ततः संवत्सरस्यांते प्राप्ते तस्य दिने पुनः। लौहं घटार्पितं
सौरिं तैलकुंभे विनिक्षिपेत् ॥ लौहे वा मृन्मये वाऽथ कृष्णवस्त्रयुगान्वितं। कृष्णगोदक्षिणायुक्तं कृष्णकंबलशायिनं ॥ स्वयमभ्यंगतः स्नात्वा

कृष्णपुष्पैस्तमर्चयेत् । सुगंधिगंधपुष्पैश्च कृसरान्नैस्तिलौदनैः ॥ पूजयित्वा सूर्यपुत्रं क्षमस्वेति पुनःपुनः । कृष्णाय द्विजमुख्याय तदभावेतराय वा ॥ ( इतरायेति छेदः आर्षं चैतत् ) देयः शनैश्चरो भक्त्या मंत्रेणानेन वै द्विज । क्रूरावलोकनवशाद्भवनं नाप्नोति यो ग्रहो रुष्टः । तुष्टो धनकनकसुखं ददाति सोऽस्मान्छनैश्चरः पातु ॥ यः पुनर्नष्टराज्याय नराय परितोषितः । स्वप्ने ददौ निजं राज्यं स मे सौरिः प्रसीदतु ॥ कोणं नीलांजनप्रख्यं मंदचेष्टाप्रसारिणं । छायामार्तंडसंभूतं नमस्यामि शनैश्चरं ॥ नमोऽर्कपुत्राय शनैश्चराय नीहारवर्णांजनमेचकाय । श्रुत्वा रहस्यं भव कामदस्त्वं फलप्रदो मे भव सूर्यपुत्र ॥ नमोऽस्तु प्रेतराजाय कृशदेहाय वै नमः । शनैश्चराय क्रूराय शुद्धबुद्धिप्रदायिने ॥ य एभिर्नामभिः स्तौति तस्य तुष्टिं ददात्यसौ । तदीयं तु भयं तस्य स्वप्नेऽपि न भविष्यति ॥ इत्यनेन विधानेन शनिं नत्वा विसर्जयेत् । एवमेतद्व्रतं नित्यं ये चरिष्यंति मानवाः ॥ वासरे वासरे प्राप्ते वत्सरं यावदेव तु । तेषां शानैश्वरी पीडा क्लेशोपि न भविष्यति ॥ कृष्णायसेन घटितां यमराजमूर्तिं लोहे निधाय घटके तिलतैलपूर्णे । यो ब्राह्मणाय रविजं प्रददाति भक्त्या पीडा शनैश्चरकृता नहि बाधते तं ॥ स्कांदे । स्कंद उवाच । द्वादशाष्टमजन्मस्थे शनौ सर्वग्रहेश्वरे । किं कर्तव्यं नरैः शांतिविधानं क्लेशशांतये ॥ ईश्वर उवाच । श्रावणे मासि संप्राप्ते शोभने शनिवासरे । लोहरूपं शनिं कृत्वा स्नाप्य पंचामृतेन वै ॥ पुष्पैरष्टविधैर्धूपैः फलैश्चैव विशेषतः । नामभिः पूजयेदेतैः क्रमेण ग्रहसत्तमं ॥ कोणस्थः पिंगलो बभ्रुः कृष्णो रौद्रो यमोऽतकः । सौरिः शनैश्चरो मंदः पिप्पलादेन संस्तुतः ॥ शंनोदेवीति सर्वत्र वैदिकेन च पूजयेत् । पूजयित्वा तु नैवेद्यं ततः कुर्यात्क्रमेण तु ॥ समाषभक्तं प्रथमे द्वितीये पायसं शुभं । तृतीये त्वंबिली कार्या चतुर्थे पूरिकाः शुभाः ॥ अंबिली तक्रतंडुलपिष्टकृता यवागूः । (आंबिल इति भाषायां) प्रथमादिशब्दा वासरपराः । स्कांदे नागरखंडे । नारद उवाच ।

ग्रहा गावो नरेंद्राश्च ब्राह्मणाश्च विशेषतः । पूजिताः पूजयंत्येते निर्दहंत्यवमानिताः ॥ तस्मात्कुरु स्तुतिं चाऽस्य स्वभक्त्या भास्करेः प्रभोः । प्रसादं गच्छते येन कोपं त्यजति पातकं ॥ ततः कृतांजलिर्भूत्वा स्तुतिं चक्रे स बालकः । पिप्पलादो द्विजश्रेष्ठः प्रणिपत्य मुहुर्मुहुः ॥ नमस्ते कोणसंस्थाय पिंगलाय नमोस्तु ते । नमस्ते बभ्रुरूपाय कृष्णाय च नमोस्तु ते॥नमस्ते रौद्रदेहाय नमस्ते चांतकाय च । नमस्ते यमसंज्ञाय नमस्ते सौरये विभो ॥ नमस्ते मंदसंज्ञाय शनैश्वर नमोस्तु ते । प्रसादं कुरु देवेश दीनस्य प्रणतस्य च ॥ शनैश्वर उवाच । परितुष्टोऽस्मि ते वत्स स्तोत्रेणाऽनेन सांप्रतं । वरं वरय भो वत्स येन यच्छामि वांछितं ॥ पिप्पलाद उवाच । अद्यप्रभृति नो पीडा बालानां रविनंदन । त्वया कार्या महाभाग न स्वकीया कथंचन ॥ यावद्वर्षाष्टकं जातं मम वाक्येन सूर्यज । स्तोत्रेणानेन योऽन्यस्त्वां स्तूयात्प्रातरुपस्थितः ॥ तस्य पीडा न कर्तव्या त्वया भास्करनंदन । तस्य पीडा न कर्तव्या देयो लाभो महाभुज ॥ अर्धाष्टमिकया योगे तावके संस्थितो नरः । सार्धसप्तवर्षाण्यर्धाष्टमिका । (साडेसाती इति भाषायां) तव वारे तु संप्राप्ते यस्तिलाँल्लोहसंयुतान् । शक्त्या ददाति नो तस्य पीडा कार्या त्वया विभो॥ कृष्णां गां यस्तु विप्राय तवोद्देशेन यच्छति । अर्धाष्टमिकया पीडा तस्य कार्या त्वया नच ॥ शमीसमिद्भिर्यो होमं तवोद्देशेन निर्वपेत् । तथा कृष्णतिलैश्चैव कृष्णपुष्पानुलेपनैः ॥ पूजां करोति यस्तुभ्यं धूपं वै गुग्गुलुं दहेत् । कृष्णवस्त्रेण संवेष्ट्य त्याज्या तस्य त्वया व्यथा ॥ सूत उवाच । एवमुक्तः शनिस्तेन बाढमित्येव जल्प्य च । नारदं समनुज्ञाय जगाम निजसंश्रयं ॥ मदनरत्ने प्रभासखंडे । यः पुनः श्रद्धया युक्तः शुचिः स्नातः समाहितः । शमीपत्रैः समभ्यर्च्य प्रतिमां लोहजां मम ॥ माषौदनं तिलैर्मिश्रं दद्याल्लोहं च दक्षिणां । कृष्णां गां वृषभं वाऽपि यो मे दद्याद्द्विजाय वै ॥ तस्य पीडां न चैवाहं करिष्यामि कदाचन । इति शनैश्वरशांतिः ॥ ॥ अथ राहुशांतिः । ज्योतिषे । जन्मांत्यपंच-

चतुरष्टनवद्विसप्त राहुग्रहो यदि च चारवशेन गच्छेत् । आलोडनं नृपभयं क्षयमर्थनाशं रोगं प्रवासमरणाग्निभयं करोति ॥ इति राहुशांतिः॥
॥ अथ ग्रहणशांतिः। मात्स्ये। होरायां ग्रस्यते यस्य नक्षत्रे वा निशाकरः। प्राणसंदेहमाप्नोति स वा मरणमृच्छति ॥ यस्य त्रिजन्मनक्षत्रे ग्रस्येते शशिभास्करौ। तज्जनानां भवेत्पीडा ये जनाः शांतिवर्जिताः ॥ यस्य राशिं समासाद्य भवेद् ग्रहणसंभवः। तस्य स्नानं प्रवक्ष्यामि मंत्रौषधिसमन्वितं ॥ चंद्रोपरागं संप्राप्य कृत्वा ब्राह्मणवाचनं। संपूज्य चतुरो विप्रान् शुक्लमाल्यानुलेपनैः ॥ पूर्वमेवोपरागस्य समानीयौषधादिकं। स्थापयेच्चतुरः कुंभानग्रतः सागरानिव ॥ गजाश्वरथ्यावल्मीकसंगमाह्रदगोकुलात् । राजद्वारप्रदेशाच्च मृदमानीय निक्षिपेत् ॥ पंचगव्यं पंचरत्नं पंचत्वक्पंचपल्लवं। रोचनं पद्मकं शंखं कुंकुमं रक्तचंदनं ॥ शुक्तिस्फटिकतीर्थांबुसितसर्षपगुग्गुलून् । मधूकं देवदारुं च विष्णुक्रांतां शतावरीं॥ बलां च सहदेवीं च निशाद्वितयमेव च। एतत्सर्वं विनिक्षिप्य कुंभेष्वावाहयेत्सुरान् ॥ सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः। आयांतु यजमानस्य दुरितक्षयकारकाः ॥ गंगे च यमुने चैवेति । योऽसौ वज्रधरो देव आदित्यानां प्रभुर्मतः । सहस्रनयनश्चेंद्रो ग्रहपीडां व्यपोहतु ॥ मुखं यः सर्वदेवानां सप्तार्चिरमितद्युतिः । चंद्रोपरागसंभूतामग्निः पीडां० ॥ कर्मसाक्षी तु लोकानां धर्मो महिषवाहनः । यमश्चंद्रोपरागोत्थां ग्रहपीडां० ॥ रक्षोगणाधिपः साक्षान्नीलांजनसमप्रभः । खड्गहस्तोऽतिभीमश्च ग्रह० ॥ नागपाशधरो देवः सदा मकरवाहनः । चंद्रोपरागकलुषं वरुणो मे व्यपोहतु ॥ प्राणरूपो हि लोकानां सदा कृष्णमृगप्रियः । वायुश्चंद्रोपरागोत्थां ग्रह० ॥ योऽसौ निधिपतिर्देवः खड्गशूलगदाधरः । चंद्रोपरागदुरितं धनदो मे व्यपोहतु ॥ योऽसाविंदुधरो देवः पिनाकी वृषवाहनः । चंद्रोपरागपापानि निवारयतु शंकरः ॥ त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च। ब्रह्मविष्ण्वर्करुद्राश्च दहंतु मम पातकं ॥ एवमावाहयेत्कुंभान्मंत्रैरेभिश्च वारुणैः । एतानेव तथा

मंत्रान्स्वर्णपट्टे विलेखयेत् ॥ ताम्रपट्टेऽथवाऽऽलिख्य नववस्त्रे तथैव च। मस्तके यजमानस्य निदध्युस्ते द्विजोत्तमाः ॥ कलशान्द्रव्यसंयुक्तान्नानारूपसमन्वितान्। गृहीत्वा स्थापयेद्गूढं भद्रपीठोपरि स्थिते ॥ पूर्वोक्तैरेव मंत्रैश्च यजमाने द्विजोत्तमाः। अभिषेकं ततः कुर्युर्मंत्रैर्वारुणसूक्तकैः ॥ ततः शुक्लांबरधरः शुक्लमाल्यानुलेपनः। आचार्यं वरयेत्पश्चात्स्वर्णपट्टं निवेदयेत् ॥ आचार्ये दक्षिणां दद्याद्गोदानं च स्वशक्तितः। होमं चैव प्रकुर्वीत तिलैर्व्याहृतिभिस्तथा ॥ निवृत्ते ग्रहणे सर्वं ब्राह्मणेभ्यो विशेषतः। दानं च शक्तितो दद्याद्यदीच्छेदात्मनो हितं ॥ सूर्यग्रहे सूर्यनामयुक्तान्मंत्रांश्च कीर्तयेत्। अनेन विधिना यस्तु ग्रहणे स्नानमाचरेत्। न तस्य ग्रहणे दोषः कदाचिदपि जायते ॥ मदनरत्ने ग्रंथांतरे। दूर्वांकुरोशीरशमीशिलाजित्सर्वार्थसर्वौषधिपंचमृद्भिः। स्नानं विदध्याद्ग्रहणे रवींद्वोः पीडाकरं शांतिवहं हि यस्य ॥ ज्योतिषे। त्रिषड्दशायोपगतं नराणां शुभप्रदं स्याद्ग्रहणं रवींद्वोः। द्विसप्तनंदेषुषु मध्यमं स्याच्छेषेष्वनिष्टं कथितं मुनींद्रैः ॥ आय एकादश। नंदा नव। इषवः पंच। मदनरत्ने गर्गः। जन्मसप्ताष्टरिःफांकदशमस्थे निशाकरे। दृष्टोऽरिष्टप्रदो राहुर्जन्मर्क्षे निधनेऽपि च ॥ रिःफं द्वादश। अंकाः नव। निधनं सप्तमतारा। पृथ्वीचंद्रोदये विष्णुधर्मे। यन्नक्षत्रगतो राहुर्ग्रसते शशिभास्करौ। तज्जातानां भवेत्पीडा ये नराः शांतिवर्जिताः॥ तत्रैव पुराणांतरे। सूर्यस्य संक्रमो वाऽपि ग्रहणं चंद्रसूर्ययोः। यस्य त्रिजन्मनक्षत्रे तस्य रोगोऽथवा मृतिः ॥ तस्य दानं च होमं च देवार्चनजपौ तथा। उपरागाभिषेकं च कुर्याच्छांतिर्भविष्यति ॥ स्वर्णेन वाऽथ पिष्टेन कृत्वा सर्पस्य चाकृतिं। ब्राह्मणाय ददेत्तस्य न रोगादिश्च तत्कृतः ॥ जन्मदशमैकोनविंशतितारा: त्रिजन्मानि। सर्पस्य तदाकारस्य राहोः। अद्भुतसागरे भार्गवः। यस्य राज्यस्य नक्षत्रे स्वर्भानुरुपरज्यते। राजभंगं सुहृन्नाशं मरणं चाऽत्र निर्दिशेत् ॥ राज्याभिषेकनक्षत्रे इत्यर्थः। भार्गवार्चनदीपिकायां ज्योतिः सागरे। सौवर्णं कारयेन्नागं

पलेनाऽथ पलार्धतः। तदर्धेन तदर्धेन फणायां मौक्तिकं न्यसेत् ॥ ताम्रपात्रे निधायाथ घृतपूर्णे विशेषतः। कांस्ये वा कांतिलोहे वा न्यस्य दद्यात्सदक्षिणं ॥ चंद्रग्रहे तु रूप्यस्य बिंबं दद्यात्सदक्षिणं। नागं रुक्ममयं सूर्यग्रहे बिंबं च हेमजं ॥ तुरंगरथगोभूमि [ गोधूम ] तिलसर्पिश्च कांचनं । कालविवेके। सुवर्णनिर्मितं नागं सतिलं कांस्यभाजनं । सदक्षिणं सवस्त्रं च ब्राह्मणाय निवेदयेत् ॥ सौवर्णं राजतं वाऽपि बिंबं कृत्वा स्वशक्तितः। उपरागभवक्लेशच्छिदे विप्राय कल्पयेत् ॥ मंत्रस्तु । तमोमय महाभीम सोमसूर्यविमर्दन। हेमताराप्रदानेन मम शांतिप्रदो भव ॥ विधुंतुद नमस्तुभ्यं सिंहिकानंदनाच्युत। दानेनानेन नागस्य रक्ष मां वेधजाद्भयादिति। विशेषस्तु मत्कृते निर्णयसिंधौ ज्ञेयः। अपर्वणि ग्रहणे त्वद्भुतसागरे मयूरचित्रे। अपर्वणि शशांकार्कौ त्विष्टो नाम महाग्रहः। आवृणोति तमःश्यामः सर्वलोकविपत्तये ॥ औदुंबरीसहस्राणि चाष्टौ च जुहुयाद्बुधः। मध्वक्तानि च तान्यन्नं जातवेदस इत्यृचा ॥ विप्राय दक्षिणां दद्याद्धेनुं च वृषभं तथा ॥ इति ग्रहणशांतिः ॥

॥ अथ केतुशांतिः । तत्फलमाह ज्योतिर्वसिष्ठः। केतोरुदयास्तमयं ज्ञातुं गणितान्न शक्यते यस्मात् । दिव्यांतरिक्षभौमास्तस्मात्त्रिविधाश्च केतवो जगति ॥ एकोत्तरशतभेदा दृश्यंते वा सहस्रभेदास्ते। औत्पातिकरूपत्वाद्भवंति बहवस्तथैको वा ॥ दिवि ऋक्षग्रहजास्ते दिव्याख्याः केतवो महाफलदाः । परिवेषेंद्रधनूल्कास्तथैव गंधर्वनगरनिर्घाताः ॥ गगनविकारजमेतन्मध्यमफलदं तथांतरिक्षं च । भूमिभवा भौमाः स्युश्चरस्थिरा वस्तुसंभवा ये च ॥ तेऽधमफलदास्तेषां कथयामि फलानि रूपाणि । वर्षैर्मासैः पक्षैः क्रमशः परिपाकमुपयांति ॥ स्निग्धः प्रसन्नरूपः शुक्लनिभो ह्रस्वदंडवत्सौम्यः। उदयास्तमये त्वेवं सुभिक्षसौख्यावहः केतुः ॥ धूमनिभो धूमाख्यः केतुर्दोषप्रदो भवति। इंद्रशरासनरूपः स्थूलनिभोऽवर्षभीतिदः सम्यक् ॥ बहुभिः शिखाभिरतुला विद्युन्मणिहारहेमनिभाः। अपरेंद्रदिशोर्द्-

श्या महाहवं तद्दिगीशानां ॥ शुकमुखबंधूकनिभा वह्निसुताः क्षतजसंनिभा रूक्षाः । दृश्यंतेऽनलदिशि यदि तावंतस्तेऽपि शिखिभयदाः ॥ मृत्युसुता वक्रशिखाः कृष्णा रूक्षाश्च प्रहरणाकाराः । दृश्यंते याम्यायां जनमारभयप्रदास्तेऽपि ॥ क्षितितनया द्वात्रिंशद्दर्पणसदृशाः सरश्मयो विशिखाः । क्षुद्भयदाः सशिरस्का यमतनया मृत्युदाश्च शैलनिभाः ॥ शशितनयाः कुसुमनिभाः कुंदेंदुक्षीररजतनिभाः । उत्तरभागे शिखिनो जंतूनां ते सुभिक्षकराः ॥ त्रिशिखस्त्रिवर्णयुक्तो ब्रह्मसुतो ब्रह्मदंडनिभः । अनियतदिक्प्रभवोऽसौ शांतिकरो ब्रह्मदंडाख्यः ॥ शनितनयास्तारास्थाः शुक्ला ऋजवश्च षट्संख्याः । दृश्यंते द्वित्रिदिनैः शुभदा मासैश्च रुग्भयदाः ॥ जीवसुता विकचाख्याः शुक्लास्ताराश्रिताः स्निग्धाः । याम्यायां दिशि संस्था बहवस्ते पापदाः सततं ॥ बुधतनयाश्चोराख्याः शुक्लाः सूक्ष्मा यथेष्टदिक्प्रभवाः । आमयभयदाः सततं जंतूनां पंचपंचाशत् ॥ कुजतनयाः कैंकेयाः क्षतजानलसंनिभास्त्रिशूलधराः । याम्यायां दिशि संस्थाः क्षुद्भयदाः षष्टिसंख्याकाः ॥ तामसकीलकसंज्ञा राहुसुताः सूर्यमंडले दृष्टाः । तेषां तन्निखिलफलं सम्यक्कथितं च सूर्यवारेऽपि ॥ अग्निसुतास्त्वाग्नेय्यां विंशत्यधिकाश्च शतसंख्याः । प्रलयानलसदृशाभा भान्वग्नितडिद्भयप्रदास्तेऽपि ॥ अरुणाख्याः श्यामनिभाः शुक्रसुता विविधरूपसंकीर्णाः । शस्त्रक्षुद्भयदास्ते सप्तोत्तरसप्ततिश्च संख्याताः ॥ दंडकसंज्ञाश्चाष्टौ तारासदृशाः प्रजापतेस्तनयाः । द्वाचत्वारिंशोत्तरशताधिकाः पापदा विधातृसुताः ॥ वरुणभवाः कंकाख्या द्वात्रिंशद्गुल्मयष्टिनिभाः । शशिवत्प्रभासमेता राजान्यत्वं प्रकुर्वंति ॥ कालभवाः षण्णवतिः संख्यातास्ते कबंधनिभाः । तन्नामानः शिखिनः पुंड्रामयभीतिदा जगतः ॥ विमलास्ताराकारा दशदिक्षु समुद्भवाः शिखिनः । एवं सहस्रभेदाः पापाश्चैषां विशेषमभिधास्ये ॥ पश्चिमदिशि संभूतश्चोत्तरनम्रश्च सौम्यकेतुः सः । कुरुते सुभिक्षमतुलं सितवर्णोऽसौ महास्निग्धः ॥ दक्षिणनम्रः प्राच्यां तथाविधो याम्यकेतुः सः । रूक्षः

क्षुद्भयकारी मरकभयं वा करोत्येव ॥ धूमनिभो याम्यायां कपालकेतुर्बृहत्तनुः स्निग्धः । दिक्षु विदिक्षु प्रभवः क्षुन्मरकाऽवृष्टिरोगकरः ॥ प्राच्यां दिशि संभूतः प्रदक्षिणं भ्रमति चक्रवद्रूक्षः । स च चक्रकेतुरनिशं कपालकेतोश्च तुल्यफलः ॥ पश्चिमतः संभूतो याम्यदिशि भ्रमति चाऽप्रदक्षिण्यं । धूमनिभो विषमाख्यः केतुर्भूभारमपनयति ॥ कतिपयदिवसं गत्वा गमननिवृत्तिं करोति धूमनिभः । नरपतिकलहाज्जगतः करोति विलयं स चक्राख्यः ॥ गगनत्रिभागदीर्घः श्यामनिभोऽसौ महासटाकारः । ऋजुवक्रगतिं कुरुते क्रमशो जगतस्त्रिभागहरः॥ गतिरहितो ध्रुवकेतुः प्रमाणवर्णाकृतिर्न भवेत् । ग्रहनक्षत्रोपगमे दृष्टो नैवाऽशुभप्रदः केतुः ॥ उपकरणेषु च राज्ञां सुरगृहतरुपर्वतेषु सदनेषु । दर्शनमुपैति पतितो विनाशिनामेव नियमेन ॥ कुमुदनिभः कुमुदाख्यो दिवसैः षड्भिस्तु पश्चिमे दृष्टः। प्रागुत्तरदिशि यदि वा सुभिक्षमतुलं करोत्येव ॥ तारोपरि मणिकेतुर्याम्यायां दिशि सकृद् दृष्टः। उदयास्तमये समये शुभदोऽसौ क्षीरधारेव ॥ जलधारेव हि ऋज्वी नतया शिखया परेण दृष्टः सः । जलकेतुर्जलसदृशः स सुभिक्षकरश्च सर्वजंतूनां ॥ हरिलांगूलनिभोऽसौ भवकेतुः क्रकचसंनिभो वाऽपि । बहुरोगभयं कुरुते सर्पाकारस्तु तद्भयदः ॥ अपरोऽपि पद्मकेतुः पद्मनिभः पद्मगर्भसंकाशः । क्षेमकरो नृपतीनां सुभिक्षदः सर्वजंतूनां ॥ आवर्तकेतुरयमिह प्रादक्षिण्येन दीतिमान् शुक्लः । शुभदो व्यत्ययकेतुस्त्वतुलामयभीतिहेतुरीतिकरः॥ आक्रम्य गगनमखिलं संवर्ताख्यः स धूमनिभः । शूलाग्रस्त्वितरो वा स केतुरसकृद्भयप्रदो जगतः ॥ शुभदाः शुक्लनिभा ये कृष्णास्त्वशुभप्रदा जगतः । केतूनां फलमुत्का वक्ष्ये यदृक्षभेषु जातानां ॥ अश्विन्यां यदि केतुर्जातस्तदिहाश्वजीविनं हन्यात् । याम्ये म्लेच्छाधिपतिं कालिंगं कृत्तिकायां च ॥ रोहिण्यामतुलबलं निहंति केतुश्च शूरसेनेशं । औशीनरमुख्यपतिं सौम्ये रौद्रे च जलजंतून् ॥ अश्मकदेशाधिपतिं त्वादित्ये पुष्यभे च मगधपतिं । आर्याधिपतिं सार्पे पांड्याधिपतिं च पितृ-

धिष्ण्ये ॥ भाग्यर्क्षे त्वौज्जयिनं चोत्तरभे दंडनायकानखिलान् । हस्तर्क्षे धनिकवरांश्चित्राया कुरुभवानखिलान् ॥ कांबोजनृपतिमुख्यं प्रभंजने जातकेतुरपि । इक्ष्वाकुवंशनाशं द्विदैवभे मित्रभे च गौडेशं ॥ ज्येष्ठायां यदि जातः स हंति वै सर्वमंडलाधीशं । मूले मद्राधिपतिं जलदैवर्क्षे कलिंगदेशपतिं॥गुर्जरदेशाधिपतिं हन्याद्वै वैश्वदेवधिष्ण्योत्थः । केकयनाथं हन्याच्छ्रवणर्क्षे वसुभवोऽखिलान्द्रविडान्॥ नैमिषनृपतिं हन्याच्छतभिषजोऽजांघ्रिजश्च पांचालान् । अहिबुध्न्यर्क्षभवो यः सांकरिकानथ किरातकोणभवान् ॥ पौष्णर्क्षभवः केतुर्हि जसज्जनधर्ममार्गस्थान् । अभिजिन्नक्षत्रभवः कोंकणदेशं च निशिचरांश्चापि ॥ ये केलवश्चाश्विमुखर्क्षजातास्ताराग्रहादिष्वपि संभवाश्च । कुर्वंति ते तीक्ष्णफलं जनानामन्ये तु सामान्यफलप्रदाः स्युः ॥ आदिशब्दो ध्रुवसप्तर्ष्यादिषु । अन्येऽपि चलकेतुगदकेत्वादयोऽद्भुतसागरे उक्ताः । प्रश्नवैष्णवे । भूकंपनिर्घातरजोनिपातादासप्तरात्राद् ग्रहणाद्रवींद्वोः ॥ उल्कानिपाताः परिवेषचापाः स्युर्यत्र तद्देशनृपस्य नाशः ॥ यस्यां शिखा स्याद्दिशि धूमकेतोः प्रयाति यस्यामुदितोऽथ केतुः । रौद्रः स्पृष्टोद्धानि च यानि यानि तेषां सदेशान्नृपतीन् निहन्यात् ॥ ज्येष्ठास्थितोऽर्केण कुजेन युक्तो राहुः शनिर्वाऽप्युदितश्च केतुः । यदा तदानीं भुवि सार्वभौमो रोगाद्रणाद्वा लभते प्रणाशं ॥ अत्र प्रागुक्तः कोटिहोमो लक्षहोमो वा कार्यः । इति केतुशांतिः ॥ ॥ अथोल्कापतनादि । नारदः । स्वर्गच्युतानां रूपाणि यान्युल्कास्तानि वै भुवि । धिष्ण्योल्काविद्युदशनितारा: पंचविधाः स्मृताः ॥ पीडाश्वोष्ट्राऽहिगोमायुखरगोगजदंष्ट्रिकाः । कपिगोधा धूमनिभा विविधाः पापदा नृणां ॥ उदयास्तमयेऽर्केद्वोः पतितोल्का शुभप्रदा । सितरक्ता पतीतासिता सोल्का हंति द्विजातिनः ॥ राजराष्ट्रविनाशाय प्रासादप्रतिमासु च । गृहेषु स्वामिनां पीडा नृपाणां पर्वतेषु च ॥ दिक्षु तत्तद्दिगीशानां कर्षकाणां खलेषु च । गोष्ठे गोस्वामिनां पीडा शिल्पकानां जलेषु च ॥ वर्तुलोल्का पुरं हंति

छत्राकारा पुरोहितं। वंशगुल्मलताकारा राष्ट्रविद्राविणी तथा॥ अत्र प्रागुक्ता गर्गोक्ता ताराविकारशांतिः कार्या॥ ॥ अथ प्रतिसूर्यः। मयूरचित्रे। उदीयमानः सूर्यो वै दृश्यते प्रतिरूपकः। त्रीण्यब्दानि भवेन्नाशो मासार्धेन न संशयः॥ ॥ अथ परिवेषः। नारदः। किरणा वायुनिहता उच्छ्रिता मंडलीकृताः। नानावर्णाकृतिभृतः परिवेषाः शशीनयोः॥ (इनः सूर्यः) मुहुर्मुहुः प्रलीयंते न ते पूर्णफलप्रदाः। अनेकवृत्तवर्णश्च परिवेषो नृपांतकृत्॥ द्विमंडलश्चमूनाथं नृपघ्नोऽथ त्रिमंडलः। द्वौ ग्रहौ परिवेषस्थौ क्षितीशकलहप्रदौ॥ कुर्वंति कलहानर्थं परिवेषगतास्त्रयः। चत्वारः परिवेषस्था नृपस्य मरणप्रदाः॥ परिवेषगताः पंच जगत्प्रलयदा ग्रहाः। नृपहानिः कुजादीनां परिवेषे पृथक्पृथक्॥ प्रावृष्यृतौ च शरदि परिवेषो जलप्रदः। प्रायेणान्येषु ऋतुषु तदुक्तफलदायिनः॥ अन्यत्रापि। रविशशिपरिवेषे पूर्वयामे च पीडा रविशशिपरिवेषे मध्यमे चाऽतिवृष्टिः। रविशशिपरिवेषे धान्यनाशस्तृतीये रविशशिपरिवेषे राज्यनाशश्चतुर्थे॥ ॥ अथ ग्रहयुद्धं। अद्भुतसागरे गर्गः। छादनं रोधनं चैव रश्मिरोधनमेव च। अपसव्यं ग्रहाणां च चतुर्धा युद्धमुच्यते॥ एतन्नेंदुसूर्ययोः किंत्वन्येषां। ताराग्रहाणांपंचानांयुद्धान्युक्तानियोगतइत्युक्तेः। पराजयलक्षणं च तत्रैव। ग्रहो ग्रहं समागम्य श्यामीभवति यो भृशं। हानिं प्राप्नोति च व्यक्तं स्यंदते च मुहुर्मुहुः॥ ॥ अथेंद्रधनुः। नारदः। नानावर्णांशवो भानोः साभ्रवायुविघट्टिताः। यद्व्योम्नि चापसंस्थानमिंद्रचापं तदुच्यते॥ अथवा शेषनागेंद्रदीर्घनिःश्वाससंभवं। विदिक्षुजं दिक्षुजं च तद्दिङ्नृपविनाशनं॥ अवृष्टौ वृष्टिदं त्वैंद्र्यां दिशि वृष्ट्यामवृष्टिदं। अवनीगाढमच्छिन्नं प्रतिकूलं धनुर्द्वयं॥ नृपांतकृत्तद्धि भवेदानुकूल्ये तु तच्छुभं॥ "शां० सा० अथ निर्घातः। वायुना निहतो वायुर्गगनात्पतति क्षितौ। यदा दीप्तः सगुरुतः स निर्घातोऽतिदोषकृत्॥ अथ रश्मिदंडः। वराहसंहितायां। रविकिरणजलदमरुतां संघातो दंडवत्स्थितो दंडः। स विदिङ्मुखो नृपाणामशुभो

दिक्षु द्विजानां च ॥ अत्र मासिकः फलपाकः । अनुक्तफलकालत्वात् । " अत्र शात्यनुक्तौ वृद्धगर्गोक्ता शांतिर्वक्ष्यते । इत्युल्कापतनादि ॥
॥ अथ षड्ग्रहादियोगे शांतिः । मदनरत्ने ब्रह्मयामले । अथातः संप्रवक्ष्यामि ग्रहयोगाख्यशांतिकं । अमावास्यादितिथिषु ग्रहयोगो भवेद्यदि ॥ एकर्क्षे भिन्नराशौ वा एकराश्यृक्षभेदने । शशिसूर्यसमायुक्ते ग्रहत्रयसमन्विते ॥ दुर्भिक्षादिभयं चैव चतुर्ग्रहसमन्वये । महारोगभयं राष्ट्रक्षयो वृष्टिविनाशनं ॥ पंचग्रहसमायोगे दुर्भिक्षमरकादिकं । नृपवैरं गर्भनाशो जायते जननाशनं ॥ ग्रहषट्कसमायोगे मंत्रिणो मरणं भवेत् । पश्वश्वादिभयं सर्वं संकरादि जनक्षयः ॥ पट्टराज्ञो विनाशो वा महाभयमथापि वा । सप्तग्रहसमायोगे क्षितीशमरणं ध्रुवं ॥ जगत्प्रलय एवापि तदा निर्मानुषं जगत् । अतऊर्ध्वं महोत्पातो नानादुःखभयाकुलं ॥ सूर्यस्तद्व्यतिरिक्तश्चेत्तदा योगो महाद्भुतः । विना चंद्रेण योगोऽपि जगत्प्रलयकारकः ॥ तद्दक्षजातजंतूनां महारोगो महाभयं । अर्थनाशः स्थाननाशो मानहानिर्नृपीडनं ॥ वातपित्तादिसंभूतमहापीडा महद्भयं । समायोगे ग्रहा नृणां दोषान्कुर्वंति सर्वदा ॥ षण्मासाभ्यंतरे वापि आयुर्हानिः श्रियस्तथा । जन्माष्टद्वादशे राशौ चतुर्थे पंचमेऽपि वा ॥ पूर्वोक्तफलमेवात्र तस्माच्छांतिं प्रयत्नतः । कुर्याद्दोषानुसारेण वित्तशाठ्यं न कारयेत् ॥ तत्तद्ग्रहाकृतीः कृत्वा सौवर्णेन प्रयत्नतः । सुवर्णेन तदर्धेन पादेनापि कनीयसीं ॥ वित्तशाठ्यं न कर्तव्यं कर्तव्यं शक्तितो बुधैः । पूर्वोक्तलक्षणेनैव ग्रहमूर्तिं च कारयेत् ॥ ग्रहस्यैकैककलशं ग्रहयोगप्रमाणतः । कारयेत्कुंभमेकं वा निर्व्रणं सुदृढं नवं ॥ गृहस्येशानादिग्भागे शुद्धदेशे समस्थले । कुंडे वा स्थंडिले वाऽपि होमं कुर्याद्विधानतः ॥ तस्य पूर्वोत्तरे देशे पूजास्थानं प्रकल्पयेत् । चतुरस्रं हस्तमात्रं स्थंडिलं तंडुलेन तु ॥ लिखेद् ग्रहाकृतिं तत्र स्थापयेत्प्रतिमां ततः । ( तत्र कुंभोपरि न तु स्थंडिले । एककुंभपक्षे तदनुपपत्तेः ) अधिप्रत्यधिदेवादीन् दक्षिणोत्तरतः क्षिपेत् ॥ उक्तगं-

धैस्तथा धूपैस्तत्तन्माल्यैः फलैरपि । तत्तद्ग्रहोक्तमंत्रेण पूर्वोक्तेनैव पूजयेत् ॥ स्वस्तिवाचनपूर्वेण आचार्य ऋत्विजैः सह । ग्रहपूजादिकं कृत्वा नैवेद्यांतं समर्पयेत् ॥ ततो होमं प्रकुर्वीत स्वगृह्योक्तविधानतः । चतुर्थ्यंतं प्रकुर्वीत कलशस्थापनं ततः । ( चतुर्थ्यंतमिति । द्वे आघाराहुती द्वे आज्यभागाहुती एवं चतस्रः । तत्र चतुर्थी सोमाहुतिः । तदंतं आज्यभागांतमित्यर्थः ) पूर्वोक्तेन विधानेन शुद्धतोयेन पूरयेत् । पंचामृतं पंचगव्यं पंचत्वक् पंचपल्लवान् ॥ तत्र मंत्रैर्विनिक्षिप्य औषधानि विनिक्षिपेत् । तत्तद्ग्रहोक्तविधिना मूलान्यादाय निक्षिपेत् ॥ अब्लिंगैर्वारुणैर्वापि कलशं पूरयेद्गुरुः । तत्तद्ग्रहोक्तैर्विविधैस्तत्तन्मंत्रैर्हुनेदथ ॥ ( विविधैरित्यस्य समिद्भिरिति शेषः । एवं हि अथपश्चादित्यादिपदानां स्वरसत उपपत्तिर्नान्यथा ) चर्वाज्ये जुहुयात्पश्चात्तिलाहुतिमथाचरेत् । अथ स्विष्टकृतं हुत्वा होमशेषं समापयेत् ॥ भद्रासनोपविष्टस्य यजमानस्य ऋत्विजैः । कलशस्थोदकेनैवमभिषेकं समाचरेत् ॥ योगग्रहोक्तमंत्रैश्च अधिप्रत्यधिमंत्रतः । ( एते च मंत्रा वैदिका एव । ग्रहाभिषेकमंत्राणामग्रिमश्लोके पुनर्विधानात् ) नवग्रहोक्तमंत्रैश्च जातवेदादि पंचकैः ( जातवेदस इत्येकः त्रैयंबकादयो वक्ष्यमाणाश्चत्वारः । एवं पंचेत्यर्थः ) ॥ त्रैयंबकेण मंत्रेण क्षेत्रस्यपतिना तथा । यतइंद्रद्वयेनैव लोकपालाष्टकैरपि ॥ सुरास्त्वामिति मंत्रेण येनदेवादिभिः क्रमात् । अन्यैश्च पुण्यसूक्तैश्च अभिषेकं समाचरेत् ॥ अभिषेकाप्लुतं वस्त्रमाचार्याय निवेदयेत् । ततः शुक्लांबरधरः कुर्यादाज्यावलोकनं ॥ ऋत्विग्भ्यो दक्षिणां दद्याद्धेनुं शंखादिकानपि । तदभावे यथाशक्ति हिरण्यमपि दापयेत् ॥ ब्राह्मणान्भोजयेत्पश्चाद्यथाविभवसारतः । एवं यः कुरुते भक्त्या ग्रहदोषविवीर्जतः ॥ पूर्वोक्तसर्वदोषैश्च विमुक्तः पुत्रवान्सुखी । आयुरैश्वर्यसंपन्नो जीवेद्वर्षशतं नरः ॥ इह लोके सुखी भूत्वा पश्चाच्छिवपुरं व्रजेत् । इति षड्ग्रहादियोगशांतिः ॥

॥ अथ ग्रहयोगशांतिप्रयोगः । कर्ता गृहस्यैशानभागे आचमनादिदेशकालकीर्तनांते मम श्रीपरमेश्वरप्रीतिद्वारा जन्मनक्षत्रे

जन्मराशौ वा जन्मराशेः अमुकस्थाने वा त्रिग्रहयोगसूचितसकलानिष्टनिरासपूर्वकैहिकपुत्रलाभसुखवृद्धिचिरायुरैश्वर्यसंपत्तिपारलौकिकशिवपुर-
व्रजनसिद्ध्यर्थं ब्रह्मयामलोक्तां ग्रहयोगशांतिं करिष्ये। (चतुरादिग्रहयोगे तु त्रिशब्दस्थाने चतुरादिशब्दोहः कार्यः) तदंगं निर्वि-
घ्नतासिद्ध्यर्थं गणपतिपूजनं स्वस्तिवाचनं आचार्यादिवरणं च करिष्ये । इति संकल्प्य वरणांते आचार्यः प्रादेशांतं कृत्वा कुंडा-
त्स्थंडिलाद्वा ऐशान्यां चतुरस्रं हस्तमात्रं स्थंडिलं तंडुलैर्निर्माय तत्र योगकर्तॄणां ग्रहाणां संख्यया कलशान्प्राक्संस्थानुदक्सं-
स्थान्वा संस्थाप्य तत्र निहितेषु पूर्णपात्रेषु तत्तद्ग्रहमंडलानि लिखेत् । यद्वा एकमेव कुंभं संस्थाप्य महति पूर्णपात्रे ग्रहमंडलानि
लिखेत् । तेषु प्रत्येकं सुवर्णेन तदर्धेन तदर्धेन वा मितेन सुवर्णेन यथाशक्ति सुवर्णेन वा कृतास्तत्तद्ग्रहप्रतिमास्तत्तदधिप्रत्यधिदेवताप्रति-
माश्च निधाय तासु ग्रहादींस्तत्तन्मंत्रैरावाह्य ग्रहयज्ञोक्तप्रकारेण नैवेद्यांतं पूजयेत् ॥ ततः स्थंडिलेऽग्निं प्रतिष्ठाप्य ध्यात्वान्वादध्यात् ।
चक्षुषीआज्येनेत्यंते स्थापितग्रहान् तत्तत्समिच्चर्वाज्यतिलैः प्रत्येकं प्रतिद्रव्यं अष्टोत्तरसहस्रसंख्याभिराहुतिभिः । १०८।२८वा । अधिदेवताः
प्रत्यधिदेवताश्च तैरेव द्रव्यैः प्रत्येकं प्रतिद्रव्यं १०८।२८।८ वा । शेषेण स्विष्टकृतमित्याद्याज्यभागहोमांते ग्रहोत्तरतोऽभिषेकार्थं कलशं म-
हीद्यौरित्यादिविधिना संस्थाप्य आपोहिष्ठेत्यादितिसृभिर्नहितेक्षत्रमित्यादितिसृभिर्वा जलेनापूर्य तत्र पंचामृतं पंचगव्यं पंचत्वचः पंचपल्लवा-
न्सर्वौषधीस्तिस्रो वा त्र्यवराणि यज्ञियतरुमूलानि गंधादि च तत्तन्मंत्रैः प्रक्षिप्य तत्र वरुणं संपूज्यान्वाधानानुसारेण होमं कृत्वा स्विष्टकृदादि-
प्रायश्चित्तहोमांते पूर्णाहुतिं हुत्वा होमशेषं समाप्य भद्रासनोपविष्टं यजमानं सर्वकलशजलैरभिषिंचेत् । तत्र मंत्राः । योगकारकाणां तत्तदधि-
प्रत्यधिदेवतानां च वैदिकमंत्रांते । ग्रहाणामादिरादित्यो० ९।जातवदसे०।त्र्यंबकं०। क्षेत्रस्यपतिना वामदेवः०।यतइंद्रेत्यादिद्वयोर्भर्गं इंद्रो बृहती

द्वितीया सतोबृहतीपंक्तिः । इंद्रंवोविश्वतस्परीत्यादयोऽष्टलोकपालमंत्राः । सुरास्त्वामभिषिंचंतु० । येनदेवाःपवित्रेणेत्यादित्रयाणां खिलमंत्राणां वामदेवइंद्रोनुष्टुबंत्यस्य विश्वेदेवास्त्रिष्टुप् । आपोहिष्ठेत्यादिनवर्चस्य सूक्त० स्वादिष्ठयेत्यादिदशर्चस्य सूक्तस्य मधुच्छंदाः सोमः पवमानो गायत्री । अभिषेके० । समुद्रज्येष्ठाइत्यादिभिः पुण्यसूक्तैश्चाभिषिक्तो यजमानो धृतशुक्लांबरः स्नानवस्त्रमाचार्याय दत्वाऽऽज्यावलोकनं तद्दानं च कृत्वाऽऽचार्यादिभ्यो दक्षिणां दद्यात् । तत्र आचार्याय धेनुमितरेभ्यः शंखादितत्तद्ग्रहोक्तदक्षिणास्तदलाभे यथाशक्ति हिरण्यं । ततो यथाशक्ति ब्राह्मणान्संभोज्य भूयसीं दत्वाऽऽशिषो गृहीत्वा कर्म समापयेत् । इति ग्रहयोगशांतिप्रयोगः ॥ ॥ अथ भूमिकंपादि । नारदः । भूभारखिन्ननागेंद्रशेषविश्रामसंभवः । भूकंपः सोपि जगतामशुभाय भवेत्सदा ॥ यामक्रमेण भूकंपो द्विजातीनामनिष्टदः । रात्रौ विशां क्षितीशानां शूद्राणां संध्ययोरपि ॥ अर्यमाद्यानि चत्वारि दस्रेंद्वदितिभानि च । वायव्यं मंडलं त्वेतदस्मिन्कंपो भवेद्यदि ॥ नृपसस्यवणिग्वैश्यशिल्पिवृष्टिविनाशदः । पुष्यद्विदैवभरणीपितृभाग्याऽजपाग्निभं ॥ आग्नेयं मंडलं त्वेतदस्मिन्कंपो भवेद्यदि । नृपवृष्ट्यर्थनाशाय हंति श्रावकसंकरान् ॥ अभिजिद्धातृवैश्वेंद्रवसुवैष्णवमित्रभं । वासवं मंडलं त्वेतदस्मिन्कंपो भवेद्यदि ॥ राजनाशाय रोगाय हंति मार्जारदर्दुरान् । मूलाहिर्बुध्न्यवरुणपौष्णांब्वार्द्राहिभानि तु ॥ वारुणं मंडलं त्वेतदस्मिन्कंपो भवेद्यदि । राजनाशकरो हंति पौंड्रचीनपुलिंदकान् ॥ प्रायेण निखिलोत्पाताः क्षितीशानामनिष्टदाः । षड्भिर्मासैश्च भूकंपो द्वाभ्यां दाहः फलप्रदः ॥ अनुक्ताः पंचभिर्मासैस्तदानीं फलदं रजः । निदानं मामकः श्लोकः । केचिद्दिक्करिकुंभचालनभवं वाताभिवातोद्भवं केचिन्नीरधिवीचिदोलनभवं तन्मीनजातं परे । भूकंपं ब्रुवते वयं हरिगुणश्रेणीसमाकर्णनप्रोद्यद्धर्षफणींद्रकंपितशिरःश्रेणीभवं ब्रूमहे ॥ मूलं तु वाराद्यं ज्ञेयं । तत्रैव । प्रथितनरेश्वर-

मरणं व्यसनान्याग्नेयवायुमंडलयोः । क्षुद्भयमरकाऽवृष्टिभिरुपतप्यंते जनाश्चैव ॥ वारुणपौरंदरयोः सुभिक्षशिववृष्टिहार्दयो लोके । गावोऽतिभूरिपयसो निवृत्तवैराश्च भूपालाः ॥ पक्षैश्चतुर्भिरनिलस्त्रिभिरग्निर्देवराट् च सप्ताहात् । सद्यः फलति च वरुणो येषु न कालोऽद्भुतेषूक्तः ॥ त्रिचतुर्थे सप्तदिने मासे पक्षे तथा त्रिपक्षे वा । यदि भवति भूमिकंपः प्रधाननृपनाशनो भवति ॥ अत्र पूर्वोक्तो लक्षहोमः कोटिहोमो वा कार्यः ॥

॥ अथ रजः । नारदः । सितेन रजसा छन्ना दिग्ग्रामवनपर्वताः । यदा तदा भवंत्येते निधनं यांति भूमिपाः ॥ धूमोद्भवस्तु यस्यां वै तस्यां दिशि विनाशनं । ऋतावन्यत्र शिशिरात्संपूर्णफलदं रजः॥ ॥अथ दिग्दाहः। अद्भुतसागरे नारदः । दिग्दाहः पीतवर्णश्चेत्क्षितीशानां भयप्रदः । बृहस्पतिः । यदाऽस्तमित आदित्ये वह्निज्वाला प्रदृश्यते । दिशां दाहं तु तं विद्यादिति भार्गवभाषितं ॥ ॥ अथ रविच्छिद्रे । अद्भुतसागरे मयूरचित्रे । तिलैर्दूर्वादिभिश्चैव तंडुलैश्च यवैस्तथा। धान्यैरौदुंबरीभिश्च श्रीफलैराहुतिक्रिया ॥ समाप्तौ भोजनं कृत्वा नरः प्रेक्षणमादिशेत् । व्योममध्यगतं पश्येद्यदि सूर्यद्वयं नरः ॥ दधिक्षौद्रघृताक्तानां जुहुयादयुतं शुचिः । उपोष्यार्कस्य समिधो धेनुं दद्याद् द्विजातये ॥ इति भूमिकंपादि ॥अथाद्भुतफलकालः । अद्भुतसागरे पराशरः। तत्रोत्पातफलं दिव्यं पूर्णे वर्षे विपच्यते। आंतरिक्षं तथा भौमं मासैः षड्भिश्च तत्त्रिभिः ॥ निर्घातस्तु त्रिभिर्मासैर्गंधर्वनगराणि च। अग्निश्च सप्तरात्रेण मासेनोल्का विपच्यते ॥ पुरध्वजादिभंगेषु फलं मासाद्विपच्यते । अरिष्टं पच्यते षट्सु मासेषु फलहेतुषु ॥ अतिहर्षोऽतिशोकश्च सद्य एव विपच्यते । कीटमूषकसर्पाणां मक्षिकादिषु यत्फलं ॥ पच्यते तद्धि मासेन मधु सप्तसु पच्यते । हयानां हस्तिनां चैव शकुनीनां शुनां तथा ॥ सद्यस्त्र्यहाद्वा नियतमुलूकस्य तथैव च। विदेहवाक्संश्रवणं दर्शनं यक्षरक्षसां ॥ पशूनां विकृतं यच्च षष्ठे मासि विपच्यते। मांसतैलविकारेषु देहागस्पंदनेषु च ॥ वस्त्रजातिविकारेषु

फलं स्यात्सप्तमेऽहनि । चित्रकर्मणि मासाभ्यां शयने षष्ठमासिकं ॥ सोमध्वजविकारे च विपाकः सप्तमासिकः । गर्गः । पक्षाद्विपाकः सूर्यस्य पाकः सोमस्य मासिकः । मासद्वये स्मृतो राहोस्त्रिभिर्मासैस्तु केतुजः ॥ संवत्सरविपाकौ तु ज्ञेयौ बुधबृहस्पती । षाण्मासिकश्चोशनसः सूर्यजस्य तु पंचभिः ॥ त्रिभिर्मासैस्तु भौमस्य उल्कापातस्तु मासिकः । अष्टभिर्भूमिकंपस्तु निर्घातः पच्यते त्रिभिः ॥ अनार्तवं पुष्पफलं षड्भिर्मासैर्विपच्यते । पक्षिकीटपतंगानां दशाहात्फलमादिशेत् ॥ घृततैलवसावर्षे सद्यः फलमुदाहृतं । रात्राविंद्रधनुर्दृष्ट्वा राज्ञः शीलविपर्ययं ॥ वानराणां नराणां च तथैव गजवाजिनां । नानावादित्रशब्दानां फलं मासाद्विपच्यते ॥ बिडालनकुलानां च वराहव्याघ्रयोस्तथा । श्रुत्वांऽतरिक्षे शब्दं तु फलं मासाद्विपच्यते ॥ अद्भुतफलस्थानान्यद्भुतसागरे । पराशरः । राज्ञः शरीरे लोके च पुरदारपुरोहिते । पाकमायाति पुत्रेषु तथा कोशे च वाहने ॥ " शां. सा. तत्रैव गर्गः । पुरे जनपदे कोशे वाहने च पुरोहिते । पुत्रे स्वामिनि भृत्ये च पच्यते दैवमष्टधा ॥ " मात्स्ये । अद्भुते तु समुत्पन्ने यदि वृष्टिः शिवा भवेत् । सप्ताहाभ्यंतरे ज्ञेयमद्भुतं निष्फलं हि तत् ॥ "शां. सा. शिवा निर्विकारा" तत्र मासान्यन शांतिरुक्ता वसिष्ठसंहितायां । भौमं शांत्या शमं याति मार्दवं त्वंतरिक्षजं । दिव्यं हेमान्नगोभूमिदानैस्तत्कोटिहोमतः ॥ महोपहाराद्रुद्रस्य गोदोहात्तत्पुरःसरं । अलंकृते क्षितितले यावत्क्षीरं प्लवं भवेत् ॥ अपि दिव्यं शमं याति किं पुनस्त्वितरद्द्वयं । " शां. सा. अत्राधिकारी तत्रैव । अकृत्वा शांतिकं राजा दुःखांभोधौ निमज्जति । अश्वरोमयाष्टवर्षादिरजोदर्शनादौ तत्स्वामिनोऽधिकारः । केचित्तत्रापि राज्ञोऽधिकारमाहुः । अथवा सर्वाद्भुतशांतिषु सर्वेषामधिकारः । अद्भुतसागरे । ये तेषु शांतिं कुर्वंति न ते यांति पराभवं । ये तु न प्रतिकुर्वंति क्रियया श्रद्धयान्विताः । नास्तिक्याद्वा विमोहाद्वा विनश्यंत्येव तेऽचिरादितिगर्गोक्तेः । अश्वादिकं च दत्वा शांतिः कार्या " तत्रैव । हस्तैः षोडशभिः कार्य-

श्चतुरस्रः समंततः। मंडपो यज्ञियैर्वृक्षैरथवा वनदारुभिः॥ हस्तैश्चतुर्भिस्तन्मध्ये कुंडं कार्यं समंततः। खातं हस्तैश्चतुर्भिश्च वप्रत्रयसमन्वितं॥ समंततश्चतुर्हस्तं षोडशहस्तमित्यर्थः। षडंगुलोन्नतस्त्वाद्यो द्वादशांगुलविस्तृतः। आद्यः अधोमेखला। अंगुलं च यथाश्रुतमेव। नतु कुंडचतुर्विंशांशः। द्वादशांगुलानि मेखलात्रयमादाय। दशांगुलोन्नतो मध्ये अष्टांगुलसुविस्तृतः। चतुर्दशांगुलोत्सेधश्चतुरंगुलविस्तृतः॥ तृतीयवप्रः कर्तव्यो योनिश्चैका तु पश्चिमे। चतुर्दशांगुलैर्दीर्घा चोन्नता षोडशांगुलैः॥ हीनाऽधिका न कर्तव्या विस्तारः षड्भिरंगुलैः। कुंडस्य लक्षणं त्वेवं कोटिहोमे तु सर्वदा॥ ऐशान्यां वेदिका कार्या सार्धहस्तप्रमाणतः। उन्नता विस्तृता कार्या प्रागुदक्प्रवणा शुभा॥ सर्वदेवमयी त्वाद्या शिवपूजापुरःसरं॥ ग्रहांस्तानर्चयेत्तत्र पूर्वोक्तविधिना ततः। पलाशसमिदाज्यान्नैर्मुखांतेऽष्टशतं पृथक्॥ अघोरमंत्रेण ततो ग्रहहोमं च कारयेत्। तिलहोमं व्याहृतिभिर्घृताक्तैर्जुहुयात्ततः॥ द्वारेषु जापकैः स्वस्ववेदपारायणं क्रमात्। चमकं नमकं सूक्तं पौरुषं चांगजापकैः॥ होमो नवभिराचार्यैः कार्यस्तु ब्राह्मणैः सह। नैवेद्यांते ततः पश्चाच्छांतिवाचनपूर्वकं॥ ब्राह्मणान्भोजयेत्पश्चात्स्वयं भुंजीत बंधुभिः। शिवविष्ण्वोः कथालापैर्दिनशेषं नयेत्ततः॥ एवं यावत्कोटिहोमस्तावत्कार्यमतंद्रितैः। तदर्धं वा तदर्धं वा लक्षहोममथापि वा॥ कार्यं दोषानुसारेण वित्तशाठ्यविवर्जितैः। होमांते दक्षिणां दद्याच्चतुर्विंशतिऋत्विजां॥ प्रतिद्विजमलंकारं सार्धनिष्कशतद्वयं। तदर्धं वा तदर्धं वा दोषवित्तानुसारतः। उक्ता साधारणी शांतिरुत्पातानामतःपरं। उत्पाताश्चैव तच्छांतिर्वक्ष्यतेऽत्र पृथक्पृथक्। अद्भुतसागरे गर्गः। सावित्र्या लक्षहोमं तु कुर्याच्छ्रुतिविशारदः। गां भूमिं च हिरण्यं च धान्यं वस्त्रं तथैव च॥ दद्याच्च गुरवे ग्रामं धेनुं वासोयुगं तथा। अनेन विधिना भौममद्भुतं शमयेद्बुधः॥ एष एव विधिर्ज्ञेयस्त्वंतरिक्षाद्भुतेषु च। विशेषोऽत्र तु सावित्र्या दशलक्षं तु होमयेत्॥

होमं समाहितमनाः कुर्याच्च घृतकंबलं । घृतकंबलोऽग्रे वक्ष्यते । धेनूनां द्वादशं देयं शतनिष्कसमायुतं । गुरवे दीयमाने तु शमयेदंबराद्भुतं ॥ दिव्याद्भुतेषु कर्तव्यः कोटिहोमः समाहितैः । गोसहस्रं च दातव्यं गुरवे दक्षिणाविधौ ॥ एष प्रोक्तो विधिः सम्यग् दिव्यारिष्टविपत्करः । सुभिक्षं क्षेमसंपत्स्यात्प्रजानां पुष्टिवर्धनः ॥ अशक्तौ तु स एव । प्रयतस्तेषु सर्वेषु दिव्येष्वद्भुतकेष्वपि । महाशांतिं बुधः कुर्यादमृतां विश्वभेषजां ॥ अमृताऽथर्ववेदे प्रसिद्धा । केचित्तु भविष्योक्ता महाशांतिमाहुः । सा वक्ष्यते । विष्णुधर्मे । सर्वोत्पातप्रशमनी अमृता चाभया स्मृता । नारदः कुंडाद्युक्त्वाह । जुहुयादाज्यभागांते पृथगष्टोत्तरं शतं । यतइंद्रभयामहे स्वस्तिदाऽघोरमंत्रकैः ॥ समिदाज्यचरुव्रीहितिलैर्व्यात्हृतिभिस्तथा । कोटिहोमं तदर्धं वा लक्षहोममथापि वा ॥ यथावित्तानुसारेण न न्यूनाधिककल्पना । एकविंशतिरात्रं वा पक्षं पक्षार्धमेव वा ॥ पंचरात्रं त्रिरात्रं वा होमकर्म समाचरेत् । दक्षिणां च ततो दद्यादाचार्याय कुटुंबिने ॥ गणेशक्षेत्रपालार्कदुर्गाक्षोण्यंगदेवताः । तासां प्रीत्यै जपः कार्यः शेषं पूर्ववदाचरेत् ॥ ऋत्विग्भ्यो दक्षिणां दद्यात्षोडशभ्यः स्वशक्तितः ॥ इति कमलाकरभट्टकृते शांतिरत्नेऽद्भुतसामान्यशांतिः ॥ ॥ अथ नानोत्पातशांतयः । तत्रादौ लिंगादिवैकृतं । वराहमिहिरः । यानन्यानुत्पातान्गर्गः प्रोवाच तानहं वक्ष्ये । तेषां संक्षेपोऽयं प्रकृतेरन्यत्वमुत्पातः ॥ अपचारेण नराणामुपसर्गः पापसंचयाद्भवति । संसूचयंति दिव्यांतरिक्षभौमास्तदुत्पाताः ॥ मनुजानामपचारादपरक्ता देवताः सृजंते तान् । तत्प्रतिघाताय नृपः शांतिं राष्ट्रे प्रयुंजीत ॥ दिव्यं ग्रहर्क्षवैकृतमुल्कानिर्घातपवनपरिवेषाः । गंधर्वपुरपुरंदरचापादि यदांतरिक्षं तत् ॥ भौमं चरस्थिरभवं तच्छांतिभिराहतं शममुपैति । नाभसमुपैति मृदुतां शाम्यति नो दिव्यमित्येके ॥ दिव्यमपि शममुपैति प्रभूतकनकाश्वगोमहीदानैः । रुद्रायतने भूमौ गोदोहात्कोटिहोमाच्च ॥ अनिमित्तचलनभंगस्वेदाश्रुनिपातजल्पनाद्यानि । लिं-

गार्चायतनानां नाशाय नरेंद्रदेशानां ॥ दैवतयात्राशकटाक्षचक्रकेतुयुगभंगपतनानि। संपर्यासनसादनसंगाश्च न देशनृपशुभदाः ॥ ऋषिधर्मपि-
तृब्रह्मप्रोद्भूतं वैकृतं द्विजातीनां । यद्रुद्रलोकपालोद्भवं पशूनामनिष्टं तत् ॥ गुरुसितशनैश्चरोत्थं पुरोधसां विष्णुजं च लोकानां । स्कंदविशा-
खसमुत्थं मांडलिकानां नरेंद्राणां॥ वेदव्यासे मंत्रिणि विनायके वैकृतं चमूनाथे । धातरि सविश्वकर्मणि लोकाभावाय निर्दिष्टं ॥ देवकुमारकु-
मारीवनिताप्रेष्येषु वैकृतं यत्स्यात् । तन्नरपतेः कुमारककुमारिकास्त्रीपरिजनानां ॥ रक्षःपिशाचगुह्यकनागानामेतदेव निर्देश्यं । मासैश्चाप्यष्टाभिः
सर्वेषामेव फलपाकः ॥ बुध्वा दैवविकारं शुचिः पुरोधास्त्र्यहोषितः स्नातः । स्नानकुसुमानुलेपनवस्त्रैरभ्यर्चयेत्प्रतिमां ॥ मधुपर्केण पुरोधा
भक्ष्यैर्बलिभिश्च विधिवदुपतिष्ठेत् ॥ स्थालीपाकं जुहुयाद्विधिवन्मंत्रैश्च तल्लिंगैः ॥ इति विबुधविकारे शांतयः सप्तरात्रं द्विजविबुधगणार्चा
गीतनृत्योत्सवाश्च। विधिवदवनिपालैर्यैः प्रयुक्ता न तेषां भवति दुरितपाको दक्षिणाभिश्च रुद्धः॥ ॥ अथाग्निवैकृतं। राष्ट्रे यस्यानग्निः प्रदीप्यतेऽ-
ग्निर्नेचेंधनवान् । मनुजेश्वरस्य पीडा तस्य सराष्ट्रस्य विज्ञेया॥ जलमांसार्द्रज्वलने नृपतिवधः प्रहरणे रणो रौद्रः। सैन्यग्रामपुरेषु च नाशो वह्नेर्भयं
कुरुते ॥ प्रासादभवनतोरणकेत्वादिष्वग्निदग्धेषु । तडिता वा षण्मासैः परचक्रस्यागमो नियमात्॥ धूमोऽनग्निसमुत्थो रजस्तमश्चाह्निजं महाभयदं ।
व्यभ्रे निश्युडुनाशो दर्शनमपि चान्हि दोषकरं ॥ नगरचतुष्पादांडजमनुजानां भयकरं ज्वलनमाहुः। धूमाग्निविस्फुलिंगैः शय्यांबरकोशजै-
र्मृत्युः ॥ आयुधज्वलनसर्पणस्वनाः कोशानिर्गमनवेपनानि वा । वैकृतानि यदि वायुधेऽपराण्याशु रौद्ररणसंकुलं वदेत् ॥ मंत्रैरग्नेः क्षीरवृक्षा-
त्समिद्भिर्होतव्योग्निः सर्पिषा सर्षपैश्च ।अग्न्यादीनां वैकृते शांतिरेषा देयं चास्मिन्कांचनं ब्राह्मणेभ्यः ॥ ॥ अथ वृक्षवैकृतं। शाखाभंगेऽकस्माद्वृ-
क्षाणां निर्दिशेद्रणोद्योगं। हसने देशभ्रंशो रुदिते च व्याधिबाहुल्यं ॥ राष्ट्रविभेदोऽन्यर्तौ बालवधोऽतीव बालकुसुमेषु। वृक्षात्क्षीरस्रावे सर्व-

द्रव्यक्षयो भवति ॥ मद्ये वाहननाशः संग्रामः शोणिते मधुनि रोगः । स्नेहे दुर्भिक्षभयं महद्भयं निःसृते सलिले ॥ शुष्कविरोहे वीर्यान्न-
संक्षयः शोषणे च विरुजानां । पतितानामुत्थाने स्वयं भयं दैवजनितं च ॥ पूजितवृक्षे ह्यनृतौ कुसुमफलं नृपवधाय विकृतं वा । धू-
मस्तस्मिन्ज्वालाथवा भवेन्नृपवधायैव ॥ सर्पत्सु तरुषु जल्पत्सु वापि जनसंक्षयो विनिर्दिष्टः । वृक्षाणां वैकृत्ये दशभिर्मासैः फलविपाकः ॥
स्रग्गंधधूपांबरपूजितस्य छत्रं निधायोपरि पादपस्य । कृत्वा शिवं रुद्रजपोऽत्र कार्यो रुद्रेभ्य इत्यत्र षडेव होमाः ॥ पायसेन मधुना च भो-
जयेद्ब्राह्मणान्घृतयुतेन भूपतिः । मेदिनी निगदितात्र दक्षिणा वैकृते तरुकृते हितार्थिभिः ॥ ॥ अथ सस्यवैकृतं । नालेऽब्जयवादीनामेकस्मिन्
द्वित्रसंभवो मरणं । कथयति तदधिपतीनां यमलं जातं च कुसुमफलं ॥ अतिवृद्धिः सस्यानां नानाफलपुष्पसंभवो वृक्षे । भवति हि यद्येकस्मिन्प-
रचक्रस्यागमो नियमात् ॥ अर्धेन यदा तैलं भवति तिलानामतैलता वा स्यात् । अन्नस्य च वैरस्यं यदा तदा क्षुद्भयं सुमहत् ॥ विकृतं
कुसुमफलं वा ग्रामादथवा पुराद्बहिः कार्यं ॥ सौम्योऽत्र चरुः कार्यो निर्वाप्यो वा पशुः शांत्यै ॥ सस्ये तु दृष्ट्वा विकृतिं प्रदेयं तत्क्षेत्रमेव प्रथमं
द्विजेभ्यः । तत्क्षेत्रमध्ये चरुमत्र भौमं कृत्वा न दोषं समुपैति तज्ज्ञः ॥ ॥ अथ वृष्टिवैकृतं । दुर्भिक्षमनावृष्ट्यामतिवृष्ट्यां क्षुद्भयं परभयं च ।
रोगोऽन्यर्तुभवायां नृपतिवधोऽनभ्रजातायां ॥ शीतोष्णविपर्यासे यथावदृतुषु च न संप्रवृत्तेषु । षण्मासाद्राष्ट्रभयं रोगभयं दैवजनितं
च ॥ अन्यर्तौ सप्ताहं प्रबंधवर्षे प्रधाननृपमरणं । रक्ते शस्त्रोद्योगो मांसास्थिवसादिभिर्मरकः ॥ धान्यहिरण्यत्वक्फलकुसुमाद्यैर्वर्षितैर्भ-
यं विद्यात् । अंगारपांसुवर्षे विनाशमुपयाति तन्नगरं ॥ उपला विना जलधरैर्विकृता वा प्राणिनो यदा वृष्टाः । छिद्रं वाऽप्यभिवृष्टं स-
स्यानामीतिसंजननं ॥ क्षीरघृतक्षौद्राणां दधिलाक्षासोष्णवारिणां वर्षे । देशविनाशः शस्त्रायुधवर्षेपि च भयं सनृपयुद्धं ॥ यद्यमलेऽर्के छाया न

दृश्यते दृश्यते प्रतीपा वा । देशस्य तदा सुमहद्भयमायातं विनिर्देश्यं ॥ व्यभ्रे नभसि सुरधनुर्दिवा यदा दृश्यतेऽयत्रा रात्रौ । प्राच्यामपरस्यां वा तदा भवेत्क्षुद्भयं सुमहत् ॥ सूर्येंदुपर्जन्यसमीरणानां यागः स्मृतो वृष्टिविकारकाले । धान्यान्नगोकांचनदक्षिणाश्च देयास्ततः शांतिमुपैति पापं॥ ॥अथ जलवैकृतं । अपसर्पणं नदीनां नगरादचिरेण शून्यतां कुरुते । शोषश्चाऽशोष्याणामन्येषां वा ह्रदादीनां ॥ स्नेहासृङ्मांसवहाः संकुलकलुषाः प्रतीपगाश्चापि । परचक्रस्यागमनं नद्यः कथयंति षण्मासात् ॥ ज्वालाधूमक्काथा रुदितोत्क्रुष्टानि चैव कूपानां । गीतप्रजल्पितानि च जनमरकाय प्रदिष्टानि ॥ सलिलोत्पत्तिरखाते गंधरसविपर्यये च तोयानां । सलिलाशयविकृतौ वा महद्भयं तत्र शांतिरियं ॥ सलिलविकारे कुर्यात्पूजां वरुणस्य वारुणैर्मंत्रैः । तैरेव च जलहोमं शममेवं पापमुपयाति ॥ ॥अथ प्रसववैकृतं । प्रसवविकारे नृणां द्वित्रिचतुःप्रभृतिसंप्रसूतौ वा । हीनातिरिक्तकाले देशकुलानां च संक्षयो भवति ॥ वडवोष्ट्रमहिषगोहस्तिनीषु यमलोद्भवे मरणमेषां । षण्मासात्सूतिफलं शांतौ श्लोकौ च गर्गोक्तौ ॥ नार्यः परस्य देशेषु त्यक्तव्यास्तु हितार्थिना । तर्पयेच्च द्विजान्कामैः शांतिं चैवात्र कारयेत् ॥ चतुष्पदाः स्वयूथेभ्यस्त्यक्तव्याः परभूमिषु । नगरं स्वामिनं यूथमन्यथा तु विनाशयेत् ॥ अन्यत्र वेसरोत्पत्तौ स्त्रीणां चाऽजातिमैथुने । स्थालीपाकेन धातारं पशुना च पुरोहितः ॥ प्राजापत्येन मंत्रेण यजेद्बहन्नदक्षिणं॥ ॥अथ वायुवैकृतं । यानं वाहवियुक्तं यदि गच्छेन्न व्रजेच्च वाहयुतं । राष्ट्रभयं भवति तदा चक्राणां सादभंगे च ॥ अनभिहततूर्यनादः शब्दो वा ताडितेषु यदि न स्यात् । विपरीतो वा तेषां परागमो नृपतिमरणं वा ॥ गोलांगलयोः संगे दर्वीशूर्पाद्युपस्करविकारे । काष्ठनिनादे च तथा शस्त्रभयं मुनिवचश्चेदं ॥ वायव्येष्वेषु नृपतिर्वायुं सक्तुभिरर्चयेत् । आवायोइति पंचर्चो जप्तव्याः प्रयतैर्द्विजैः ॥ बह्वन्नदक्षिणो होमः परमान्नं च भोजयेत्॥ ॥अथ पक्ष्यादिवैकृतं । पुरपक्षिणो

वनचरा वन्या वा निर्भया विशंति पुरं । नक्तं वा दिवसचराः क्षपाचरा वा चरंत्यहनि ॥ संध्याद्वयेऽपि मंडलभा बध्नंतो मृगा विहंगा वा । दीप्तायां दिश्यथवा क्रोशंतः संहता भयदाः ॥ श्वानः प्ररुदंतीव द्वारे वाशंति जंबुका दीप्ताः । प्रविशेन्नरेंद्रभवने कपोतकः कौशिको यदि वा ॥ कुक्कुटरुतं प्रदोषे हेमंतादौ च कोकिलालापाः । प्रतिलोममंडलचराः श्येनाद्याश्चांबरे भयदाः ॥ गृहचैत्यतोरणेषु द्वारेषु च पक्षिसंपातः । मधुवल्मीकांभोरुहसमुद्भवाश्चापि नाशाय ॥ श्वभिरस्थिशवावयवप्रवेशनं मंदिरेषु मरकाय । पशुशस्त्रव्याहारे नृपमृत्युर्मुनिवचश्चेदं ॥ मृगपक्षिविकारेषु कुर्याद्धोमान्सदक्षिणान् । देवाःकपोतइति च जप्तव्याः पंचभिर्द्विजैः ॥ सुदेवा इति चैकेन देया गावश्च दक्षिणाः । जपेच्छाकुंतसूक्तं च मनोवेदशिरांसि च॥ ॥अथ शक्रध्वजादिवैकृतं । शक्रध्वजेंद्रकीलस्तंभद्वारप्रपातभंगेषु । तद्वत्कपाटतोरणकेतूनां नरपतेर्मरणं ॥ संध्याद्वयस्य दीप्तिर्धूमोत्पत्तिश्च काननेऽनग्नौ । छिद्राभावे भूमेर्दरणं कंपश्च भयकारी ॥ प्रहर हन छिंधि भिंधीत्यायुधकाष्ठाश्मपाणयो बालाः । निगदंतः प्रहरंते तत्रापि भयं भवत्याशु ॥ अंगारगैरिकाद्यैर्विकृतप्रेताभिलेखनं यस्मिन् । नायकचित्रितमथवा क्षयं क्षयं याति नचिरेण ॥ (क्षयं गृहं) लूतापटांकशबलं न संध्ययोः पूजितं कलहयुक्तं । अशुभं नित्योच्छिष्टं तद्गेहं नाशमुपयाति ॥ दृष्टेषु यातुधानेषु निर्दिशेन्मरकमाशुसंप्राप्तं । प्रतिघातायैतेषां गर्गः शांतिं चकारेमां ॥ महाशांत्योऽथ बलयो भोज्यानि सुमहांति च । कारयीत महेंद्रं च माहेंद्रीभिः समर्चयेत्॥पाखंडानां नास्तिकानां च भक्तः साध्वाचारप्रोज्झितः क्रोधशीलः। ईर्ष्युः क्रूरो विग्रहासक्तचेता यस्मिन् राजा तस्य देशस्य नाशः ॥ नरपतिदेशविनाशे केतोरुदयेऽथवा ग्रहेऽर्केंद्वोः । उत्पातानां प्रभवः स्वर्तुभवश्चाप्यदोषाय ॥ ये च न दोषान् जनयंत्युत्पातास्तानृतुस्वभावकृतान् । ऋषिपुत्रकृतैः श्लोकैर्विद्यादेतैः समासोक्तैः ॥ वज्राऽशनिमहीकंपसंध्यानिर्घातनिःस्वनाः । परिवेषरजोधूमरक्तार्कास्तमनोदयाः ॥ द्रुमे-

भ्योऽन्नरसस्नेहबहुपुष्पफलोद्गमाः । गोपक्षिमदवृद्धिश्च शिवाय मधुमाधवे ॥ तारोल्कापातकलुषं कपिलार्केंदुमंडलं । अनग्निज्वलनस्फोटधूमरे-
ण्वनिलाहतं ॥ रक्तपद्मारुणं सांध्यं नभः क्षुब्धार्णवोपमं । सरितां चांबुसंशोषं दृष्ट्वा ग्रीष्मे शुभं वदेत् ॥ शक्रायुधपरीवेषविद्युच्छुष्कविरोहणं ।
कंपोद्वर्तनवैकृत्यं रसनं दरणं क्षितेः ॥ सरोनद्युदपानानां वृद्ध्यूर्ध्वतरणप्लवाः । सरणं चाद्रिगेहानां वर्षासु न भयावहं ॥ दिव्यस्त्रीभूतगंधर्व-
विमानाद्भुतदर्शनं । ग्रहनक्षत्रताराणां दर्शनं च दिवांऽबरे ॥ गीतवादित्रनिर्घोषा वनपर्वतसानुषु । सस्यवृद्धिरपां हानिरपापाः शरदि स्मृताः ॥
शीतानिलतुषारत्वं नर्दनं मृगपक्षिणां । रक्षोयक्षादिसत्वानां दर्शनं वागमानुषी ॥ दिशो धूमांधकाराढ्याः सनभोवनपर्वताः । उच्चैः सूर्योदया-
स्तौ च हेमंते शोभनाः स्मृताः ॥ हिमपातानिलोत्पाता विरूपाद्भुतदर्शनं । कृष्णांजनाभमाकाशं तारोल्कापातपिंजरं ॥ चित्रगर्भोद्भवाः
स्त्रीषु गोऽजाश्वमृगपक्षिषु । पत्रांकुरलतानां च विकाराः शिशिरे शुभाः ॥ ऋतुस्वभावजा ह्येते दृष्टाः स्वर्तौ शुभप्रदाः । ऋतोरन्यत्र
चोत्पाता दृष्टास्ते भृशदारुणाः ॥ उन्मत्तानां च या गाथाः शिशूनां भाषितं च यत् । स्त्रियो यच्च प्रभाषंते तस्य नास्ति व्यतिक्रमः ॥ पूर्वं
चरति देवेषु पश्चाद्गच्छति मानुषान् । नाऽचोदिता वाग्वदति सत्या ह्येषा सरस्वती ॥ उत्पातान्गणितविवर्जितोऽपि बुध्वा विख्यातो
भवति नरेंद्रवल्लभश्च । एतत्तन्मुनिवचनं रहस्यमुक्तं यज्ज्ञात्वा भवति नरस्त्रिकालदर्शी ॥ इति नानोत्पातशांतयः ॥

॥ अथ मात्स्योक्ताद्भुतशांतयः । मदनरत्ने गर्गः । पुरुषापचारान्नियतमपरज्यंति देवताः । अपरागाच्च देवानामुपसर्गः प्रवर्तते ॥
दिव्यांतरिक्षं भौमं च त्रिविधं परिकीर्तितं ॥ ग्रहर्क्षवैकृतं दिव्यमांतरिक्षं निबोध मे ॥ उल्कापातो दिशां दाहः परिवेषस्तथैव च । गं-
धर्वनगरं चैव वृष्टिश्च विकृता तु या ॥ एवमादि तु लोकेऽस्मिन्नांतरिक्षं विनिर्दिशेत् । चरस्थिरभवं भौमं भूकंपाश्चैव भूमिजं ॥ जला-

शयानां वैकृत्यं भौमं च परिकीर्तितं । भौमे त्वल्पफलं ज्ञेयं चिरेण च विपच्यते ॥ अभ्रजं मध्यफलदं मध्यकालफलप्रदं । अभ्रजमांतरिक्षं । अद्भुते तु समुत्पन्ने यदि वृष्टिः शिवा भवेत् ॥ सप्ताहाभ्यंतरे ज्ञेयमद्भुतं निष्फलं हि तत् ॥ अद्भुतस्य विपाकश्च विना शांत्या न दृश्यते । त्रिभिर्वर्षैस्तथा ज्ञेयं सुमहद्भयकारकं ॥ राज्ञां शरीरे लोके च पुरे दारे गृहेषु च ॥ पाकमायाति पुत्रेषु तथा वै कोशवाहने ॥ ऋतुस्वभावाद्राजेंद्र भवंत्यद्भुतसंज्ञिताः । शुभावहास्ते विज्ञेयास्तांश्च मे वदतः शृणु ॥ वज्राशनिमहीकंप० विकाराः शिशिरे शुभाः ॥ ( एते श्लोकाः पूर्वमुक्ताः ) ऋतुस्वभावेन विनाद्भुतस्य जातस्य दुष्टस्य तु शीघ्रमेव । श्रुत्वागमं शांतिरनंतरं तु कार्या यथोक्ता वसुधाधिपेन ॥ ॥ अथ देवताप्रतिमावैकृतशांतिः । गर्गः । देवतार्चाः प्रनृत्यंति वेपंते प्रज्वलंति वा । आरटंति च रोदंति प्रस्विद्यंति हसंति च ॥ ( अर्च्यंत इत्यर्चाः प्रतिमा इत्यर्थः ) उत्तिष्ठंति निषीदंति प्रधावंति भ्रमंति च । भजंति विकृताश्चेष्टा मानुषाणां भयावहाः ॥ अवाङ्मुखा वा तिष्ठंति स्थानात्स्थानं भ्रमंति च । वमंत्यग्निं तथा धूमं स्नेहरक्ते तथा वसां ॥ एवमादीनि दृश्यंते विकाराः सहजोत्थिताः । लिंगायतनचित्रेषु तत्र वासं न रोचयेत् ॥ राज्ञो वा व्यसनं [च्यवनं] तत्र स च देशो विनश्यति । देवयात्रासु चोत्पातान्दृष्ट्वाऽवश्यं भयं वदेत् ॥ यात्रासूत्पाता यात्रासंबंधिनः शकटाक्षध्वजभंगादयः । पशूनां रुद्रजं ज्ञेयं नृपाणां लोकपालजं । रुद्रजं तत्प्रतिमोत्थं पशुभयदमित्यर्थः । एवं सर्वत्र । ज्ञेयं सेनापतीनां च यत्स्यात्स्कंदविशाखजं ॥ लोकानां विष्णुवस्विंद्रविश्वकर्मसमुद्भवं । विनायकोद्भवं ज्ञेयं गणानां सेवकस्य च ॥ देवदूते च याः प्रेष्या देवस्त्रीषु नृप स्त्रियः । वास्तुदेवेषु विज्ञेयं ग्रहाणामेव नान्यथा ॥ देवतार्चाविकारेषु शुचिः स्नातः [ श्रुतेष्वेव ] पुरोहितः । देवतार्चां तु गत्वा वै स्नातामाच्छाद्य भूषयेत् । पूजयेत्तां महाभाग गंधमाल्यादिसंपदा ॥ मधुपर्केण विधिवदुपतिष्ठेदनंतरं । तल्लिंगेन च मं-

त्रेण स्थालीपाकं यथाविधि ॥ पुरोधा जुहुयाद्वह्नौ सप्तरात्रमतंद्रितः । विप्राश्च पूज्या मधुरान्नपानैः सदक्षिणैः सप्तदिनं नरेंद्र । प्राप्तेऽष्टमेऽह्नि क्षितिगोप्रदानैः सकांचनैः शांतिमुपैति पापं ॥ ॥ अथाग्निवैकृते शांतिः । गर्गः । अग्निः प्रदीप्यते यत्र राष्ट्रे भृशमनिंधनः । न दीप्यते चेंधनवांस्तद्राष्ट्रं पीड्यते नृप ॥ ज्वलेदार्द्रश्च वंशो वा तथार्द्रान्नं मृदा सुधा । प्रासादतोरणद्वारनृपवेश्मसुरालयाः ॥ एतानि यत्र दह्यंते तत्र राजभयं वदेत् । विद्युता वा प्रदह्यंते तत्रापि नृपतेर्भयं ॥ अनैशानि तमांसि स्युर्विना पांसुरजांसि च । धूमश्चानग्निजो यत्र तत्र विद्यान्महाभयं ॥ तडिद्विनाभ्रं गगने भयं स्याद्वृष्टिवर्जिते । दिवा सतारे गगने तथैव भयमादिशेत् ॥ ग्रहनक्षत्रवैकृत्ये ताराविकृतिदर्शने । पुत्रवाहनदारेषु चतुष्पदगृहेषु च ॥ स्वभावाद्वापि हीयेत धेनुवत्सादिकं च यत् । लोहायुधविकारः स्यात्तत्र संग्राममादिशेत् ॥ त्रिरात्रोपोषितस्तत्र पुरोधाः सुसमाहितः ॥ समिद्भिः क्षीरवृक्षाणां सर्षपैश्च घृतेन च । होमं कुर्यादग्निमंत्रैर्ब्राह्मणांश्चैव भोजयेत् ॥ दद्यात्सुवर्णं च तथा द्विजेभ्यो गाश्चैव वस्त्राणि तथा भुवं च । एवं कृते तत्समुपैति नाशं यदग्निवैकृत्यभवं द्विजेंद्र ॥ ॥ अथ प्रयोगः । त्रिरात्रोपोषितः पुरोधाश्चतुर्थदिने आचमनादिदेशकालकीर्तनांते अस्मिन्प्रासादेऽग्निदाहसूचितसर्वानिष्टपरिहारद्वारा श्री॰सग्रहमखां गर्गोक्तां शांतिं करिष्ये । ( विद्युत्पाते तु विद्युत्पातजन्यभंगदाहादिसूचितेत्यूहः ) इति संकल्प्य गणेशपूजनं पुण्याहवाचनं च कृत्वा प्रादेशकरणांते स्थंडिलेऽग्निं वेद्यां ग्रहांश्च प्रतिष्ठाप्यान्वादध्यात् । ग्रहोत्कीर्तनांते अग्निं प्रधानदेवं क्षीरवृक्षसमित्सर्षपघृतैः प्रतिद्रव्यं षट्त्रिंशदधिकशतत्रयसंख्याभिराहुतिभिः । शेषेणेत्यादिग्रहादिहोमांते अग्निमीळइतिसूक्तस्थनवमंत्रैरुक्तद्रव्यैर्होमं कुर्यात् । तत्र सूक्तस्य द्वादशोत्तरशतमावृत्तयः कार्याः । ततः स्विष्टकृदादिप्रायश्चित्तहोमांते बलिदानपूर्णाहुती कृत्वा संस्रावहोमादिशेषं समाप्य दक्षिणाकाले ब्राह्मणेभ्यः सुवर्णं धेनुत्रयं

वस्त्रत्रयं भूमिं तत्स्थाने गोमूल्यं वा दत्वा ब्राह्मणान्भोजयित्वा भूयसीं दत्वाऽऽशिषो गृहीत्वा कर्म समापयेत् । इत्यग्निवैकृतशांतिप्रयोगः ॥

॥ अथ वृक्षोत्पातशांतिः । “ शां० सा० वृक्षोत्पाते छेदनमाह नारदः । अकाले पुष्पिता वृक्षा दृश्यंते फलिता यदि । कार्यं तच्छेदनं तत्र ततः शांतिर्मनीषिभिः ॥ ” गर्गः । पुरेषु येषु दृश्यंते पादपा दैवचोदिताः । रुदंतो वा हसंतो वा वमंतो वा रसान्भुवि ॥ अरोगो वा सरोगो वा नित्यमेव विचारयेत् । अरोगा वा विनावातं शाखां मुंचंति पादपाः ॥ फलं पुष्पं तथाऽकाले दर्शयंति च पादपाः । पूर्वावस्थां दर्शयंति फलं पुष्पमनार्तवे ॥ क्षीरं स्नेहं तथा रक्तं मधु तोयं स्रवंति वा । शुष्यंत्यरोगाः सहसा शुष्का रोहंति वा पुनः ॥ उत्तिष्ठंतीह पतिताः पतंति च तथोत्थिताः । तत्र वक्ष्यामि ते ब्रह्मन् विपाके फलमेव च ॥ रोदने व्याधिरभ्येति हसने देशविभ्रमः । शाखाप्रपतने कुर्यात्संग्रामं योधपातनं ॥ बालानां मरणं कुर्याद्बालानां फलपुष्पतः । स्वराष्ट्रभेदं कुरुते फलं पुष्पमनार्तवं ॥ क्षीरं सर्वत्र गंभीरं स्नेहं दुर्भिक्षलक्षणं । वाहनापचयं मद्ये रक्ते संग्राममादिशेत् ॥ मधुस्रावे भवेद्व्याधिर्जलस्रावे च वर्षति । अरोगशोषणं ज्ञेयं ब्रह्मन्दुर्भिक्षलक्षणं ॥ शुष्केषु संप्ररोहत्सु वीर्यमन्नं च हीयते । उत्थाने पतितानां च भयं खेदकरं भवेत् ॥ स्थानात् स्थाने तु गमने देशभंगं तथा दिशेत् । जल्पत्स्वपि च वृक्षेषु स्वनत्स्वपि धनक्षयं ॥ एतत्पूजितवृक्षेषु सर्वं राज्ञो विपच्यते । पुष्पैः फलैर्वा विकृते राज्ञो मृत्युं तथा दिशेत् ॥ अन्येषु चैव वृक्षेषु वृक्षोत्पातेष्वतंद्रितः । आच्छादयित्वा तं वृक्षं गंधमाल्यैर्विभूषयेत् ॥ वृक्षोपरि तथा छत्रं कुर्यात्पापप्रशांतये । केचित्तु वृक्षोत्पाते वृक्षच्छेदनमाहुस्तदेतद्विरोधाच्चिंत्यं । शिवमभ्यर्चयेद्देवं पशुं चास्मै निवेदयेत् । रुद्रेभ्य इति वृक्षेषु हुत्वा रुद्रं जपेत्ततः ॥ मध्वाज्ययुक्तेन तु पायसेन संपूज्य विप्रांश्च भुवं च दद्यात् । गीतेन नृत्येन तथाऽर्चयेत्तं देवं हरं पापविनाशहेतोः ॥

" शां. सा. अद्भुतसागरे औशनसे। अश्वत्थे पुष्पिते विप्राः क्षत्रियास्तु उदुंबरे। प्लक्षे वैश्यास्तु पीड्यंते न्यग्रोधे दस्यवस्तथा॥ कदंब इक्षुर्वंशोऽपि फुल्लितश्च कथंचन। वसंते पुष्पितो यत्र माणो जंबूर्धवस्तथा॥ शृंगबेरोऽथवा यत्र मासैः षड्भिर्जनक्षयः। कुसुमात्कुसुमोत्पत्तिः परचक्रागमं वदेत्॥ उदुंबराणां समिधो जुहुयादयुतं ततः। महाव्याहृतिभिर्विप्रं भोजयेद्वै सदक्षिणं ॥ कदलीगर्भमूर्धन्यः प्ररोहति गृहे यदि। अरण्यं स भवेद्देशो गर्गस्य वचनं यथा॥ सहिरण्यं वृषं दद्याद्द्विजायौदुंबरी समित्। इमारुद्रेतिमंत्रेण होतव्या च सहस्रधा॥ "

॥ अथ कदलीदुष्टप्रसवशांतिः। पाद्मे उमोवाच। प्रथमप्रसवो देव रंभायां दृश्यते यदा। दक्षिणाभिमुखो विद्वन् विदधाति फलं स हि। भूपाले कर्षके वाऽपि फलं कस्मिंस्तु जायते। श्रीमहादेव उवाच। यदा याम्यमुखा देवी कदली तु प्रसूयते। तदा ग्रामपतेर्नाशं विदधाति न संशयः॥ एवं विघ्ने समुत्पन्ने विधानं तत्र कारयेत्। सूतकीवोपचर्या सा कदली हितमिच्छता॥ दर्शे तु जागरं चैव होमः कार्यस्ततःपरं। कदलैर्हवनं कार्यमन्येभ्यः समुपाहृतैः॥ ( अन्येभ्यः कदलीवृक्षेभ्य इति शेषः ) सहस्रं प्रयतो वाग्मी जपन् शांतीरनेकशः। विष्णुस्तु देवता तत्र तल्लिंगो मंत्र उच्यते॥ विप्रेभ्यो विधिवद्दद्यात्सप्त धान्यानि संयतः। दद्यात्तां कदलीं राजा विप्रवर्याय धीमते॥ ( राजाऽत्र ग्रामपतिः ) दानमंत्रः। असुराणां कुलोत्पन्ना रंभा बहुफलान्विता। अतस्तव प्रदानेन संततिर्मेऽभिवर्धतां॥ एवं कृते विधाने च विघ्नशांतिस्तु जायते। पूजिते विप्रवर्ये च कर्ता सुखमवाप्नुयात्॥ ( क्वचित्तु विधानमालास्थत्वेन वचांसि। येनैव लापितो वृक्षः स तस्य फलमश्नुते। प्रसूता पूर्वदिग्भागे रंभा सौख्यविवर्धिनी॥ दक्षिणे चार्थनाशाय शोकसंतापकारणं। पश्चिमे चोद्दसं ग्रामं कौबेर्यां शुभदा सदा॥ आग्नेय्यादिविदिक्ष्वत्र मध्यमं फलमुच्यते। तस्य दोषस्य शांत्यर्थं कुर्याच्छांतिकमु-

त्तमं ॥ दुष्टप्रसूतां रंभां च पीतवस्त्रेण वेष्टयेत् । कंचुकीं कंठसूत्रं च विविधाभरणं तथा ॥ निवेद्य कदलीमूले ततस्तां परिपूजयेत् । तिलै-
श्चाज्येन दूर्वाभिर्हुनेदष्टोत्तरं शतं ॥ अतोदेवेतिसूक्तेन सूक्तावृत्तिस्तथैव च । दशदानानि वै दद्यादाचार्याय कुटुंबिने ॥ सर्वारिष्टप्रशांत्यर्थं
वित्तशाठ्यविवर्जितः । ततः सा कदली देया विप्रवर्याय धीमते ॥ दानमंत्रः पूर्वोक्त एव । ततस्तु विमले कांस्ये तिलतैलप्रपूरिते । विलोक्य
प्रतिबिंबं तु दद्याद्रजतसंयुतं ॥ विप्रानन्यांश्च संतोष्य दक्षिणादिभिरादरात् । एवं कृते विधाने तु विघ्नशांतिः प्रजायते ॥ पुत्रान्पौत्रान् श्रियं
चैव लभते नात्र संशयः ॥ ॥ अथ वृष्टिवैकृतशांतिः । गर्गः । अतिवृष्टिरनावृष्टिर्दुर्भिक्षायोभयं मतं । अनृतौ तु दिवानंता वृष्टिर्व्याधिभयाय तु ॥
अनभ्रवैकृताश्चैव विज्ञेया राजमृत्यवे । वैकृता गर्जितादयः । शीतोष्णानां विपर्यासे ऋतूनां रिपुजं भयं । शोणितं वर्षते यत्र तत्र शस्त्रभयं भवेत् ॥
अंगारपांसुवर्षेण नगरं तद्विनश्यति । मज्जाऽस्थिस्नेहमांसानां जनमारभयं भवेत् । फलं पुष्पं तथा धान्यं परेणातिभयाय तु । पांसुजंतूपलानां
च वर्षणे रोगजं भयं ॥ छिद्रे वाभिप्रवर्षेण सस्यानामीतिवर्धनं । विरजस्के रवौ व्यभ्रे यदा छाया न दृश्यते ॥ दृश्यते तु प्रतीपा वा
तत्र देशभयं भवेत् ॥ प्रतीपा विपरीता । निरभ्रे वा तथा रात्रौ श्वेतं याम्योत्तरेण तु । इंद्रायुधं तथा दृष्ट्वा उल्कापातं तथैव च ॥
दिग्दाहपरिवेषौ च गंधर्वनगरं तथा । परचक्रभयं विद्यादेशोपप्लवमेव च ॥ सूर्येंदुपर्जन्यसमीरणानां यागस्तु कार्यो विधिवद्द्विजेंद्र । धान्यानि
गोकांचनदक्षिणाश्च देया द्विजानामघनाशहेतोः ॥ ॥ अथ जलाशयवैकृतशांतिः । गर्गः । नगरादुपसर्पंते समीपमुपयांति च ॥ नद्यो ह्र-
दप्रस्रवणा विरसा वै भवंति वा ॥ विवर्णं कलुषं तप्तं फेनावर्तातिसंकुलं । क्षीरं स्नेहं सुरां रक्तं वहंते व्याकुलोदकं ॥ षण्मासाभ्यंतरे तत्र
परचक्रभयं विदुः । जलाशया नंदते वै प्रज्वलंति क्वथंति च । विमुंचंति तथा ब्रह्मन् ज्वालां धूमं रजांसि च ॥ अखाते वा जलो-

त्पत्तिः ससत्वा वा जलाशयाः । संगीतशब्दा दृश्यंते जनमारभयं विदुः ॥ दिव्यं महाभयं विद्धि मधुमात्रावसेचनं । जप्तव्या वारुणा मंत्रा-स्तैश्च होमो जले भवेत् ॥ मध्वाज्ययुक्तं परमान्नमत्र देयं द्विजानामथ भोजनार्थं । गावश्च देयाः सितवस्त्रयुक्तास्तथोदकुंभाः सकलाघशांत्यै ॥

॥ अथोपस्करवैकृतशांतिः । यांति यानान्ययुक्तानि युक्तान्यपि न यांति चेत् । चोद्यमानानि तत्र स्यान्महद्भयमुपस्थितं ॥ वाद्यमाना न वाद्यंते वाद्यंते वाऽप्यनाहताः । अचलाश्च चलंत्येव चलाश्चैव चलंति न ॥ आकाशे तूर्यनादश्च गीतगंधर्वनिःस्वनाः । काष्ठदर्वीकुठारादि विकारं कुरुते यदि ॥ गोवालं शूलसंघाश्च स्त्रियं स्त्री चाऽपि घातयेत् । उपस्करादिविकृते घोरं शस्त्रभयं भवेत् ॥ वायोश्च पूजां द्विज सक्तुभिश्च कृत्वा नियुक्तांश्च जपेच्च मंत्रान् । दद्यात्प्रभूतं परमान्नमत्र सदक्षिणं तेन शमोऽस्य भूयात् ॥

॥ अथ मृगपक्षिवैकृतशांतिः । गर्गः । प्रविशंति यदा ग्रामानारण्या मृगपक्षिणः । अरण्यं यांति वा ग्राम्याः स्थलं यांति जलोद्भवाः । स्थलजा वा जलं यांति घोरा वाशंति निर्भयाः । राजद्वारे पुरद्वारे शिवाश्चाप्यशिवप्रदाः ॥ दिवा रात्रिंचरा वाऽपि रात्रौ वाऽपि दिवाचराः ॥ ग्राम्यास्त्यजंति वा ग्रामं शून्यतां तस्य निर्दिशेत् ॥ दीप्तं वाशंति संध्यासु मंडलानि च कुर्वते । वाशंते विस्वरं यत्र तदाप्येतत्फलं भवेत् ॥ प्रदोषे कुररो [ कुक्कुटो ] वाशेद्धेमंते वापि कोकिलाः । अर्कोदयेऽर्काभिमुखी शिवा वाऽपि भयं दिशेत् ॥ भल्लूकः शब्दं कुर्वीत प्रविशन्नगराद्बहिः । गृहं कपोतः प्रविशेत्क्रव्यादो मूर्ध्नि वा पतेत् ॥ “ शां० सा० क्रव्यादो गृध्रकाकादिः ” मधु वा मक्षिका कुर्यान्मृत्युर्गृहपतेर्भवेत् । प्राकारद्वारगेहेषु तोरणापणवीथिषु ॥ केतुच्छत्रायुधाद्येषु क्रव्यादः संश्रयेद्यदि । जायते वाऽथ वल्मीको मधु वा दृश्यते यदि ॥ स्वदेशो नाशमायाति राजा वा म्रियते तदा । मूषिकाशलभा दृष्ट्वा प्रभूतं क्षुद्भयं वदेत् ॥ काष्ठोल्मुकास्थिशृंगास्याः श्वानो मरकवेदनाः ।

दुर्भिक्षवेदना ज्ञेया काका धान्यमुषो यदि ॥ जनानभिभवंतश्च निर्भयारण्यवेदनाः । काको मैथुनयुक्तश्च श्वेताभो यदि दृश्यते ॥ राजा वा म्रियते तत्र स देशो वा विनश्यति । उलूको वाशते यत्र निपतेद्वा तथा गृहे ॥ ( वाशते कुशब्दं करोति ) ज्ञेयो गृहपतेर्मृत्युर्धननाशस्तथैव च । मृगपक्षिविकारेषु कुर्याद्धोमं सदक्षिणं । देवाःकपोतइति च जप्तव्यं पंचभिर्द्विजैः । सुदेवइति चैकेन देया गावश्च दक्षिणाः ॥ जपेच्छकुंतसूक्तं च मनोवेदशिरांसि च । एते मंत्रा ऋग्वेदे प्रसिद्धाः । गावश्च देया विधिवद् द्विजानां सकांचना वस्त्रयुगोत्तरीयाः । एवं कृते शांतिमुपैति पापं मृगैर्द्विजैर्वापि निवेदितं यत् ( मृगाः पशवः । द्विजाः पक्षिणः ) ॥ ॥ अथ प्रासादादिवैकृतशांतिः । गर्गः । प्रासादतोरणाट्टालद्वारप्राकारवेश्मनां । अनिमित्तं तु पतनं दृढानां राजमृत्यवे ॥ रजसा वाऽथ धूमेन दिशो यत्र समाकुलाः । आदित्यश्चंद्रताराश्च विवर्णा भयवृद्धये ॥ राक्षसा यत्र दृश्यंते ब्राह्मणाश्च विधर्मिणः । ऋतवश्च विपर्यस्ता अपूज्यं पूजयेज्जनः ॥ नक्षत्राणि वियोगीनि तन्महद्भयलक्षणं । केतूदयोपरागौ च छिद्रं वा शशिसूर्ययोः । ग्रहर्क्षविकृतिर्यत्र तत्रापि भयमादिशेत् ॥ स्त्रियश्च कलहायंते बाला निघ्नंति बालकान् । क्रियाणामुचिताना च विच्छित्तिर्यत्र दृश्यते ॥ अग्निर्यत्र न दृश्येत हूयमानोऽथ शाम्यति । क्रव्यादा वायसा वाहा यांति चोत्तरतस्तथा ॥ पूर्णाः कुंभाः स्रवंते च वह्नयो वा विलुंपते । मांगल्यध्वनयो यत्र न श्रूयंते समंततः ॥ क्षवथुर्बाधते वाथ प्रोत्साहे सति नर्दितः । न दैवतेषु वर्तेते यथावद्ब्राह्मणेषु च ॥ मंदघोषाणि वाद्यानि वाद्यंते विस्वराणि वा । गुरुमित्रद्रुहो यत्र शत्रुपूजारता जनाः ॥ ब्राह्मणाः सुहृदो मान्या जनैर्यत्रावमन्यते । शांतिमंगलहोमेषु नास्तिक्यं यत्र मन्यते ॥ राजा वा म्रियते तत्राथवा देशो विनश्यति । राज्ञो विनाशे संप्राप्ते निमित्तानि निबोध मे ॥ ब्राह्मणान्प्रथमं द्वेष्टि ब्राह्मणांश्च विनिंदति । ब्राह्मणस्वानि चादत्ते ब्राह्मणांश्च जिघांसति ॥ नैता-

न्स्मरति कृत्येषु याचितश्चाभ्यसूयति । रमते निंदया चैषां प्रशंसां नाभिनंदति ॥ अपूर्वं तु करं लोभात्तथा पातयते जने । एतेष्वभ्यर्चयेत्स-
म्यक् सपत्नीकान् द्विजोत्तमान् ॥ भोज्यानि चैव कार्याणि सुराणां बलयस्तथा । गावश्च देया द्विजपुंगवेभ्यो भुवं तथा कांचनमंबराणि ।
होमश्च कार्यो द्विजपूजनं च एवं कृते शांतिमुपैति पापं ॥ अद्भुते तु समुत्पन्ने यदि वृष्टिः प्रजायते । सप्ताहाभ्यंतरे ज्ञेयमद्भुतं निष्फलं
हि तत् ॥ इति मात्स्योक्ताद्भुतशांतयः ॥ ॥ अथ नानोत्पातशांतिः । मदनरत्ने गर्गः । औत्पातिकीं महाशांतिं तत्वतः शृणु मेऽधुना
। यत्र व्याधिरनावृष्टिः परचक्रमुपस्थितं ॥ दुर्भिक्षं जनमारो वा राज्ञो मरणमेव वा । तत्र शांतिक्रमः प्रोक्तो महाक्रतुमिहार-
भेत् ॥ पुनर्होमश्च कर्तव्यो बृहस्पतिमतं यथा । गावस्तथैव दातव्यास्तथैवायुर्विवृद्धये ॥ राज्ञोऽभिषेकं कुर्वीत तथैव च स-
ऋत्विजः । त्रिरात्रं सप्तरात्रं वा उपोष्य च पुरोहितः ॥ औदुंबरीणां विधिवत्समिधां च शतं दहेत् । ब्राह्मणान्भोजयेत्तत्र हुतांते भूरिद-
क्षिणा ॥ यवानां होमयेद् द्रोणान् घृताक्तानां दशैव च । द्विजे घृताढकं दद्याद्यवद्रोणं ससेतिकं ॥ राज्ञः कुले प्रधाने वा घृतद्रोणं वि-
धीयते । वृषभैकादशा गाश्च विप्रेभ्यः प्रतिपादयेत् ॥ कुले यस्य न रोहंति पुत्रा दुहितरस्तथा । सर्वजीवोपसर्गश्च तत्र कर्म प्रयोजयेत् ॥
साविव्या कारयेत्कर्म ततः पापं प्रशाम्यति । अत्युष्णमतिशीतं च अतिवर्षमनूदकं ॥ अनार्तवं पुष्पफलमतिमात्रं च मारुतः । वाहनानां मृ-
तिश्चैव अतिमात्रंच मूषकाः ॥ आरण्यमृगसंघानामथवा पुरसेविनां । यद्वाप्यौत्पातिकं किंचिच्छ्वेतपक्षाश्च वायसाः ॥ भैरवं चातिमात्रं च
रुदंति मृगपक्षिणः । विद्युत्स्तनितनिर्घोषमनभ्रे चातिवर्षणं ॥ सिंहव्याघ्रतरक्षूणां दर्शनं च चतुष्पथे । ईदृशैर्लक्षणोत्पातैर्विनाशमभिलक्षयेत् ॥ अ-
न्योऽत्र जायते राजा तथा चान्यः पुरोहितः । तत्र शांतिं प्रवक्ष्यामि पापप्रशमनीं शुभां ॥ औदुंबरीणां समिधां शतमष्टोत्तरं दहेत् । स-

ह क्षीरघृताक्तानां महामंत्रगणैः शुभैः ॥ हुत्वा शतसहस्रं तु परां शांतिमवाप्नुयात् । यंत्रं वा मुसलं वापि स्फुटते वाप्युलूखलं ॥ ( यंत्रं द-
लनयंत्रं ) भूतानां चैव बिभ्येत गृहे देवकुले तथा । दृषद्वा भद्रपीठं वा आसनं शयनं तथा ॥ अकस्मात्स्फुटते यत्र कंपते वा वसुं-
धरा । तथा युक्तमयुक्तं वा यानं युग्मं प्रधावति ॥ अचलं चलते यत्र विवादश्चैव मंत्रिणां । अयुक्तं ब्राह्मणैः सार्धं विवदंते तथा भृशं ॥
ईदृशेषु निमित्तेषु महाभयमुदाहरेत् । श्रेष्ठिनां सार्थवाहानाममात्यानां भयं वदेत् ॥ महाजनविवादांश्च मंत्रिणां च विनिर्दिशेत् । तत्र शां-
तिं प्रवक्ष्यामि प्राजापत्येति विश्रुतां ॥ अश्वत्थसमिधो हुत्वा घृताक्ता मधुसंयुताः । सावित्र्यष्टसहस्रेण प्राजापत्यांस्तु मंत्रयेत् ॥ पायसं भो-
जयेद्विप्रान् भुक्तांते भूरिदक्षिणाः । ततः प्रशाम्यते पापं प्रजापतिमतं यथा ॥ यमलानि च जायंतेऽशुभानि निजवाहनाः । मुंडवक्रमुखाश्चैव कुब्जाश्च
कुणयस्तथा ॥ अमानुषा मानुषाणां गजानां मृगपक्षिणां । जायंत ऊर्ध्वदंता वा अश्वाश्च विकृताननाः ॥ बहुशीर्षमशीर्षं वा बहुवर्णमवर्ण-
कं । एकशृंगमशृंगं वा चतुर्भुजमथाऽभुजं ॥ दीर्घकर्णमकर्णं वा अजकर्णमुखं तथा । व्यालव्याघ्रमुखाकारं बिडालमुखमुन्नतं ॥ ईदृशानि विरूपाणि
दृश्यंते यत्र गौतम । तत्र संग्रामतो ब्रूयाद्भयं क्षयकरं महत् ॥ जनक्षयं च पौराणां राज्ञः श्रेणिवधं तथा । तत्र शांतिं प्रवक्ष्यामि सर्वपापप्रणाशिनीं ॥
खदिराश्वत्थसामिधां सहस्राष्टोत्तरं दहेत् । विरूपाक्षेण मंत्रेण विधिवत्सुसमाहितः ॥ विरूपाक्षेण अग्निर्मूर्धेत्यादिना । तत्र हि विरूपाक्ष ऋषिः ।
दद्याच्च कपिलां धेनुं हुतांते शांतिमिच्छता । ततस्तच्छाम्यते पापं जातवेदोवचो यथा ॥ तथाऽकार्याणि जायंते अदंड्ये दंडपातनं । अपूज्या-
श्चैव पूज्यंते मान्यश्चैवावमन्यते ॥ अनड्वांश्च पिबेद्धेनुं धेनुश्चानडुहं पिबेत् । विधुनोतिच गां वत्सः प्रजातं नाभिनंदाति ॥ प्रजातं वत्सं-
गौरिति शेषः । मैथुनं विपरीतं च अकाले मृगपक्षिणां । ब्राह्मणा भिन्नमर्यादा न तिष्ठंति स्वकर्मसु ॥ ईदृशैर्लक्षणोत्पातैर्विद्यादेशस्य विभ्रमं ।

कलहं जायते घोरं दुर्भिक्षं जनमारकं ॥ राजामात्यविनाशं च पौराणां च महद्भयं । तत्र शांतिं प्रवक्ष्यामि सर्वपापप्रणाशिनीं ॥ प्रज्वाल्याश्वत्थसमिधां कृत्वा संस्तरणं महत् । औदुंबरीणां समिधां सहस्राष्टोत्तरं बुधः ॥ जुहुयाद्विधिवद्वह्नौ परां शांतिमुपादधत् । दासीदाससमायुक्तं गृहं दद्याद् द्विजातये ॥ ततः प्रशाम्यते पापं गौतमस्य वचो यथा । कृष्णाः पिपीलिका यत्र ग्रामेषु नगरेषु च ॥ दृश्यंते ह्यतिमात्रं चेदूर्ध्ववंशकृतालयाः । शांतेर्गृहे देवगृहे तथा च नृपतेर्गृहे ॥ उपर्युपरिमात्रं तु दृश्यंते वेश्मवत्तदा । मक्षिका मशका दंशा अतिमात्रं भयावहाः ॥ ईदृशैर्लक्षणोत्पातैर्महाचोरभयं भवेत् । द्रव्याणां हरणं ब्रूयात्परचक्रस्य चागमं ॥ तत्र शांतिं प्रवक्ष्यामि विश्वामित्रोपदर्शितां । अश्वत्थसमिधां चैव हुत्वा चाष्टोत्तरं शतं ॥ पूर्णपात्राणि वै दद्याद्धुतांते भूरिदक्षिणां । सर्वोपस्करसंयुक्तं गृहं दद्याद् द्विजातये ॥ तिलपात्रं प्रदातव्यं तिलान्जुहुीत संयतः । अनाग्निर्ज्वलते यत्र अधूमे धूमदर्शनं ॥ बालैः सह कुमाराश्च कलहं यत्र कुर्वते । गवाद्यानां भवेन्नित्यं तथा घोषनिवासिनां ॥ श्रेष्ठिनां सार्थवाहानां कलहो यत्र जायते । राजामात्यविनाशं च पौराणां च महद्भयं ॥ तत्र शांतिं प्रवक्ष्यामि पितामहवचो यथा । पलाशसमिधामग्नौ सहस्राष्टोत्तरं दहेत् ॥ ब्राह्मणान्भोजयेत्तत्र परमान्नं घृताप्लुतं । ततस्तु शाम्यते पापं पितामहवचो यथा । प्राकारे नगरे रम्ये गोपुराट्टालकेषु च । रथ्याचतुष्पथे चैव देवतायतनेषु च ॥ निवासं यत्र कुर्वंति बकाः काकाश्च कौशिकाः । गृध्राः परभृताश्चैव आरण्या मृगपक्षिणः ॥ निरूहेत्कलहं घोरं सिद्धानां वचनं यथा । निरूहेत्तर्कयेत् । तत्र शांतिं प्रवक्ष्यामि नारदेनोपलक्षितां ॥ अश्वत्थसमिधानां तु घृताक्तानां विभावसौ ।वायव्येनेह मंत्रेण निवेद्यं च सुशोणितं ॥ ततस्तु शाम्यते पापं नारदस्य वचो यथा। मृतः श्मशानं यो नीतः पुनर्जीवति मानवः ॥ गृहे यस्य प्रविष्टोऽसौ तिष्ठेदथ कदाचन । अचिरान्मृत्युमायाति त्वतदारपरिग्रहः ॥ तत्र शांतिं

प्रवक्ष्यामि धर्मराजमतं यथा । सक्षीराणां घृताक्तानामग्नेर्हुत्वा मुखे बुधः ॥ औदुंबरीणां विधिवत्ततः शांतिः कृता भवेत् । सावित्र्याष्टसहस्रेण
क्षीरशांतिं च कारयेत् ॥ क्षीरशांतिश्च रक्तानामेकवर्णानामित्यादिना वक्ष्यते । कपिलां तिलकांस्यं च हुतांते भूरिदक्षिणां । ततस्तच्छाम्यते
पापं धर्मराजमतं यथा ॥ श्वा शृगालोऽथवा गृध्रः काको वा यदि मानुषं । श्मशानान्मांसमादाय पुरमध्ये प्रवेशयेत् ॥ नगरं पत्तनं
वापि ग्रामं वा यदि वा गृहं । अचिरेणैव कालेन तच्छ्मशानं भविष्यति ॥ चौरमंडलपातं तु परचक्रस्य चागमं । अनारोग्यमनावृष्टि-
र्दुर्भिक्षं जनमारकं ॥ संग्रामं शस्त्रसंपातं क्षिप्रमेव विनिर्दिशेत् । अश्वत्थसमिधो गृह्य तिलांश्च मधुसंयुतान् ॥ विरूपाक्षेण मंत्रेण विरू-
पाक्षान्सुशोभितान् । तिलपात्रोपहारं च क्षीरशांतिं च कारयेत् ॥ ततश्च शाम्यते पापं प्रजापतिमतं यथा । सौत्रामणिः पाकयज्ञः पशुबंध-
स्तथैव च ॥ ऋतवश्च प्रवर्तंते अनधीत्यकृतोदयाः । यस्मिंस्तथा प्रवर्तंते क्रोधलोभभयादपि ॥ अदत्वा दक्षिणां सम्यङ् महदुत्पातलक्षणं । अ-
नारोग्यमनावृष्टिर्दुर्भिक्षं जनमारकं ॥ ज्वरः कासस्तथा श्वासः कच्छूर्दद्रुर्विकोष्ठिकाः । शिरोरोगाक्षिरोगाश्च पांडुरोगो गलग्रहः ॥ आधय-
श्च प्रवर्तंते दुर्दुष्टैः स्वप्नलक्षणैः । तत्र शांतिं प्रवक्ष्यामि बृहस्पतिमतं यथा ॥ त्रिरात्रोपोषितो भूत्वा हविष्याशी पुरोहितः । सक्षीराणां घृताक्ता-
नां समिधां च शतं दहेत् । पलाशस्येत्यर्थः । ततस्तच्छाम्यते पापं बृहस्पतिमतं यथा । वज्रमिंद्राशनिर्वापि ज्वलन्वै निपतेदिह ॥ पुरे जनपदे
वाऽपि तत्र विद्यान्महाभयं । संवत्सरे ततो घोरं विद्याद्भूतजनक्षयं ॥ राजामात्यविनाशं च निर्दिशेन्नात्र संशयः । तत्र शांतिं प्रवक्ष्यामि इं-
द्राग्निवचनं यथा ॥ अपामार्गस्य समिधां सहस्राष्टोत्तरं दहेत् । पायसं भोजयेद्विप्रान् क्षीरशांतिं च कारयेत् ॥ रक्तानामेकवर्णानां गवां
क्षीरं समादिशेत् । हुत्वाहुतिशतं विप्रो माहेंद्रेणैव मंत्रवित् ॥ सुवर्णमणिसंकाशा हुतांते भूरिदक्षिणा । ततस्तच्छाम्यते पापमिंद्राग्निवचनं

यथा ॥ प्रतिस्रोतो महानद्यः प्रवहंति जलाशयाः । उन्मार्गपथगामीनि जलान्यपहरंति च ॥ उद्गिरंति जलं भूमौ पुष्करिण्यो जलाशयाः । कुमुदोत्पलपुष्पाणां नद्याः स्रोतसि संभवः ॥ संदर्शनं सत्तर्षीणां नागानां जलशायिनां । चैत्यवृक्षा महोल्काश्च शुष्यंति च पतंति च ॥ पूयशोणितगंधाश्च कुणपानां सुगंधिता । कृमिशोणितवर्षं च छिन्नभिन्नप्ररोहिता ॥ ईदृशानि निमित्तानि संति यत्रैव गौतम । परचक्रागमं विद्यात्सर्वलोकभयावहं ॥ राजामात्यभयं ब्रूयात्पौराणां च महद्भयं । औदुंबरीणां विधिवत्समिधां वै समाहितः ॥ सहस्राष्टोत्तरं कुर्यादैंद्राग्नेन च मंत्रावित् । रुद्रजापश्च कर्तव्यो वायव्यश्च समंततः ॥ देवालयेषु सर्वेषु नानावादित्रनिस्वनैः । सोदकाक्षतपत्रैश्च ब्राह्मणान्स्वस्ति वाचयेत् ॥ द्विजातीनां गोसहस्रं हुतांते भूरिदक्षिणा । उत्पाता ह्यनिमित्तास्तु ये केचिद्भयदारुणाः ॥ गोप्रदानेन शाम्यंति प्रजापतिमतं यथा । व्रतोपवासनियमैर्होमैर्ब्राह्मणपतर्पणैः ॥ दिव्योत्पाते समुत्पन्ने माहेंद्रं साधयेच्चरुं । वारुणं चांतरिक्षे तु आग्नेयं पार्थिवे तथा ॥ तथा संग्रामकालेऽपि प्रहाराणां निवृत्तये । एवमित्यादिकं लोके दिव्यभौमांतरिक्षगं ॥ व्रतोपवासैर्नियमैः शांतिभिश्च प्रशाम्यति । देवता यत्र पूज्यंते सांवत्सरपुरोहितौ ॥ गुरवो ग्रहनक्षत्रं तदाहुः शुभलक्षणं । तत्र देवीपुराणे । अपचारेण लोकानामुपकाराद्दुरात्मनां । अपरक्ता विनाशाय सृजंते देवता मुने ॥ उत्पातान्विविधाकारान्दिव्यभौमांतरिक्षजान् । स प्राचीं दिशमन्वावर्ततेऽथ यदाऽस्य मणिककुंभस्थालीदरणं यानच्छत्रशय्यासनावसथध्वजपताकागृहैकदेशप्रभंजनेषु गजवाजिमुख्याः प्रमीयंत इत्येवमादीनि तानि सर्वाणींद्रदेवत्यान्यद्भुतानि प्रायश्चित्तानि भवंतींद्रंवोविश्वतस्परीति स्थालीपाकमष्टशतं हुत्वा पंचभिराज्याहुतीरभिजुहोतींद्रायस्वाहा शचीपतयेस्वाहा वज्रपाणयेस्वाहेश्वरायस्वाहा सर्वपापप्रशमनायस्वाहेति व्याहृतिभिश्च पृथग्जुहोति । स दक्षिणां दिशमन्वावर्ततेऽथ यदाऽस्य प्रजायां पशुषु शरीरे वाऽरिष्टानि प्रादुर्भ-

वंति व्याधयो वाऽनेकविधा अतिस्वप्नदुःस्वप्नमतिभोजनमभोजनमालस्याजीर्णानि गृहद्वारेण वा सर्पो गच्छति कपोतः प्रविशति शरीरे वाऽऽरोहति कृष्णा स्त्री अदर्शनमादर्शे इत्येवमादीनि तानि सर्वाणि यमदेवत्यानि भवंति नाकेसुपर्णमिति स्थालीपाकं हुत्वा पंचभिराज्याहुतीरभिजुहोति यमायस्वाहा प्रेताधिपतयेस्वाहा दंडपाणयेस्वाहेश्वरायस्वाहा सर्वपापप्रशमनायस्वाहेति व्याहृतिभिश्च पृथग्जुहोति । स प्रतीचीं दिशमन्वावर्ततेऽथ यदाऽस्य क्षेत्रगृहसंस्थेषु धान्येष्वीतयः प्रादुर्भवंत्युपद्रवा अनेकविधा आखुपतंगपिपीलिकामध्वकभौमकशुकशरभसौक्ष्मकमित्येवमादीनि तान्येतानि सर्वाणि वरुणदेवत्यानि भवंति घृतवतीइति वरुणस्योत्तंभनमसीति स्थालीपाकं हुत्वा पंचभिराज्याहुतीरभिजुहोति वरुणायस्वाहाऽपांपतयेस्वाहा पाशपाणयेस्वाहेश्वरायस्वाहा सर्वपापप्रशमनायस्वाहेति व्याहृतिभिश्च पृथग्जुहोति । स उदीचीं दिशमन्वावर्ततेऽथ यदाऽस्य कनकरजतवस्त्रवैदूर्यमुक्तामणिवियोगो भवत्यारंभा वा विपद्यंते मित्राणि वा विरज्यंते वेश्मनि मधून्यलाबूनि वा जायंते वल्मीकाश्चोच्चीयंते शुष्कवृक्षाः प्ररोहंति तैलं स्त्यायति रात्राविंद्रधनुर्दृष्ट्वा दिवा च श्वेतं वायसं श्मशानेऽनग्नौ धूमो जायतेऽश्वतरी गर्भं गृह्णात्येवमादीनि वैश्रवणदेवत्यान्यद्भुतानि भवंत्यभित्यंदेवमिति स्थालीपाकं हुत्वा पंचभिराज्याहुतीरभिजुहोति वैश्रवणायस्वाहा यक्षाधिपतये० हिरण्यपाणये० ईश्वराय० सर्वपापप्रशमनायस्वाहेति व्याहृतिभिश्च पृथग्जुहोति । स पृथिवीमन्वावर्ततेऽथ यदाऽस्य पृथिवी स्फुटति स्खलति चलति कंपति ज्वलति रुदति धूमायत्यकस्मात्सलिलमुद्गिरति प्लवति मज्जति निमग्नमुत्प्लवत्यकाले पुष्पफलानीत्येवमादीन्यग्निदेवत्यानि भवंत्यग्निंदूतामिति स्थालीपाकं हुत्वा पंचभिराज्यं जुहोत्यग्नयेस्वाहाऽर्चिष्मते० शक्तिपाणये० ईश्वरायस्वाहा सर्वपापहरायस्वाहेति व्याहृतिभिश्च पृथग्जुहोति । सोंऽतरिक्षमन्वावर्ततेऽथ यदाऽस्य विवाता

वाता वायंतेऽभ्रेषु चापरूपाणि दृश्यंते खरकरभगृध्रकंककपोतोलूकश्येनभासवायसगोमायुसंस्थान्युपरिपांसुमांसपेश्यस्थिरुधिरवर्षाणि प्रवर्तंते काकमिथुनानि दृश्यंते रात्रौ मणिधनुः पश्येच्छशका ग्रामं विशंति वृक्षाः स्रवंति रुधिराण्याकाशे नगरमेवमादीनि वायुदेवत्यानि भवंति वातआवात्विति स्थालीपाकं हुत्वा पंचभिराज्याहुतीर्जुहोति वायवेस्वाहा महद्भूताधिपतयेस्वाहा शीघ्रपाणये॰ ईश्वराय॰ सर्वपापहरायस्वाहेति व्याहृतिभिर्हुत्वाऽथ साम गायेत् । स दिवमन्वावर्ततेऽथ यदास्य तारावर्षाणि चोल्काः पतंति धूमायंति दिशो दह्यंति केतवश्चोत्तिष्ठंति गवां शृंगेषु धूमो जायते गवां स्तनेषु रुधिरं स्रवत्यत्यर्थं हिमं निपततीत्येवमादीनि सोमदेवत्यान्यद्भुतानि भवंति सोमंराजानमिति स्थालीपाकं हुत्वा पंचभिराज्यं जुहोति सोमायस्वाहा नक्षत्रपतयेस्वाहा शीतपाणये॰ ईश्वरायस्वाहा सर्वपापहरायस्वाहेति व्याहृतिभिश्च पृथग्जुहोति । स परं दिवमन्वावर्तते देवतायतनानि कंपंते देवताप्रतिमा हसंते नृत्यंति रुदंति गायंति स्फुटंति स्विद्यंत्युन्मीलंति निमीलंति प्रतियांति नद्यः कबंधमादित्ये दृश्यते जलं च परितप्यते केतुपताकाछत्रवज्रविषाणानि प्रज्वलंत्यश्वानां वालधिष्वंगाराः क्षरंत्यहतानि मर्माणि क्रंदंत इत्येवमादीनि विष्णुदेवत्यानि भवंतीदंविष्णुरिति स्थालीपाकं हुत्वा पंचभिराज्याहुतीर्जुहोति विष्णवेस्वाहा सर्वभूताधिपतये॰ चक्रपाणये॰ ईश्वराय॰ सर्वपापहरायस्वाहेति व्याहृतिभिर्हुत्वाऽथ साम गायेत् । खननाद्दहनादभिमर्शनाद्गोभिराक्रमणाच्च चतुर्भिः शुध्यते भूमिः पंचमाच्चोपलेपनात्संभारान्प्रदक्षिणमानीय ब्राह्मणान्स्वस्ति वाच्य संभारैर्यदुपसृष्टं तदभ्युक्षेच्छाम्यतीह ब्राह्मणभोजनं हिरण्यं गौर्वासोऽश्वो भूमिर्दक्षिणेति । सोऽधस्तादिशमन्वावर्ततेऽथ यदाऽस्य गवां मानुषमहिष्यजाश्वोष्ट्राः प्रसूयंते हीनांगान्यतिरिक्तांगानि विकृतरूपाणि वा जायंतेऽचलानि चलंत्येवमादीनि रुद्रदेवत्यानि भवंत्यावोराजानमिति स्थालीपाकं हुत्वा पंचभिराज्या-

हुतीर्जुहोति रुद्रायस्वाहा पशुपतये० शूलपाणये० ईश्वराय० सर्वपापहरायस्वाहेति व्याहृतिभिर्हुत्वाऽथ साम गायेत् । स ऊर्ध्वां दिशमन्वावर्ततेथ यदाऽस्य मानुषाणामतिदुःखं पर्वताः स्फुटंति निपतंत्याकाशाद्भूमिः कंपते महाद्रुमा उन्मीलंत्यश्मानः प्लवंते चतुष्पादं पंचपादं भवत्येवमादीनि सूर्यदेवत्यानि भवंत्युदुत्यमिति स्थालीपाकं हुत्वा पंचभिराज्याहुतीर्जुहोति सूर्यायस्वाहा सर्वग्रहाधिपतये० किरणपाणये० ईश्वराय० सर्वपापहरायस्वाहेति व्याहृतिभिर्हुत्वाऽथ साम गायेत् । स सर्वा दिशोऽन्वावर्ततेऽथ यदाऽस्य स्त्रियो यमलानि प्रसूयंते श्वेतकाकः काकमैथुनं च दृश्यत उत्पाताश्च सर्वत्र दिशां दाहाश्च जायंते पिशाचराक्षसगोऽजाविपुच्छेष्वग्निश्चोद्भवति पशुषु मानुषो भवति मानुषेषु सर्वाणि सत्वानि पशवो जायंते वाङ्मनःकर्मभिर्वा रुद्रं द्वेष्टि स्त्रीपुंसयोः पौंश्चल्यभावः सर्वपापेषु बुद्धिरित्येवमादीनि रुद्रदेवत्यानि भवंति विश्वतश्चक्षुरिति स्थालीपाकं हुत्वा पंचभिराज्याहुतीर्जुहोति रुद्रायस्वाहोमापतये० शूलपाणये० ईश्वराय० सर्वपाप० व्याहृतिभिः पृथग्जुहोति । भूमिकंपो दिशां दाहो ग्रहयुद्धं तु जायते । गगने दृश्यते केतुरादित्यश्चैव कंपते ॥ आदित्ये दृश्यते छिद्रं कृष्णवर्णोऽभिजायते । विपरीता नदी चैव रुधिरं च प्रवाहयेत् ॥ गगनाच्छ्रूयते गीतं निर्घोषश्चैव जायते । एवमादीनि सर्वाण्यद्भुतानि प्रायश्चित्तानि भवंति । गृहे गृहे भवेच्छांतिर्मातॄणां पूजनं बलिः । दानं रुद्रजपो नित्यं भास्करेज्या ग्रहार्चनं ॥ लक्षहोमं कोटिहोमं दूर्वाहोमं पुरोदितं । गोभूहिरण्यवस्त्रान्नतिलदानं शुभावहं ॥ पायसं दधि क्षीराज्यं देयं विप्रेषु भोजनं ॥ अथ पूर्वाहुतीर्हुत्वा दूर्वादर्भशमीवीरणान् दधिसर्पिःसर्षपान् फलिनीरपामार्गतिलयवव्रीहयः समिधश्चैतान्याहरेत्स्नातः स्थंडिलमुपलिप्य तंत्रेणौदनं कृसरं यवान् सक्तुपायसं दधिमधुघृताक्ताः पृथक्चरवः सर्वेषां पायसमग्निं समाधाय जुहुयादिंद्रंविश्वाअवीवृधन्० नाकेसुपर्ण० वरुणस्योत्तंभनमसि० अभित्यंदेवंसवि-

तार० अग्निंदूतंवृणीमहे० इदंविष्णुर्विचक्रमे० विश्वतश्चक्षु० गौरीर्मिमाय० कांडात्कांडात्० ध्रुवासिध्रुवोयं० योजिनातिनजीयते० इहैव-स्तंमावियौष्टं० पुनःपत्नीमग्निरदादायुषासहवर्चसा । दीर्घायुरस्यायःपतिर्जीवातिशरदःशतमिति ॥ इति नानोत्पातशांतिः ॥ ॥ अथ दीपपतनादिशांतिः संगृह्यते । बह्वृचगृह्यपरिशिष्टे । " स उदीचीं दिशमन्वावर्ततेऽथ यदाऽस्य धनकनकरजतवस्त्रवैदूर्यवज्रमणिमौक्तिकवियोगो भवत्यारंभा वा विपद्यंते भार्या वा विरज्यते मित्राणि वा विरज्यंते काकमैथुनं वा पश्येदरिष्टानि वा वयांसि च गृहमध्य आसते मधूनि वा निलियंते वल्मीकं छत्राकं वोपजायते वायसकपोताः प्रविशंति वन्यविहंगशशमृगप्रवेशे गौर्मृगो वा गृहमारोहेच्छुष्कवृक्षः प्ररोहेद् गृहमध्ये दूर्वाः प्ररोहंति तैलं स्त्यायति रात्राविंद्रधनुर्दृष्ट्वा दिवा श्वेतं च वायसं गृहद्वारेण सर्पो निर्गच्छति मंडूकोऽग्निं प्रविशति सरटो मूर्ध्नि पतति प्रज्वलन्दीपः पतति चुंबलिनी पततीत्येवमादीनि तान्येतानि सर्वाणि वैश्रवणदेवत्यान्यद्भुतानि प्रायश्चित्तानि भवंत्यभित्यंदेवंसवितारमोण्योरिति स्थालीपाकमष्टशतं हुत्वा पंचभिराज्याहुतिभिरभिजुहोति । वैश्रवणायस्वाहा यक्षाधिपतयेस्वाहा हिरण्यपाणयेस्वाहेश्वरायस्वाहा सर्वोत्पातशमनायस्वाहेति महाव्याहृतिभिश्च हुत्वा शंतातीयं जपेत् " इति दीपपतनादिशांतिः ॥ ॥ अथ प्रयोगः । कर्ता शुभकाले आचमनादिदेशकालस्मरणांते मम सपरिवारस्य प्रज्वलद्दीपपतनसूचितसकलानिष्टपरिहारद्वारा श्री० सग्रहमखां परिशिष्टोक्तां शांतिं करिष्य इति संकल्प्य गणेशपूजनाद्याचार्यवरणांतं कुर्यात् ( अत्र ग्रहयज्ञ आचार्यवरणं च कृताकृतं ) तत आचार्यः प्रादेशकरणांते स्थंडिलात्प्राच्यां कलशादौ सौवर्णप्रतिमायां अभित्यं वामदेवो वैश्रवणोऽधिः । वैश्रवणावा० । इति वैश्रवणमावाह्य पूजयेत् । ततोग्निं ग्रहांश्च प्रतिष्ठाप्यान्वादध्यात् । ग्रहादिकीर्तनांते वैश्रवणं प्रधानदेवं चरुणा अष्टोत्तरशतसंख्याभिराहुतिभिः । वैश्रवणं १ यक्षा-

धिपतिं २ हिरण्यपाणिं ३ ईश्वरं ४ सर्वोत्पातशमनं ५ अग्निं पृथिवीं महांतं ६ वायुमंतरिक्षं महांतं ७ आदित्यं दिवं महांतं ८ प्रजापतिं चंद्रमसं नक्षत्राणि दिशो महांतं ९ चैता देवता आज्येन । शेषेणेत्यादिप्रणीतास्थापनांते तूष्णीमष्टोत्तरशताहुतिपर्याप्तांस्तंडुलान्मुष्टिभिर्निरुप्य तूष्णीं चतुः प्रोक्ष्य चरुश्रपणादिग्रहादिहोमांते अवदानधर्मेण अशक्तौ पाणिना वा चरुमवदाय पूजामंत्रेणाष्टोत्तरशताहुतीर्हुत्वा स्रुवेणाज्यं जुहुयात् । वैश्रवणायस्वाहा । यक्षाधिपतये० । हिरण्यपाणये० । ईश्वराय० । सर्वोत्पातशमनाय० । भूरग्नयेचपृथिव्यैचमहतेचस्वाहा । भुवोवायवेचांतरिक्षायच० । सुवरादित्यायचदिवेच० । भूर्भुवःसुवश्चंद्रमसेचनक्षत्रेभ्यश्चदिग्भ्यश्च० । ततः स्विष्टकृदादिप्रायश्चित्तहोमांते ग्रहयज्ञकरणपक्षे बलिदानं पूर्णाहुतिं च कृत्वा संस्रावहोमादिशेषं समाप्य स्थापितकलशोदकेन समुद्रज्येष्ठाइत्यादिभिर्यजमानं सपरिवारमभिषिंचेत् । ततो यजमानो धृतशुक्लांबरो विभूतिं धृत्वा देवतोत्तरपूजां विधाय आचार्यादिभ्यो गवादिदक्षिणादानांते विसर्जितदेवतापीठं सोपस्करमाचार्याय दत्वा शंतातीयं जपेत् । तच्च । उतदेवाइत्यादिसप्तर्चस्य सूक्तस्य सप्तर्षयो विश्वेदेवा अनुष्टुप् । जपे० । शंनइंद्राग्नीसूक्तं जपेदिति केचित् । ततः शक्त्या विप्रान्संभोज्य भूयसीं दत्वा शांतिं वाचयित्वा कर्मेश्वरायार्पयेत् । ईळेद्यावा० । इदंहनूनं० । उतदेवाइति च सूक्तत्रयमिदं शंतातीयमित्युच्यते । शंनइंद्राग्नीसूक्तमपि शंतातीयपदाभिधेयमिति वृद्धा उपदिशंति । काकमैथुनदर्शनसरटपतनवायसकपोतवानरप्रवेशाद्युक्तनिमित्तांतरेष्वपीयमेव शांतिः कार्या । इति दीपपतनादिशांतिप्रयोगः ॥

॥ अथ प्रासादकलशलिंगार्चाभंगादिशांतिः । अद्भुतसागरे नारदः । यत्र देवकुले वज्रं पतेद् गृध्रोऽथवा पुनः । कंकोऽथ पतते चैव चूडायामग्निदर्शनं ॥ ( देवकुलं देवालयं । वज्रं विद्युत । चूडा प्रासादकलशः ) लिंगं वा भिद्यते यत्र कंपते चानिमित्ततः । चूडा-

भंगो भवेद्यत्र प्रतिमा भिद्यतेऽथवा ॥ ग्रामोत्सादो भवेत्तत्र स्वामिनो मरणं दिशेत् । तत्र शांतिं प्रवक्ष्यामि येन संपद्यते शुभं ॥ कुंडं कृत्वा विधानेन ततो होमं समारभेत् । चरुं च यमदेवत्यं साधयित्वा विधानतः ॥ ससुवर्णेन हस्तेन ततः कर्म समारभेत् । अष्टोत्तरशतं हुत्वा घृताक्तसमिधां ततः ॥ माषैर्मुद्गैस्तिलैश्चैव घृतेन मधुना सह । एभिः पंचसहस्राणि शक्तिबीजेन होमयेत् ॥ ( शक्तिबीजेन ह्रीमित्यनेन ) होमांते तर्पयेद्द्विप्रान् दक्षिणाभोजनादिभिः । भूमिं धेनुमनड्वाहं स्वर्णं धान्यं सदक्षिणं ॥ पंचगव्यं ततः कृत्वा स्नाप्य देवालयं द्विजः । बलिं दत्वा विधानेन कृसरैः पायसैस्तथा ॥ ईशानं स्थापयेत्तत्र बलिं दत्वा विधानतः । एवं कृत्वा विधानं तु कृतकृत्यो भवेन्नरः ॥ मंडपस्य तथा भित्तिश्चूडा देवकुलस्य च । पूजायां पार्थिवस्यापि प्रतिमायास्तथैव च ॥ अकस्मान्निपतेद्यत्र कंपते वाऽनिमित्ततः । दधिक्षौद्रघृताक्तानामश्वत्थसमिधां ततः ॥ हुनेदष्टशतं प्राज्ञ इमारुद्रेतिमंत्रवित् । धेनुं च दक्षिणां दद्यात्तिलपात्रं सकांचनं ॥ इति प्रासादकलशलिंगार्चाभंगादिशांतिः ॥ ॥ अथ प्रयोगः । कर्ता द्विराचमनादिदेशकालस्मरणांते मम श्रीपरमेश्वरप्रीतिद्वारा प्रासादकलशभंगसूचितसकलारिष्टनिरासपूर्वकशुभफलावाप्त्यर्थं सग्रहमखां नारदोक्तां शांतिं करिष्ये इति संकल्प्य गणेशपूजादिऋत्विग्वरणांतं कुर्यात् । तत आचार्यः ससुवर्णहस्तः प्रादेशकरणांते कुंडात्प्राच्यां पीठादौ प्रतिमायां यमं संपूज्याग्निं ग्रहांश्च प्रतिष्ठाप्यान्वादध्यात् । ग्रहादिकीर्तनांते यमं प्रधानदेवं चरुघृताक्तसमिद्भिः प्रतिद्रव्यं अष्टोत्तरशतसंख्याभिराहुतिभिः शक्तिं प्रधानदेवतां माषमुद्गतिलघृतमधुभिः प्रतिद्रव्यं सहस्रसंख्याभिराहुतिभिः शेषेणेत्यादि । निर्वापादिविधिना चरुश्रपणं । आज्यभागांते यमायसोमामिति चरुसमिद्धोमं कृत्वा ॐ ह्रीं स्वाहेति माषादिपंचद्रव्याणि जुहुयात् । ततः स्विष्टकृदादिप्रायश्चित्तहोमांते बलिदानपूर्णाहुतिपूर्वकं संस्रावहोमादिशेषं समाप्य यथाशक्ति

ब्राह्मणान्संभोज्य दक्षिणाभिः परितोष्य भूमिं धेनुमनड्वाहं स्वर्णं धान्यं च सदक्षिणानि दत्वा पंचगव्येन प्रासादं संस्नाप्य कृसरपायसाभ्यां बलिं दत्वा कर्म समापयेत् । विद्युत्पाते कंकपाते चूडाज्वलने लिंगभेदे प्रतिमाभेदे कंपने चैवं कार्यं । संकल्पे तत्तत्पदोहः कार्यः । लिंगप्रतिमाभेदे बलिदानपूर्वं पुनः प्रतिष्ठेति विशेषः । प्रासादकलशमंडपभित्तिपार्थिवप्रतिमानामाकस्मिकपतने कंपने वा इमारुद्रायेतिमंत्रेण दधिमधुघृताक्ता अश्वत्थसमिधोऽष्टोत्तरशतसंख्यया हुत्वा धेनुं ससुवर्णं तिलपात्रं च दक्षिणात्वेन दद्यात् । इति प्रासादकलशलिंगार्चाभंगादिशांतिप्रयोगः ॥ ॥ अथ मदनरत्ने परिशिष्टोक्ताद्भुतशांतिः । गृहमध्ये स्थूणा विरोहति कपोतो वाऽगारमध्ये निपतेद्वायसो वा गृहं प्रविशेद्वौर्वा गृहमारोहेद्वल्मीकं वोपजायेत गौरात्मानं प्रतिधयेदनड्वान्वा भुवमुल्लिखेदनग्नौ वा धूमो जायते छत्राकं निर्यासं वोपजायते मंडूकोग्निं प्रविशेदवृष्टौ वाशेत स्वप्नेऽस्थिदंतपतने गृहपतिर्जायया सहोपपतिं विंदेत् । अन्येषु वा गृहोत्पातेषु देवयजनोल्लेखनप्रभृत्याग्निमुखात्कृत्वा स्थालीपाकं जुहोति । यतइंद्रभयामहइति पुरोनुवाक्यामनूच्य स्वस्तिदाविशस्पतिरितियाज्यया जुहोत्यथाज्याहुतीरुपजुहोति वास्तोष्पते शंनइंद्राग्नी कयानश्चित्रआभुवत्कोअद्यभवतन्नःसमनसाविति स्विष्टकृत्प्रभृतिसिद्धमाधेनुवरप्रदानादथाग्रेण शमीपर्णेषु हुतशेषं निदधाति शंनोदेवीरभिष्टयइति स्थालीसंक्षालनमाज्यशेषमुदकशेषं च पात्र्यां समानीय निनयेत्प्रोक्षयेद्वा तच्छंयोरावृणीमहइत्यन्नं संस्कृत्य ब्राह्मणान्संपूज्याशिषो वाचयित्वा शिवमित्यद्भुतो व्याख्यातः । इति मदनपरिशिष्टोक्ताद्भुतशांतिः ॥ ॥ अथ जनमारशांतिः । ( जनमारो नाम संघातमरणलक्षणो मरकापरपर्यायो महामारीति प्रसिद्धो रोगविशेषः । सच लोभाद्याविष्टराजकृतकरादिपीडाद्यभिभूतप्रजाकृतस्वधर्मादित्यागजन्यरुद्रकोपोत्थ इति गर्गवाक्याशयोऽग्रे वक्ष्यते) "वि० मा० काशीखंडे । साग्रं शतं योजनानां देशः सर्वोऽभिभूयते ।

घोरै राजकृतैर्दोषैः परेषामपि सुव्रत ॥ ब्रह्मवैवर्ते । राजा यत्कुरुते पापं ब्रह्महत्यादि दारुणं । वंशजान् हंति सहसा स्त्रीवधं कुरुते भृशं ॥ तेन राजा च सा पृथ्वी सनरा क्षयमाप्नुयात् । कालस्फोटादयो दोषा वैद्यविज्ञानलक्षणाः ॥ प्रवदंत्यौषधं नैव मंत्रतंत्राणि चैव हि । आशुमृत्युकराश्चैव शोकदुद्रोगकारिणः ॥ रुद्रप्रकोपजस्तस्माज्जनमारोऽभिजायते । तस्मात्प्रसादयेद्देवं पार्वतीवल्लभं शिवं ॥ गाणपत्येन विधिना ह्यथर्वशिरसा तथा । यामलेन विधानेन कुर्याद्देवप्रसादनं ॥ रुद्रसूक्तं तथा गाथां विष्णुसूक्तं तथैव च । वल्युपहारान्विविधांश्चत्वरेषु निवेदयेत् ॥ आवाहयित्वा सगणं रुद्रं शैलसुतान्वितं । शिवद्वारे विधिस्त्वेष कार्यो नान्यत्र वै शुभः ॥ त्रैयंबकेण मंत्रेण होमं तत्र प्रकल्पयेत् । समिधो ब्रह्मवृक्षस्य जुहुयाच्च सहस्रकं॥साज्यं च पायसं चैव सहस्रं जुहुयात्सुधीः । सहस्रं बिल्वपत्रैश्च अविच्छिन्नैर्द्विजोत्तमः॥जुहुयात्क्षीरयष्टीभिस्तथा च तिलसर्पिषा ।(यष्टयः समिधः) सर्वं स्विष्टकृतं चैव जपेच्छांतिं द्विजोत्तमः॥ततोऽभिषेचनं नृणां सर्वेषामपि कारयेत् ।आचार्यब्रह्मऋत्विग्भ्यो हेमदानं प्रकल्पयेत् ॥ गामाचार्याय साध्वीं च सवत्सां च पयस्विनीं । सदक्षिणां सवस्त्रां च सालंकारां सभाजनां ॥ नामगोत्रं समुच्चार्य प्राङ्मुखाय निवेदयेत् । वक्ष्यमाणेन मंत्रेण दाता चैवोत्तरामुखः ॥ दानमंत्रः । धेनुस्त्वं पृथिवीरूपा सर्वपापक्षयंकरी । जनस्यास्य च सर्वस्य मृत्युं नाशय शोभने ॥ सप्तधान्यानि विप्रेभ्यो दद्याद्राजा समाहितः । भूमिदानानि भूरीणि विविधांश्च तुरंगमान् ॥ दद्याच्छकटदानं च धुर्याभ्यां सुनियंत्रितं । ततश्च रुद्रसदने गर्भागारं सुसंस्कृतं ॥ दशांगेन च धूपेन धूपयेत्प्रयतः पुमान् । शतपत्राणि पुष्पाणि पूजार्थं प्रतिपादयेत् ॥ विलिप्य चंदनं श्वेतं सकर्पूरं सुसंस्कृतं । दीपैर्नीराजयेद्देवं नैवेद्यैस्तोषयेच्छिवं ॥ तांबूलं दापयेद्दिव्यान्द्रविणं कनकादि च । एवं संपूज्य देवेशं प्रार्थयेत्सजनो नृपः ॥ मंत्रस्तु । देवदेव महादेव महापापविनाशन । जनमारकृतां पीडां सद्यो नाशय शंकर ॥ इति

संप्राथ्य देवेशं कुर्याच्चैव प्रदक्षिणं । जपेच्छिवस्तुतिं धीमान् श्रद्धया परया युतः ॥ प्रसादिते ततो रुद्रे जनमारो निवर्तते । ब्राह्मणान्भोजयेत्पश्चात्सहस्रशतसंख्यया ॥ रुद्रार्चनं गवां दानं गायत्रीजपमुत्तमं । निवारयंति विघ्नानां राशींश्चात्र न संशयः ॥ शिवपूजां शिवध्यानं शिवाराधनसत्क्रियां । ये कुर्वंति सदा भक्त्या ते विघ्नान्न भजंति वै ॥ यो राजा मंगलाविष्टो धर्मकीर्तिपरायणः । न भवेत्तस्य राष्ट्रे तु जनमारः कदाचन ॥ उपवासेन भूपालो विधानमिदमाचरेत् । सभार्यः सजनः श्रीमान् सपुत्रः सपुरोहितः ॥ धर्ममंगलगीतैश्च नृत्यैश्च विविधैरपि । शृणुयाद्वैष्णवाख्यानं हृष्टपुष्टजनावृतः ॥ शां० सा० हेमाद्रौ मदनरत्ने नृसिंहपुराणे । अनावृष्टिमहामारीज्वररोगभये तथा । नरसिंहं समाराध्य ब्राह्मणैर्वेदपारगैः ॥ कारयेल्लक्षहोमं तु ग्रामे यश्च नराधिपः । नृसिंहमंत्रेणायं होमः । सुश्रुते । स्थानत्यागाज्जपाद्धोमान्महामारी प्रशाम्यति । आथर्वणे तु रौद्री शांतिरुक्ता । " हेमाद्रौ गर्गः । जनमारसमुत्पत्तिं प्रवक्ष्यामि च शांतिकं । यदा लोभसमाविष्टैः पीड्यंते पार्थिवैः प्रजाः ॥ रमत्यभिद्रवन् राजा नच धर्मेण तिष्ठति । [ क्लेशयत्यनिशं राजा नच धर्मं समाचरेत् ] वचस्तस्यानुवर्तते प्रजा धर्मं विहाय ताः ॥ क्रोधलोभसमाविष्टाः साध्वाचारविवर्जिताः । पूजयंति च नो मोहाद्देवान्विप्रांस्तथा पितॄन् ॥ तास्वधर्माभिभूतासु ततो रुद्रः प्रकुप्यति । अंतकोऽप्येष भगवान्भूतानां प्रिय एव च ॥ कुरुतेऽसौ विकारांश्च हंतुं भूतान्पृथग्विधान् । ताराग्रहान्केतुदंडान् राहुकारुककीलकान् ॥ ससूर्यसंध्याविकृतीन्घोरान्वा मृगपक्षिणः । [ ताराग्रहोल्कारुद्राश्च राहुकेतूग्रदर्शनं । उदयास्तमये चंद्रसूर्यबिंबविपर्ययः ॥ ' विपर्ययशब्देन शीतोष्णता ' विकारा मृगसिंहानां विद्युत्पातोल्बणानि च । ] भूमिकंपोल्कानिर्घातशीतोष्णानिलविक्रियाः । अतिवर्षमवर्षं च तथैवर्तुविपर्ययः ॥ औषध्यो रसहीनाश्च भवंत्यृतुविपर्यये । रसवीर्यविहीनास्ता रोगानुत्पादयंत्यथ ॥ [ गृष्टयो दुग्ध-

हीनाश्व रोगयुक्ता भवंति वै । एतद्राजकृतं पापं विज्ञेयं नात्र संशयः ] दिव्यभौमांतरिक्षाः स्युरुत्पाता दोषसूचकाः । संभवंति तदा रोगा दारुणा जनमारणाः ॥ रुद्रप्रकोपजं तस्माज्जनमारं प्रचक्षते । तेनाभिभूताः सर्वेऽपि लभंते बुद्धिवैकृतं ॥ सत्वं बलं च विकृतिं याति प्रायेण जंतुषु । ब्रह्मस्वहरणाच्चापि गुरुद्रोहात्सतां वधात् ॥ लक्ष्यते जनमारोऽयं समुत्पन्न इति श्रुतिः । तस्मात्प्रसादयेद्यत्नाद्देवदेवं महेश्वरं ॥ दैवज्ञानुप्रदिष्टेन विधिना सुसमाहितः । गाणपत्येन विधिना अथर्वशिरसा तथा ॥ यामलेन विधानेन कुर्याद्देवप्रसादनं । शिवसूक्तमुमासूक्तं जपेच्च शतरुद्रियं ॥ बल्युपहारान्विविधांश्चत्वरेषु निवेदयेत् । आवाहयित्वा सगणं रुद्रं रात्रावहस्सु च ॥ ब्राह्मणान्भक्ष्यभोज्यैश्च दक्षिणाभिश्च तोषयेत् । प्रसादिते ततो रुद्रे जनमारो निवर्तते ॥ नह्येष नानादेवत्यैर्विविधैश्चान्यकर्मभिः । बलाच्छमयितुं शक्यो रुद्रकोपसमुत्थितः ॥ तस्मात्प्रसादयेद्यत्नैर्भावाय जगतो हितं । शिवं प्रजानां भवति यदा संप्रीयते शिवः ॥ धर्ममंगलशीलश्च देवब्राह्मणपूजकः । शर्वार्चनरतः सर्वैरुपसर्गैर्विमुच्यते ॥ जपोपवासनिरतो नृपतिश्च यतेंद्रियः । युक्तो होममुपाश्रित्य नियमेन यथाविधि ॥ एवं युक्तस्य नृपतेः कर्मसिद्धिः प्रशस्यते । कर्मणस्तस्य मूलं हि श्रद्दधानो नृपः स्मृतः ॥ उपोषितो नृपः स्नातः शुक्लवस्त्रसमावृतः । आत्मरक्षां स्वयं कृत्वा ततः शांतिं प्रयोजयेत् ॥ धर्मात्मा धर्मविदुषां राजा राजपुरोहितः । राजा वै सगुणो येषां कुशलं तत्र वर्धते ॥ (पूर्वं नानोत्पातशांतौ जनमारशांतिरुक्तास्ति । शांतिसारे तु । याम्यांतुकारयेच्छांतिंसंप्राप्तेमरकेतथेति । एषा शांतिराथर्वणे प्रसिद्धेति तत्रैव ) विष्णुधर्मोत्तरे । रुद्राणां च तथा जप्यं सर्वारिष्टनिषूदनं । सर्वकामकरो होमस्तथा सर्वत्र शांतिदः ॥ अजाविकानामश्वानां कुंजराणां तथा गवां । मनुष्याणां नरेंद्राणां बालानां योषितामपि ॥ ग्रामाणां नगराणां च देशानामपि भार्गव । उपद्रुतानां धर्मज्ञ व्याधितानां तथैव च ॥ मरके समनुप्राप्ते रिपुजे च तथा भये । रुद्र-

होमः परा शांतिः पायसेन घृतेन वा ॥ मार्कंडेयपुराणे । उपसर्गानशेषांस्तु महामारीसमुद्भवान् । तथा त्रिविधमुत्पातं माहात्म्यं शमयेन्मम ॥ मम दुर्गायाः । अत्र प्रागुक्तौ गायत्र्या नृसिंहमंत्रेण वा लक्षहोमकोटिहोमौ च ज्ञेयौ । ( अत्र संख्योक्ता कात्यायनीतंत्रे । उपसर्गोपशांत्यर्थं त्रिरावृत्तं पठेन्नरः । ग्रहदोषोपशांत्यर्थं पंचावृत्तं वरानने ॥ महाभये समुत्पन्ने सप्तावृत्तमुदीरयेत् । नवावृत्त्या भवेच्छांतिर्मुच्येत्प्राणार्तिजाद्भयात् ॥ महाभये महोत्पातादिजे इति नागेशभट्टाः । तत्रैव । चंड्याः शतावृत्तपाठात्सर्वाः सिध्यंति सिद्धयः ) इति जनमारशांतिः ॥

॥ अथ ब्रह्मवैवर्तोक्तः प्रयोगः । शुभकाले राजा ग्रामाधिपतिर्वा शिवालये आचमनादिदेशकालस्मरणांते श्रीरुद्रप्रसादसिद्धिद्वारा एतन्नगर (एतद्ग्रामेत्यूहः) निवासिसकलप्राणिशरीरेषु उत्पन्नो.पत्स्यमानजनमाराख्यप्रबलरोगोपसर्गस्य शीघ्रोपशमपूर्वकं सर्वेषामायुरारोग्याद्यभीष्टसिद्ध्यर्थं सग्रहमखां जनमारशांतिं करिष्ये । इति संकल्प्य गणेशपूजनादिऋत्विग्वरणांतं कुर्यात् । तत आचार्यः प्रादेशकरणांते रुद्रस्य महापूजां विधाय रुद्रसूक्तानि शतरुद्रियानुवाकं रुद्राथर्वशीर्षं विष्णुसूक्तं च जप्त्वा अग्निं ग्रहांश्च प्रतिष्ठाप्यान्वादध्यात् । ग्रहाद्युत्कीर्तनांते रुद्रं प्रधानदेवं पलाशसमिद्घृताक्तपायसबिल्वदलक्षीरवृक्षसमिद्घृताक्ततिलैः प्रतिद्रव्यं सहस्रसंख्याभिराहुतिभिः शेषेणेत्यादिग्रहादिहोमांते त्र्यंबकमंत्रेणोक्तद्रव्यैरुक्तसंख्यया प्रधानहोमं कुर्यात् । ततः स्विष्टकृदादिप्रायश्चित्तहोमाते इंद्रादिभ्यो बलीन्दत्वा क्षेत्रपालाय चत्वरे महाबलिं दद्यात् । शांतिसूक्तजपांते पूर्णाहुतिं हुत्वा संस्रावहोमादिशेषं समाप्य स्थापितकलशोदकेन सर्वप्राणिनामभिषेकं कुर्यात् । ततः कर्ता धृतशुक्लांबरो विभूतिं धृत्वा ग्रहादीनामुत्तरपूजांते उदङ्मुखः प्राङ्मुखोपविष्टायाचार्याय सोपस्करां सदक्षिणां च धेनुं दद्यात् । तत्र मंत्रः । धेनुस्त्वं पृथिवीरूपा सर्वपापक्षयंकरी । जनस्यास्य च सर्वस्य मृत्युं नाशय शोभने ॥ ततस्तस्मै ब्रह्मादि-

ऋत्विग्भ्यश्च यथाशक्तिसुवर्णं दत्वाऽन्येभ्यश्च सप्तधान्यानि भूमिमश्वान् सवृषं शकटं च यथासंभवं तत्तन्मंत्रैर्दत्वा शिवस्य गर्भागारं गंधादिनोपलिप्य दशांगधूपेन धूपयित्वा शिवं सकर्पूरश्वेतचंदनेन विलिप्य शतपत्रपुष्पैः संपूज्य धूपादितांबूलसमर्पणांते सुवर्णादिदक्षिणां दत्वा सर्वैः सह कृतांजलिस्तं प्रार्थयेत् । देवदेव महादेव महापापविनाशन । जनमारकृतां पीडां सद्यो नाशय शंकर ॥ ततो देवं प्रदक्षिणीकृत्य शिवस्तुतिं पठित्वा सहस्रं शतं वा विप्रान्संभोज्य भूयसीं दत्वा शांतिं वाचयित्वा कर्म समापयेत् ॥ १ ॥ यद्वा नृसिंहपुराणोक्तः प्रकारः । तत्र रुद्रपूजास्थाने नृसिंहं संपूज्याग्निग्रहस्थापनांते होमः । नृसिंहं प्रधान० तिलैः लक्षसंख्या० । नृसिंहायविद्महे वज्रनखायधीमहि । तन्नःसिंहःप्रचोदयात् । इति होममंत्रः । शेषं प्राग्वत् ॥ २ ॥ यद्वा बौधायनोक्तः प्रकारः । प्राग्वत्संकल्प्य गणेशपूजादि कृत्वा ग्रामस्थं मुख्यदेवं सहस्रकलशैरभिषिच्य यथाविभवं संपूज्याग्निं ग्रहांश्च प्रतिष्ठाप्यान्वादध्यात् । ग्रहाद्युत्कीर्तनांते मृत्युंजयं प्रधानदेवं घृताक्ततिलैः पंचसहस्रसं० शेषं प्राग्वत् ॥ ३ ॥ यद्वा गर्गोक्तः प्रकारः । तत्र सग्रहमखामित्युल्लेखवर्जं प्राग्वत्संकल्प्य रुद्राथर्वशीर्षजपांते उमासूक्तं जपित्वा यथाविभवं नानाविधपदार्थैर्महांतं बलिं चत्वरे दत्वा यथाशक्ति विप्रान्संभोज्य दक्षिणाभिः संतोष्य कर्म समाप्य जपोपवासादिधर्मशीलो भवेत् ॥ ४ ॥ यद्वा विष्णुधर्मोक्तः प्रकारः । प्राग्वद्रुद्रपूजांतेऽग्निग्रहांश्च प्रतिष्ठाप्यान्वादध्यात् । ग्रहादिकीर्तनांते रुद्रं प्रधा० पायसेन ( घृतेन वा ) अमुकसं० । रुद्राध्यायमंत्रैर्होमः । महाबलिदानांते पूर्णाहुत्यादिकर्मसमाप्तिः ॥ ५ ॥ यद्वा रुद्रपूजांते यथासंभवं लघुरुद्रादि जपित्वा कर्मसमाप्तिः ॥ ६ ॥ यद्वा मार्कंडेयपुराणोक्तः प्रकारः । संकल्पे श्रीदुर्गाप्रसादेत्यादिसिद्ध्यर्थमित्यंते मार्कंडेयपुराणांतर्गतश्रीदुर्गामाहात्म्यस्य त्रीन् सप्त नव शतं वा पाठान्करिष्येइति संकल्प्य गणेशपूजादि कृत्वा पाठान्कुर्यात् ॥ ७ ॥

इति जनमारशांतिप्रयोगः ॥ ॥ अथ काकमैथुनदर्शनादिशांतयः । अद्भुतसागरे गर्गः । काकस्य मैथुनं पश्येत्काकः शिरसि चेद्विशेत् ।
शिरस्युरसि वा कुर्यात्पक्षघातं नखैस्तथा ॥ विदारणं च कुरुते शयानं संस्पृशेद्यदि । तदा वदेत्तु मरणं महारिष्टमथापि वा ॥ मध्यरात्रे
यदा काको वाशते हेतुना विना । तद् गृहारिष्टमाचष्टे ग्रामारिष्टमथापि वा ॥ शांतिं तत्र प्रकुर्वीत विधानेन यथोदितां । उद्दिश्यारिष्टशमनं
कुर्यात्संकल्पमादितः ॥ शुचौ देशेऽरत्निमात्रे स्थंडिलेऽग्निं निधाय च । तदैशाने चाष्टदले कुंभस्योपरि शक्तितः ॥ हिरण्यनिर्मितं त्विंद्रं
लोकपालसमन्वितं । पूजयित्वा स्वशाखोक्तविधिना श्रपयेच्चरुं ॥ कृत्वाज्यभागपर्यंतं जुहुयात्क्रमशो हविः । पलाशसमिधो व्रीहींश्चरु-
माज्यमिति क्रमात् ॥ अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वा । यतइंद्रेतिमंत्रेण लोकपालेभ्य एव च ॥ शक्त्या हुत्वा स्वशाखोक्तप्राय-
श्चित्ताहुतीर्हुनेत् । लोकपालबलिं दत्वा इंद्राग्रे चरुशेषतः ॥ वायसेभ्यो बलिं दद्यादैंद्रवारुणमंत्रतः । पूर्णाहुतिं ततो दत्वा आचार्यं
पूजयेत्ततः ॥ कुंभोदकेनाभिषेको यजमानस्य विस्तरात् । आचार्यायेंद्रप्रतिमां दद्यात्सोपस्करां ततः ॥ शक्त्या च भूयसीं दद्याद् द्वि-
जानां भोजनं दिशेत् । शतं तदर्धमर्धं वा शक्त्यभावे दशापि वा ॥ सर्वशांतिं पाठयित्वा गृह्णीयाच्च द्विजाशिषः । एवं कृते
भवेच्छांतिः काकारिष्टविनाशिनी ॥ एवं श्वेतकाकदर्शनेऽपि । काको मैथुनयुक्तश्चेच्छ्वेतः स यदि दृश्यते इति हेमाद्रौ गर्गोक्तेः ।
केचित्तु श्वेतकाकमैथुनदर्शने विशिष्टे दोषो न केवले इत्याहुः । ते चेद्यदिपदाभ्यां दृश्यतेपदावृत्त्या च निमित्तभेदाऽज्ञानाद् भ्रांता इत्युपेक्ष्याः॥
मदनरत्ने नारदः । दिवा वा यदि वा रात्रौ यः पश्येत्काकमैथुनं । स नरो मृत्युमाप्नोति यदि वा स्थाननाशनं ॥ काकघातव्रतं यद्वा
विदधीताथ वत्सरं । पितृवद्दै द्विजान्भक्त्या प्रत्यहं चाभिवादयेत् ॥ जितेंद्रियो जितक्रोधः सत्यधर्मपरायणः । तद्दोषशमनायेत्थं शांतिकर्म

समाचरेत् ॥ गृहस्यैशानभागे तु होमस्थानं प्रकल्पयेत् । स्वगृह्योक्तविधानेन तत्र स्थाप्य हुताशनं ॥ मुखांते समिदन्नाज्यैर्हुनेदष्टोत्तरं शतं । प्रतिमंत्रं त्र्यंबकेण अपमृत्युहृद्येन च ॥ अपमृत्युमपक्षुधमिति मंत्रद्वयं तैत्तिरीये प्रसिद्धं । व्याहृतिभिर्व्रीहितिलैर्जयाद्यंतं प्रकल्पयेत् । पूर्णाहुतिं च जुहुयात्कर्ता शुचिरलंकृतः ॥ स्वर्णशृंगीं रौप्यखुरां कृष्णां धेनुं पयस्विनीं । वस्त्रालंकारसहितां निष्कद्वादशसंयुतां ॥ तदर्धेन तदर्धेन तदर्धेनाथवा पुनः [ तदर्धार्धेन वा पुनः ] । यथावित्तानुसारेण तन्न्यूनाधिककल्पना ॥ आचार्याय श्रोत्रियाय तां गां दद्यात्कुटुंबिने । यस्मात्त्वं पृथिवी सर्वा धेनो वै कृष्णसंनिभे । सर्वमृत्युहरे नित्यमतः शांतिं० ॥ ब्राह्मणेभ्यो विशिष्टेभ्यो यथाशक्ति च दक्षिणां । ब्राह्मणान्भोजयेत्पश्चात्स्वस्तिवाचनपूर्वकं ॥ एवं यः कुरुते सम्यक्स तद्दोषात्प्रमुच्यते ॥

॥ अथ काकस्पर्शशांतिः । “ शां० म० सूर्यास्तमनवेलायां वायसः संस्पृशेद्यदि । निःशब्दो वा सशब्दो वा पुंसो मृत्युप्रदायकः ॥ अंगनां च स्पृशन्काको वैधव्यं तत्र निर्दिशेत् । नदीतीरे गवां गोष्ठे क्षीरवृक्षे सुरालये ॥ नरो वायससंस्पृष्टो वधं बंधनमादिशेत् । प्रतिचंद्रं प्रतिसूर्यं वायसः स्पृशते यदि ॥ अर्थहानिं तथा मृत्युं शस्त्रेण च विनिर्दिशेत् । मासैः पंचभिरेवास्य निशाभिः फलमादिशेत् ॥ तद्दिनादि फलं सद्भिः प्रोक्तमत्र शुभाशुभं । शांतिं तत्र प्रकुर्वीत शास्त्रदृष्टेन कर्मणा ॥ महानद्यंभसि स्नात्वा शिवलिंगं निरीक्षयेत् । नत्वा संपूज्य लिंगं तु स्तुत्वा च दिक्पतीनपि ॥ आरभ्य तद्दिनादेव वायसेभ्यो बलिं हरेत् । शनैश्चरदिने प्राप्ते एकांते शुभमंदिरे ॥ कृष्णानि नव वस्त्राणि अहतानि नवानि च । पूर्वदिक्क्रमयोगेन स्थापयेच्च पृथक्पृथक् ॥ माषप्रस्थप्रमाणेन स्थापयेत्तत्र वायसान् । पूर्वस्यां कपिलं तत्र स्थापयेन्मंत्रपूर्वकं ॥ नीलग्रीवमथाग्नेय्यां याम्यां च विकृतस्वरं । नैर्ऋत्यां च न्यसेत्क्रौंचमपमृत्युविनाशनं ॥ विद्युज्जिह्वं च वारुण्यां वायव्यां

कृष्णकर्बुरं । कौबेर्यां कालनामानमैशान्यां श्वेतमेव च ॥ अहते कृष्णवस्त्रे तु यमं मध्ये प्रपूजयेत् । महिषं कृष्णवर्णं च यमं माषैश्च पूजयेत् ॥ रक्तोत्तमांगं सर्वत्र आयुधैश्च समन्वितं । लोहदंडं चतुर्बाहुं पूजयेन्मंत्रपूर्वकं ॥ यस्मिन्वृक्षे परेयिवांसं सुगंनःपंथामेव च । एते मंत्राः समाख्याताः शूद्राणां नाममंत्रतः ॥ अकालमूलं कलशं स्थापयेत्तस्य संनिधौ । जलपूर्णं रत्नगर्भं पूर्णपात्रसमन्वितं ॥ स्थापयेत्तत्र देवेशं शूलपाणिं महेश्वरं । प्रतिष्ठाप्य च तान्सर्वानथ मंत्रैः प्रपूजयेत् ॥ कपिलस्त्वं च वर्णेन शुभाशुभनिवेदकः । गृहाणार्घ्यं मया दत्तं भवाऽशुभविनाशनः ॥ नीलग्रीव गृहाणार्घ्यं मया दत्तं खगेश्वर । अपमृत्युविनाशाय ददामि बलिमुत्तमं ॥ क्रूरस्त्वं पापिनां नित्यं सौम्यस्त्वं धार्मिके जने । विकृतस्वर गृहाणार्घ्यं मया दत्तं शुभाय नः ॥ क्रूरस्त्वं पापिनां नित्यं वधा शुभं न ऋच्छति । गृहाणार्घ्यं मया दत्तं क्रौंच सौख्यप्रदो भव ॥ विद्युजिह्व नमस्तेस्तु शोकव्याधिविनाशन । बलिं पूजां मया दत्तां गृहाण सुखदो भव ॥ कृष्णकर्बुरनामा त्वं भूतभव्यनिवेदकः । गृहाणार्घ्यं मया दत्तं भव वैधव्यनाशनः ॥ काकस्त्वं कालनामासि दुष्टकालनिवेदकः । गृहाण बलिपूजां मे दत्तां दुःखविनाशन ॥ श्वेतस्त्वं सितवर्णोऽसि मृत्युभावस्य सूचकः । गृहाणार्घ्यं मया दत्तं भव मृत्युविनाशनः ॥ तन्मध्ये पूजयेद्देवं धर्मराजं चतुर्भुजं । यमाय धर्मराजाय मृत्यवे चांतकाय च । वैवस्वताय कालाय सर्वभूतक्षयाय च ॥ औदुंबराय दध्नाय नीलाय परमेष्ठिने । वृकोदराय चित्राय चित्रगुप्ताय वै नमः ॥ नीलग्रीवाय लोकेश दंडहस्ताय ते नमः । पाशहस्ताय सायुधाय सपरिवाराय ते नमः ॥ चंदनैश्च सुगंधैश्च वासोभिः पूजयेद्यमं । आदौ त्र्यंबकमंत्रेण ईश्वरं च प्रपूजयेत् ॥ मृत्युविनाशिनीं विद्यां कुंभे चैव नियोजयेत् । शतमष्टोत्तरं चैव आचार्यो त्दृष्टमानसः ॥ स्वगृह्योक्तविधानेन चरुं च यमदैवतं । संश्रप्य जुहुयादग्नौ समिदाज्यचरूंस्तिलान् ॥ तद्देवत्या समित्कार्या शतमष्टोत्तरं तथा । समित्क-

मेण जुहुयात्प्रतिद्रव्यं शतं हुनेत् ॥ सुगंनःपंथामंत्रेण होतव्यं सर्वमत्र तु । भद्रासनं प्रकर्तव्यं पंचवर्णकसंयुतं ॥ तस्योपरि न्यसेत्पट्टं यजमानमथाह्वयेत् । निवेश्याच्छादिते पीठे अभिषेकं च कारयेत् ॥ पावमानीभिस्तल्लिंगैर्मंत्रैर्वारुणसंभवैः । तल्लिंगैः सुगंनःपंथामित्यादिभिः । तत्र स्नानं प्रकर्तव्यं तीर्थानीतेन वारिणा ॥ सहस्राक्षादिभिर्मंत्रैः स्नानं कार्यं द्विजोत्तमैः । ततोऽन्यद्वस्त्रमादाय धर्मराजं तु पूजयेत् ॥ उक्तैः षोडशभिर्मंत्रैः सुगंनेत्यर्घ्यमर्पयेत् । तत उत्थाय संप्रार्थ्य भक्तिभावसमन्वितः ॥ रक्ष मे पुत्रपौत्रांश्च रक्ष मे पशुबांधवान् । रक्ष पत्नीं पतिं चैव पितरं मातरं धनं ॥ अग्नितो मे भयं माऽस्तु रोगाच्च व्याधिबंधनात् । शस्त्रतो विषतोयौघाद्भयं नाशय मे सदा ॥ प्रार्थनैवं प्रकर्तव्या नमस्कारसमन्विता । काकस्पृष्टं च यद्वस्त्रं स्नानक्लिन्नं च यद्भवेत् ॥ सहिरण्यं च तत्कृत्वा ब्राह्मणाय निवेदयेत् । मंत्रस्तु । यत्किंचित्स्पर्शदोषोत्थं दुष्कृतं मयि विद्यते । तत्सर्वं नाशमायातु वस्त्रदानेन सूर्यज ॥ वायसांस्तान्यमं चैव आचार्याय निवेदयेत् । माषान्वासांसि कृष्णां तु धेनुं चैव पयस्विनीं ॥ शनिवारे च तत्कार्यं रविवारेऽथवा पुनः । घृतपात्रे ससौवर्णे दर्शयेदात्मनस्तनुं ॥ ब्राह्मणेभ्यो ददेदन्नं भूयसीं चैव शक्तितः । यथोक्तां दक्षिणां दद्याद्वित्तशाठ्यं न कारयेत्॥स्थाने यत्र स्पृशेत्काकस्तत्स्थानं पूजयेत्तदा॥एवं कुर्यात्प्रयत्नेन ध्वांक्षदोषः प्रशाम्यति" ॥ मानवसंहितायां । अथातः संप्रवक्ष्यामि वायसः प्रविशेद्गृहं । प्रवेशद्वारतो गच्छेन्मासमेकं विवर्जयेत् ॥ द्वारांतरे यदा गच्छेत्षण्मासांस्तु विवर्जयेत् । गृहप्रवेशने काको गृहाशेषक्षयंकरः ॥ " शां॰ सा॰ । देवालयं विशेच्चैव शीघ्रं मृत्युकरो भवेत् । देवो राजा " देवालये नृपाणां तु ग्रामनाशो भविष्यति । श्वानमार्जारतो गत्वा वायसः प्रविशेद्गृहं । गृहस्थमरणं विद्यात्सर्वनाशो गृहे भवेत् ॥ एतेषां दोषजातानां शांतिं वक्ष्ये समासतः । प्रवेशस्थानदेशेषु दक्षिणे वा गृहात्ततः ॥ गोमयेनोपलिप्ते च स्थंडिले समलंकृते । आचार्यं वरयेदादौ ब्राह्मणं वेदपारगं ॥

व्रीहिद्रोणे च सुश्लक्ष्णं स्थापयेदव्रणं घटं । पंचपल्लवसंयुक्तं पंचगव्यसमन्वितं ॥ पंचरत्नसमायुक्तं पूरयेत्तीर्थवारिणा । तस्योपरि न्यसेत्पात्रे काकरूपं शचीपतिं ॥ कर्षमात्रसुवर्णेन पादेनाथ स्वशक्तितः । प्रतिमां कारयेत्पश्चाद्दस्त्रयुग्मं निवेदयेत् ॥ यतइंद्रेतिमंत्रेण अर्चयित्वा तु दैववित् । इंद्रादीशानपर्यंतमर्चयेल्लोकपान् क्रमात् ॥ कुंभाभिमंत्रणं कुर्याच्छ्रीरुद्रं च स्पृशन् जपेत् । स्वगृह्योक्तेन विधिना होमकर्म समाचरेत् ॥ यतइंद्रेतिमंत्राभ्यां समिदाज्यचरून् हुनेत् । अष्टोत्तरसहस्रं वा अष्टोत्तरशतं तु वा ॥ त्र्यंबकेण मंत्रेण तिलानष्टशतं हुनेत् । इदंविष्णुस्तु मंत्रेण लाजहोमं समाचरेत् ॥ उपहोमं ततः कृत्वा महाव्याहृतिभिर्हुनेत् । इंद्रायस्वाहा । वायसोत्पातशमनायस्वाहा । शांतायस्वाहेति । ततः स्विष्टकृतं हुत्वा होमशेषं समापयेत् ॥ संपातैरभिषिक्तस्तु गोयुग्मं दक्षिणां दिशेत् । आज्यावलोकनं कृत्वा महाशांतिं पठेत्ततः ॥ नारदः । श्रीरग्निर्बंधुनाशश्च वित्तहानिर्महद्यशः । बंधुलाभः पुत्रहानिः स्त्रीचिंता महती गदः ॥ पूर्वादिषु फलान्येषामिंद्रलुप्ते च मस्तके । पंचत्वक्पल्लवस्वर्णपंचामृतफलोदकैः ॥ अभ्यंगमंत्रितैर्मंत्रैः स्नानाद्दोषं विमुंचति । एवमेवाग्निदाहेऽपि मस्तकेऽमेध्यदूषिते ॥ दंतच्छदे काकहतौ सरठीपतनेऽपि च । लाभदः कुड्यगोधोऽत्र शुभदो व्यत्यये व्ययः ॥ दक्षिणे स्फुरणे लाभो वामे स्फुरणमन्यथा । स्त्रीणां विपरीतं । सीताहरींद्रक्षणदाचराणां वामानिनेत्राणिसमुल्लसंतीति रामायणोक्तेः । इति काकमैथुनदर्शनादिशांतयः ॥ ॥ अथ प्रयोगः । कर्ता शुचिदेशे आचमनादिदेशकालस्मरणांते मम काकमैथुनदर्शनसूचितसकलारिष्टपरिहारद्वारा श्री॰ सग्रहमखां गर्गोक्तां शांतिं करिष्ये । इति संकल्प्य ( शिरसि वायसारोहणसू॰ शिरस्युरसि वा काकपक्षघात॰ वायसकृतनखविदारण॰ शयानस्य काकस्पर्श॰ मध्यरात्रे अनिमित्तवायसाक्रंदनसूचितेत्यादि निमित्तांतरेषूह्यं ) गणेशपूजनादिऋत्विग्वरणांतं कुर्यात् । तत आचार्यः प्रादेशकरणांते अरत्निमात्रं स्थंडिलं

कृत्वा तत्राग्निं प्रतिष्ठाप्य ध्यात्वा तदैशान्या महीद्यौरित्यादिविधिना कुंभं संस्थाप्य पूर्णपात्रोपर्यष्टदले यथाशक्तिसुवर्णनिर्मितप्रतिमायां यत- इंद्र भर्ग इंद्रो बृहती । इंद्रावा० । इतींद्रं परितो लोकपालांश्चावाह्य षोडशोपचारैः पूजयेत् । ततस्तदुत्तरतो ग्रहस्थापनादिकलशप्रार्थनांतं कृत्वाऽन्वादध्यात् । ग्रहाद्युत्कीर्तनांते इंद्रं प्रधानदेवं पलाशसमिद्व्रीहिचर्वाज्यैः प्रतिद्रव्यं अष्टोत्तरसहस्रसं० । १०८ वा । लोकपालांश्च तैरेव द्रव्यैः प्रत्येकं प्रतिद्रव्यं अष्टसं० । शेषेणेत्यादिप्रणीतास्थापनांते तूष्णीं निर्वापादिविधिना चरुं श्रपयित्वाज्यसंस्कारादिग्रहहोमांतं कृत्वा यथान्वाधानमिंद्रहोमोत्तरं लोकपालेभ्यस्तान्येव द्रव्याण्युक्तसंख्यया जुहुयात् । ततः स्विष्टकृदादिप्रायश्चित्तहोमांते बलिदानोत्तरं हुतशेषाच्चरु- मादाय ऐंद्रवारुणवायव्या याम्या वै नैर्ऋताश्च ये । ते काकाः प्रतिगृह्णंतु भूम्यां पिंडं समर्पितमितींद्रस्य पुरतो वायसेभ्यो बलिं दत्वा पूर्णा- हुतिसंस्रावहोमादिशेषं समाप्य स्थापितकलशोदकेन सपरिवारं यजमानं समुद्रज्येष्ठाइत्यादिमंत्रैरभिषिंचेत् । ततः कर्ता धृतवस्त्रो विभूतिं धृत्वा देवतोत्तरपूजांते आचार्यं संपूज्य तस्मै सोपस्करामिंद्रप्रतिमां दत्वा ऋत्विग्भ्यो दक्षिणादानांते शतं पंचाशतं दश वा विप्रान्संभोज्य भूयसीं दत्वा तैः शांतिं पाठयित्वाशिषो गृहीत्वा कर्म समापयेत् । श्वेतकाकदर्शनेऽपीयमेव शांतिः कार्या । इति काकमैथुनदर्शनादिशांति- प्रयोगः ॥ ॥ अथ गृहे काकप्रवेशशांतिप्रयोगः । तत्र काकस्य प्रवेशमार्गेणैव निर्गमने मासपर्यंतं मार्गांतरेण निर्गमने तु षण्मासप- र्यंतं तद्गृहं वर्जयित्वाऽनंतरं कस्मिंश्चित् शुभे दिने वायसप्रवेशस्थले गृहाद्दक्षिणभागे वा कर्ता आचमनादिदेशकालस्मरणांते मम गृहे वायसप्रवेशसूचितसर्वारिष्टपरिहारद्वारा श्री० सग्रहमखां मनूक्तां शांतिं करिष्ये इति संकल्प्य गणेशपूजनादिऋत्विग्वरणांतं कुर्यात् । तत आचार्यः प्रादेशांते स्थंडिलात्पूर्वे महीद्यौरिति भूमिं स्पृष्ट्वा ओषधयःसमिति द्रोणप्रमाणव्रीहिराशिं कृत्वा आकलशेष्विति कलशं संस्थाप्य

इमंमइति तीर्थोदकेनापूर्य गायत्र्यादिमंत्रैः पंचगव्यानि प्रक्षिप्य गंधक्षेपादिपूर्णपात्रनिधानांते कर्षाद्युक्तप्रमाणेन काकरूपां सुवर्णप्रतिमां कृत्वा तत्र यतइंद्र भर्ग इंद्रो बृ० । इतींद्रमावाह्य षोडशोपचारैः संपूज्य परित इंद्रादिलोकपालानावाह्य पूजयेत् । ततः कुंभं स्पृष्ट्वा रुद्राध्यायं जपेत् । ततोग्निं ग्रहांश्च प्रतिष्ठाप्यान्वादध्यात् । ग्रहाद्युत्कीर्तनांते इंद्रं प्रधानदेवं पलाशसमिदाज्यचरुभिः प्रतिद्रव्यमष्टोत्तर-सहस्रसं० । १०८ वा । त्र्यंबकं तिलैः अष्टोत्तरशतसं० । विष्णुं लाजैः अष्टोत्तरशतसं० । इंद्रं१ वायसोत्पातशमनं२शांतं३अग्निं पृथिवीं महां-तं ४ वायुमंतरिक्षं महांतं ५ आदित्यं दिवं महांतं ६ प्रजापतिं चंद्रमसं नक्षत्राणि दिशो महांतं च ७ एकैकयाज्याहुत्या शेषेणेत्यादिग्रहादि-होमांते वक्ष्यमाणरीत्या प्रधानहोमं कुर्यात् । तत्र प्रधानाज्यहोमेषु प्रत्याहुति उत्तरतः स्थापितजलकुंभे संपाताख्यमाज्यशेषं प्रक्षिपेत् । यतइंद्रे-तिद्वयोर्भर्गइंद्रो बृहती । द्वितीया सतोबृहतीपंक्तिः । होमे० । इतिमंत्राभ्यामुक्तसंख्यया समिदाज्यचरुहोमांते त्र्यंबकमंत्रेण तिलान् इदंवि-ष्णुरिति लाजांश्च हुत्वा इंद्रायस्वाहा । वायसोत्पातशमनायस्वाहा । शांतायस्वाहा । भूरग्नयेचपृथिव्यैचमहतेच० । भुवोवायवेचांतरिक्षाय० । सुव-रादित्यायचदिवेच० । भूर्भुवःसुवश्चंद्रमसेचनक्षत्रेभ्यश्चदिग्भ्यश्च० । इति मंत्रैरेकैकामाज्याहुतिं जुहुयात् । ततः स्विष्टकृदादिप्रायश्चित्तहोमांते बलिदानपूर्णाहुती कृत्वा संस्रावहोमादिशेषं समाप्य स्थापितकलशोदकैः संपातोदकैश्च सपरिवारं यजमानं समुद्रज्येष्ठाइत्यादिमंत्रैरभिषिंचेत् । ततः कर्ता विभूतिं धृत्वा देवतोत्तरपूजांते आचार्यं संपूज्य तस्मै गोयुग्मं तन्निष्क्रयं वा दत्वा ऋत्विग्भ्यो यथाशक्तिदक्षिणादानांते विस-र्जितदेवतापीठमाचार्यहस्ते प्रतिपाद्य आज्ये स्वप्रतिबिंबमवलोक्य सदक्षिणं तद्ब्राह्मणाय दत्वा शक्त्या विप्रान्संभोज्य भूयसीं दत्वा शांतिं वाचयित्वा कर्म समापयेत् । इति गृहे काकप्रवेशशांतिप्रयोगः ॥

॥ अथोलूककपोतादिशांतिः । " नि० शि० शौनकः । उलूकश्येन-

गृध्रा वा कपोताः क्रूरपक्षिणः । प्रविशंति गृहे यस्य क्रोशंति च मृतिर्भवेत् ॥ क्रोशंति बहुशो गेहे प्राकारादिषु सर्वतः । तिष्ठंति निर्भयास्ते तु उलूकाद्याश्च पक्षिणः ॥ मंडलीभूय ते सर्वे स्वरान्वै कुर्वते तदा । संध्यासु व्योम्नि तद्गेहपतेर्नाशः प्रजायते ॥ कुर्वंति पक्षिणस्त्वेते शिरस्ताडनमेव वा । षण्मासाभ्यंतरे दुःखमत्यंतं चैव जायते ॥ अविलंब्य ततः कुर्याच्छांतिं तद्दोषशांतये । गृहस्याच्छादनं हित्वा शांतिकर्म समाचरेत् ॥ ब्राह्मणान्वरयेत्तत्र स्वस्तिवाचनपूर्वकं । षोडश द्वादशाष्टौ वा वेदवेदांगपारगान् ॥ सुवर्णप्रतिमां मृत्योः सुवर्णेन विनिर्मितां । ( सुवर्णेन सुवर्णाख्यमानेन ) तस्यार्धेनापि वा कुर्यात्तदर्धार्धेन वा पुनः ॥ यथावित्तानुसारेण प्रतिमां कारयेद्बुधः । पक्षिरूपां प्रयत्नेन कृत्वा पूजां समाचरेत् ॥ स्थंडिले रचयेत्पद्मं कर्णिकायां न्यसेत्ततः । यदुलूकेतिमंत्रेण कुर्यान्मृत्योस्तु पूजनं ॥ ( स्थंडिलं वेदी ) देवाःकपोतमंत्रेण पक्षिपूजां समाचरेत् । पिष्टेन पक्षिरूपं तु कृत्वा चैव प्रयत्नतः ॥ रक्तगंधैश्च पुष्पैश्च वस्त्रैश्चैव प्रपूजयेत् । कलशं स्थापयेत्तत्र पंचत्वक्पल्लवैर्युतं ॥ गव्यौषधादि निक्षिप्य रुद्रमिंद्रं ततोऽर्चयेत् ॥ रक्तगंधांश्च पुष्पाणि धूपदीपौ निवदयेत् । त्रैयंबकं चाभयं च ब्राह्मणैः कारयेज्जपं ॥ होमं च कारयेत्पश्चात्कुंडे वा स्थंडिलेऽपि वा । पलाशसमिदाज्यान्नैर्हुनेदष्टसहस्रकं ॥ तिलैर्व्यात्द्दतिमंत्रैश्च हुनेदष्टोत्तरं शतं । पक्षिहोमं ततः कुर्यादंगमंत्रैश्च मंत्रवित् ॥ मानस्तोकेतिमंत्रेण चंचुं तस्य दुरात्मनः । यतइंद्रेति च शिरो ग्रीवां मृत्युंजयेन तु ॥ इंद्रायेंदो च त्द्दयं तरत्सइति पक्षकौ । शंनइंद्राग्नी उदरं तववायो तु पुच्छकं ॥ होमं स्विष्टकृतः कुर्यात्पश्चात्पूर्णाहुतिं हुनेत् । होममेवं समाप्याऽथो अभिषेकं तु कारयेत् ॥ समुद्रज्येष्ठामंत्रैश्च आपोहिष्ठेतिमंत्रकैः । सुरास्त्वामभिषिंचंतुमंत्रैः पौराणिकैस्तथा ॥ अभिषेकसमाप्तौ तु कुर्यादाज्यावलोकनं । सवस्त्रं प्रतिमायुग्ममाचार्याय निवेदयेत् ॥ सालंकारां च गां दद्यात्सवस्त्रां च पयस्विनीं । ऋत्विग्भ्यो दक्षिणां दद्याद्ब्राह्मणेभ्यो

विशेषतः ॥ ब्राह्मणान्भोजयेत्पश्चात्स्वयं भुंजीत बंधुभिः । एवं शांतिं नरः कुर्याद्भक्तियुक्तेन चेतसा ॥ आयुरारोग्यमैश्वर्यं लभते नात्र संशयः । मदनरत्ने नारदः । आरोहेत्तु गृहं यस्य कपोतो वा प्रवेशयेत् । स्थानहानिर्भवेत्तस्य यद्वाऽनर्थपरंपरा ॥ दोषाय धनिनां गेहे दरिद्राणां शिवाय च । तच्छांतिस्तु प्रकर्तव्या जपहोमविधानतः ॥ ब्राह्मणान्वरयेत्तत्र स्वस्तिवाचनपूर्वकं । षोडश द्वादशाष्टौ वा श्रौतस्मार्तक्रियापरान् ॥ देवाःकपोतइत्यादिऋग्भिः स्यात्पंचभिर्जपः । कुंडं कृत्वा प्रयत्नेन स्वगृह्योक्तविधानतः ॥ ऐशान्यां स्थापयेद्वह्निं मुखांतेऽष्टोत्तरं शतं । प्रत्येकं समिदाज्यान्नैः प्रतिप्रणवपूर्वकं ॥ यतइंद्रभयामहे स्वस्तिदेति त्रियंबकैः । त्रिभिर्मंत्रैश्च जुहुयात्तिलान्व्याहृतिभिः सह ॥ जपादींश्च ततो भक्त्या कर्ता पूर्णाहुतिं स्वयं । विप्रेभ्यो दक्षिणां दद्याद्दोषशांतिं ततो जपेत् ॥ ब्राम्हणान्भोजयेत्पश्चात्स्वयं भुंजीत बंधुभिः । एवं यः कुरुते भक्त्या तस्माद्दोषात्प्रमुच्यते ॥ पिंगलस्य स्वरेऽप्येवं मधुवल्मीकयोरपि । संपूर्णमंदिरे हानिः शून्यसद्मनि मंगलं ॥ प्राकारेषु पुरद्वारे प्रासादाद्येषु वीथिषु । तत्फलं ग्रामपस्यैव सीम्नि सीमाधिपस्य च ॥ शांतिकर्माखिलं कार्यं पूर्वोक्तेन क्रमेण तु । इत्युलूककपोतादिशांतिः ॥

॥ अथ प्रयोगः । कर्ता गृहाच्छादनं निष्कास्य आचमनादिदेशकालकीर्तनांते मम गृहे उलूकप्रवेशसूचितसर्वारिष्टपरिहार० सग्रहमखां शौनकोक्तां शांतिं करिष्ये इति संकल्प्य ( गृहे प्राकारादौ वा उलूकारोहण० उलूकाक्रोश० समंततः उलूकपरिभ्रमण० उलूककृतशिरस्ताडनसूचितेत्यन्यत्रोह्यं ) गणेशपूजनस्वस्तिवाचनादिऋत्विग्वरणांतं कुर्यात् । ऋत्विजश्च षोडश द्वादशाष्टौ वा । तत आचार्यः प्रादेशकरणांते स्थंडिलात्पूर्वे वेदिं कृत्वा तदुपरि सकर्णिकं पद्मं विरच्य तत्कर्णिकायां उक्तलक्षणसौवर्णप्रतिमायां यदुलूकः कपोतो मृत्युस्त्रिष्टुप् । मृत्योरावाह० । इति मृत्युमावाह्य षोडशोपचारैः संपूज्य तदुत्तरे पीठादौ तंडुलादिपिष्टनिर्मितं पक्षिरूपं निधाय देवाःकपोतः कपोत उलूकस्त्रिष्टुप् । उलूका-

वा० । इति तं पक्षिणमावाह्य पूजयेत् । तत्र रक्तवर्णानि वस्त्रगंधपुष्पाणि देयानि । ततस्तदुत्तरे महीद्यौरित्यादिविधिना कलशं संस्थाप्य तत्र जलपूरणगंधक्षेपांते पंचगव्यपंचत्वक्पंचपल्लवान्सर्वौषधीश्च निक्षिप्य दूर्वाप्रक्षेपादिपूर्णपात्रनिधानांते प्रतिमायां त्र्यंबकं० यतइंद्र० इतिमंत्राभ्यां रुद्रमिंद्रं चावाह्य रक्तगंधपुष्पादिभिः संपूज्य तन्मंत्रयोः सहस्रादिसंख्यया जपं ब्राह्मणैः कारयेत् । ततोऽग्निं ग्रहांश्च प्रतिष्ठाप्यान्वादध्यात् । ग्रहादिकीर्तनांते मृत्युं प्रधानदेवं पलाशसमिदाज्यचरुभिः प्रतिद्रव्यं षट्त्रिंशदधिकशतत्रयसं० । अग्निं वायुं सूर्यं प्रजापतिं च तिलैः अष्टोत्तरशतसंख्या । रुद्रं १ इंद्रं २ मृत्युंजयं ३ सोमं पवमानं द्विः ४।५ विश्वान्देवान् ६ वायुं ७ चैत देवताः पिष्टमयोलूकस्य चंच्वाद्यवयवैः शेषेणेत्यादिग्रहादिहोमांते यदुलूकइतिमंत्रेण समिदाज्यचरून् व्यस्तसमस्तव्याहृतिभिस्तिलांश्चोक्तसंख्यया हुत्वा पिष्टपक्ष्यवयवान्वक्ष्यमाणमंत्रैर्जुहुयात् । मानस्तोके कुत्सो० इति चंचुं । यतइंद्र भर्ग० इति शिरः । त्र्यंबकं वसिष्ठो मृत्युंजयस्त्रि० इति ग्रीवां । इंद्रायेंदो कश्यपः सोमः पवमानो गा० इति हृदयं । तरत्समंदीत्यवत्सारः सोमः पवमानो गा० इति पक्षौ । शंनइंद्राग्नी वसिष्ठो विश्वेदेवास्त्रि० इत्युदरं । तववायो व्यश्वो वायु० इति पुच्छं च हुत्वा स्विष्टकृदादिप्रायश्चित्तहोमांते बलिदानपूर्णाहुतिपूर्वकं संस्रावहोमादिशेषं समाप्य सपरिवारं यजमानं कलशोदकैः समुद्रज्येष्ठाइति चतुर्भिः आपोहिष्ठेतित्रिभिः सुरास्त्वामित्यादिपौराणमंत्रैश्चाभिषिंचेत् । ततः कर्ता विभूतिं धृत्वा देवतोत्तरपूजां विधाय आज्यावलोकनं तद्दानं च ब्राह्मणाय कृत्वा देवताविसर्जनांते सवस्त्रप्रतिमायुग्मं सालंकारां सवस्त्रां धेनुं चाचार्याय दत्वा ऋत्विग्भ्यो दक्षिणां दत्वा पीठदानांते विप्रान्संभोज्य भूयसीं दत्वा तैः शांतिं वाचयित्वा कर्म समापयेत् । एवं श्येनगृध्रकपोतादिक्रूरपक्षिणां प्रवेशादिनिमित्तेष्वपीयमेव शांतिः कार्या । इत्युलूककपोतादिशांतिप्रयोगः ॥

॥ अथ पल्लीसरठशांतिः । मदनरत्ने वृद्ध-

गार्ग्यः । फलं पल्ल्याः प्रपातस्य सरटस्य तथैव च । मूर्ध्नि राज्यश्रियोऽवाप्तिर्भाले चैश्वर्यवर्धनं ॥ कर्णयोर्भूषणप्राप्तिर्नेत्रयोर्बंधुदर्शनं । नासिकायां तु सौभाग्यं वक्त्रे मिष्टान्नभोजनं ॥ कंठे नित्यं प्रियाश्लेषः स्कंधयोर्विजयो ध्रुवं । धनलाभो वाहुयुग्मे करयोरर्थसंक्षयः ॥ वक्षःस्थले तु सौभाग्यं ह्रदि प्रीतिविवर्धनं । पुत्रलाभस्तु कुक्षौ स्यान्नाभौ कीर्तिविवर्धनं ॥ अर्थलाभस्तु पृष्ठे स्यात्पार्श्वयोः सुहृदागमः । कटिस्थाने वस्त्रलाभो गुह्यस्थाने समागमः ॥ गुददेशे विनाशः स्यादूरुजान्वोस्तु वाहनं । जंघयोश्च निरुद्योगः पादयोर्भ्रमणं भवेत् ॥ पादतश्चोर्ध्वगमनं कुर्यादामस्तकाद्यदि । गात्रप्रदक्षिणं वापि राज्यलाभो भवेत्तदा ॥ मस्तकात्पादपर्यंतं यदि गच्छेदधोऽपि वा । गात्राप्रदक्षिणं वापि हानिशोकं समादिशेत् ॥ सरठीपतने हानिः सर्वांगेषु च सर्वदा । ऊर्ध्वं गच्छेदधो वापि कुटुंबकलहागमः ॥ इत्थं पल्ल्याः प्रपातस्य फलं ज्ञेयं विचक्षणैः । एतदेव फलं विद्यात्सरठस्य प्ररोहणे ॥ पल्ल्याः प्रपतने चैव सरठस्य प्ररोहणे । पंचरात्रं भवेत्तस्य व्याधिपीडा विशेषतः ॥ पतनानंतरं तस्य रोहणं यदि जायते । पतने फलमुत्कृष्टं रोहणे विफलं भवेत् ॥ आरोहणं चोर्ध्ववक्त्रे अधोवक्त्रे निपातनं । भवेद्यदि सुशीघ्रेण तत्फलं जायते ध्रुवं ॥ मृत्युयोगे दग्धदिने पाते च यमकंटके । चंद्राष्टमे नैधने च जन्मर्क्षे विषनाडिके ॥ क्रूरलग्ने क्रूरयुते विष्टिवैधृतिसंयुते । दुर्निमित्ते तयोः पाते निधनं जायते ध्रुवं ॥ तयोः स्पर्शनमात्रेण सचैलं स्नानमाचरेत् । गव्यं पंचविधं प्राश्य कुर्यादाज्यावलोकनं ॥ शस्ते वाऽप्यथवा शस्ते यदीच्छेदात्मनः शुभं । पुण्याहं वाचयित्वा तु शांतिकर्म ततश्चरेत् ॥ प्रतिरूपं तयोः कुर्यात्सुवर्णेन स्वशक्तितः । रक्तवस्त्रेण संवेष्ट्य गंधपुष्पैः प्रपूजयेत् ॥ कलशे वस्त्रयुग्मेन पूजयेद्विधिना ततः । अग्निसंस्थापनं कृत्वा होमं कुर्याद्विधानतः ॥ मृत्युंजयेन मंत्रेण समिद्भिः खादिरैः शुभैः । तिलैर्व्याहृतिभिर्होमं चाष्टोत्तरसहस्रकं ॥ अष्टोत्तरशतं वाऽपि कुर्यात्सम्यक्

समाहितः । महाव्यात्हृतिहोमं च सर्पिःक्षीरेण कारयेत् ॥ अभिषेकं ततः कुर्याद्यजमानस्य मूर्धनि । पुण्यैर्वारुणसूक्तैश्च द्यौःशांतादिकमंत्रतः ॥ धेनुं वस्त्रयुगं दद्याद् [ इत्थं मंत्रविधानेन ] यः कुर्याच्छांतिमुत्तमां । तस्यायुर्विजयो लक्ष्मीः कीर्तिः पुष्टिश्च जायते ॥ पल्लीसरठयोः शांतिविधानं शौनकोदितं । कीर्तितं च फलोपेतं वृद्धगार्ग्येण धीमता ॥ गर्गः । अथातः संप्रवक्ष्यामि शृणु शौनक यत्नतः । पल्ल्याः प्रपतनं नेष्टं सरठस्य प्ररोहणं ॥ तत्र वेलादिफलमाह । पल्ली च प्रथमे यामे मस्तके स्वामिमृत्युदा । मुखे मिष्टान्नभोजी स्यात्पाण्योस्तु मरणं ध्रुवं ॥ मध्याह्ने पतते पल्ली दक्षिणे सुखसंपदा । वामांगे कुरुते व्याधिं पादयोर्हानिकारिणी ॥ संध्यायां पतते पल्ली मस्तके स्वामिमृत्युदा । कपोले कुरुते सौख्यं जंघायां क्लेशदायिनी ॥ शीर्षे राजश्रियोवाप्तिर्ललाटैश्वर्यवर्धनं । कर्णयोर्भूषणावाप्तिर्नेत्रयोर्भद्रदर्शनं ॥ कंठे नित्यं श्रियोवाप्तिः स्कंधयोर्विजयो भवेत् । धनलाभो बाहुयुग्मे करयोस्तु सुखं भवेत् ॥ स्तनयुग्मे तु सौभाग्यं हृदये सौख्यवर्धनं । पृष्ठे नित्यं महालाभः पार्श्वयोर्भयवर्धनं ॥ कटियुग्मे वस्त्रयुग्मे गुह्ये मृत्युसमागमः । जघनेऽर्थक्षयो नित्यं गुदे रोगभयं तथा ॥ ऊर्वोस्तु वाहनावाप्तिर्जानुयुग्मेऽर्थसंग्रहः । निरुद्यमो जंघयोस्तु पादयोर्मरणं तथा ॥ इत्थं पल्लीप्रपातस्य फलं ज्ञेयं विचक्षणैः । एतदेव फलं विद्यात्सरठस्य प्ररोहणे ॥ पतने फलमुत्कृष्टं रोहणे निष्फलं भवेत् । आरोहणं चोर्ध्वचक्त्रे अधोवक्त्रे प्रपातनं ॥ प्रतिपद्रोगसंप्राप्तिर्द्वितीया राज्यमेव च । तृतीयायां सुखप्राप्तिश्चतुर्थ्यां रोग एव च ॥ पंचम्यां च तथा षष्ठ्यां सप्तम्यां च धनागमः । अष्टमी नवमी चैव दशमी मरणप्रदा ॥ एकादश्यां पुत्रलाभो द्वादश्यां धनलाभदा । त्रयोदशीचतुर्दश्योर्हानिः पूर्णे महाधनः ॥ जयः सोमे बुधे जीवे शुक्रवारे सदा शुभा । शेषेषु चाशुभा प्रोक्ता वाराणां फलमीदृशं ॥ अश्विन्यां क्षेममारोग्यं भरणी रोगकारिणी । कृत्तिका धनलाभाय रोहि-

ण्यां च मृगे धनं ॥ आर्द्रा तु मृत्युदा पुष्यः पुनर्वसू च लाभदौ । आश्रेषायां मृतिः प्रोक्ता मघाया क्षेमदा भवेत् ॥ पूर्वायां मरणं चैव उत्तरा-हस्तयोस्तथा । चित्रा स्वाती शुभा ज्ञेया विशाखा धनदायिनी ॥ अनुराधासु सौराज्यं ज्येष्ठायां कष्टमेव च । मूले चैव तथा राज्यं पूर्वा-षाढा तथा शुभा ॥ उत्तरा रोगदा ज्ञेया अभिजिद्धनसंपदा । श्रवणः पुत्रलाभाय धनिष्ठा राज्यमेव च ॥ नक्षत्रे शततारायां मध्यमं फल-मादिशेत् । पूर्वोत्तरारेवतीषु हानिश्चैव प्रजायते ॥ मेषे च शुभदा प्रोक्ता वृषे हानिस्तथैव च । मिथुने रोगसंप्राप्तिः कर्के कलहमेव च ॥ सिंहे च फललाभाय कन्या धनक्षयावहा । तुला च धनलाभाय वृश्चिको धनलाभदः ॥ धनुर्ज्ञानं समाप्नोति मकरे वस्त्रलाभदा । कुंभे हानिश्च वि-ज्ञेया मीने शोकः प्रजायते ॥ मृत्युयोगे दग्धदिने क्रूरे च यमघंटके ॥ चंद्रेऽष्टमे नैधने च जन्मर्क्षे विषनाडिके ॥ क्रूरग्रहे क्रूरलग्ने क्रू-रैरेव निरीक्षिते । अष्टमस्थे क्रूरयुते विष्टिवैधृतिदूषिते ॥ स्पर्शमात्रे तयोः सद्यः सचैलं स्नानमाचरेत् । दुर्निमित्तं तयोर्नित्यं निष्फलं जा-यते ध्रुवं ॥ पंचगव्यं प्राशयित्वा कुर्यादाज्यावलोकनं । शस्ते वाऽप्यथवाऽशस्ते यदीच्छेच्छुभमात्मनः ॥ पुण्याहं वाचयित्वा तु शांतिकर्म स-माचरेत् । प्रतिरूपं तु सौवर्णं कुर्याद्वित्तानुसारतः ॥ रक्तवस्त्रेण संवेष्ट्य गंधपुष्पैश्च पूजयेत् । तस्याग्रे मृन्मयं रक्तं कलशं जलपूरितं ॥वस्त्र-माल्यैरलंकृत्य स्थापयेत्तंडुलोपरि । पंचामृतं पंचरत्नं पंचपल्लवसंयुतं ॥ गव्यं पंचकुशांश्चैव निक्षिप्यावाहयेत्ततः । पूजयेद्गंधपुष्पाद्यैर्लोकपालान् क्रमेण तु ॥ (अत्र धर्माब्धौ कलशे रुद्रपूजनमुक्तं) अग्नेश्च स्थापनं कुर्याद्धोमकर्म समाचरेत् । मृत्युंजयेन मंत्रेण समिद्भिः खादिरैः शुभैः॥तिलैर्व्याहृतिभिर्होम-मष्टोत्तरसहस्रकं । अष्टोत्तरशतं वापि कुर्यात्सम्यक्समाहितः ॥ धूपांगारादिकं कृत्वा शुचिर्भूत्वा समाहितः । स्वर्णदानं वस्त्रदानं तिलदानं च शक्तितः ॥ तद्दोषशमनार्थाय कुर्याद्ब्राह्मणभोजनं । इत्थं सम्यग्विधानेन शांतिकर्म समाचरेत् ॥ तस्यायुर्विजयो लक्ष्मीः कीर्तिर्वृद्धिश्च

जायते । पल्लीसरठयोः शांतिविधानेन शुभं भवेत् ॥ कीर्तितं सत्फलोपेतं सर्वारिष्टविनाशनं । सर्वशत्रुक्षयकरं प्रोक्तं गर्गेण धीमता ॥
नारदः । पल्ल्याः प्रपतने चैव सरठस्य प्ररोहणे । शुभाशुभं विजानीयात्तत्तत्स्थानविशेषतः ॥ पल्ल्याः प्रपतने पूर्वं फलमुक्तं शुभाशुभं । शीर्षे
राज्यश्रियोऽवाप्तिर्भाले त्वैश्वर्यवर्धनं ॥ सव्ये भुजे जयः प्रोक्तो ह्यपसव्ये महद्भयं । कुक्षौ दक्षिणभागे तु धनलाभस्तथैव च ॥ वामकुक्षौ तु
निधनं गदितं पूर्वसूरिभिः । सव्यहस्ते मित्रलाभो वामहस्ते तु निःस्वता ॥ उदरे दक्षभागे तु सुपुत्रावाप्तिरुच्यते । वामभागे महारोगः
कट्यां सव्ये महद्यशः ॥ वामकट्यां तु निधनं मुनिभिस्तत्वदर्शिभिः । जान्वोरेवं विजानीयात्सव्यपादे शुभावहं ॥ वामपादे तु गमनमिति
प्राहुर्महर्षयः । स्त्रीणां च सरठे चैव व्यस्तमेतत्फलं वदेत् ॥ फलं प्ररोहणे चैव सरठस्य प्रचारतः । सर्वांगेषु शुभं विद्याच्छांतिं कुर्या-
त्स्वशक्तितः ॥ शुभस्थाने शुभावाप्त्यै त्वशुभे दोषशांतये । तत्स्वरूपं सुवर्णेन रुद्ररूपं तथैव च ॥ मृत्युंजयेन मंत्रेण वस्त्रादिभिरथार्चयेत् ।
अग्निं तत्र प्रतिष्ठाप्य जुहुयात्तिलपायसैः ॥ आचार्यो वारुणैः सूक्तैः कुर्यात्तत्राभिषेचनं । आज्यावलोकनं कृत्वा शक्त्या ब्राह्मणभोजनं ॥
गणेशक्षेत्रपालार्कदुर्गाक्षोण्यंगदेवताः । तासां प्रीत्यै जपः कार्यः शेषं पूर्ववदाचरेत् ॥ ऋत्विग्भ्यो दक्षिणां दद्यात्षोडशभ्यः स्वशक्तितः ।
इति पल्लीसरठशांतिः ॥ ॥ अथ प्रयोगः । पल्ल्याः सरठस्य वा स्पर्शमात्रे सचैलं स्नात्वा विधिवत्पंचगव्यं प्राश्य आज्यपूर्णे कांस्य-
पात्रे स्वप्रतिबिंबमवलोक्य सदक्षिणं तद्ब्राह्मणाय दत्वाऽशुभनाशार्थं शुभवृद्ध्यर्थं वा शांतिं कुर्यात् । कर्ता आचमनादिदेशकालस्मरणांते मम
शरीरे पल्लीपतनसूचितसकलारिष्टपरिहारद्वारा० सग्रहमखां वृद्धगर्गोक्तां शांतिं० इति संकल्प्य ( सरठप्ररोहणे तत्पदोहः कार्यः ) गणेश-
पूजनपुण्याहवाचनादिऋत्विग्वरणांतं कुर्यात् । तत आचार्यः प्रादेशकरणांते स्थंडिलात्पूर्वे महीद्यौरित्यादिभिः कलशस्थापनादिपूर्णपात्रनिधा-

नांते पल्ल्याः सरठस्य वा यथाशक्तिहेमनिर्मितप्रतिमां तत्र निधाय रक्तवस्त्रेण संवेष्ट्य गंधादिभिः संपूज्याग्निं ग्रहांश्च प्रतिष्ठाप्यान्वादध्यात् । ग्रहादिकीर्तनांते मृत्युंजयं प्रधान० खदिरसमिद्भिः अष्टोत्तरशतसं० । प्रजापतिं तिलैः अष्टोत्तरसहस्रसं० ( १०८ वा ) अग्निं पृथिवीं महांतं १ वायुमंतरिक्षं महांतं २ आदित्यं दिवं महांतं ३ प्रजापतिं चंद्रमसं नक्षत्राणि दिशो महांत ४ चैता देवताः घृतसंमिश्रक्षीरेण एकैकयाहुत्या शेषेणेत्यादिग्रहादिहोमांते त्र्यंबकमंत्रेणोक्तसंख्यया समिद्धोमोत्तरं समस्तव्याहृतिभिस्तिलान्हुत्वा भूरग्नयेच० । भुवोवायवे० । सुवरादित्याय० । भूर्भुवःसुवश्चंद्रमसे० । एतैर्मंत्रैर्घृतमिश्रं क्षीरं जुहुयात् । ततः स्विष्टकृदादिप्रायश्चित्तहोमांते बलिदानपूर्णाहुती कृत्वा संस्रावहोमादिशेषं समाप्य स्थापितकलशोदकेन यजमानं सपरिवारमभिषिंचेत् । तत्र मंत्राः । नहितेक्षत्रमितिदशर्चस्य सूक्तस्य गृत्समदो वरुणस्त्रिष्टुप् । अभिषेके० । ततः समुद्रज्येष्ठादिपुण्यसूक्तैर्यौःशांतेत्यादिमंत्रैः पौराणमंत्रैश्चाभिषिक्तो यजमानो विभूतिं धृत्वा देवतोत्तरपूजां विधाय आचार्याय धेनुं वस्त्रयुगं ऋत्विग्भ्यो दक्षिणां च दत्वा सोपस्करं विसर्जितदेवतापीठमाचार्यहस्ते प्रतिपाद्य शक्त्या विप्रान्संभोज्य भूयसीं दत्वाशिषो गृहीत्वा कर्म समापयेत् । इति कमलाकरभट्टकृते शांतिरत्ने पल्लीसरठशांतिप्रयोगः ॥ ॥ अथाश्विनशुक्लप्रतिपदि रेवंतपूजा । तत्र मंत्रः । शालिहोत्रे । नमो देवाधिदेवाय तुरंगबलचारिणे । सूर्यपुत्राय देवाय तुरंगाणां हिताय च ॥ तुरंगपरिषद्यस्य नगजोपरि धावति । साश्वमश्वाधिपं रक्ष शरणं त्वां व्रजाम्यहं ॥ रूपनारायणीये । आचरप्राप्तं मंत्रांतरं यथा । सूर्यपुत्र महाबाहो छायाहृदयनंदन । शांतिं कुरु तुरंगाणां रेवंताय नमोस्तुते ॥ तत्रैव ब्राह्मे । अश्वयुक्शुक्लपक्षे तु स्वातियोगे शुभे दिने । पूर्वमुच्चैःश्रवा नाम प्रथमं सूर्यमावहत् ॥ तस्मात्साश्वैर्नरैस्तत्र पूज्योऽसौ श्रद्धया समं । पूजनीयाश्च तुरगा नवमी यावदेव हि ॥ शांतिस्वस्त्ययने कार्ये तदा तेषां

दिने दिने । धान्यं भल्लातकं कुष्ठं वचासिद्धार्थकांस्तथा ॥ पंचरंगेण सूत्रेण तदा तेषां तु बंधयेत् । वायव्यैर्वारुणैः सौरैः शाक्तैर्मैत्रैः सवैष्णवैः ॥ वैश्वदेवैस्तथाग्नेयैर्होमः कार्यो दिने दिने । तुरगा रक्षणीयाश्च पुरुषैः शस्त्रपाणिभिः ॥ न वा ताड्याः क्वचित्तत्र न च वाह्याः कथंचन ॥ आश्विनशुक्लपक्षे यस्यां तिथौ प्रातः स्वातियोगस्तदादि नवमीपर्यंतं प्रतिमायां रेवंतपूजा। पूर्वमुच्चैःश्रवसं संपूज्य प्रत्यक्षाश्वान्पूजयेदित्यर्थः । शालिहोत्रे । नीराजितैश्च तुरगैः कृते च लोहाभिसारिके यज्ञे । अभिषिक्ते राजाश्वे ततो नृपाणां भवेद्यात्रा ॥ आश्वयुजशुक्लपक्षे तिथौ द्वितीयादि सप्तरात्रं तु । वडवारूपेणैका स्वातिः सूर्यस्य वहति रथं ॥ सा भारेणाक्रांता क्रुद्धा यान्यान्निरीक्षतेऽभीक्ष्णं । तेषां तेजः सत्वं बलं च कृत्स्नं निगृह्णाति ॥ तस्मात्स्वात्युपतापे वाजिनि पीडा भवेन्महती । एवं च सप्तरात्रं स्वातेः संपात एष निर्दिष्टः ॥ तत्र दिवाकरकिरणैरस्पृष्टा वाजिनो रक्ष्याः । शालां तदोपलिप्तां मनोरमां वर्जितां च रविकिरणैः ॥ नानाकारैः पुष्पैरलंकृतां धूपितां कुर्यात् । तस्यां स्नातास्तुरगाः सुपूजिताभ्यर्चिता द्वितीयायां ॥ पुरुषैश्च शस्त्रहस्तैः सप्ताहं रक्षितव्यास्तु । गुग्गुलुहिंगुवयस्थां सवचापामार्गतंडुलं लोहं ॥ सिद्धार्थीश्वैलस्थान्बध्नीयाद्वाजिनां कंठे । वयस्था आमलकी । तंडुलं बीजं । वेदीं च कल्पयित्वा मध्यविधानेन यावकं जुहुयात् ॥ शालिहोत्रगदितेन मंत्रेणानेन होमयेत् । रोहिताश्व महाभाग हव्यवाडमरोत्तम ॥ धूम्रध्वज क्रतुहार स्वर्गस्य प्रथितः पथि । उत्तिष्ठ होमं गृह्णेमं शांतिरस्तु हयेषु च॥ स्वाहेति तत्र मंत्रेण प्रापयेत्प्रथमाहुतिं । ततः प्रजापतींद्राय सोमाय वरुणाय च ॥ विवस्वते कुबेराय सुषेणायाहिशायिने । आदित्येभ्यस्तथाऽश्विभ्यां रुद्रेभ्यो वसुभिः सह ॥ विष्णोश्च विश्वदेवानां साध्यानां मरुद्भिः सह । स्वाहाकारेण जुहुयात्प्रथमं हव्यवाहने ॥ प्रजापत्यादिमरुदंतेभ्यः समस्तेभ्य एकाहुतिरिति रूपनारायणः । विद्याधरयक्षगंधर्वनक्षत्रोडुगणग्रहांबरवासुकिप्रभृतिनागगरुडपौर्णमासीदेवतानदी-

नां सागरवनस्पतीनां स्वाहाकारेण जुहुयात् । अन्येभ्यो देवेभ्यः स्वाहेति तिस्रः । वादित्रं वाहनागारे गानं नित्यं प्रयोजयेत् । अतिक्रम्य च सप्ताहमष्टम्यां स्नापयेद्धयान् ॥ वरुणाय बलिं दत्वा पश्चात्तोयेऽवगाहयेत् । अष्टम्यां द्वितीयाद्यष्टमतिथौ नवम्यामित्यर्थः । ततः शुक्लनवम्यां तु निष्क्रम्य गराद्बहिः ॥ नवम्यामतीतायां दशम्यामित्यर्थः । तथाच भोजराजः । उत्सवविधिं प्रवितत बलिं च नीराजनं च बलवृद्ध्यै । आश्वयुजेऽष्टम्यादिषु कुर्वीत यथाक्रमं नृपतिः ॥ दिशि पूर्वोत्तरायां तु देशे प्राक्प्रवणे शुचौ । तत्र तोरणमुत्थाप्य दशहस्तं समुच्छ्रितं ॥ विस्तारेऽष्टौ समाख्यातं ध्वजमालाविभूषितं । शुद्धस्नातास्ततो वाहाः सांनाहिकपुरःसराः ॥ पुण्याहब्रह्मघोषैश्च गीतवादित्रनिस्वनैः । सूतमागधगंधर्वैः स्तूयमानाः स्वलंकृताः ॥ शस्त्रहस्तैश्च पुरुषैस्तथैवाश्वोपजीविभिः । नेतव्या रक्ष्यमाणाश्च तत्र तोरणसंनिधौ ॥ दक्षिणस्तंभनिकटे हुत्वा चाग्निं पुरोहितः । अष्टौ मनुष्या अव्यंगा उल्काहस्ता द्विधा स्थिताः ॥ तेनाग्निव्यतिहारेण कुर्युरुल्काप्रदीपनं । हविःशेषेण राजाऽश्वं प्रोक्षयित्वा तु तर्पयेत् ॥ चरुशेषेण पिंडं वाजिने दद्यादित्यर्थः । अश्वराज पुरोधास्तु विष्णुस्ते पुरतः स्थितः । वरुणः पाशहस्तस्त्वां पृष्ठतः परिरक्षतु ॥ वैवस्वतकुबेरौ च पार्श्वयोरभिरक्षतां । चंद्रादित्यौ पृष्ठवंशमुदरं पृथिवीधराः ॥ रक्षंतु वक्त्रं गंधर्वा बलमिंद्रो ददातु ते । हविःशेषमिदं प्राश्य विजयार्थं महीपतिः ॥ ततस्तं प्राशितं चापि पूजयद्भिषजां वरः । कर्णजापमिदं चास्य दक्षिणे श्रवणे न्यसेत् ॥ कुलाभिजननं जात्या लक्षणैर्व्यंजनोत्थितं । भर्तारमभिरक्ष त्वं शिवस्तव भवेदिति ॥ अंकदंडमनिष्टानि क्षमस्व तुरगोत्तम । एवमामंत्रितो वाजी ब्रह्मघोषनिनादितः ॥ सिच्यमानः कुशोत्सृष्टैर्वारिभिर्मंत्रसंस्कृतैः । ततस्तोरणमध्ये तु मंत्रिभिः सह पार्थिवः ॥ निर्गच्छेज्जयमुद्घोष्य शेषैरनुगतो हयैः । कुर्याच्चाश्वयुजं कर्म सर्वमेतदशेषतः ॥ इति रेवंतपूजा ॥

॥ अथाश्वशांतिः । मदनरत्ने शालिहोत्रे । उत्पातेषु निमित्तेषु वाजिनामिंगितेषु

च । हयशालोत्तरे भागे स्थंडिलं तत्र कारयेत् ॥ त्रिरात्रोपोषितस्तत्र शांतिं कुर्यात्पुरोहितः । नववासोभिरास्तीर्णे स्थंडिलं तु चतुर्दिशं ॥ उदकुंभास्तु चत्वारः स्थापनीयाश्चतुर्दिशं । रसपात्राणि देयानि पूर्णकुंभेषु तेष्वथ ॥ रसा दुग्धघृतदधिमधुरूपाः । शिरस्यलंकृतोष्णीषो यथावत्कृतमंगलः । आहुतीर्जुहुयाद्वह्नौ घृतेन तु समाहितः ॥ पितामहाय रुद्राय स्कंदाय वरुणाय च । अश्विभ्यां चैव शर्वाय शक्राय च तथाग्नये ॥ वायवे चाथ हरये श्रियै देव्यै तथैव च । गंधर्वेभ्यश्च सोमाय उच्चैःश्रवस एव च ॥ देवता या भवेत्तत्र उत्पातस्य च कारिणी । मंडले तां विदित्वा च बलिभिश्चाथ पूजयेत् ॥ शतमष्टाधिकं हुत्वा प्रतिदेवं पुरोहितः । ततस्तु पूजनं कुर्याद्देवतानां विशेषतः ॥ पायसोल्लेपिकादीपैर्धूपमाल्यानुलेपनैः । मधुपायससंमिश्रं विप्रा भोज्याः सदक्षिणाः ॥ एकैकं देवमुद्दिश्य दश सप्ताष्ट पंच वा । सुवर्णं चंदनं वासो गां च कांस्यं च दक्षिणां ॥ निष्कृत्यर्थं तदा देयं त्रिरात्रं तु महीभुजा । वाहांश्च पूजयेत्सर्वान्स्वस्ति वाच्या द्विजोत्तमाः ॥ एतद्धि शांतिकं कार्यं सर्वोत्पातविनाशनं । राज्ञो विजयदं पुण्यं धनधान्यविवर्धनं ॥ इति शांतिरत्ने गजाश्वशांतिः ॥

॥ अथ गजशांतिः । मदनरत्ने गारुडे । अथ राजा प्रकुर्वीत चतुर्थ्यां गजवाजिनां । शांतिमामयतप्तानां तदुत्पातोदये सति ॥ कवलानि च नादत्ते यदा त्वश्रूणि मुंचति । नानाव्याधिसमुत्थाभिः पीडाभिः पीड्यते यदा ॥ अरिष्टेऽपि समुत्पन्ने तथोत्पातभयेषु च । तदा शांतिं प्रकुर्वीत गजानां वाजिनां तथा ॥ शांत्यर्थं गजवाजीनां मंडपं चतुरस्रकं । द्वादशारत्निमानेन संमितं कारयेत्सुधीः ॥ कुंडं त्रिमेखलं कुर्याद्वृत्तं वा चतुरस्रकं । तत्पुरस्ताद्दक्षिणतः पश्चिमे चोत्तरे तथा ॥ चतुरस्रं ततः कुर्यात्कुंडं हस्तप्रमाणतः । कोणेषु च तथा कुर्याद्वृत्तं वार्धं त्रिकोणकं ॥ अर्कखादिरपालाशबिल्वाश्वत्थवटैरपि । उदुंबरैरपामार्गैः समिद्भिस्तत्र तत्र च ॥ मध्ये सर्वसमिद्भिर्वा पालाशैर्वाज्यबिल्वकैः । तिलतंडुललाजाभिः सक्तुसिद्धार्थशालिभिः ॥ यवैरपि

त्रिमध्वक्तैर्मध्ये सर्वमिति स्थितिः । दध्ना च पयसा चैव घृतेन मधुनाऽपि च ॥ कोणेषु च तथाज्येन मध्ये तु सकलैरपि । स्थापयेच्च ततः कुंभानष्टावष्टासु दिक्षु च ॥ वस्त्रयुग्मेन संछन्नान्सर्वौषधिसमन्वितान् । सर्वरत्नयुतान्युग्मान् गंधपुष्पोदकैरपि ॥ चतुरः कलशांस्तत्र चतुर्षु च समं ततः । कोणेषु च यथान्यायं जलवस्त्रादिकैर्युतान् ॥ स्मरेत्प्रधानकुंभे तु नरसिंहाकृतिं हरिं । शंखचक्रगदापद्मवज्राऽसिशरशक्तयः ॥ पूर्वादिक्रमयोगेन ध्यातव्याः कलशेष्वपि । बहिः शक्रादिदिक्पालांस्तत्र तत्र च पूजयेत् ॥ प्रधानकुंभात्पुरतः कुर्यात्तत्र च मंडलं । तत्र संपूज्य देवेशं पश्चाद्धोमादि साधयेत् ॥ मंडलाग्रे ततः कुंभं कुंभाग्रे कुंडमेव च । सर्वत्रानलसंस्कारः स्वगृह्योक्तेन कर्मणा ॥ जुहुयादग्निसिद्ध्यर्थं साज्याहुतिसहस्रकं । आनुष्टुभेन मंत्रेण गुरुर्वाऽस्य पुरोहितः ॥ आनुष्टुभो नृसिंहमंत्रः । समिदाज्यचरूनेवं हुत्वा मंत्री समाहितः । संपाद्याज्याहुतीनां च सहस्रं वाऽयुतं चरेत् ॥ ततः स्विष्टकृदित्यादि समाप्य विधिवत्ततः । संस्पृशेदुदकुंभं च जपेद्दशसहस्रकं ॥ पर्यंतकलशान्स्पृष्ट्वा जपेत्तत्र सहस्रकं । अंतरेषु च कुंभेषु गायत्र्या प्रणवेन वा ॥ ऋत्विग्भिर्युगपत्कार्यं होमतंत्रं तु पूर्ववत् । प्रतिकुंभं सहस्रं च जपेत्तानप्युपस्पृशन् ॥ पूजयेल्लोकपालादीन् गंधादिभिरतंद्रितः । अथ राजानमाकार्य स्वास्तीर्णे सिंहविष्टरे ॥ कुंभोदकेन देवाग्रे तन्मंत्रेणाभिषेचयेत् । पर्यंतकलशैश्चापि नृपं पश्चाद्गजादिकं ॥ गजादीनवशिष्टेन तोयेन स्नापयेद्बुधः । अन्यवाहान् द्विपांश्चैव सर्वानेव समाहितः ॥ बाह्यकुंभोदकेनैव स्नापयेत्तत्र साधकः । राज्ञो नीराजनं कुर्याद्वाहनेषु च मंत्रवित् ॥ दक्षिणामप्यलं दत्वा ऋत्विग्भ्यो गुरवे नृप । वाहनं वस्त्रभूषादि आचार्याय निवेदयेत् ॥ ग्रामदानैश्च रत्नैश्च विप्रेंद्रान्पूजयेत्सुधीः । सर्वालंकारसंयुक्तं राजवाहोपरि स्थितं ॥ आचार्यो राजभवने नृपं संवेशयेत्स्वयं । पूर्वस्नानावशिष्टेन कुंभतोयेन मंत्रवित् ॥ गजशालां च संप्रोक्ष्य वाजिशालां तथैव च । सिद्धार्थतंडुलतिलैः पुष्पैश्चाप्यव-

कीर्य च ॥ शालामध्ये नृसिंहं च सुदर्शनमनामयं । पूजयेद्गंधपुष्पाद्यैः सर्वालंकारसंयुतं ॥ सक्तुभिः कृसरान्नेन कुर्याद्भूतबलिं बहिः । ततः शालासु सर्वासु ब्राह्मणान्भोजयेद्बहून् ॥ ततः संवेशनं कुर्यादाचार्यो गजवाजिनां । एवं शांतौ कृतायां तु सर्वबाधाविवर्जितः ॥ सपुत्रो गजयुक्तस्तु नृपस्तेन महीयते । इति शांतिरत्ने गजाश्वशांतिः ॥ ॥ अथ पशुमारशांतिः । परशुरामप्रतापे ब्रह्मांडे । यदा पशूनां पुरदेशमध्ये दुष्टव्रणाः स्युः कृमयस्त्वकाले । ज्वरातिपीडा च तदैव विद्यान्मारी पशूनां समुपागतेयं ॥ तत्र मात्स्ये । पशूनां मरके प्राप्ते नराणामथ दारुणे । एतेषु दृश्यमानेषु रौद्री शांतिस्तदेष्यते ॥ इति पशुमारशांतिः ॥ ॥ अथ गोशांतिः । गर्गः । व्याधयस्तु दश प्रोक्ता गवां वक्ष्यामि तांस्तु ते । उद्वेगो त्वृदयग्राही पतनं मोहनं तथा ॥ गोलिंगः पूतना चैव दारुणो घोटकस्तथा । कर्णलंबश्च गोघ्नश्च दशमो व्याधिरुच्यते ॥ तेषां रूपं समुत्थानां शांतिं चापि ब्रवीमि वः । रात्रौ गोष्ठेषु या गावो विवसंति [ विचरंति ] यतस्ततः ॥ अश्रुप्रमोक्षं कुर्वंति व्रजंति प्रपतंति च । श्रोणितं चैव कुर्वंति पुरीषं मूत्रमेव च ॥ हुंकारं चैव कुर्वंति मंडलानि तथैव च । प्रतिष्ठाप्याग्रतो देवान्वेदिं कुर्यात्प्रमाणतः ॥ देवा ग्रहाः । पूर्णकुंभान्कुशान्माल्यं लाजांश्चैवाथ पोलिकाः । मद्यं मांसं सुपक्वं च तथैव तिलपिंडकान् ॥ घृतसर्षपतैलेन सर्षपानक्षतांस्तथा । शुक्लप्रतिसरान् धातून्समिधश्च समाहरेत् ॥ उदुंबरं पलाशं च खदिरं बिल्वमेव च । अश्वत्थं चैव दूर्वाश्च समिधस्तत्र कारयेत् ॥ ततो रुद्रं संपूज्य स्तुतिः । यथा । ब्राह्मणा ब्रह्मशब्देन स्तुवंति सततं तु यं । स शिवः शाश्वतो देवो गोषु मारीं व्यपोहतु ॥ पूज्यते सततं भक्त्या विष्णुना प्रभविष्णुना । स शिवः० ॥ श्रीमता रुचिरांगेन घंटाकर्णगणेन यः । नित्यं प्रणम्यते भक्त्या त्वृष्टेनानन्यचेतसा । स शिवः० ॥ नित्यं रुद्रबलोपेतो रुद्रभक्तिसमन्वितः । घंटाकर्णगतो देवो यः शिवो ज्ञानसाधकः । शिवयोगानुभावेन गोषु मारीं

व्यपोहतु ॥ शिवाय देवदेवाय महादेवाय योगिने । रुद्राय स्थाणवे नित्यं नागहाराय ते नमः ॥ पराशराय सिद्धाय मंत्रसिद्धिप्रदायिने । त्र्यंबकाय महेशाय अनंताय नमो नमः ॥ अभिमंत्र्य शिवं तोयमेतैर्मंत्रैर्यथाक्रमं । प्रोक्षयेत्तु गवां देहं ततः शांतिर्भवेद्ध्रुवं ॥ इदं यः पठते गोषु रोगार्तासु विशेषतः । गोशांतिकृत्सर्वकालं गोषु शांतिर्भवेद्ध्रुवं ॥ इति गोशांतिः ॥ ॥ अथाश्वशांतिः । परशुरामप्रतापे स्कांदे । देशमन्यं नयेत्क्षिप्रं वाहानन्यांश्च दूरयेत् । रेवंतं पूजयेत्तत्र महाकालीं हरिं हरं ॥ सहस्रकलशस्नानं भवेदद्भुतनाशनं । अश्वानां व्याधयो यत्र शक्त्या ब्राह्मणभोजनं ॥ दद्यादेवं कृते क्षिप्रं व्याधिः शाम्यति वाजिनां । ईश्वरस्य कुबेरस्य यमस्य वरुणस्य च ॥ बृहस्पतेरुशनसो महेंद्रस्य विवस्वतः । पूजां कुर्यान्नरो नित्यं होमं चापि विचक्षणः ॥ तत्र माहेश्वराः सप्त महादेवाद्विनिर्गताः । चत्वारो राजसास्तेषु मुनिभिः परिकीर्तिताः ॥ त्रयो रौद्राः सुरा ज्ञेया ये च निघ्नंति वाजिनः । वाहप्राणहरा राजन् रुद्रस्य वशवर्तिनः ॥ त्रिदिनं चैव सप्ताहं दशाहं पक्षमेव च । यावत्कालं कर्म कुर्यात्पूजयेत्तावदेव हि ॥ तावदेव तु होमं च कुर्याद् ग्रहपुरःसरं । देवतानां प्रसादेन रोगा मुंचंति वाजिनः ॥ शालिहोत्रे । स्थानापकर्षणं कृत्वा शिवपूजा विधीयते । उच्चैःश्रवा हयः पूज्यो नक्षत्रमपि जन्मनः ॥ विनायकोपसृष्टेन पूज्यो गणपतिर्भवेत् । हयमारे समुत्पन्ने हयानां चाप्युपद्रवे ॥ इमां शांतिं प्रवक्ष्यामि तन्मे निगदतः शृणु । अहोरात्रोषितो भूत्वा शांतिं कुर्यात्पुरोहितः ॥ चत्वारो ब्राह्मणास्तस्य सहायाः स्युर्जितेंद्रियाः । ऋग्वेदपारगश्चैको द्वितीयो यजुषां वरः ॥ तृतीयः सामविन्मुख्यश्चतुर्थश्चाप्यथर्ववित् । मध्येऽग्निकुंडं कुर्वीत मंडपं तु समंततः ॥ विदिक्षु विन्यसेत्कुंभान्पूर्णानौषधिवारिणा । रसपात्रं न्यसेत्तेषु ऐशानादिक्रमेण तु ॥ सर्पिषः पयसो दध्नो मधुनश्च यथाक्रमं । कुंभस्थं पूर्वभागे तु यजेद्देवेश्वरं विभुं ॥ दक्षिणे तु यमं कुर्यात्पश्चिमे वरुणं तथा । उत्तरे तु तथा भागे यजेद्वैश्रवणं विभुं ॥

देवाश्च पूज्या विधिवदाज्यहोमस्ततो भवेत् । ततः पूर्ववत् तत्तद्देवतामंत्रजपश्चाभिषेकश्च । इत्यश्वशांतिः ॥ ॥ अथ खरशांतिः । परशुरामप्रतापे स्कांदगारुडयोः । अष्टोत्तरायुतं कुर्यादग्निसूक्तेन वै द्विजः । जपं होमं चरुघृतात्खराणां शांतिकारकं ॥ अग्निसूक्तमग्निंदूतमित्यादि । इति खरशांतिः ॥ ॥ अथ सारमेयशांतिः । तत्रैव । एवमेव प्रकर्तव्या सारमेयरुजापहा । शांतिः शांतिविधानज्ञैः पूर्वदृष्टेन वर्त्मना ॥ इति सारमेयशांतिः ॥ ॥ अथ भविष्योक्ता महाशांतिः । कृष्ण उवाच । महाशांतिं प्रवक्ष्यामि महादेवेन भाषितां । पार्थिवानां हितार्थाय महादुस्तरतारिणीं ॥ नृपाभिषेके सा कार्या यात्राकाले नृपस्य तु । दुःस्वप्ने दुर्निमित्ते च ग्रहवैगुण्यसंभवे ॥ विद्युदुल्कानिपाते च जन्मर्क्षे ग्रहभेदने । केतूदये च निर्घाते क्षितिकंपस्य संभवे ॥ प्रसूतौ मूलभे जंतोर्यमलस्य तु संभवे । छत्राणां च ध्वजानां च स्वस्थानात्पतने भुवि ॥ काकोलूककपोतानां प्रवेशे वेश्मनस्तथा । क्रूरग्रहाणां वक्रेषु जन्मादिषु विशेषतः ॥ जन्मनि द्वादशे चैव चतुर्थे वाऽष्टमे तथा ॥ यदा स्युर्गुरुमंदाऽऽराः सूर्यश्चैव विशेषतः ॥ आरो भौमः । युद्धे ग्रहाणां सर्वेषां सूर्यशीतांशुकीलके ॥ वस्त्रायुधगवाश्वेषु मस्तके शयनासने ॥ यद्यग्निः परिदृश्येत रात्राविंद्रधनुस्तथा । वेश्मनश्च तुलाभंगे गर्भेष्वश्वतरीषु च ॥ रविबिंबद्वये दृष्टे महाशांतिः प्रशस्यते । सर्वाणि दुर्निमित्तानि प्रशमं यांति सर्वथा ॥ तां कुर्युर्ब्राह्मणाः पंच कुलशीलसमन्विताः । चतुर्वेदास्त्रिवेदाश्च द्विवेदाश्चापि पांडव ॥ आथर्वणा विशेषेण बह्वृचास्तु सुसंयताः । कृच्छ्रोपवासनक्ताद्यैः कृतकायविशोधनाः ॥ पूर्वमाराध्य मंत्रांस्तु प्रारभेत ततः क्रियाः । दशद्वादशहस्तं वा मंडपं कारयेच्छुभं ॥ तन्मध्ये वेदिकां कुर्याच्चतुर्हस्तप्रमाणतः । आग्नेय्यां कारयेत्कुंडं हस्तमात्रं सुशोभनं ॥ मेखलात्रयसंयुक्तं योन्या वापि समन्वितं । रवींद्वोरुपरागेषु महोल्कापतनेषु च ॥ उत्पातेषु तथाऽन्येषु निमित्तेषु च सर्वशः । सर्वारिष्टोपशमनी महाशांतिः प्रशस्यते ॥ चारुचंदनमालाढ्ये तोरणालंकृते तथा । गोमयेनोपलिप्ते च मं-

डपे ते द्विजातयः ॥ शुक्लांबरधराः स्नाताः शुक्लमाल्यानुलेपनाः । कर्म कुर्युरिति शेषः । ततश्च पंचकलशांस्तस्यां वेद्यां निवेशयेत् ॥ आग्नेयादिषु कोणेषु पंचमं मध्यतस्तथा । अष्टपत्रकृते पद्मे चूतपल्लवधारिणि ॥ ब्रह्मकूर्चविधानेन पंचगव्यं तु कारयेत् । गोमूत्रं ताम्रवर्णाया इत्यादिना मंत्रवत्पंचगव्यं कृत्वेत्यर्थः । औषधीः पंचरत्नानि रोचना चंदनं तथा ॥ सिद्धार्थकान् शमीदूर्वाकुशान्व्रीहियवांस्तथा । आपामार्ग फलवतीं न्यग्रोधोदुंबरौ तथा॥प्लक्षाश्वत्थकपित्थांश्च प्रियंगूश्चूतपल्लवान् । हस्तिदंतं मृदं चैव कोणकुंभेषु विन्यसेत्॥फलवती गंधप्रियंगुः । प्रियंगुः कंगुः । पुण्यतीर्थोदकोपेतं पंचगव्यं च मध्यमे । ऋचंवाचमितीदं च वह्निकुंभाभिमंत्रणे ॥ आशुःशिशानो नैर्ऋत्यां यद्देवा वायुगोचरे । ईशावास्यं चतुर्थस्य कुंभस्य त्वभिमंत्रणे ॥ मध्यमे त्वथ जप्तव्या रुद्राः कुंभे यजुर्भवाः । गंधपुष्पाक्षतैर्वस्त्रैर्नैवेद्यैर्घृतपाचितैः ॥ फलैश्च नारिकेलाद्यैर्दीपकैः कुंभपूजनं । स्वस्तिवाचनकं चैव कारयेत्तदनंतरं ॥ क्रमेणानेन शनकैरग्निकार्यं प्रयोजयेत् । अग्निंदूतमिहाग्निं च पूर्वमेव निधापयेत् ॥ पूर्वं कलशस्थापनात् । हिरण्यगर्भःसमिति ब्रह्मासननियोजने । कयानसाप्रणीतापो मंत्रेण विनिवेशयेत् ॥ कृत्वा संस्करणं वह्नेराज्यसंस्कारमेव च । अथवासादयेदत्र द्रव्यं यस्य प्रयोजनं ॥ ततः पुरुषसूक्तेन पायसश्रपणं भवेत् । अभिघार्याथ संसिद्धं पायसं स्थापयेद्भुवि ॥ अष्टादशप्रमाणेध्मान्दद्यादथ शमीमयान् । पालाशीः समिधः सप्त सप्तते इति दापयेत् ॥ आघारावाज्यभागौ तु हुत्वा पूर्वक्रमेण तु । जुहुयादाहुतीः सप्त जातवेदस इत्यृचा ॥ स्थालीपाकस्य जुहुयात्पुनर्वै जातवेदसे । तरत्समंदीसूक्तेन चतस्रो जुहुयात्ततः ॥ यमायेतिच सप्तान्याः स्वाहांता जुहुयात्ततः । इदंविष्णुस्ततः सप्त जुहुयादाहुतीर्नृप ॥ नक्षत्रेभ्यस्ततः स्वाहा सप्तविंशतिराहुतीः । नक्षत्राहुतयश्च कृत्तिकाभ्यःस्वाहेत्यादिभिर्मंत्रैः कार्याः । तत्र रोहिणीद्वयपुष्यहस्तादित्रयानुराधादित्रयाभिजिद्द्वयशतभिषग्रेवतीष्वेकवचनं । पुनर्वसुफल्गुनीद्वयविशाखाऽश्वि-

नीषु द्विवचनं । शेषेषु बहुवचनं । यत्कर्मणेति जुहुयात्ततः स्विष्टकृतं पुनः ॥ ग्रहहोमस्तथा कार्यस्तिलैराज्यपरिप्लुतैः । प्रायश्चित्तं ततो हुत्वा होमकर्म समापयेत् ॥ ततस्तु तूर्यनिर्घोषैः काहलाशंखनिस्वनैः । यजमानस्य कर्तव्यो ह्यभिषेको द्विजोत्तमैः ॥ काश्मर्यवृक्षसंभूते समे भद्रासने स्थितं । काश्मर्यः श्रीपर्णी । वेदीमध्यगतं कृत्वा दुर्निमित्तप्रशांतये ॥ पंचभिः कलशैः पूर्णैर्मंत्रैरेतैर्यथाक्रमं । सहस्राक्षेण प्रथमं ततश्चैव शतायुषा ॥ सजोषसाचंद्र इति विश्वानिवरुणेति च । द्रुपदादिवेति ततः स्नापयेयुः समाहिताः ॥ ततो दिशां बलिं दद्याद्विचित्रान्नसमन्वितं । नमोस्तुसर्वऋक्षेभ्य इतिमंत्रमुदाहरेत् ॥ स्नातस्य ब्राह्मणाः सर्वे पठेयुः शांतिमुत्तमां । शांतितोयेन धारां च पातयित्वा समंततः ॥ पुण्याहवाचनं कृत्वा शांतिकर्म समापयेत् । तीर्थे देवालये वाऽपि गोदोहं कारयेद्बुधः ॥ क्षितिं हिरण्यं वासांसि शयनान्यासनानि च । विप्रेभ्यो दक्षिणां दद्याद्यथाशक्त्या विमत्सरः ॥ दीनानाथविशिष्टेभ्यो दद्याच्चैव युधिष्ठिर । भोजनं चानिशं दत्वा ततः सर्वं प्रसिध्यति ॥ आयुश्च लभते दीर्घं शत्रून्विजयते क्षणात् । दुर्गाणि चाऽस्य सिध्यंति पुत्रांश्च लभते शुभान् ॥ यथा शस्त्रप्रहाराणां कवचं वारणं भवेत् । तथा दैवोपघातानां शांतिर्भवति वारणं ॥ अहिंसकस्य दांतस्य धर्मार्जितधनस्य च । दयादाक्षिण्ययुक्तस्य सर्वे सानुग्रहा ग्रहाः ॥ अर्थान्समर्थयति वर्धयते च धर्मं कामं प्रसाधयति तस्य पिनाष्टि पापं । यः कारयेत्सकलदोषहरां महाख्यां शांतिं प्रशांतत्द्धदयः पुरुषः सदैव ॥ इति महाशांतिः ॥

॥ अथ बंधमोक्षः । तत्र महाभारतस्थकृष्णसहस्रनामस्तोत्रस्यायुतं सहस्रं वा जपः कार्यः । तदुक्तं भारते । रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बंधनादिति । तथा भीष्मपर्वस्थार्जुनकृतदुर्गास्तोत्रं वा पूर्वसंख्यया जपेत् । तदुक्तं तत्रैव । विवादे जयमाप्नोति बद्धो मुच्येत बंधनादिति । उभयत्र तद्दशांशेन पायसेन तिलैर्वा होमः । तथा हरिवंशस्थमनिरुद्धकृतमार्यास्तोत्रं कृष्णावतारस्थमार्यास्तोत्रं

बलिकृतवामनस्तोत्रं वा जपेत् । ऋग्विधानेऽपि । बद्धो वाऽप्यवरुद्धो वा वाग्यतः प्रयुतं जपेत् । त्वांन्वित्यादित्यदेवत्या सद्यो मुच्येत बंधनात् ॥ तथा । ध्रुवासुत्वा जपेन्मंत्रं यो बद्धः श्रृंखलादिना । बंधनान्मुच्यते सत्यं नारी वा पुरुषोऽपि वा ॥ तदिन्नक्तमुदुत्तममितिद्व्योर्वा जपः कार्यः । वरुणस्य तार्क्ष्यस्य वा पलेन तदर्धेन कृतां वा प्रतिमां दद्यात् । अन्येऽपि बटुकभैरवस्तोत्रमंत्रकार्तवीर्यदीपस्तोत्रजपादयो ज्ञेयाः । यद्वा मंत्रकोशे । तारो हिलियुगं बंदी देवी ङेंऽता नमोंऽतका । एकादशाक्षरो मंत्रो भैरवस्त्रैष्टुभस्तथा ॥ ( तारः प्रणवः । ङेंता चतुर्थ्यंता । ॐ हिलिहिलिबंदीदेव्यैनम इति मंत्रः ) देवीमुन्यादयः प्रोक्ता एकेन हृद्दशोंऽगकं । विधाय संस्मरेद्बंदीं रत्नसिंहासने स्थितां ॥ सतोयपाथोदसमानकांतिमभीतिपीयूषकरीरहस्तां । सुरांगनाराधितपादपद्मां भजामि बंदीं भवबंधमुक्त्यै ॥ लक्षयुग्मं जपेन्मंत्रं पायसान्नैर्दशांशतः । हुत्वा पूर्वोदिते पीठे पूजयेद्बंधमुक्तये ॥ अष्टदलपद्मगर्भे चतुरस्रे इत्यर्थः । अंगपूजा केसरेषु शक्तयः पत्रमध्यगाः । पीठपूजां ततः कृत्वा षडंगानि प्रपूजयेत् ॥ कामदा मानदा नक्ता मधुरा मधुरानना । नर्मदा भोगदा नंदा प्राणदा पीठशक्तयः ॥ मनोहरा च या बंदी योगपीठाय ते नम इति पीठपूजां कृत्वा शक्तीः पूजयेदित्यर्थः । ताश्च । काली तारा भगवती कुब्जाह्वा शीतलापि च । त्रिपुरा मातृका लक्ष्मीर्दिगीशा आयुधानि च ॥ एवमाराधिता बंदी प्रयच्छेदीप्सितं नृणां । एकविंशत्यहोरात्रं चायुतं प्रत्यहं जपेत् ॥ ब्रह्मचर्यरतो मंत्री गणेशार्चनपूर्वकं । कारागृहनिबद्धस्य मोक्ष एवं कृते भवेत् ॥ चतुरस्रे ठकारांतरपूपोपरि संलिखेत् । ठकारः स्वाहाशब्दः । साध्यनाम घृतेनैव मायाबीजं च दिक्ष्वपि ॥ मनुनाऽष्टादशार्णेन चतुरस्रं प्रवेष्टयेत् । वाग्बीजं भुवनेशार्नी रमा बंदी च केशव ॥ अमुष्य बंधतो मोक्षं कुरु युग्मं च ठद्वयं । वसुचंद्रार्णमंत्रोऽयं क्षिप्रं बंधविमोक्षदः ॥ ऐं ह्रीं श्रीं बंदि अमुष्य बंधमोक्षं कुरु कुरु स्वाहेति मंत्रः । तस्मिन्नपूपे संपूज्य बंदीमा-

वरणान्वितां ॥ कारानिकेतनस्थाय मित्राय प्रतिदीय तं । स शुद्धो वाग्यतो भूत्वा भक्षयेत्तमपूपकं ॥ तस्मिन्संभक्षिते बद्धो मुच्यते बंधनाद्द्रुतं । एवं वै कथिता बंदी स्मरणाद्बंधमुक्तिदा ॥ इति बंधमोक्षः ॥ ॥ अथ शक्रध्वजोच्छ्रायः । कालिकापुराणे । अथातः शृणु राजेंद्र शक्रोत्थानं महोत्सवं । यं कृत्वा नृपतिर्याति न कदाचित्पराभवं ॥ तथा । अर्जुनश्चाश्वकर्णश्च प्रियको धव एव च । उदुंबरश्च पंचैते केत्वर्थे सत्वचः स्मृताः ॥ अन्ये च देवदार्वाद्याः शालाद्यास्तरवस्तथा । न च वृक्षं रुजेद्रात्रौ स्पृष्ट्वा मंत्रमिमं पठेत् ॥ रुजेच्छेदयेत् । तत्रायं क्रमः । यानि वृक्षेषु भूतानि तेभ्यः स्वस्ति नमो नमः । उपहारं गृहीत्वेमं क्रियते वासवध्वजः ॥ पार्थिवस्त्वां वरयते स्वस्ति तेऽस्तु नगोत्तम । ध्वजार्थं देवदेवस्य पूजेयं प्रतिगृह्यतां ॥ ततः परेऽह्नि तं छित्वा मूलमष्टांगुलं पुनः । जले क्षिपेत्तथाऽग्रस्य छित्वा च चतुरंगुलं ॥ ततो नीत्वा पुरद्वारं केतुं निर्माय तत्र वै । शुक्लाष्टम्यां भाद्रपदे केतुं वेदीं प्रवेशयेत् । द्वाविंशद्धस्तमानस्तु अधमः केतुरुच्यते ॥ द्वात्रिंशत्तु ततो ज्यायांश्चतुस्त्रिंशत्ततो वरः ॥ कुमार्यः पंच कर्तव्याः शक्रस्य नृपसत्तम । शालमय्यस्तु ताः सर्वा अपराः शक्रमातृकाः ॥ केतोः पादप्रमाणेन कार्याः शक्रकुमारिकाः ॥ मातृकार्धप्रमाणात्तु यंत्रं हस्तद्वयं तथा ॥ एवं कृत्वा कुमारीश्च मातृकाः केतुमेव च ॥ एकादश्यां सिते पक्षे यष्टीनामधिवासनं ॥ अधिवास्य ततो यष्टीगतं शक्रं तु पूजयेत् ॥ शक्रस्य प्रतिमां कुर्यात्कांचनीं दारवीं तथा । अन्यतैजसभूतां वा सर्वाभावे च मृन्मयीं ॥ तां मंडलस्य मध्ये तु पूजयित्वा विशेषतः ॥ ततः शुभे मुहूर्ते तु केतुमुत्थापयेन्नृपः ॥ वज्रहस्त सुरारिघ्न बहुनेत्र पुरंदर । क्षेमार्थं सर्वलोकानां पूजेयं प्रतिगृह्यतां ॥ एह्येहि सर्वामरसिद्धसंघैरभिष्टुतो वज्रधरामरेश । समुत्थितस्त्वं श्रवणाद्यपादे गृहाण पूजां भगवन्नमस्ते ॥ इंद्रमंत्रेण तंत्रेण नानानैवेद्यचंदनैः । घटेषु दशदिक्पालान् ग्रहांश्चापि प्रपूजयेत् ॥ साध्यादीन्सकलान्देवान् मातॄः सर्वाश्च पूजयेत् ॥

ततः शुभे मुहूर्ते च ज्ञातृवर्धकिसंयुतः ॥ केतुस्थापनभूमिं च यज्ञवेद्यां च पश्चिमे। शिष्टैः पुरोहितैः सार्धं गच्छेद्राजा सुमंगलैः॥ बहुभिर्वर्धयन् रम्यं गृहं शिष्टैः समातृकं । कुमारीभिश्च संयुक्तं दिक्पालानां च पंचकैः ॥ यथावर्णैर्यथादेशं योजितैर्वस्त्रवेष्टितं। युक्तं तत्किंकिणीजालैर्बृहद्घंटौघचामरैः॥ चित्रमाल्यांबरैश्चापि चारुभिश्चाथ तोरणैः। उत्थापयेन्महाकेतुं राजाऽमात्यैः शनैः शनैः॥ प्रतिमां तां न्यसेन्मूले केतौ शक्रं विचिंतयेत् । यजेत्तु पूर्ववत्तत्र शचीं मातलिमेव च ॥ जयंतं तनयं तस्य चंद्रमैरावतं तथा । ग्रहांश्चाप्यथ दिक्पालान्सर्वाश्च गणदेवताः ॥ पूजितानां च देवानां होमं चापि समाचरेत् । होमांते तु बलिं दद्याद्वासवाय महात्मने ॥ तिलं घृतं चाक्षतं च पुष्पदूर्वास्तथैव च । एतैरेतान्स्वस्वमंत्रैरर्चयेच्च नरोत्तमः ॥ ततो होमावसाने तु ब्राह्मणानपि भोजयेत् । एवं प्रपूजयेन्नित्यं सप्तरात्रं दिने दिने ॥ त्रातारमिति मंत्रोऽयं वासवस्य प्रियः सदा। एवं कृत्वा दिवाभागे शक्रोत्थापनमादितः ॥ श्रवणर्क्षयुतायां तु द्वादश्यां पार्थिवः स्वयं । अंत्यपादे भरण्यां तु निशि शक्रं विसर्जयेत् ॥ सुप्तेषु सर्वलोकेषु यथा राजा न पश्यति । सार्धं सुरासुरगणैः पुरंदर शतक्रतो । उपहारं गृहीत्वेमं माहेंद्रध्वज गम्यतां ॥ उत्पाते सप्तरात्राणि तथोपप्लवदर्शने । व्यतीत्य शनिभौमौ च अन्यर्क्षेऽपि विसर्जयेत् ॥ तथा रक्षेन्नृपः केतुं न पतेच्छकुनिर्यथा । शनैः शनैः पातयेत्तु यथोत्थापनमादितः ॥ विसृष्टं सर्वकेतुं च सालंकारं तथा निशि । क्षिपेदनेन मंत्रेण अगाधसलिले नृपः ॥ तिष्ठ केतो महाभाग यावत्संवत्सरं जले । भगवन्सर्वलोकानामंतरायविनाशन ॥ उत्थापयेत्तस्य चरैः सर्वलोकस्य वै पुनः । एवं यः कुरुते पूजां वासवस्य महात्मनः । न तस्य राज्ये दुर्भिक्षं तनयो नाप्यधर्मकृत् ॥ इति शक्रध्वजोच्छ्रायः॥ ॥ अथायुष्यहोमः । मदनरत्ने शौनकः। आयुष्यहोमं वक्ष्यामि शौनकोऽहं द्विजन्मनां। कुर्यात्त्रिजन्मनक्षत्रे विषुवे संक्रमे तथा॥ पौर्णमास्याममायां वा ग्रहणे चंद्रसूर्ययोः । स्नातः शुक्लांबरधरः शुक्लमाल्यानुलेपनः ॥ अलंकृत्य

स्वस्ति वाच्य अन्नं दद्याद्विजातये। अथाज्यभागपर्यंतं कृत्वोपलेपनादिकं। घृताक्तं जुहुयादन्नमवदानस्य संपदा॥आनोभद्राःक्रतवइत्यृचां तु दशके-न च॥ इमंस्तोममर्हतेइत्यृचां षोडशकेन च। एकया जातवेदस्या हुनेत्स्विष्टकृतं ततः॥ होमशेषं समाप्याथ ब्राह्मणान्भोजयेत्ततः। स्वस्ति वाच्य द्विजाग्र्येभ्यो धेनुं दद्यात्सदक्षिणां॥ इत्यायुष्यहोमः॥ ॥ अथ ज्वरशांतिः संगृह्यते। अथातः संप्रवक्ष्यामि शौनको ज्वरशांतिकं। जन्मत्रयादिदिवसे जन्मनक्षत्रभूषिते॥ पुण्याहवाचनं कृत्वा कलशस्थापनादिकं। त्रिशिरस्कं त्रिपादं च त्रिहस्तं च त्रिशूलधृक्॥ ईश्वरं शक्तिरूपं च ध्यात्वा देवं प्रपूजयेत्। ज्वरराजायनमइत्यष्टोत्तरशतं जपेत्॥ भस्मायुधाय विद्महे एकदंष्ट्राय धीमहि। तन्नो ज्वरः प्रचोदयात्॥ इति मंत्रं प्रजप्याथ स्पृष्ट्वा कुंभाभिमंत्रणं। ततो होमं प्रकुर्वीत स्वगृह्योक्तविधानतः॥ अन्वाधानादिकं कृत्वा चक्षुरंतं च कारयेत्। शांत्यर्थं चरुणाज्येन अष्टोत्तरसहस्रकं॥ अष्टोत्तरशतं वाथ अष्टाविंशतिमेव वा। ज्वरराजायस्वाहेति अथ भस्मायुधाय च॥ (अथेति अथवेत्यर्थः। गृहीत्वातामथांबिकामितिवत्) होमशेषं समाप्याथ नमस्कारं ततः परं। ज्वरराजं तर्पयामि ज्वरगायत्रीमंततः॥ फलीकरणमिश्रैर्वा सतिलैस्तर्पयेद्बुधः। त्रिपंचसप्तरात्रेण सर्वज्वरनिवारणं॥ अभिषेकं ततः कृत्वा दानं दद्याद्विजातये। ब्राह्मणान्भोजयित्वाऽथ ज्वरमुक्तिर्भविष्यति॥ ॥ अथ प्रकारांतरेण स्फुटवचनानि। ज्वरस्वरूपिणं रुद्रं सुवर्णेन विनिर्मितं। यथाशक्ति प्रकुर्वीत वित्तशाठ्यविवर्जितः॥ शुक्लवस्त्रोपरि लिखेन्मंडलं चाष्टपत्रकं। अक्षतैः कल्पितं भक्त्या रुद्रं तत्र प्रपूजयेत्॥ पर्णैराम्रस्य निर्दोषैरुत्तमैः पयसाप्लुतैः। सहस्रेण कुबेरादिमंत्रेण ज्वरशांतये॥ (जुहुयादिति शेषः) क्षमापयेत्ततो देवं नमस्कृत्य पुनःपुनः। त्रिपाद्भस्म० ३। प्रतिमां मंडलोपेतां ब्राह्मणाय निवेदयेत्॥ ज्वरस्वरूपी०॥ आज्येन पूरितं कांस्यमवलोक्य प्रदापयेत्। शक्त्या विप्रांश्च संभोज्य ज्वरमुक्तिर्भविष्यति॥ इति ज्वरशांतिः॥ ॥अथ

शौनकोक्तप्रयोगः। कर्ता जन्मनक्षत्रे तस्माद्दशमे एकोनविंशे वा नक्षत्रे आचमनादिदेशकालस्मरणांते मम ज्वरराजप्रीतिद्वारा सकलज्वरोत्थपीडापरिहारपूर्वकं आयुरभिवृद्ध्यर्थं सग्रहमखां शौनकोक्तां शांतिं० इति संकल्प्य गणेशपूजनपुण्याहवाचनादिऋत्विग्वरणांतं कुर्यात्। अथाचार्यः प्रादेशकरणांते स्थंडिलात्पूर्वे महीद्यौरित्यादिभिः कुंभं संस्थाप्य पूर्णपात्रनिधानांते प्रतिमायां त्रिशिरसं त्रिपादं त्रिहस्तं त्रिशूलधरमीश्वरं शक्तिरूपं ज्वरं ध्यात्वा ॐ ज्वरराजायनमइत्यावाह्य संपूज्य। भस्मायुधाय विद्महे एकदंष्ट्राय धीमहि। तन्नोज्वरः प्रचोदयादिति-मंत्रं १०८ संख्यया जह्वा कलशस्येत्यादिना कुंभमभिमंत्रयेत। ततोग्निं ग्रहांश्च प्रतिष्ठाप्यान्वादध्यात्। ग्रहादिकीर्तनांते ज्वरराजं प्रधानदेवं चर्वाज्याभ्यां प्रतिद्रव्यं चतुरधिकपंचशतसंख्याहुतिभिः चतुःपंचाशदाहुतिभिः १४ संख्याभिर्वा शेषेणेत्यादिग्रहादिहोमांते ज्वरराजायस्वाहेति भस्मायुधायेति मंत्रेण वोक्तसंख्यया चर्वाज्ये हुत्वा स्विष्टकृदादिप्रायश्चित्तहोमांते बलिदानपूर्णाहुती कृत्वा संस्रावहोमादिशेषं समापयेत्। ततः कर्ता देवतोत्तरपूजांते नमस्कृत्य तंडुलकणमिश्रैः सतिलैर्वा जलैः भस्मायुधाय० प्रचोदयात्। ज्वरराजंतर्पयामीति तर्पणं कृत्वा आचार्यादिभिः समुद्रज्येष्ठादिमंत्रैः कलशोदकेनाभिषिक्तो विभूतिं धृत्वा आचार्यादिभ्यो गवादिदक्षिणादानांते विसर्जितदेवतापीठं सोपस्करमाचार्याय दत्वा शक्त्या विप्रान्संभोज्य भूयसीं दत्वाऽऽशिषो गृहीत्वा कर्म समापयेत्॥

॥ अथ स्फुटवचनानुसारी प्रयोगः।

आचमनादिदेशकालस्मरणांते मम श्रीज्वरस्वरूपिरुद्रप्रसादसिद्धिद्वारा शरीरे उत्पन्नोत्पत्स्यमानसमस्तामयनिदानभूतवातपित्तश्लेष्मप्रक्षोभजन्यविविधज्वरोत्थानिखिलपीडापरिहारपूर्वकक्षिप्रारोग्यावाप्त्यर्थं सग्रहमखां ज्वरशांतिं करिष्ये इति संकल्प्य गणेशपूजादिऋत्विग्वरणांतं कुर्यात्। तत आचार्यः प्रादेशकरणांते स्थंडिलात्पूर्वे महीद्यौरित्यादिविधिना कलशं संस्थाप्य पूर्णपात्रोपरि श्वेतवस्त्रं प्रसार्य तत्राक्षतैरष्टदलं कमलं

विलिख्य तत्कर्णिकायां सुवर्णप्रतिमां निधाय तत्र कुबेरतइतिमंत्रस्य कुबेरो ज्वरस्वरूपी रुद्रोऽनुष्टुप् । रुद्रावा० । कुबेर ते मुखं रौद्रं नंदिन्नानंदमावह । ज्वरमृत्युभयं घोरं विश नाशय मे ज्वरं ॥ इति मंत्रेण ज्वरस्वरूपिणं रुद्रमावाह्य पूर्वादिदलेषु देवता आवाहयेत् । ज्वराय नमः । ज्वरमावाहयामि । एवमग्रेपि । वातज्वरा० । पित्तज्व० । श्लेष्मज्व० । शीतज्व० । उष्णज्व० । द्वंद्वजज्व० । संनिपातज्व० । तद्वाह्ये । उग्रज्व० । गंभीरज्व० । सततज्व० । संततज्व० । ऐकाहिकज्व० । द्याहिकज्व० । त्र्याहिक० । चातुर्थिक० । तद्वाह्ये । प्राकृतज्व० । वैकृतज्व० । आमज्व० । निरामज्व० । अभिघात० । अभिचारज्व० । अभिषंगज्व० । अभिशाप० । ततः सर्वान्संपूज्याग्निं ग्रहांश्च प्रतिष्ठाप्यान्वादध्यात् । ग्रहादिकीर्तनांते ज्वरस्वरूपिणं रुद्रं प्रधानदेवं क्षीराप्लुताम्रदलैः अष्टोत्तरसहस्रसंख्या० ज्वराद्यंगदेवताः एकैकयाज्याहुत्या शेषेणेत्याद्याज्यभागांते कुंभं स्पृष्ट्वा आरुद्रासः श्यावाश्वो रुद्रो जगती । कुंभाभिमंत्रणे० । इतिमंत्रमष्टोत्तरशतवारं जपेत् । ततो यजमानेन त्यागे कृते ग्रहादिहोमं कृत्वा कुबेरते इतिमंत्रेण १००८ संख्यया क्षीराप्लुताम्रदलानि हुत्वा ज्वराद्यंगदेवताभ्यो नाममंत्रेणैकैकामाज्याहुतिं जुहुयात् । ततः पूर्ववत् कुंभमभिमंत्र्य स्विष्टकृदादिप्रायश्चित्तहोमांते बलिदानपूर्णाहुती कृत्वा संस्रावहोमादिशेषं समाप्य स्थापितकलशोदकेन समुद्रज्येष्ठाइत्यादिमंत्रैरभिषेकं कुर्यात् । ततः कर्ता धृतशुक्लांबरो विभूतिं धृत्वा देवतोत्तरपूजां विधाय कुबेरतइतिमंत्रांते ज्वरस्वरूपिणं रुद्रं तर्पयामीति पयसा तर्पणं कृत्वा नाममंत्रेण ज्वराद्यंगदेवतास्तर्पयेत् । ततः कृतांजलिः त्रिपाद्भस्मप्रहरणस्त्रिशिरा रक्तलोचनः । स मे प्रीतः सुखं दद्यात्सर्वामयपतिर्ज्वरः ॥ सततं संततं चैव ज्वरमुग्रं तथैव च । ऐकाहिकं द्याहिकं च तृतीयादिमथापि वा ॥ ज्वरो रोगपती राजा मृत्युरोगः सनातनः । क्रुद्धो रोगान् ज्वरो हन्याद्रुद्रो भुवनशोभनः ॥ इति संप्रार्थ्य आचार्यादिभ्यो दक्षिणादानांते विसर्जितदेवतापीठं

आचार्याय दद्यात् । तत्र रुद्रप्रतिमादाने मंत्रः । ज्वरस्वरूपी यो रुद्रः सुवर्णेन विनिर्मितः । सोपस्करो मयादत्तस्तेन रुद्रः प्रसीदतु ॥ तत आज्यावलोकनं तद्दानं च कृत्वा विप्रान् संभोज्य भूयसीं दत्वाऽऽशिषो गृहीत्वा कर्म समापयेत् । ( अत्रैतन्मूलभूतस्फुटवाक्यगतं सर्वमनुष्ठेयजातं विलिख्य बहिर्भूतमंगदेवतावाहनहोमतर्पणाद्यपि प्रचुराचारदर्शनात्प्रचलितस्फुटप्रयोगेभ्यो यथोचितं संगृहीतमिति दिक् ) ॥ इति ज्वरशांतिप्रयोगः ॥ ॥ अथ ज्वरहराणि विधानानि । " म० म० अथ शातातपोक्तं विविधज्वरहरं । देवस्वग्रहणाच्चैव जायते त्रिविधज्वरः । ज्वरो महाज्वरश्चैव रौद्रो वैष्णव एव च ॥ ज्वरे रुद्रजपं कुर्यान्महारुद्रं महाज्वरे । महारुद्रं जपेद्रौद्रे वैष्णवे तद्द्वयं जपेत् ॥ रौद्रे रुद्रसंबंधिनि माहेश्वरज्वरे कठिनतमेऽसाध्यज्वरे च महारुद्रं जपेत् । वैष्णवे तद्द्वयं रुद्रजपं महारुद्रजपं च । यद्वा तच्छब्देन बुद्धिस्थानि वैष्णवानि पुरुषसूक्तसहस्रनामापामार्जनविष्णुत्हृदयस्तोत्राणि परामृश्यंते । अतस्तद्द्वयं रुद्रसंबंधि विष्णुसंबंधि च शतरुद्रपुरुषसूक्तादि जपेत् । । अथ सर्वज्वरहरं कुंभदानं । पाद्मे । अगारदाही ज्वरवान् जायते तत्र निष्कृतिः । नवं कुंभं समानीय मृन्मयं चाव्रणं दृढं ॥ लोहितं कार्ष्ण्यरहितं स्थापयेत्तंडुलोपरि । परिमाणं तंडुलानां द्रोणपंचकमिष्यते ॥ विशुद्धास्तंडुला ग्राह्याः श्वेतवस्त्रेण वेष्टयेत् । कुंभमित्यन्वयः । मधुनाऽप्यथवाज्येन खंडेनाथ गुडेन वा ॥ तैलेनाथांऽभसा वा तं पूरयेच्छक्तितो नरः । श्वेतपुष्पैरर्चयेत्तं गंधपुष्पैस्तथाऽपरैः ॥ अपरैः श्वेतरक्तपीतादिभिरित्यर्थः । होमश्च पूर्ववत्कार्यः समिदाज्यचरूत्कटः । सुवर्णेन यथाशक्त्या ब्राह्मणाय निवेदयेत् ॥ सुवर्णेन युतं कुंभं निवेदयेदित्यन्वयः । तस्मै हुतवते वृत्तश्रुतशीलाय संस्कृतं । मंत्रेणानेन विधिवत्पूजयित्वा ज्वरी नरः ॥ महेश देव देवेश वासुदेव परात्पर । कुंभेनानेन दत्तेन ज्वरः क्षिप्रं प्रशाम्यतु ॥ एकांतरं संनिपातं तृतीयकचतुर्थकौ । पाक्षिकं मासिकं वापि सांवत्सरिकमेव च ॥ नाशयेतां मम क्षिप्रं

वासुदेवमहेश्वरौ । श्लोकद्वयमिदं दानमंत्रः । होमश्च पूर्ववदिति । पूर्वोक्तप्रकारेण । स च प्रकारः शूलहरत्रिशूलदाने द्रष्टव्यः । तत्र तिलस्थाने चरुरित्येतावान्विशेषः । कुंभदानमंत्रस्य रुद्रविष्णुप्रकाशकत्वात्कुंभपूजाऽपि रौद्रेण वैष्णवेन वा मंत्रेण कार्या । होमोऽप्यनयोरन्यतमेन । तत्र च रौद्रो नमःशिवायेति पंचाक्षरः । केचन प्रणवादिं पठंति । अस्य मंत्रस्य वामदेव ऋषिः शिवो देवता पंक्तिश्छंदः । रुद्रगायत्री लिंगपुराणेऽभिहिता । सर्वेश्वरायविद्महे शूलहस्तायधीमहि । तन्नोरुद्रःप्रचोदयादिति । अस्याः श्रीवेदव्यासो रुद्रो गायत्री । अन्ये च त्र्यंबकमित्यादयः परिभाषादिषु दर्शिताः । वैष्णवा अपि तद्विष्णोरित्यादयस्तत्रैव । नारायणाष्टाक्षरमंत्रस्तु ॐ नमोनारायणायेति । अस्य साध्यनारायणो नारायणः परमात्मा दैवी गायत्री । गोपालमंत्रस्तु ह्रींकृष्णायगोविंदायगोपीजनवल्लभायस्वाहेति । अस्य नारदो गोपीजनवल्लभो गायत्री । अथ ज्वरतर्पणं । तत्रायं क्रमः । गोविंदसंज्ञकं कंचन तापसं तथाऽपुत्रं तापसांतरं च सतिलोदकैरंजलित्रयदानेन पृथक्पृथक् तर्पयित्वा पश्चाज्ज्वरानुसारेणाष्टोत्तरशतायुतांततर्पणं ज्वरमुद्दिश्य कर्तव्यं । ज्वरतर्पणे रक्ताक्षता रक्तपुष्पाणि वा ग्राह्याणि । तत्र तिलतर्पणमंत्रः । योसौ सरस्वतीतीरे कुत्सगोत्रसमुद्भवः । त्रिरात्रज्वरदाहेन मृतो गोविंदसंज्ञकः॥ज्वरापनुत्तये तस्मै ददाम्येतत्तिलोदकं । तथा ।नद्यां चर्मनदीतीरे अपुत्रस्तापसो मृतः । रात्रौ ज्वरविनाशाय तस्मै दद्यां तिलोदकं । ज्वरतर्पणमंत्रस्तु । त्रिपाद्भस्मप्रहरणस्त्रिशिरा रक्तलोचनः। स मे प्रीतः सुखं दद्यात्सर्वामयपतिर्ज्वरः । ” इति ज्वरहराणि विधानानि॥ ॥अथापमृत्युनिवारणं । मदनरत्ने बौधायनः । अथ मृत्युंजयकल्पं व्याख्यास्यामो जन्मनक्षत्रे पुण्यनक्षत्रे त्रिजन्मनि ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्ति ऋद्धिं वाचयित्वा देवयजनोल्लेखनाद्यग्निमुखांतं कृत्वा सावित्र्या यवान्पक्कान् जुहोति प्रादेशमात्रास्तिस्रो दूर्वाः समिधोऽष्टसहस्रमष्टशतं वा दधिमधुघृतपयांसि संमेल्याभ्यज्यादधाति।अपैतुमृत्यु परंमृत्यो मानोमहांतं मानस्तोके त्र्यंबकं येतेसहस्र-

नित्यथाज्याहुतीरुपजुहोति मृत्युर्नश्यत्वायुर्वर्धतांभूःस्वाहा मृत्युर्नश्यत्वायुर्वर्धतांभुवःस्वाहा मृत्युर्नश्यत्वायुर्वर्धतांस्वःस्वाहेति स्विष्टकृत्प्रभृतिसिद्ध-
माधेनुवरप्रदानादथाग्रेणाग्निं दूर्वास्तंबे हुतशेषं निदधाति। तच्छंयोरावृणीमहइत्यथ दक्षिणां ददाति धेनुं वृषभमनड्वाहं हयं हिरण्यं कांस्यं वासो
वेत्याह बौधायनः । तत्र क्रमः । कर्ताऽष्टौ चतुरो वा विप्रान्संभोज्य पुण्याहादि वाचयित्वा संकल्प्याग्निं प्रतिष्ठाप्य निर्वापादिना सवित्रे
यवमयं चरुं श्रपयित्वाज्यभागांते चरुमवदाय सावित्रीमनूच्य तयैव हुत्वा तिस्रो दूर्वा गव्यदध्याद्यक्ता अपैतुमृत्युरितिषड्भिर्हुत्वाज्येन मृत्युर्न-
श्यत्विति त्रीनुपहोमान्कृत्वा यदस्येति स्विष्टकृतं हुत्वा ब्रह्मविसर्जनांतेऽग्रेणाग्निं दूर्वास्तंबे तच्छंयोरिति हुतशेषं चरुं निधायाग्निं संपूज्य सू-
र्यं नमस्कृत्य विप्रान्भोजयेत् । एवं स्वकर्तृकत्वे। आचार्यपक्षे दक्षिणा। एतच्च ग्रहयज्ञयुतं दिनत्रयं रोगिणा कार्यं। प्रबलरोगे यावद्रोगनिवृत्ति प्र-
त्यहं कार्यं । ऋग्विधाने । व्याधिना योऽभिभूतः स्याद् घोरेण प्राणहारिणा । चतुर्दशीमुपोष्यैकां कृष्णस्य जुहुयाच्चरुं ॥ आतेसूक्तेन रौद्रेण
प्रत्यृचं वाग्यतः शुचिः । पूर्वमाज्याहुतीर्हुत्वा अथोपस्थाय शंकरं ॥ हविःशेषेण वर्तेत एकांतरमतंद्रितः । पूर्णे मासे जयेन्मृत्युं रोगेभ्यश्च प्र-
मुच्यते ॥ तत्रैव । उपतिष्ठेत राजानं यमसूक्तेन वै द्विजः । स्थालीपाकं च कुर्वीत पक्षयोर्यमदैवतं ॥ अष्टम्यां च चतुर्दश्यां यजेत हविषा
यमं । परेयिवांसामित्येतत्सूक्तमत्र प्रयोजयेत् ॥ पुरायुषः प्रमीयेत न जातु स कथंचन । धर्मराजायस्वाहेति मंत्रांते जुहुयाद्धविः ॥ वैशा-
ख्यां पौर्णमास्यां तु कर्म नित्यं प्रयोजयेत् । तत्रैव । मृत्युमेव प्रपद्येत परंमृत्यो जपन्द्विजः । नक्तभोजी मिताहारः प्रतिसंवत्सरं सदा ॥
नैनं पुरायुषो मृत्युर्नयते ससुतप्रजं । फलाहारो जयेन्मृत्युं त्रिभिर्वर्षैर्मिताशनः ॥ यद्वा तत्रैव । क्षीणायुरिति मन्येत यं कंचित्सुहृदं प्रियं ।
यत्तेयमामिति स्नातस्तस्य मूर्धानमालभेत् ॥ सहस्रकृत्वः पंचाहं जपेदायुर्लभेत सः । घृतेन सिंधुद्वीपस्य सूक्तेनैनं च लेपयेत् ॥ संविशेच्छयने

नित्यमेतन्मंत्रं जपेत वै । जीवावृत्तिं प्रयुंजीत नित्यमेतां घृतेन तु ॥ स्रोतांस्यभ्यज्य सर्वाणि सुखी भवति विज्वरः । अन्ये च लक्षकोटिपा-र्थिवलिंगपूजादयो मत्कृते पूर्तकमलाकरे ज्ञेयाः । तथा रुद्रेण तिलतैलेन रुद्राभिषेकोऽप्यपमृत्युहरः । रुद्रविधानं च वक्ष्यामः । इत्यपमृत्यु-निवारणं ॥ ॥ अथ मृत्युंजयहोमः । बौधायनः । अथ महामृत्युंजयहोमं व्याख्यास्यामः कृत्याद्रोहेऽभिचारे दीर्घरोगे ग्रहपीडायां मृ-त्युप्राप्तौ महाव्याधौ महापदि चंद्रसूर्यग्रहणदोषे जन्मनक्षत्रे विषनाड्यां कुह्वां व्रजेद्वाऽन्येषु महाभयेषु परिहारार्थे मासि मासि जन्मनक्षत्रे प्रोक्ते काले वा वत्सरे वाचार्येण वा स्वयं वाऽऽयुष्कामेण कर्तव्यः।स्नात्वा पुण्याहं वाचयित्वा प्राणानायम्यामुकशर्मण आयुष्कामार्थं महामृत्युंज-यहोमं करिष्य इति संकल्प्याग्नेरुपसमाधानादि पात्रप्रयोगकाले दूर्वात्रिकस्य षट्त्रिंशदधिकं शतत्रयमासादयेत् । गुडूचीखंडानि चतुरंगुल-प्रमाणानि । ब्रह्माणं दक्षिणतो दर्भेषु निषाद्य व्रीहींस्तंडुलान्वा निर्वपति मृत्यवेत्वाजुष्टंनिर्वपामीति तूष्णीमवहननातं कृत्वा प्रक्षालयत्यथा-ज्यं संस्कृत्य चरुणा सह पर्यग्निकरणं कृत्वा स्रुवस्रुचोर्मार्जनं कृत्वा चरुमभिघार्योदगुद्वास्य प्रतिष्ठितमभिघार्येध्मपरिधानप्रभृत्याग्निमुखा-त्कृत्वाऽथ पक्वाज्जुहोति । दर्व्यामुपस्तीर्य मध्याद्द्विरवदाय त्रिः पंचावत्तिनोऽभिघार्य अपैतुमृत्यु० शचीपतिरिति पुरोनुवाक्यामनूच्य परं-मृत्यो० वीरानिति याज्यया जुहोति । मृत्यव इदं नममेति त्यागः । पूर्ववदुपस्तीर्य हरिश्हरंत० विक्रमस्वेति पुरोनुवाक्यामनूच्य माछिदो० विधेमेति याज्यया जुहोति । मृत्यव इदं० । आज्येन महाव्याहृतिभिश्च जुहोति । भूरग्नयेचपृथिव्यैचमहतेचस्वाहेत्याद्यैः पंचभिः पंचाहुती-र्हुत्वा ( अत्र पंचमो मंत्रः नमोदेवेभ्यःस्वधापितृभ्योभूर्भुवःसुवर्महरोमिति तैत्तिरीयोपनिषदि प्रसिद्धः । अस्य महाव्याहृतिसंज्ञाव्यपदेशस्तु साहचर्याज्ज्ञेयः । तत्र देवपितृभूरादिभ्यइदंनममेति त्यागः ) अथ दूर्वात्रिकं गुडूचीखंडानि पयसांऽक्ता जुहोति । षट्त्रिंशदधिकशतत्रयं

प्रत्येकं । अपैतुमृत्यु॰ शचीपतिःस्वाहा । वैवस्वताय शचीपतय इदं॰ । परंमृत्योअनु॰ वीरान्स्वाहा । मृत्यवइदं॰ । वातंप्राणं॰ मशीमहि-
स्वाहा । प्रजापतय॰ । अमुत्रभूया॰ शचीभिःस्वाहा । अश्विभ्यामिदं॰ । शल्कैरग्नि॰ तराम्यहꣳस्वाहा । अग्नय॰ । हरिꣳहरंत॰ विक्रम-
स्वस्वाहा । देवेभ्य॰ । माछिदोमृत्यो॰ विधेमस्वाहा । मृत्यव॰ । मानोमहांत॰ रीरिषःस्वाहा । रुद्रायेदं॰ । मानस्तोके॰ विधेमतेस्वाहा ।
रुद्रायेदं॰ । प्रजापते॰ रयीणाꣳस्वाहा । प्रजापतय॰ । यतइंद्र॰ जहिस्वाहा । इंद्राय मघवत॰ । स्वस्तिदाविश॰ करःस्वाहा । इंद्रायाभयंकरा-
येदं॰ । त्र्यंबकं॰ मामृतात्स्वाहा । त्र्यंबकायेदं॰ । अपमृत्युमपक्षुध॰ सहस्रिणꣳस्वाहा । अग्नय॰ । येतेसहस्र॰ यजामहेस्वाहा । मृत्यव॰ । जातवे-
दसे॰ त्वग्निःस्वाहा । जातवेदसेऽग्नय॰ । भूर्भुवःसुवः । ओजोबलं॰ ददद्भ्यावर्वृत्स्वस्वाहा । जातवेदसेपावकाय (वैश्वानराय वैद्युताय वा) इदं॰ ।
अमुकस्यमृत्युर्नश्यत्वायुर्वर्धतां भूःस्वाहा । अग्नय॰ । अमुकस्य॰ भुवःस्वाहा । वायव॰ । अमु॰ सुवःस्वाहा । सूर्यायेदं॰ । अमु॰ भूर्भुवःसुवः
स्वाहा । प्रजापतयइदं॰ । इत्येतैरेकविंशतिमंत्रैः षोडशपर्यायं प्रतिमंत्रं जुहुयात् । षट्त्रिंशदधिकशतत्रयाहुतिर्भवति । अथाज्येनाष्टपर्याय-
मेकविंशतिमंत्रैः प्रतिमंत्रं जुहुयात् । अष्टाधिकषष्टिशताहुतिर्भवति । पुनरनेन गुडूच्या षोडशपर्यायमेकविंशतिमंत्रैः प्रतिमंत्रं जुहुयात् ।
षट्त्रिंशदधिकशतत्रयाहुति॰ । पुनरनेनाष्टपर्यायैरेकविंशतिमंत्रैः प्रतिमंत्रं॰ । अष्टाधिकषष्टिशताहुति॰ । एवं क्रमेणाष्टाधिकसहस्राहुतिर्भवति ।
पुनराज्येन मृत्यवेस्वाहेत्यष्टवारं जुहुयात् । पुनर्महाव्याहृतिभिर्हुत्वा स्विष्टकृतमवदाय हव्यवाहमभि॰ आयुःस्वाहेति स्विष्टकृतं जुहो-
त्यनंतरं परिध्यंजनं कृत्वा जयादिपरिषेचनांतं कृत्वाऽग्रेणाग्निं दूर्वास्तंबे हुतशेषं निदधाति । सर्वोवैरुद्रस्तस्मै॰ नमः । विश्वंभूतं॰ अस्तु ।
इति द्वाभ्यां मंत्राभ्यां निवेदयेत् । आयुर्दाअग्ने॰ दिमꣳस्वाहेत्यग्नौ समिधमादधाति । जातवेदायदिवा॰ ववृत्स्वेत्युपस्थाय हुतशेषे हविषि

त्वाज्यशेषं निवेदयेत् । अग्निरायुष्मानितिपंचभिः पुनरेकविंशतिऋग्भिश्चतुर्वारमभिमंत्र्य आयुरसि० गेषमिति सर्वं चरुशेषं प्राश्याचम्य ज-
ठरमभिमृशति । यतइंद्रस्वस्तिदाविशइत्येताभ्यां गुरवे वरं दत्वा दशदानानि कृत्वाऽवेक्ष्याज्यं दत्वा ऋत्विग्भ्यो दक्षिणां दत्वा ब्राह्मणान्भो-
जयेदपूपैर्घृतपायसैः । एवं कृत्वायुष्मान्भवति । अयुतहोमाद्दीर्घायुर्भवति । लक्षहोमात्सहस्रायुर्भवति । अत्रान्वाधाने विशेषः । अस्मिन्नन्वा-
हितेग्नौ जातवेदसमित्यादिचक्षुषीआज्येनेत्यंतेऽत्रप्रधानं मृत्युं द्विवारं चरुद्रव्येण । अग्निपृथिवीमहतः । वाय्वंतरिक्षमहतः । आदित्यद्युमहतः ।
चंद्रमोनक्षत्रदिङ्महतः । देवपितृभूरादींश्चाज्येन । पुनरत्र प्रधानं । वैवस्वतं शचीपतिं । मृत्युं । प्रजापतिं । अश्विनौ । अग्निं । देवान् । मृत्युं
द्विवारं । प्रजापतिं । इंद्रं मघवंतं । इंद्रमभयंकरं । त्र्यंबकं । अग्निं । मृत्युं । जातवेदसमग्निं । जातवेदसं पावकं ( वैश्वानरं वैद्युतं वा )
अग्निं । वायुं सूर्यं । प्रजापतिं । प्रत्यृचं षोडशपर्यायदूर्वात्रिकयुक्तगुडूचीखंडैः । पुनस्ता एव प्रत्यृचमष्टपर्यायमाज्येन । पुनस्ता एव प्रत्यृचं
षोडशपर्यायगुडूचीखंडैः । पुनस्ता एव प्रत्यृचमष्टपर्यायमाज्येन । पुनरत्र प्रधानं । मृत्युमष्टवारमाज्येन । पुनरत्र प्रधानं । अग्निपृथिवीमहतः ।
वाय्वंतरिक्ष० । आदित्यद्यु० । चंद्रमो नक्षत्र० । देवपितृभूरादींश्चाज्येन । शेषेणस्विष्टकृतमित्यादि । इति मृत्युंजयहोमः ॥ ॥ अथानावृष्टिशांतिः ।
ऋग्विधाने । अच्छावदेतिसूक्तं तु वृष्टिकामः प्रयोजयेत् । निराहारः क्लिन्नवासा अचिरेण प्रवर्षति ॥ हुत्वाऽयुतं वैतसीनां क्षीराक्तानां
हुताशने । महद्वर्षमवाप्नोति सूक्तेनाच्छावदेन हि ॥ तत्रैव । आस्यदघ्नं विगाह्यांभः प्राङ्मुखः प्रयतः शुचिः । सूक्ताभ्यां तिस्र एताभ्यामुप-
तिष्ठेद्दिवाकरं ॥ तिस्रोवाचः पर्जन्यायप्रगायतेत्याभ्यामित्यर्थः । अनश्नता तु जप्तव्यं वृष्टिकामेन यत्नतः । पंचरात्रे व्यतीते तु महद्वर्षमवाप्नुया-
त् ॥ यद्वा तत्रैव । वृष्टिकामो यताहारः प्रपद्येत बृहस्पतिं । पायसेनोपहारेण होमेन च समन्वितः ॥ बृहस्पतेप्रतीत्येतद्वृष्टिकामः प्रयोजयेत् ।

पर्जन्यं च नमस्कृत्य वृष्टिं विंदति शोभनां। मात्स्ययाज्ञवल्क्यौ। श्रीकामः शांतिकामो वा ग्रहयज्ञं समाचरेत् । वृद्ध्यायुःपुष्टिकामो वा तथैवा-
भिचरन्नपि ॥ स ग्रहयज्ञोऽयुतहोमो लक्षहोमः कोटिहोमश्चेति त्रिष्वन्यतरः शक्त्या कार्यः। यद्वा एवं विनायकं पूज्य ग्रहांश्चैव विधानतः।
कर्मणां फलमाप्नोति श्रियं प्राप्नोत्यनुत्तमामित्युक्तेर्विनायकशांतिपूर्वकं पर्जन्यशांत्यंगत्वेन समानतंत्रो वा ग्रहयज्ञः कार्यः। बौधायनः।
अथातः पर्जन्यविधिं व्याख्यास्यामो ब्राह्मणान्वरणपूर्वमभ्यर्च्य वरुणप्रतिमां पूजयित्वोदके स्थित्वा तत्सवितुरिति पच्छोर्धर्चशोऽनवानं जपती-
मंमेवरुणेति पंचर्चमुदुत्तममिति षळर्चमापउंदंतूदायुषा महाꣳइंद्रोयओजसा वाचामैंद्रियेण योवैसप्तदशं मैत्रावरुणीद्विरूपामसावादित्योऽसौ
सौरीं वरुणꣳसुषुवाणं प्रजापतिर्वरुणाय यावामिंद्रावरुणैतद्वाअपांनामधेयं हिरण्यवर्णाः पवमानःसुवर्जनो वृषासोअꣳशुःपवते सिꣳहेव्याघ्रे
सर्वेषुवाएषुलोकेषु योसौतपन्नुदेति योपांपुष्पंवेदेत्यादिसर्वानुवाकान्सुवर्णघर्मं सहस्रशीर्षाऽद्भ्यःसंभूत आदित्योवाएषएतन्मंडलं पृथिवीसमि-
दित्यनुवाकान् जपित्वा जलाद्बहिः प्रत्यङ्मुखः पीवोऽन्नामित्यनुवाकमेकादशवारं जपित्वाग्निं प्रतिष्ठाप्याज्यभागांते क्षीराज्यवैतससमिच्चरुभिः
प्रत्येकमष्टशतमष्टाविंशतिं वा पुरोवातोवर्षन्निति जुहुयाद्वर्षायपुरोवातायेत्युद्देशत्यागौ जयादीन्पूर्णाहुतिं हुत्वा शांतिपाठं कुर्यादाचार्याय वरुण-
प्रतिमामृत्विग्भ्यो दक्षिणां दद्यादित्याह भगवान्बौधायनः। अश्विनीयाम्यसंस्थेऽर्के यदा देवो हि वर्षति। सुभिक्षं क्षेममतुलमीतिभीतिश्च
वह्निभे ॥ ब्रह्मद्वितयगे भानौ वृष्टिश्चेद्भयदायिनी। रौद्रस्थे स्यादनर्घाय स्वल्पा चेदीतिभीतिदा ॥ रौद्रप्रवेशे यदि वर्षतींद्रस्तत्सार्धमासं नहि
वृष्टिरस्ति। दिवाप्रवेशे बहुसस्यहानी रात्रौ सुभिक्षं नच रोगपीडा। सायंकालेऽर्धरात्रे चेत्प्रवेशस्तु महार्घदः। आर्द्रायां रविसंयोगे फलमे-
तदुदीरितं ॥ आदित्यादिदशर्क्षेषु वृष्टिः सूर्ये सुभिक्षदा। सिंहप्रवेशनं हित्वा कर्कटे व्यत्ययः शुभः ॥ बौधायनः। मारुतमसिमरुतामोजइति।

देवावसव्या देवाःशर्मण्याः कूष्मांडैर्जुहुयात्प्रवातावांतिपतयंतीति । गायत्रीजपयुक्तस्तु महामृत्युंजयं जपेत् । सूक्तजपसंख्या प्रत्येकं शतं । कूष्मांडहोमः आवृत्तित्रयं । गायत्रीजपो लक्षं । महामृत्युंजयजपो दशसहस्रं । रुद्राभिषेकः । इत्यनावृष्टिशांतिः ॥ ॥ अथ विनियुक्तमंत्राणां सामान्यविधिः । ऋग्विधाने । पुरश्चरणमादौ तु कर्मणां सिद्धिदायकं । स्वाध्यायाभ्यसनस्यादौ प्राजापत्यं चरेद्द्विजः ॥ केशश्मश्रुलोमनखान्वापयित्वाऽऽप्लुतः शुचिः । तिष्ठेदहनि रात्रौ तु शुचिरासीत वाग्यतः ॥ सत्यवादी पवित्राणि जपेच्च व्याहृतीस्तथा । ओंकाराद्यास्तु ता जप्त्वा सावित्रीं च तदित्यृचं ॥ आपोहिष्ठेति सूक्तं तु शुद्धवत्योऽघमर्षणं । शंवत्यः स्वस्तिमत्यश्च पावमान्यस्तथैव च ॥ सर्वत्रैतत्प्रयोक्तव्यमादावंते च कर्मणां । आसहस्रादाशताद्वा दशांतमथवा जपेत् ॥ ओंकारं व्याहृतीस्तिस्रः सावित्रीमथ चायुतं । तर्पयित्वाऽद्भिराचार्यानृषिच्छंदांसि देवताः । प्रपद्येत विरूपाक्षं रौद्रमंत्रगणं जपेत् ॥ अनार्यैर्नच भाषेत न शूद्रैर्नापि गर्हितैः । न रजस्वलया नार्या पतितैर्नात्यजैर्नृभिः ॥ मंगलाचारयुक्तः स्यात्त्रिरह्नोऽभ्युपयन्नपः । अंते द्वादशरात्रस्य स्थालीपाकं प्रकल्पयेत् ॥ अग्नये चाथ सोमाय तृतीया च तयोः सह । वैश्वदेवीं च रौद्रीं च जुहुयादुत्तरे ततः ॥ अवसानस्य पतये तथाऽनुमतयेपि च । धन्वंतरयइत्यन्यां गंधर्वाप्सरसामपि ॥ दशमी ब्राह्मणस्पत्या परा तु ब्रह्मणे स्मृता । सरस्वत्यै तथा विष्णोरंत्या सौविष्टकृत्यपि ॥ आज्याहुतय एवादौ स्थालीपाके हुते पुनः । हुत्वाऽग्निं तर्पयेद्विप्रान्पितृभ्यश्च प्रकल्पयेत् ॥ हुतशेषं विधानेन शुचिर्भुंजीत वाग्यतः । तथा प्राजापत्यातिकृच्छ्रचांद्रायणादीन्युक्त्वा । एभिर्व्रतैर्विपूतात्मा कुर्यात्कर्माण्यतंद्रितः । इष्टान्कामांस्ततः सर्वानवाप्नोति न संशयः ॥ कणपिण्याकतक्राणामेकैकं शोधनं भवेत् । एवं शुद्धस्य कर्माणि मंत्रैर्वक्ष्यामि तद्यथा ॥ त्रिरात्रमेवोपवसेदादितः सर्वकर्मणां । त्रीणि नक्तानि वा कुर्यात्ततः कर्म समाचरेत् ॥ तथा । सर्वत्र दक्षिणां दद्याद्दानं

वा कर्मसिद्धये । नत्वेवाऽदक्षिणं कर्म किंचिदस्तीति शौनकः ॥ शक्त्या हि पूर्णपात्रेण संमिताऽथ ततो भवेत् । ऋषभैकादशान्दद्याद्धेनुं वा तुष्यते गुरुः ॥ " बौ० स्मृ० । यान्सिसाधयिषुर्मंत्रान्द्वादशाहानि तान्जपेत् । घृतेन पयसा दध्ना प्राश्य निश्योदनं सकृत् ॥ दशवारं तथा होमः सर्पिषा सवनत्रयं । पूर्वसेवा भवेदेषा मंत्राणां कर्मसिद्धये ॥ " इति विनियुक्तमंत्राणां सामान्यविधिः ॥ ॥ अथ श्रीसूक्तविधिः । ऋग्विधाने । य इच्छेद्दरदां देवीं श्रियं नित्यं कुले स्थितां । स शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहं । श्रियः पंचदशर्चं च श्रीकामः सततं जपेत् ॥ आवाहयेच्छ्रियं पद्मे पंचभिः कनकेऽपि वा । उपहारानुपहरेच्छुक्लान्भक्ष्यान्पयो दधि ॥ स्थालीपाकं च शालीनां पयसा संप्रकल्पयेत् । चांद्रायणविपाप्मा तु प्रपद्येत्प्रयतः श्रियै ॥ सर्वौषधीभिः पाठाभिः स्नात्वाऽद्भिः पावनैरपि । उपैतुमांदेवसखइति राज्ञोऽभिषेचनी ॥ मनसःकाममित्येषा पशुकामाभिषेचनी । कर्दमेनेति यः स्नायात्प्रजाकामः शुचिव्रतः ॥ अश्वपूर्णामिति स्नायाद्राज्यकामः शुचिव्रतः । रोहिते चर्मणि स्नायाद्ब्राह्मणस्तु यथाविधि ॥ राजा चर्मणि वैयाघ्रे क्षत्रियस्त्वथ रौरवे । बस्तचर्मणि वैश्यस्तु होमः कार्यस्त्वनंतरं ॥ चंद्रामिति तु पद्मानि जुहुयात्सर्पिषा द्विजः । आदित्यवर्णेत्यनया बिल्वहोमो विधीयते ॥ बिल्वोत्थ एव वाऽग्निः स्यात्स्थालीपाकं हुनेद्द्विजः। दशसाहस्रिको होमः श्रीकामः प्रथमो विधिः ॥ हुत्वा तु प्रयुतं सम्यगनंतां विंदते श्रियं । अयुतं शतकृत्वस्तु हुत्वा शुक्लानि सर्पिषा ॥ अनंतामव्यवच्छिन्नां शाश्वतीं विंदते श्रियं । अशक्तौ जप एवोक्तो दशसाहस्रिको वरः ॥ जप्त्वा तु प्रयुतं सम्यगनंतां विंदते श्रियं । अयुतं शतकृत्वस्तु जप्त्वा श्रियमुपाश्नुते ॥ अप्स्वेव जुहुयान्नित्यं पद्मान्ययुतशो निशि । दृष्ट्वा श्रियं चोपरमेत्किलासत्वाद्विधेन वै ॥ बिल्वाशी बिल्वनिलयो जुहुद्बिल्वानि सर्पिषा । एकविंशतिरात्रेण परां सिद्धिं नियच्छति॥ येन येन च कामेन जुहोति प्रयतः श्रियै । पद्मान्यथापि बिल्वानि स स कामः

सम्मृध्यति ॥ विष्णुधर्मोत्तरे पुष्कर उवाच । हिरण्यवर्णां हरिणीमृचः पंचदश द्विज । श्रीसूक्तं कथितं पुण्यमृग्वेदे पुष्टिवर्धनं ॥ रथेअक्षेषुवाजेति चतस्रस्तु तथा ऋचः । श्रीसूक्तं तु यजुर्वेदे कथितं पुष्टिवर्धनं ॥ श्रायंतीयं तथा साम सामवेदे प्रकीर्तितं । श्रियंदातुर्मयिदेहि प्रोक्तमाथर्वणे तथा ॥ श्रीसूक्तं यो जपेद्भक्त्या तस्याऽलक्ष्मीर्विनश्यति । जुहुयाद्यश्च धर्मज्ञो हविष्येण विशेषतः ॥ श्रीसूक्तेन तु पद्मानां घृताक्तानां नृपोत्तम । अयुतं होमयेद्यस्तु वह्नौ भक्तियुतो नरः ॥ पद्महस्तद्दया लक्ष्मीर्नरं तमुपतिष्ठति । दशायुतं तु पद्मानां जुहुयाद्यस्तथा जले ॥ नापैति तत्कुलाल्लक्ष्मीर्विष्णोर्वक्षोगता यथा । घृताक्तानां तु बिल्वानां हुत्वा रामायुतं तथा ॥ बहुवित्तमवाप्नोति स यावन्मनसेच्छति । बिल्वानां लक्षहोमेन कुले लक्ष्मीमुपाश्नुते ॥ पद्मानामथ बिल्वानां कोटिहोमं समाचरेत् । श्रद्दधानः समाप्नोति देवेंद्रत्वमपि ध्रुवं ॥ संपूज्य देवीं वरदां यथावत्पद्मैः सितैर्वा कुसुमैस्तथाऽन्यैः । क्षीरेण धूपैः परमान्नभक्ष्यैर्लक्ष्मीमवाप्नोति विधानतश्च ॥ इति शांतिरत्ने श्रीसूक्तविधिः ॥

॥ अथ मंत्रकोशोक्तः श्रीसूक्तप्रयोगः । मूर्धाक्षिकर्णनासामुखगलदोर्हृदयनाभिगुह्येषु । पायूरुजानुजंघाचरणेषु न्यसेदृचः क्रमशः ॥ आवाहनासनार्घपाद्याचमनमधुपर्काभिषेकान् । वासोभूषणगंधान्सुमनोयुतधूपदीपभोज्यानि ॥ सोल्लासनानि कुर्याद्भक्तियुतः पंचदशभिरथ मनुभिः। हिरण्येतिपंचदशानामाद्यायाः श्रीः ततआनंदकर्दमचिक्लीतश्रीपुत्रा ऋषयः । आद्यास्तिस्रोनुष्टुभस्ततो बृहती ततस्त्रिष्टुभौ ततोऽष्टावनुष्टुभोऽत्या प्रस्तारपंक्तिः । आद्यायाः श्रीरग्निः। अन्यासां श्रीः । जपे विनि० ।ततः क्रमेण मूर्धाक्षिकर्णनासामुखग्रीवांऽसबाहुहृदयनाभिगुह्यगुदोरुजंघाचरणेषु पंचदशऋचो न्यसेत् । प्रणवेन त्रिः करौ प्रमृज्य हिरण्यायैनमः अंगुष्ठाभ्यां० । चंद्रायै ० तर्जनी० । रजतस्रजायै ० मध्यमा० ।हिरण्यस्रजायै ० अनामिका० । हिरण्याक्षायै ० कनिष्ठिका० । हिरण्यवर्णायै ०करतलकरपृष्ठाभ्यां० । एवं षडंगः । ध्यानं । अरुणकमलसंस्था तद्रजःपुंजवर्णा करकमलधृतेष्टा-

ऽभीतियुग्माबुजा च । मणिमुकुटविचित्रालंकृताऽऽकल्पजालैर्भवतु भुवनमाता संततं श्रीः श्रियै नः॥ चतुर्भुजेषु ऊर्ध्वयोः पद्मे अधो वराभये । षट्-कोणगर्भमष्टदलं कृत्वा आं आधारशक्त्यै० । मूलप्रकृत्यै० । मंडूकाय० । ततः पीठे । धर्माय० । ज्ञानाय० । वैराग्याय० । ऐश्वर्याय० । पूर्वा-दिषु । अधर्माय० । अज्ञानाय० । अवैराग्याय० । अनैश्वर्याय० । तं तमसे० । रं रजसे० । सं सत्वाय० । मां मायायै० । विं विद्यायै० । आं आत्मने० । पं परमात्मने० । ज्ञां ज्ञानात्मने० । वह्निमंडलाय० । सूर्यमंडलाय० । सोममंडलाय० । विभूत्यै० । उन्नत्यै० । कीर्त्यै० संता-न्यै० । बुद्ध्यै० । उत्कर्षिण्यै० । ऋद्ध्यै० इत्यष्टदलेषु । ततो मध्ये हिरण्यवर्णामित्यावाह्य अग्नीशासुरवायुपुरःपृष्ठेषु हृदयादीनि । प्रागादिदि-क्षु । वासुदेवाय० संकर्षणाय० प्रद्युम्नाय० अनिरुद्धाय० । पुनः पूर्वादिषु । दमनकाय० संतानाय० गुग्गुलाय० कुरंटकाय० दक्षिणे शंखनि-धये० । वामे पद्मनिधये० । ततो बलायै० विमलायै० वनमालिकायै० विभीषिकायै० मल्लिकायै० शांकर्यै० वसुमालिकायै० इत्यष्टदलेषु । केचित्तु हिरण्यायै० चंद्रायै० रजतस्रजायै० पद्मवर्णायै० पद्मस्थायै० । हिरण्यवर्णायै० इति षट्कोणेष्वाग्नेयादिषु । तद्बहिरष्टदलेषु पद्मायै० पद्मवर्णायै० पद्मस्थायै० आर्द्रपद्मायै० तर्पयंत्यै० तृप्त्यै० ज्वलंत्यै० स्वर्णप्राकारायै० । ततो लोकपालांस्तदायुधानि च । ततः तांमआवहेत्यासनं । अश्वपूर्णामित्यर्घ्यं । कांसोस्मितां पाद्यं । चंद्रांप्रभासामाचमनीयं । आदित्यवर्णे मधुपर्कस्नानं । उपैतुमामभिषेकं । क्षुत्पिपासां वस्त्रं । गंधद्वारां भूषणं । मनसःकामं गंधं । कर्दमेन पुष्पं । आपःस्रजंतु धूपं । आर्द्रांपुष्करिणीं दीपं । आर्द्रांयष्करिणीं नैवेद्यं । तयैव वह्नौ चर्वाहुतिरेका । तांमआवहेति फलं तांबूलं दक्षिणा नीराजनं पुष्पांजलिश्च । ततः पंचदशऋग्भिराज्यं हुत्वा तांमआवहेत्युद्वासनं च । एवं शुक्लप्रतिपदाद्येका-दशीपर्यंतं द्वादशसहस्रं जप्त्वा दशांशं घृतमधुशर्करेतित्रिमधुराक्तैः पद्मैर्बिल्वसमिद्भिः पायसेन घृतेन त्रिशतमेकैकेन होमः । द्वादशविप्रभो-

जनं । एवं मंत्रः सिद्धो भवति । परिषिंचेच्छिरो नित्यं श्रीसूक्तैः स्नानकर्मणि । आदित्याभिमुखो जप्त्वा यावत्तावच्च तर्पयेत् ॥ चत्वारिंशच्छु-
क्रवारेषु अंत्यामृचमष्टोत्तरशतं जपित्वा नवनीताक्तपद्मानि तत्संख्ययैव जुहुयात् । कांसोस्मितामिति च दशाहुतीर्घृताक्तान्नेन जुहुयान्नित्यं ।
एवं षण्मासान् । प्रत्यहं तर्पणं तु । श्रियं तर्पयामि । लक्ष्मीं० वरदां० विष्णुपत्नीं० वल्लभां० हिरण्यरूपां० सुवर्णमालिनीं० पद्मवासिनीं० पद्महस्तां०
पद्मप्रियां० मुक्तालंकारां० सूर्यां० चंद्रां० विश्वप्रियां० ईश्वरीं० भुक्तिं० प्रभुक्तिं० विभूतिं० ऋद्धिं० समृद्धिं० तुष्टिं० धनेश्वरीं० शुद्धां० भोगिनीं०
भोगदां० धात्रीमिति । ( एतद्विस्तरस्तु शारदातिलके द्रष्टव्यः ) इति मंत्रकोशोक्तः श्रीसूक्तप्रयोगः ॥ ॥ अथ नीराजनं । विष्णुधर्मो-
त्तरे पुष्कर उवाच । पूर्वोत्तरे तु दिग्भागे नगरात्सुमनोहरे । विस्तीर्णं कारयेद्राजा सुमनोहरमंडपं ॥ कटैर्गुप्तं कुशास्तीर्णं पताकाध्वजशो-
भितं । तोरणत्रितयं शस्तं प्राङ्मुखं कारयेच्छुभं ॥ कार्यं षोडशहस्तं तु तत्र कार्यं भृगूत्तम । तोरणाद्दक्षिणे भागे तत्र कार्यमथाश्रमं ॥
देवतार्चा भवेत्तत्र तथाऽग्निहवनक्रिया । पंचरंगकसूत्रेण शतग्रंथिमनोरमां ॥ मध्यमे तोरणे कुर्याच्छतपाशीं तु मध्यगां । छादयित्वा कुशैस्तां
तु मृदा संछादयेत्पुनः ॥ तस्याश्च लंघनं वर्ज्यं प्रयत्नात्सर्वजंतुभिः । न लंघिता सा यावत्स्यात्प्रथमं राजहस्तिना ॥ चित्रां त्यक्त्वा यदा स्वातिं
सविता प्रतिपद्यते । ततःप्रभृति कर्तव्या यावत्स्वातौ रविः स्थिरः ॥ मंडपे प्रत्यहं देवाः पूजनीया द्विजोत्तम । ब्रह्मा विष्णुश्च शंभुश्च
शक्रश्चैवानिलानलौ ॥ विनायकः कुमारश्च वरुणो धनदो यमः । विश्वान्देवान्महाभाग उच्चैःश्रवसमेव च ॥ अष्टौ महागजाः पूज्यास्तेषां
नामानि मे शृणु । कुमुदैरावतौ पद्मः पुष्पदंतोऽथ वामनः । सुप्रतीकोऽजनो नील एतेऽष्टौ देवयोनयः ॥ पूजा कार्या ग्रहर्क्षाणां तथैव च
पुरोधसा । ततश्च जुहुयाद्वह्नौ पुरोधाः सुसमाहितः ॥ यथाभिमतदेवानां मंत्रैस्तल्लिंगसंज्ञकैः । तथा च मंत्रहीनानां तत्तन्नाम्ना महाभुज ॥

समिधः क्षीरवृक्षाणां तथा सिद्धार्थकानि च । घृतं तिलांश्च धर्मज्ञ तथा चैवाक्षतानि च ॥ हुत्वा च कलशान्कुर्यात्सोदकान् गंधसंयुतान् ।
भल्लातशालिसिद्धार्थवचाकुष्ठप्रियंगवः ॥ तोरणात्पश्चिमे भागे कलशैः पूर्वकल्पितैः । ततः संस्नापनीयाः स्युर्मंत्रपूतैर्गजोत्तमाः ॥ तुरगाश्च
महाभाग अलंकृत्य ततस्तु तान् । ततोऽभिषेकं नागस्य तथा तत्तुरगस्य च ॥ पिंडान्नं तु ततो देयमभिमंत्र्य पुरोधसा । तस्याभिनंदन
राज्ञो विजयः परिकीर्तितः ॥ त्यागे च तस्य विज्ञेयं महद्भयमुपस्थितं । निष्क्रामयेत्तोरणाधस्ततो हि प्रथमं गजान् ॥ तत्रापि प्रथमं राम अ-
भिषिक्तं गजोत्तमं । तस्यादौ ज्ञातपाशीं तु नरः पंचनखोऽपि वा ॥ यद्यन्यो लंघयेत्तां तु राज्ञो मरणमादिशेत् । लंघयेद्वामपादेन यदि तां
नृपकुंजरः ॥ राज्ञीपुरोहितामात्यराजपुत्राऽहितं भवेत् । राज्ञस्तु मरणं ब्रूयादाक्रमेतां पदा यदा ॥ राज्ञो विजयमाचष्टे लंघयन्दक्षिणेन तां ।
निष्क्रामेयुस्ततः सर्वे प्राङ्मुखास्तोरणैर्गजाः ॥ ततोऽश्वाः सुमहाभाग ततस्तु नरपुंगवाः । ततश्छत्रं ध्वजं चैव राजचिह्नानि यानि च ॥
मंडपे तानि संस्थाप्य पूजयेदायुधानि च । पंचरंगकसूत्रेण यास्ताः प्रतिसराः कृताः ॥ दूष्यादूष्येतिमंत्रेण निबध्नीयात्पुरोहितः । सर्वेषां
नृपनागानां तुरगाणां च भार्गव ॥ स्वगृहेषु ततो नेयाः कुंजरास्तुरगैः सह । स्वातिस्थः सविता यावत्तावच्छायासु संस्थितान् ॥ पूजये-
त्सततं राम नाक्रोशेन्न च ताडयेत् । राजचिह्नानि सर्वाणि पूजयेन्मंडपे सदा ॥ वरुणेज्या च भूतेज्या रात्रौ बलिभिरुत्तमैः । वसेतामाश्रमे
नित्यं सांवत्सरपुरोहितौ ॥ अश्ववैद्यप्रधानश्च तथा नागभिषग्वरः । दीक्षितैस्तैस्तथा भाव्यं ब्रह्मचारिभिरेव च ॥ स्वातिं त्यक्त्वा यदा सूर्यो
विशाखां प्रतिपद्यते । अलंकुर्याद्दिने तस्मिन्वाहनं त्वविशेषतः ॥ हस्तिनं तुरगं छत्रं खड्गं चापं च दुंदुभिं । ध्वजं पताकां धर्मज्ञ कालज्ञ-
स्त्वभिमंत्रयेत् ॥ अत्र छत्रादिमंत्रा ज्ञेयाः । अभिमंत्र्य ततः सर्वान्कुर्यात्कुंजरधूर्गतान् । निष्क्रम्य तोरणैर्नागमभिमंत्रितमारुहेत् ॥ तोरणे-

विनिष्क्रम्य कुर्यात्सुरविसर्जनं । बलिं विसृज्य विधिवद्राजा कुंजरधूर्गतः ॥ उल्मुकानां तु निचयमादीपितमनंतरं । राजा प्रदक्षिणं कुर्यात्त्रीन्वारान्सुसमाहितः ॥ चतुरंगबलोपेतः सर्वसैन्यसमन्वितः । एवं कृत्वा गृहं गच्छेद्राजा सैन्यपुरःसरं ॥ जनं संपूज्य च ततः सर्वमेव विसर्जयेत् । शांतिर्नीराजनाख्येयं क्षेम्या वृद्धिकरी तथा । इति नीराजनं ॥ ॥ अथ घृतकंबलविधिः । विष्णुधर्मोत्तरे । राम उवाच । शांतिमाचक्ष्व मे देव घृतकंबलसंज्ञितां । पुष्कर उवाच । पूर्वोत्तरे तु दिग्भागे शांत्यागारं तु कारयेत् ॥ आभिषेचनिका मंत्रा ये मयाऽभिहिताः पुरा । देवादयस्तु तेषां ये स्थानं तत्र प्रकल्पयेत् ॥ आवाहनं ततः कुर्यात्स्नातस्तत्र उपोषितः । आवाहितानां सर्वेषां गंधमाल्यादिसंपदा ॥ दैववित्पूजनं कुर्यात्तथा नृपपुरोहितौ । एवं संपूजनं कृत्वा सोपवासास्तु ते त्रयः ॥ कुर्यात्त्रिभागशेषायां रात्रौ कुर्यात्तु शांतिकं । हुत्वा दशगुणानत्र स्नापयेत्तं नराधिपं ॥ पूर्वमेव तथा स्नातं सिद्धार्थोत्सादितं तथा ॥ पूर्णेन घृतकुंभेन मंत्रेणानेन कालवित् ॥ आज्यं तेजः समुद्दिष्टमाज्यं पापहरं परं । आज्यं सुराणामाहार आज्ये लोकाः प्रतिष्ठिताः ॥ भौमांतरिक्षं दिव्यं वा यत्ते किल्बिषमागतं । सर्वं तदाज्यसंस्पर्शात्प्रणाशमुपगच्छतु ॥ ततो विरूक्षितं स्नानं स्नानवेदिं नराधिपं । गच्छेतां तु पुरस्कृत्य सांवत्सरपुरोहितौ ॥ स्नानवेदी तु कर्तव्या लाजाकुसुममंडिता । चतुर्भिः पूर्णकुंभैश्च विदिक्षु ह्युपशोभिता ॥ चत्वारि तस्यां चर्माणि प्राग्ग्रीवाणि समास्तरेत् । वृषस्य द्वीपिनश्चैव सिंहशार्दूलयोस्तथा ॥ भद्रासनं न्यसेद्राम तेषामुपरि चर्मणां । स्वासीनं नृपतिं तत्र वस्त्रैराच्छादयेन्नवैः ॥ कार्पासिकैस्ततः पश्चादाविकैः कृमिजैस्तथा । ततस्तु सर्पिषः कुंभैः पूर्णैस्तमभिषेचयेत् ॥ कुंभाष्टकं तु कर्तव्यमष्टाविंशतिरेव वा । अथवाष्टशतं राम वृद्धिरेषां गुणोत्तरा ॥ ततोऽपनीय वस्त्राणि तस्यां वेद्यां पुरोहितः । शूलेन मृन्मयं भिंद्याच्छत्रुं क्रोधसमन्वितः ॥ राज्ञस्तु कलशं दद्यात्स्वयं सांवत्सरस्ततः । राजाभिषेकमंत्रेण स्वर्चितं

कल्पितं दृढं ॥ ज्योतिष्मतीं त्रायमाणामभयामपराजितां । जीवां विश्वेश्वरीं पाठामसंगामभयां तथा ॥ सहां च सहदेवीं च पूर्णकोशां शता-
वरीं । अरिष्टिकां शिवां भद्रां कलशे तत्र विन्यसेत् ॥ ब्राह्मीं क्षेमां वचां चैव सर्वबीजानि कांचनं । मंगल्याश्च यथालाभं सर्वौषध्यो
रसांस्तथा ॥ रत्नानि सर्वगंधांश्च बिल्वं च सविकंकतं । एवं स्नातो घृते दृष्ट्वा वदनं दर्पणे तथा ॥ मंगलालभनं कृत्वा धौतवासाः समा-
हितः । अभ्यर्चनं ततः कुर्याद्देवादीनां पृथक्पृथक् ॥ तेषामेव ततो वह्नौ चतुर्थ्यंतैस्तु नामभिः । ॐकारयुक्तं जुहुयाद् घृतं बहु पुरोहितः ॥ आ-
युधाभ्यर्चनं कार्यं वाहनाभ्यर्चनं तथा । राजचिह्नार्चनं कृत्वा त्वलंकृत्य स्वकां तनुं ॥ अनुलेपनमादद्याद्गंधद्वारेतिमंत्रतः । शुभं वसनमादद्याच्छ्री-
सूक्तेनाभिमंत्रितं ॥ श्रियंदातुर्मयिदेहि मंत्रः सुमनसां भवेत् । रायस्पोषेति च तथा मंत्रोऽलंकरणे स्मृतः ॥ केशवाभ्यर्चनं कृत्वा वह्निस्था-
नं ततो व्रजेत् । वह्नेरुत्तरदिग्भागे प्राग्ग्रीवं प्रोक्तचर्मणां ॥ सिंहासनं न्यसेत्पृष्ठे पराध्यास्तरणान्वितं । वृषस्य वृषदंशस्य करेणोः पृषतस्य
च ॥ तेषामुपरि सिंहस्य व्याघ्रस्य च ततः परं । एषां तु राम चर्माणि प्राग्ग्रीवाणि तु विन्यसेत् ॥ ध्रुवाद्यौरितिमंत्रेण नृपं तत्रोपवेशयेत् ।
ततः पुरोधा जुहुयाद्ब्राह्मैर्मंत्रैर्घृतं शुचिः ॥ रौद्रैर्वैष्णववायव्यशाक्रसौम्यैः सवारुणैः । बार्हस्पत्यैस्ततः कुर्यात्तंत्रमुत्तरसंज्ञकं ॥ दैवज्ञः प्रयतः
कुर्याद्देवतानां विसर्जनं । अन्नेन ब्राह्मणान्भोज्य ततो दद्याच्च दक्षिणां ॥ इति घृतकंबलविधिः ॥ ॥ अथशांतिस्नानं । अग्निपुराणे । सर्वार्थसाधनं
स्नानं वक्ष्ये शांतिकरं शृणु । स्नापयेच्च सरित्तीरे ग्रहाविष्टं विचक्षणः ॥ देवालये ज्वरार्त्यादौ विनायकग्रहार्दिते । विद्यातीर्थे ह्रदे गेहे
जयकामस्य तीर्थके ॥ पद्मिन्याः स्नापयेत्क्षीरे गर्भो यस्या विपद्यते । अशोकसंनिधौ प्राप्य जातो यस्या विनश्यति ॥ पुष्पार्थिनी च पुष्पाढ्ये
पुत्रिणी चैव सागरे । गेहे सौभाग्यरूपा या सर्वेषां विष्णुसंनिधौ ॥ विष्णवृक्षे रेवतीपुष्ये सर्वेषां स्नानमुत्तमं । स्नानकामस्य सप्ताहं पूर्वमुत्सादनं

शृणु ॥ पुनर्नवां रोचनां च शताह्वामरुणां त्वचं । मधूकं रजनी द्वे च तगरं नागकेसरं ॥ असुरां चैव मंजिष्ठां मांसीयवसमर्दकैः । प्रियंगुसर्षपापुष्पं वचां ब्राह्मीं च कुंकुमं ॥ पंचगव्यं सक्तुमिश्रमुद्वर्त्य स्नानमाचरेत् । मंडले कर्णिकायां च विष्णुं ब्रह्माणमर्चयेत् ॥ मध्ये कामहरं पूर्वमत्र पूर्वादिदिक्क्रमात् । लिखेदिंद्रादिकान्देवान्सायुधांश्च सवाहनान् ॥ स्नानं मंडलकाद्दिक्षु कुर्याच्चैव विदिक्षु च । विष्णुब्रह्मेशशक्रादीन्सहस्राण्यपि होमयेत् ॥ एकैकस्य त्वष्टशतं समिधस्तु तिलैः सह । भद्रः सुभद्रः सिद्धार्थः कलिहा पुष्टिवर्धनः ॥ अमोघाश्चित्रभानुश्च पर्जन्योऽथ सुदर्शनः । स्थापयेत्तु घटानेतान् साश्विरुद्रमरुद्गणान् ॥ विश्वेदेवास्तथादित्या वसवो मुनयस्तथा । श्राद्धेशाः संतु सुप्रीतास्तथाऽन्या अपि देवताः ॥ ओषधीर्निक्षिपेत्कुंभे जयंतीं विजयां जयां । शतावरीं शंखपुष्पीं विष्णुक्रांत ऽपराजिते ॥ ज्योतिष्मतीं बलां चैव चंदनोशीरकेसरं । कस्तूरिकां च कर्पूरं वालुकं पत्रकं त्वचं ॥ जातफिलं सुगंधं च मृत्तिकाः पंचगव्यकं । भद्रपीठे स्थितं मध्ये स्नापयेयुर्द्विजोत्तमाः ॥ राजाभिषेकमंत्रोक्तदेवानां होमकः पृथक् । पूर्णाहुतिं ततो दत्वा गुरवे दक्षिणां ददेत् ॥ इंद्रोऽभिषिक्तो गुरुणा पुरा दैत्यान्जघान ह । दिक्पालस्नानं कथितं संग्रामादौ जयावहं ॥ इति शांतिस्नानं ॥ ॥ अथैकवस्त्रस्नानं । वीरसिंहावलोके रुद्रयामले । शुक्रेण प्रार्थितः शंभुः प्रणिपत्य जगद्गुरुः । एकवासोविधिं ब्रूहि स्वामिन्विस्तरतो मम ॥ शिव उवाच । शृणु भार्गव यत्नेन दुःखवैधव्यनाशनं । वंध्यात्वं विलयं याति यस्मिन्वस्त्रविधौ कृते ॥ शिवानामेति मंत्रेण दंपती परिधापयेत् । स्नापयेदेकवस्त्रेण भानावनुदिते सति ॥ अष्टपत्रं लिखेत्पद्मं क्रमतः शुक्लतंडुलैः । वेदोक्तविधिना मंत्रैः सूक्तैर्वेदविधानतः ॥ पंचवक्त्रं दशभुजं त्रिनेत्रं पार्वतीपतिं । पद्ममध्ये न्यसेद्देवं शिवोनामेतिमंत्रतः ॥ इंद्रंविश्वेतिमंत्रेण इंद्रमाग्नेयकोणके । येचेहइतिमंत्रेण दक्षिणे दिव्यपूर्वजाः ॥ येदेवासस्तुमंत्रेण नैर्ऋत्यां सनकादयः । वरुणः-

प्रावितामंत्रात्पश्चिमे वरुणं न्यसेत् ॥ गणानांत्वेतिमंत्रेण वायव्यां च गणेश्वरं । अभिगोत्राणिमंत्रेण उत्तरे गर्भमातरः ॥ ऐशान्यां च ग्रहा-
न्सर्वान्स्थापयेत्स्वस्वमंत्रतः । ऋतवःस्थऋतान्मंत्रात्पूर्वस्यां विन्यसेत्स्मरं ॥ तन्मध्ये विन्यसेत्कुंभं पूरितं तीर्थवारिणा । पूर्णपात्रयुतं मध्ये सर्वौ-
षधिसमन्वितं ॥ सहिरण्यं सवस्त्रं च नारिकेलेन संयुतं । प्रतिष्ठां च विधायादौ मंत्रैः पूजनमाचरेत् ॥ रुद्रं चैव जपेत्तत्र षडंगविधिपूर्वकं ।
स्त्रीपुंसाभ्यां विधातव्यं पूजनं विधिवत्ततः ॥ अभ्यर्च्य केवलं सम्यक्कृत्वा स्नानं विधानतः । नांदीमुखाभिधं श्राद्धं विधेयं विधिवत्पुनः ॥ गर्भोसीति-
च मंत्रेण प्राशयेत्पिंडमध्यमं ॥ जलप्रार्थना । प्रत्यगाशापते राजन् जलानामधिप प्रभो । नष्टानष्टप्रस्रष्टा त्वं गर्भं धेहि ममेप्सितं ॥ नदीनदतडागानि
कूपाद्यन्यजलाशयाः । तुभ्यं विना न शोभंते गर्भं धेहि जलेश्वर ॥ पूर्वजन्मनि यत्पापं कुसंसर्गात्स्वयं कृतं । इहापि सलिले स्थित्वा गर्भं धेहि
प्रसीद मे ॥ अष्टषष्टिसुतीर्थानां नदीनामधिपो भवान् । सत्तानामपि चाब्धीनामीश गर्भं ददस्व मे ॥ त्वमेव पाशपाणिस्तु त्वमेव ह्यंभसां पतिः
आपस्तु प्राणिनां जीवो गर्भं धेहि प्रसीद मे ॥ तव हस्ते जलं वामे दक्षिणे जीवजीवनं । मस्तके च जटाः पिंगा गर्भं धेहि दयापर ॥ भू-
तप्रेतादिदोषाणां रोगाणामितरस्य च । अंतरायं प्रभो छित्वा गर्भं धेहि दयां कुरु ॥ ॥ अथौषधिप्रार्थना । सर्वेषां जयते भानां ग्रहा-
णामधिपः सदा । तव स्वामी सदा सोमो धेहि गर्भं महौषधि ॥ औदुंबरी फलवती शाखा या सर्वमंत्रवित् । ओषधयःसमित्येवं कामिन्या
ह्यर्पयेद्बुधः ॥ शाखाया लवनं कार्यं हृदि चेतसि निर्मले । समालंब्य करे दूर्वां नारिकेलाक्षतानपि ॥ वरुणोपासनं कुर्यात्स्तुतिपाठपरायणः ।
ब्रह्मा विष्णुश्च सोमश्च कंदर्पो वृषवाहनः । पार्वती सुभगा भद्रा सावित्री वस्त्रदेवता ॥ एते हि वाससी शुभ्रे अव्यंगे गुरुदैवते । सर्वभूषण-
रम्ये च गर्भं धत्तां च वांछितं ॥ ॥ अथ धान्यस्नानं । मुद्गतंडुलगोधूमयवकंगुसुशालिभिः । राजमाषादिभिर्विद्वान्वंशपात्रं प्रपूरयेत् ॥ विन्य

स्य दीपकं तत्र फलानां सप्तकं तथा। धानावंतेतिमंत्रेण धान्यस्नानं तु कारयेत् ॥ ॥अथ फलस्नानं। नारिकेलं च नारिंगं दाडिमं बीजपूरकं। उत्तमीमथ पूगं च सप्तमं मदनं स्मृतं ॥ कूर्मपृष्ठमिमं पृष्ठे क्षीरनीरप्रपूरितं। त्रिनेत्रं शंभुदेवत्यं नालिकेरं सुतप्रदं ॥ पीतं कनकवर्णाभं सुबीजं सुमनोहरं। तुहिनेन समं शीतं नारंगं गर्भदं मम ॥ उद्यदर्कसमं पुष्पं फलं सिंदूरसंनिभं। बीजपूरयुतं यस्य गर्भदं दाडिमं मम ॥ फलं तच्छक्रदेवत्यं ससूत्रं सुपरिष्कृतं। सुरंगं सोमदेवत्यं गर्भदं बीजपूरकं॥ फलं तच्छक्रदेवत्यं सूत्रं वस्त्रदशोपमं। ज्ञानयोनिप्रपूर्णं तु देहि त्वं गर्भमुत्तति॥ पूगस्तु सूर्यदेवत्यो लाक्षारससमप्रभः। आर्द्रैः फलानां प्रवरो गर्भं दद्यात्सदा मम ॥ उत्सवेषु च सर्वेषु शुभदं सर्वदैवतं। गोरोचनसमाभासं गर्भदं मदनं फलं॥ ॥अथौषधिस्नानं। वर्षावरश्च रास्ना च एला च वचकस्तथा। धान्यं निशा बहुफला सर्वौषध्य इमाः स्मृताः॥ याओषधीरितिमंत्रेण सर्वौषध्यभिषेचनं। करेण मूर्ध्नि विन्यस्य वंशपात्रं तु भार्गव ॥ ऋग्वेदोक्तान्सप्तमंत्रांस्तत्त्वायामीतिपूर्वकान्। धीमान्प्रत्येकमुच्चार्य दंपती स्नापयेत्ततः॥ वरुणःप्राविताामंत्रं वरुणस्योत्तंभनं ततः। येतेशतमिमंमे च इदमापः पुनंतुमां॥ इमान्वै याजुषान्मंत्रान् शिरोमेइत्यनूक्तया। घृतवतीभुवनानां पावमानीः पुनःपुनः॥ साम्नोवरुणसाम्नाऽथ पावकानःसरस्वती। शंनोदेवीत्याथर्वणैर्मंत्रैः स्नानमुदाहृतं॥ ततो रुद्रजपस्नानं कर्तव्यं सुतमिच्छता। अथ भार्गव संस्थाप्य स्थंडिले पावकं शुभे॥ गृह्योक्तेन विधानेन पायसं श्रपयेच्चरुं। आघारावाज्यभागौ च दद्यात्तत्र घृताहुतीः॥ अपांपृष्ठं निहोता च पुनस्त्वाऽथ तथा समित्। वाजःपुरस्तादग्नेत्वमादित्यंगर्भमेव च ॥ ततः सरस्वतीयोन्या तंपत्नीभिरतःपरं। अदित्यैरास्नासिमंत्रेण येनऋषयोपि च॥ गर्भोअस्योषधीनां च मंत्रांकाहुतयः क्रमात्। एभिर्मंत्रैश्चरुं हुत्वा ततः स्विष्टकृतं हुनेत्॥ ऋषभं ब्रह्मणे दद्यादाचार्ये सुरभिं तथा। इतरेभ्योपि विप्रेभ्यो दक्षिणां स्वेच्छया पुनः॥ अभिषेकं ततः कुर्यात्पवि-

त्रं कुंभवारिणा । सुरास्त्वामितिमंत्राद्यैः पवित्रैर्ब्राह्मणैस्ततः ॥ आशास्य कामदैर्मंत्रैर्गृह्णीयात्फलसप्तकं । सदीपं वंशपात्रं च नीत्वा यायाच्छिवालयं ॥ शिवस्य पुरतो मुक्त्वा वंशपात्रं प्रणम्य च । देवदेव जगन्नाथ गौरीनाथ महेश्वर । भवेशान महादेव नमोस्तु सुतदो भव ॥ अष्टौ दोषाश्च ये स्त्रीणां नवमः पुरुषस्य च । तत्तद्दोषविनाशाय सस्त्रीकः स्नानमाचरेत् ॥ विकृतं यच्च मे देहात्संतानपरिपीडनं । तत्सर्वं वस्त्रमायातु निर्दोषा स्यां सुपुत्रिणी ॥ वरुण त्वं च भूतानामुच्यसे कारकः प्रभुः । तव तीर्थप्रभावेण संतानं कुरु मे बहु ॥ ततश्चरुपुरोडाशमाधत्तेत्यादिनाऽऽशयेत् । गर्भं धेहि भगं देह्यायतनं पितरस्तथा ॥ ब्राह्मणान्भोजयित्वाऽथ वरं दत्वा विसर्जयेत् । इदं निर्मूलमपि गुर्जरेषु प्रचारादुक्तं ।

॥ अथ सूर्यारुणसंवादोक्तमेकवस्त्रस्नानं । अरुण उवाच । यत्त्वया कथितं स्वामिन्नेकवस्त्राभिषेचनं । दंपत्योरानपत्यादिदौर्भाग्यशमनं परं ॥ विधिं तस्याखिलं ब्रूहि यथाश्रुतिनिरूपितं । देवता का च के मंत्राः को विधिः किं फलं ततः ॥ कीदृग्वस्त्रं कथं धार्यमुभाभ्यामेव तत्पुनः । तत्कृते कथमापत्यसिद्धिः स्यान्नरयोषितोः ॥ श्रीसूर्य उवाच । पुरा कल्पावसाने तु कल्पस्यास्य समुद्भवे । समारिप्सुर्यदा सृष्टिं श्रुतिश्रुतविधिर्विधिः ॥ सस्मार तनयान्सप्त मानसान् स प्रजापतिः । ते यदा तपसा क्लिष्टा न शेकुः सृष्टिसाधने ॥ शिवमाराध्य तपसा प्रसन्नं तं ययाचिरे । प्रजामेव प्रजाकामाः प्रजापतिसुतास्तु ते ॥ भगवंस्तपसा खिन्नाः प्रजाहेतोः प्रजापतेः । अकार्ष्म वचनाद्दारान्महोदारान्सुलक्षणान् ॥ ततोऽपि न प्रजासिद्धिरस्माकं शिव जायते । प्रजार्थं त्वां प्रपन्नाः स्मो ब्रूहि तत्सिद्धिकृद्विधिं ॥ प्रार्थितस्तैस्ततः शंभुः क्षणं ध्यात्वाऽब्रवीच्च तान् । शृणुध्वं मुनयः सर्वे प्रजाया यदसंभवे ॥ कारणं मुनयः सर्वे यद्दृष्टं ज्ञानचक्षुषा । अनपत्यकरं कर्म चक्रे यत्पूर्वसंभवे ॥ कालाद्भुक्त्वाऽवशेषं यद्दौर्भाग्यं तद्भवं तनौ । विलिप्तमनुमंतादिभेदभिन्नं द्वयोरपि ॥ वाससैकेन तद्देहयुगलं परिधाय च । कुरुध्वं विधिवत्स्नानं

तत्तद्दौर्भाग्यनाशनं ॥ आनखाग्राच्च केशांतं यावदंगविशुद्धिकृत् । एवमापत्यदौर्भाग्यं पंचधा यत्प्रकीर्तितं ॥ तस्य नाशाय विधिवत्सह पत्न्यैकवाससा । स्नात्वा सम्यग्विधेः पुत्राः संततेः श्रेय आप्स्यथ ॥ इत्युक्त्वांऽतर्हिते शंभावकुर्वन्मुनयश्च ह । यथैकवसनस्नानं विधिं तं ते वदाम्यहं ॥ यथाश्रुतं यथादृष्टं श्रुतिभ्यो ज्ञानमंडलात् । शुभे मासे सिते पक्षे सानुकूलग्रहे दिने ॥ नदनद्योः समायोगे महानद्योर्द्वयोरपि । प्रत्यूषे शुद्धिमास्थाय शरीरस्य यथाविधि ॥ विधिं विविधमाधाय पत्न्या सह ममार्हणं । विधाय श्रद्धया युक्तो मंत्रमेनमुदीरयेत् ॥ कर्मसाक्षिन् जगन्नाथ यन्मया पूर्वजन्मनि । पंचधाऽपत्यदुःखाख्यं दौर्भाग्यमतुलं महत् ॥ प्राप्तं तस्य विनाशाय विधिवद्विधिमुत्तमं । सह पत्न्या दिवानाथ तत्र सिद्धिं प्रयच्छ मे ॥ एवमुच्चार्य तद्वस्त्रमहतं द्विदशात्मकं । सार्धहस्तद्वयायामं पंचविंशत्करोन्मितं ॥ विततं तंतुभिः श्लक्ष्णैस्तन्मध्ये तद्वृतं घनैः । युवासुवासामंत्रेण मंत्रितं दैववेदिना ॥ सम्यग्दत्तं तदादाय परिदध्यात्सकच्छकं । दृढनीवी नाभिदेशे तत्र त्रिद्विगुणीकृतं ॥ तच्छेषं दाक्षिणांगस्था पत्नी सकंचुकाह्निका । परिदध्यात्प्रयत्नेन तेन संवृतमस्तका ॥ केशान्संमृज्य संगोप्य पतिपृष्ठानुयायिनी । उपविश्य जलस्याग्रे तावुभौ शुभदंपती ॥ प्रक्षाल्य पाणिपादौ च स्वाचांतौ मम संमुखौ । कुशपुष्पफलस्वर्णतोयपूर्णांजली स्थितौ ॥ दैवज्ञेनोदितान्मंत्रान् शृण्वानौ सलिलोन्मुखौ । वैदिकाँल्लौकिकांश्चापि सावधानौ जितेंद्रियौ ॥ आपस्त्वमासि सर्वेषां देवानामग्रणीः प्रभो । जीवनं सर्वजंतूनां गर्भं धेहि मम प्रभो ॥ यानि यानीह पापानि अनपत्यकराणि नौ । हत्वा तान्यखिलानीश गर्भं धेहि०॥ यदावाभ्यां महत्पापं पुराजन्मनि दुःखकृत् । कृतं तन्नौ विनिर्धूय गर्भं०॥ त्वयैवाधिष्ठिताः सर्वे नदीनदजलाशयाः । पुनंति पापिनः सर्वान्गर्भं०॥ यानि यानीह तीर्थानि येच येच जलाशयाः । त्वयैव पावितास्तस्माद्गर्भं०॥त्वमावाभ्यां प्रपन्नाभ्यां शरणं दुःखशांतये । प्रार्थितः परमेशान गर्भं०॥आशास्महे महाभाग संततिं लोकपावनीं । प्रसन्नाद्ध-

वतः स्वामिन्गर्भं० ॥ भूतप्रेतपिशाचाद्या ये नौ संततिघातकाः । पाशेनायम्य तान्सर्वान्गर्भं० ॥ सप्तैते तांत्रिका मंत्राश्छांदसाः पंच वारुणाः ।
त्वंनःप्रभृति यौ द्वौ च वारुणावपरावपि ॥ त्वंनोअग्ने सत्वंनोअग्ने द्वौ॥इमंमेवरुणेति द्वावर्घ्यं दत्वा समं तु तैः । इमंमे तत्त्वायामि द्वौ । एवं तज्जलमामं-
त्र्य स्तुत्वा मंत्रैः प्रणम्य च ॥ निमज्ज्योन्मज्ज्य च पुनस्तत्र स्नानं समाचरेत् । प्रयोगं विधिवत्कृत्वा पुत्रकामसमृद्धये ॥ स्नास्यावहे स भ-
गवान्प्रचेता नौ प्रसीदतु । स्नायीयातां ततः स्नानमंत्रैर्द्रव्याभिमंत्रितैः ॥ मृत्स्नागोमयगोमूत्रैर्द्रव्यैर्दधिपयोघृतैः । तिलामलकपिष्टैश्च सर्वौषधि-
कुशोदकैः ॥ निर्वर्त्य विधिवत्स्नानं दंपती तावुभावपि । स्नायीतैव ततः पत्नी एकैकद्रव्यसंचयैः ॥ औदुंबरीं बहुफलां बिभ्रती निजमूर्धनि ।
मंत्रपूर्वं स्वपतिना दत्तां शाखां स्रजान्वितां ॥ सप्तौषध्यंबुसंपूर्णैः कलशैरथ सप्तभिः । मंत्रपूतैः स दैवज्ञः स्नापयेत्तां विधानतः॥वर्धारकश्च रा-
स्ना च सहदेवी शतावरी । वचैला लक्ष्मणा चेति सप्तौषध्योऽभिषेचने ॥ याओषध्यनुवाकेन सप्तौषध्यभिषेचनं । ततस्तु वैणवं पात्रं सप्त-
धान्योपसंभृतं ॥ मुद्गतंडुलगोधूमयवशालिसमन्वितैः । कंगुभिः सह माषैश्च धान्यैरपि च सप्तभिः ॥ फलानि विन्यसेत्तत्र याःफलिनीरितिमंत्रतः ।
नालिकेरं च नारिंगं दाडिमं बीजपूरकं ॥ उत्ततीमथ पूगं च जंबीरं चात्र सप्तमं । पूर्वोक्तैर्लौकिकैर्मंत्रैर्वैदिकैश्चापि सप्तभिः ॥ शिरोमेत्यनुवाकेन
स्नानं दौर्भाग्यनाशनं । समाप्य विधिवत्पश्चान्मंत्रमेनमुदीरयेत् ॥ शिशुमृत्युकरं यन्मे दौर्भाग्यं प्रागुपस्थितं । पादांगुष्ठनखाग्राद्यदाकेशांतमुदि-
त्वरं ॥ स्नानेनानेन मे देवस्तत्सर्वमपमृज्यतु । इति विज्ञाप्य वरुणं मां च कर्मादिसाक्षिणं ॥ एकचित्तः स्मरेद्देवमुमया सहितं शिवं । ततस्तु
तर्पयेद्देवान्मनुष्यान्सह पूर्वजैः ॥ नांदीमुखेन विधिना संतर्प्य पितृदेवताः । विश्वाडित्यनुवाकेन फलपुष्पाक्षतांजलिः ॥ उपस्थाय ततः पश्चात्कर्म-
शेषं समापयेत् । ततस्तद्वैणवं पात्रं शिरस्याधाय योषितः ॥ कुशाग्रेण समालभ्य पठेन्मंत्रान्सुशांतिकान् । स्वस्त्ययनानि सूक्तानि दंपती तौ ज-

लाद्बहिः ॥ सुस्नाप्य प्राङ्मुखस्तिष्ठेन्मंत्रं सुश्रावयेदिति । इमागिरआदित्येभ्यो मंत्रद्वयमिदं शुभं ॥ श्रावयन्भुवि विन्यस्य पात्रं तत्प्रणमेच्च मां । ततोऽन्ये वाससी शुभ्रे शुचिनी परिधाय तौ ॥ उपविश्यासने शुभ्रे पुष्पस्रक्चंदनार्चितौ । ततः सकनकं सर्पिः स्पृशेतां सुरभीं द्विजान् ॥ प्रणिपत्य ततः शेषं कर्म सर्वं समाचरेत् । आचार्यः स्वविधानेन दैवज्ञेनानुमोदितः ॥ हस्तमात्रे ततस्तत्र स्थंडिलेऽष्टांगुलोच्छ्रये । स्थापये-द्विधिवद्वह्निं निजशाखाविधानतः ॥ पायसं निर्वपेत्तत्र वैधेयं विधिवत्ततः । तस्मादैशानभागे तु स्थंडिले कलशं न्यसेत् ॥ अव्रणं पयसा पूर्णं स्वर्णपुष्पौषधीयुतं । पूर्णपात्रं न्यसेत्तत्र पूर्णं पुष्पफलाक्षतैः ॥ स्वस्वमंत्रैः प्रतिष्ठाप्य महेशमुमया सह । तस्याग्रे प्रजपेयुस्ते ब्राह्मणा मंत्रको-विदाः ॥ पंचांगान्विधिवन्मंत्रान् रुद्रसूक्तैस्तु याजुषैः । उद्वास्याथ चरुं सम्यगाचार्यश्च विधानतः ॥ आघारावाज्यभागौ च हुत्वावाह्य विभाव-सुं ॥ दिक्पतीन्परितः पूज्य स्वस्वमंत्रैः समाहितः ॥ प्रजापते तथाग्नेर्यी गर्भधेहीति चाऽपरां । अपांपृष्ठं तथा होता इमंमे सप्त वारुणं ॥ ततः स्विष्टकृतं कुर्यात्कर्मशेषं समापयेत् । होमांते शिवमभ्यर्च्य सशिवं विधिपूर्वकं॥(शिवया पार्वत्या सहितं) जपं होमं निवेद्यास्मै विधिवद्विधिकोविदः । ततो विप्राय विदुषे सुशांतां सुपयस्विनीं ॥ वस्त्रस्रग्दक्षिणोपेतां सवत्सां धेनुमुत्तमां । तथाऽलंकृतसर्वांगं वृषभं शुभलक्षणं ॥ दत्वा तौ दंपती पश्चाद्दैवज्ञे-नानुमोदितौ । मंत्रमुच्चारयेयातां विधिवद्विहिताईणौ ॥ देवदेव जगन्नाथ सर्वपापौघनाशन । कर्मणाऽनेन दानेन तथा गोयुगलस्य च ॥ संतु-ष्टः शंकरो भूत्वा संततिं देहि नौ प्रभो । ततस्तु वैणवं पात्रं शिवस्याग्रे निवेदयेत्॥ आचार्याय प्रदेयानि दानानि निजशक्तितः । गुरवे वा-ससी दत्वा कर्मशेषं समापयेत् ॥ प्रणम्य देवतास्ताश्च विसृज्य च विधानतः । ततः कुंभांभसा विप्रा अभिषिंचेयुराद्दताः ॥ मंत्रैश्च वारुणैः सौरैः शांतिस्वस्त्ययनादिभिः । पौराणैरागमोक्तैस्तु नानाफलविधायिभिः ॥ नांदीमुखेन विधिना ततः श्राद्धं समारभेत् । नमोवइति मंत्रेण

नमस्कृत्य मुहुर्मुहुः ॥ मध्यमं पिंडमश्नाति पत्नी दैवज्ञनोदिता । आधत्तपितरोगर्भमितिमंत्रेण मंत्रितं ॥ आचम्य विधिवत्पश्चात्कर्मशेषं समापयेत् । शतं च भोजयेदन्यान्द्विजान्संतोष्य शक्तितः ॥ कृतकृत्यौ च तौ स्यातां पुत्रपौत्रसुखान्वितौ । इत्येकवस्त्रस्नानं ॥ ॥ अथाऽकाले गजमदशांतिः । अद्भुतसागरे गर्गः । ऊर्ध्वं विंशतिवर्षात्तु मदो भवति वारणे । तदर्वाग्यदि माद्येत स्वामिनो मरणं दिशेत् ॥ कारयेत्तत्र शांतिं च ब्राह्मणांश्चापि तर्पयेत् । एकरात्रोषितः स्नात्वा प्रियः प्रयतमानसः ॥ अष्टोत्तरसहस्रं तु मंत्रं चापि जपेच्छुचिः । ततः प्रजप्तमंत्रैस्तु सलिलं चाभिमंत्रयेत् ॥ गजानां गजतत्वज्ञः सर्वदोषहरं शुभं ॥ गजस्नानं प्रकुर्वीत तद्दिने तूर्यनिःस्वनैः ॥ पूर्वाह्णे चाग्निकार्यं तु कृत्वा कुंभशतेन हि । ततो होमं प्रकुर्वीत विधिदृष्टेन होमवित् ॥ अग्नयेस्वाहा । रुद्राय० गणपतये० वरुणाय० बृहस्पतये० शुक्राय० इंद्रायेति । स्नानं कुंभशतेनेह सर्वोपद्रवनाशनं । द्विजपूजनपूर्वं स्यात्सलिलं गुडमिश्रितं ततः कृत्वा । यवयावकसंयुक्तं पिंडं मधुनाऽथ धूपयेद्बहुशः॥ कृतपूजासंस्कारं गणाधिपं वंदयेत्तूर्णं ॥ नैवेद्यमंत्रस्तु । ईश्वरस्य महः सांध्यमुमाललाटसंभवं । इदं कृतोपनीतं तु नैवेद्यं भक्षयस्व नः ॥ इति गजमदशांतिः ॥ ॥ अथ गोकरिणीशांतिः । तत्रैव राजपुत्रः । मदं यदा तु सुरभी विसृजेत्सूतिमेव च । पुरे राष्ट्रे वने वापि गृहे वा हस्तिनी यदि ॥ मत्ता मूत्रपुरीषाणि यदा संप्राप्य तिष्ठति । मत्तया भज्यते युद्धे हस्तिन्या यदि वारणः ॥ महद्भयं भवेत्तत्र देशस्य नगरस्य च । उपोष्य बांधवैस्तत्र सामात्यः सपुरोहितः ॥ हस्तिवत्कल्पितां धेनुं विषाणाभ्यां च योजितां । अथैनां हस्तिनीं नीत्वा शत्रुराष्ट्रे विमोक्षयेत् ॥ इत्येवमेतां कुर्वीत रात्रौ वननिवासिनीं । अथवा पूर्ववत्कृत्वा शांतिं कृत्वा वने द्वयं । सुवर्णेन सुतप्तेन वनमेव विधारयेत् ॥ इतिगोकरिणीमदशांतिः ॥ ॥ अथ पंचकमृतौ शांतिः । मदनरत्ने गारुडे । आदौ कृत्वा धनिष्ठार्धमेतन्नक्षत्रपंचकं । रेवत्यंतं सदा दूष्यम-

शुभं दाहकर्मणि ॥ शवस्य च समीपे तु क्षेप्तव्याः पुत्तलास्तदा । दर्भमयास्तु चत्वार ऋक्षमंत्राभिमंत्रिताः ॥ ततो दाहः प्रकर्तव्यस्तैश्च पुत्तलकैः सह । सूतकांते ततः पुत्रैः कार्यं शांतिकपौष्टिकं ॥ पंचकेषु मृतो यो वै न गतिं लभते नरः । तिलांश्चैव हिरण्यं च तमुद्दिश्य घृतं दहेत् ॥ क्रियानिबंधे । भाजनोपानहौ छत्रं हेममुद्रा च वाससी । दक्षिणा दीयते विप्रे सर्वपातकमोचनी ॥ मदनरत्ने गार्ग्यः । यदि भद्रातिथीनां स्याद्भानुभौमशनैश्चरैः । त्रिपादृक्षैश्च संयोगो द्वयोर्योगे द्विपुष्करः ॥ द्वित्रिपुष्करयोगे तु मृतिर्मृत्यंतरावहा । ( अन्यमृतिप्रदेत्यर्थः ) दहने मरणे चैव त्रिगुणं स्यात्त्रिपुष्करे ॥ ( त्रिगुणिताशुभकारकं स्यात् । त्रयाणां मृतिप्रदमिति यावत् ) खननेऽप्येवमेव स्यादेतद्दोषोपशांतये । तिलपिष्टैर्यवैर्वाऽपि शरीरं कारयेत्ततः ॥ शूर्पे निधायालंकृत्य दाहयेत्प्रेतकोपरि ॥ बौधायनः । अस्मात्त्वमितिमंत्रेण तिलपिष्टं प्रदापयेत् । द्वित्रिपुष्करयोर्दोषं त्रिभिः कृच्छ्रैर्व्यपोहति ॥ वासवे मरणं चेत्स्याद्गृहे वाऽपि पितुर्मृतिः । सुवर्णं दक्षिणां दद्यात्कृष्णवस्त्रमथापि वा ॥ वासवं धनिष्ठा । ब्राह्मे । कुंभमीनस्थिते चंद्रे मरणं यस्य जायते । न तस्योर्ध्वगतिर्दृष्टा संततौ न शुभं भवेत् ॥ न तस्य दाहः कर्तव्यो विनाशात्स्वेषु जंतुषु । अथवा तद्दिने कार्यो दाहस्तु विधिपूर्वकं ॥ धनिष्ठापंचके जीवो मृतो यदि कथंचन । त्रिपुष्करे याम्यभे वा कुलजान्मारयेद्ध्रुवं ॥ तत्रारिष्टविनाशार्थं विधानं समुदीर्यते । दर्भाणां प्रतिमाः कार्याः पंचोर्णासूत्रवेष्टिताः ॥ यवपिष्टेनाऽनुलिप्ताः ताभिः सह शवं दहेत् । प्रेतवाहः प्रेतसखः प्रेतपः प्रेतभूमिपः ॥ प्रेतहर्ता पंचमस्तु नामान्येतान्यनुक्रमात् । अत्र प्रतिमाः संपूज्य शिरोनेत्रवामकुक्षिनाभिपादेषु क्रमेण न्यस्य तन्नामभिर्घृतं हुत्वा यमायसोमं त्र्यंबकमितिमंत्राभ्यां प्रत्येकं तास्वाज्यं हुनेदिति भट्टाः । सूतकांते ततः पुत्रः कुर्याच्छांतिकपौष्टिकं । कांस्यपात्रस्थितं तैलं वीक्ष्य दद्याद्द्विजातये ॥ ब्रह्मविष्णुमहेशेंद्रवरुणप्रीतये ततः । माषमुद्गयवव्रीहिप्रियंग्वादि प्रयच्छति ॥ स्वर्णदानं

रुद्रजाप्यं लक्षहोमं द्विजार्चनं । गोभूदानं षडेतानि कुर्याद्दोषोपशातये ॥ अपरार्के स्मृत्यंतरे । धनिष्ठापंचकमृते पंचरत्नानि तन्मुखे । प्रास्या-हुतित्रयं तत्र हुनेद्दहवपामिति ॥ ततो निर्हरणं कुर्यादेष साग्नेर्विधिः स्मृतः । इतरं निखनेदेव जले वा प्रतिपादयेत् ॥ त्रिपाद्दक्षमृते तद्वद्धिर-ण्यशकलं मुखे । तस्य पिष्टमयं कुर्यात्पुरुषत्रितयं ततः ॥ होमं प्रतिमुखं कुर्यात्तथा वहवपामिति । कार्ष्णायसं च कार्पासं कुसुमं प्रतिपाद्य च । निर्यात्य साग्निं संस्कुर्याद्व्यग्नौ वाऽन्यमुत्सृजेत् । तत्रैव । कनकं हीरकं नीलं पद्मरागं च मौक्तिकं । पंचरत्नमिदं प्रोक्तमृषिभिः पूर्व-दर्शिभिः ॥ रत्नानामप्यभावे तु स्वर्णं कर्षार्धमेव वा । सुवर्णस्याप्यभावे तु आज्यं ज्ञेयं विचक्षणैः । मदनरत्नेऽप्येवं । तथा । एकाशीतिपलं कांस्यं तदर्धं वा तदर्धकं । नवषट्त्रिपलं वापि दद्याद्विप्राय शक्तितः ॥ अन्यत्राऽपि । स्वगृह्योक्तविधानेन कृत्वाऽग्नेः स्थापनं ततः । अन्वा-धानं निर्वपणं देवतानां तथाहुतीः ॥ यमाय धर्मराजाय मृत्यवे चांतकाय च । वैवस्वताय कालाय सर्वभूतक्षयाय च ॥ औदुंबराय दध्ना-य नीलाय परमेष्ठिने ॥ वृकोदराय चित्राय चित्रगुप्ताय वै क्रमात् ॥ विधिना श्रपणं कुर्यादेकैकामाहुतिं हुनेत् । कृष्णां गां कृष्णवस्त्रां च हेमनिष्कसमन्वितां । दद्याद्विप्राय शांताय प्रीतो भवतु मे यमः । त्रिपादर्क्षेऽप्येतदेव । अपरार्के । पुनर्वसूत्तराषाढा कृत्तिकोत्तरफल्गुनी । पूर्वाभाद्रा विशाखा च ज्ञेयमेतत्त्रिपादभं ॥ ब्रह्मचारिमरणे कुष्ठिमरणे गर्भिणीरजस्वलासूतिकामरणे विधिरन्यश्च विशेषो मत्कृते निर्णयसिंधौ ज्ञेयः।

"ध० सिं० पंचकं नाम धनिष्ठोत्तरार्धमारभ्य रेवत्यंतं सार्धनक्षत्रचतुष्टयं । तत्र दाहनिषेधात् दर्भमयपुत्तलैर्यवपिष्टानुलिप्तैः पंचो-र्णासूत्रवेष्टितैः सह शवं दहेत् । तत्र तिथ्यादि संकीर्त्य अमुकस्य धनिष्ठापंचकादिमरणसूचितवंशारिष्टविनाशार्थं पंचकविधिं करिष्ये इति सं-कल्प्योक्तविधाः प्रतिमा नक्षत्रमंत्रैरभिमंत्र्य गंधपुष्पैः संपूज्य दाहसमये प्रेतोपरि न्यसेत् । प्रथमां शिरसि । द्वितीयां नेत्रयोः । तृतीयां

वामकुक्षौ । चतुर्थी नाभौ । पंचमीं पादयोः । तदुपरि नाममंत्रैर्घृताहुतीर्जुहुयात् । तत्र नामानि क्रमेण । प्रेतवाहः प्रेतसखः प्रेतपः प्रेतभूमिपः प्रेतहर्ता चेति । तत उदकं दत्वा यमायसोमं त्र्यंबकमितिमंत्राभ्यां प्रत्येकं प्रतिमास्वाज्याहुतीर्जुहुयात् । ततः प्रेतमुखे पंचरत्नं दत्वा पुत्तलैः सह प्रेतं दहेत् । सूतकांते तिलहेमघृतानि दत्वा कांस्यपात्रे तैलं प्रक्षिप्य तत्रात्मप्रतिबिंबं वीक्ष्य विप्राय दद्यात् । शांतिं च कुर्यात् । अत्रायं विशेषः । नक्षत्रांतरे मृतस्य पंचके दाहप्राप्तौ पुत्तलविधिरेव । न शांतिकं । पंचकमृतस्याश्विन्यां दाहप्राप्तौ शांतिकमेव । न पुत्तलविधिः । शांतिश्च लक्षहोमरुद्रजपान्यतररूपा यथाविभवं कार्या । अथवा कुंभे यमप्रतिमां संपूज्य स्वगृह्योक्तविधिना अग्निप्रतिष्ठापनान्वाधानादिचरुश्रपणांतं कृत्वाज्यभागांते नामभिश्चतुर्दश चर्वाहुतीर्जुहुयात् । यमायस्वाहा । धर्मराजाय० । मृत्यवे० । अंतकाय० । वैवस्वताय० । कालाय० । सर्वभूतक्षयाय० । औदुंबराय० । दध्नाय० । नीलाय० । परमेष्ठिने० । वृकोदराय० । चित्राय० । चित्रगुप्ताय० । एवं हुत्वा होमशेषं समाप्य कृष्णां गां कृष्णवस्त्रां च हेमनिष्कसमन्वितां । दद्याद्विप्राय शांताय यमो मे प्रीयतामिति ॥ त्रिपादर्क्षेऽप्येतदेव शांतिकं । त्रिपुष्करयोगे द्विपुष्करयोगे च मृतौ कृच्छ्रत्रयं प्रायश्चित्तं कृत्वा यवपिष्टमयपुरुषत्रयेण सह प्रेतदाहः । पुरुषत्रयस्य प्रेते न्यास आज्याहुतयश्च पूर्ववत् । कनकहीरकनीलपद्मरागमौक्तिकमिति पंचरत्नस्य मुखे प्रक्षेपोऽपि । रत्नाभावे कर्षार्धं स्वर्णं । स्वर्णाभावे घृतं । एवं पूर्वत्रापि । दहने मरणे त्रिद्विपुष्करे त्रिगुणं फलं । द्विगुणं खननेऽप्येवमेतद्दोषोपशांतये ॥ सुवर्णं दक्षिणां दद्यात्कृष्णवस्त्रमथापि वा । शांतिं कुर्यात्सूतकांते पूर्वोक्तां तेन मंगलं" इति पंचकमृतौ शांतिः॥ ॥ अथ तडागादौ मृतिदोषे जलशुद्धिः । नदीनदसमुद्रेषु मृतिदोषो न विद्यते । वापीकूपतडागेषु मृतेषु शुद्धिरिष्यते ॥ सूतकानंतरं शुद्धिः शौनकेन ह्युदीरिता । उद्धरेच्छतसाहस्रं तदर्धार्धमथापि वा ॥ अष्टोत्तरसहस्रं वा कलशैर्जल-

मुद्धरेत्। मृततारतम्येन ब्राह्मणादिवर्णभेदेन गवादिपशुभेदेन च कलशोद्धारणं। प्रयोगं विधिवत्कृत्वा जातदोषपुरःसरं॥ जलदेवार्चनं का-
र्यं मंडले भद्रसंज्ञके॥ जलदेवो वरुणः। लोकपालग्रहांश्चैव स्थापयेत्तु यथाक्रमं। सदीपं च बलिं दद्याद्देवताभ्यो यथाविधि॥ एवं पूजा
विधातव्या ततो होमं समारभेत्। लोकपालग्रहादिभ्यो जलाधिपतये तथा॥ अष्टोत्तरशतं चैव प्रत्येकं तिलसर्पिषा। जलशुद्धिं ततः कु-
र्याद्ब्रह्मकूर्चपुरःसरं॥ मृत्तिकाभिश्च तोयैश्च तिलामलकभस्मभिः। अश्वस्थानाद्गजस्थानाद्वल्मीकात्संगमाद्ध्रदात्॥ राजद्वाराच्चतुष्पथादिति
मृदः। नदीसमुद्रगंगादिजीर्णकूपप्रस्रवणोदकैः कुंडभस्मतिलामलकशंखोदकविष्णुपादोदकैर्जलावगाहनं। पावमानीभिः प्रायश्चित्तसूक्तैः।
पौरुषं पावमानं नतमंहोइति च सूक्तत्रयं जपेत्। अन्यान्यपि वारुणानि जप्त्वा जलमवगाह्य शांतिं पठेत्। कस्यनूनमित्यादि। स्वस्तिवा-
चनपूर्वं तु होमशेषं समापयेत्॥ अभिषेकं ततः कृत्वा ब्राह्मणान्भोजयेदथ। दक्षिणाभिश्च संतोष्य जलशुद्धिर्भवेद्ध्रुवं॥ इति जलशुद्धिः॥

॥ अथ मृत्युंजयविधानं वसिष्ठकल्पोक्तं संक्षेपेणोच्यते। त्र्यंबकस्य विधानं तु कीर्तयिष्ये मुनीश्वराः। यथोक्तविधिना युक्तं संस्मृ-
तं ब्रह्मणा पुरा॥ मृत्युंजयस्त्रिधा प्रोक्त आद्यो मृत्युंजयः स्मृतः। मृतसंजीवनी चैव महामृत्युंजयस्ततः॥ मृत्युंजयः केवलः स्यात्पुटितो
व्याहृतित्रयैः। ( अनुलोमप्रतिलोमभूतैः ) तारं त्रिबीजं व्याहृत्यः पुटितो मृतजीवनी॥ ( तारं प्रणवः। त्रिबीजं हौं जूं सः। व्याहृतयश्च।
एतैरनुलोमप्रातिलोमैः संपुटितः ) तारं त्रिबीजं व्याहृत्यः पुटितस्तैस्त्रियंबकः। महामृत्युंजयः प्रोक्तः सर्वमंत्रविशारदैः॥ मृतसंजीवनी तारं त्रि-
बीजव्याहृतीः पुरा। ततस्त्रैयंबको मंत्रः पुनरंते तथोच्चरेत्॥ मृत्युंजयोऽयमेवात्र कथितो मंत्रवित्तमैः। माया तारादिका चैव व्याहृतित्रितयं
ततः॥ पुटितस्त्र्यंबकमनुर्मृतसंजीवनी मता। त्रिबीजो यस्तु मंत्रो वै महामृत्युंजयः स्मृतः॥ त्रिबीजं व्याहृतीश्चैव प्रणवाद्याः पठेत्पुरा।

ततश्च त्र्यंबकमनुरंते व्याहृतयश्च ताः ॥ त्रिबीजप्रणवांते च वह्निजायामथोच्चरेत् । प्रणवांते प्रसादश्च मृतिहारक एव च [ तारकं ] ॥ भू-
रादिव्याहृतयश्च त्र्यंबकेति च ऋक् ततः । विपर्ययेण त्रिबीजं तद्वच्च व्याहृतित्रयं ॥ स्वाहांतो मनुरेषोऽत्र शुक्रेणाराधितः पुरा । महामृत्युं-
जय इति विश्रुतो भुवनत्रये ॥ ओंकारैः संयुतः षड्भिश्चतुर्दशभिरेव वा । मृत्युंजयं तं विधिवदुपास्येप्सितमाप्नुयात् ॥ तथा । विभक्तैर्मंत्रवर्णैर्वा
षडंगानां प्रकल्पना । हृदयं त्रिभिराख्यातं चतुर्भिः शिर उच्यते ॥ शिखाऽष्टाभिः समुद्दिष्टा नवभिः कवचं मतं । पंचभिर्नेत्रमाख्यातमस्त्रं
त्रिभिरुदाहृतं ॥ पूर्वपश्चिमयाम्येंदुवक्रेषु तदनंतरं । पूर्णमंत्रं न्यसेदूर्ध्वमुखे त्र्यंबकसंज्ञितं ॥ शिरोगलास्याक्षियुगनाभिहृत्पृष्ठकुक्षिषु । लिंग-
पायूरुमूलांत्रजानुयुग्मे ततः परं ॥ तद्वृत्तयुग्मे स्तनयोः पार्श्वयोः पादयोः पुनः । पाण्योर्नासिकयोः शीर्षे मंत्रवर्णान्न्यसेत्क्रमात् ॥ पदान्येका-
दश न्यस्य शिरोभ्रूयुगलाक्षिषु । वक्त्रे गंडयुगे भूयो हृदये जठरे पुनः ॥ गुह्योरुजानुपादेषु न्यासमेवं समाचरेत् । एतत्प्रयोगे व्यक्तीभवि-
ष्यति । आदौ प्रासादबीजं तदनु मृतिहरं तारकं व्याहृतीश्च प्रोच्चार्य त्र्यंबकं यो जपति मृतिहरं भूय एवैतदाद्यं । कृत्वा न्यासं षडंगं
स्रवदमृतकरं मंडलांतः प्रविष्टं ध्यात्वा योगीशरुद्रं स जयति मरणं शुक्रविद्याप्रसादात् ॥ वेदादिभूरादिपदत्रयं च मध्ये जपेन्मृत्युहरं त्र्यं-
बकं । जपेत्फलार्थी विधिवत्प्रयुक्तं प्रासादमृत्युंजयसंपुटेन ॥ ओंकारत्रितयाद्यश्च ओंकारत्रितयांतकः । व्याहृतित्रितयं चैव प्रासादत्रितयं
तथा ॥ ओंकारैर्मनुसंख्याकैर्जानीयात्सर्वसिद्धये । महामृत्युंजयश्चैव मृत्युंजयस्त्रियंबकः ॥ त्रैयंबकमनुर्युक्तः पूर्वं चांते द्वयेन च । महामृत्युं-
जयो लोके शुक्राख्यामाप तां ध्रुवं ॥ बीजं विना च शुद्धस्तु मृत्युंजयसमाख्यकः । महामृत्युंजयस्त्वन्य इति विद्यात्त्रिधा ह्यमुं ॥ तथाऽन्यत्र ।
चतुर्दशस्वरो युक्तो हकारेण च बिंदुना । प्रासादाख्यं भवेद्बीजं सुप्रसन्नकरं महत् ॥ षष्ठः स्वरश्च संयुक्तो जकारेण च बिंदुना । मृत्युंजयं

समाख्यातं बीजं मृत्युहरं परं ॥ सविसर्गः सकारश्च तारकं परिकीर्तितं । तारं स्थिरं सकर्णेंदु भृगुः सर्गसमन्वितः ॥ अक्षरात्मा निगदितो मंत्रो मृत्युंजयात्मकः ॥ वसिष्ठकल्पे । कुंडस्य पूर्वदिग्भागे काली जिह्वा प्रकीर्तिता । आग्नेय्यां तु कराली स्याद्दक्षिणे तु सुलोहिता ॥ मनोजया तु नैर्ऋत्यां धूम्रवर्णा तु वारुणे । स्फुलिंगिनी तु वायव्यां सौम्ये विश्वरुचिस्तथा ॥ काल्यां कराल्यां वा कुर्याच्छांतिकं पौष्टिकं तथा । भूतप्रेतपिशाचादिशांतिर्लोहितजिह्वया ॥ मनोजयायां जिह्वायामभिचारो विधीयते । जुहुयाद्धूम्रवर्णायां वृष्टिकामो यदा भवेत् ॥ स्फुलिंगिनी तु या जिह्वा तस्यामुच्चाटनं विदुः । या तु विश्वरुचिर्जिह्वा कुंडस्योत्तरभागतः ॥ सर्वार्थसाधिका सेति प्रोच्यते मंत्रवित्तमैः । अपरे वसुधारेति जिह्वां पूर्वोत्तरे विदुः ॥ (पूर्वोत्तरे ऐशान्यां) कुंडेषु मध्यमं भागमग्नेरास्यं प्रचक्षते ॥ तस्मिन्सर्वाणि कार्याणि कारयेन्मारणं विना ॥ औपसनाग्निमानीय तस्मिन्कुंडे विनिक्षिपेत् । अथवा श्रोत्रियागारान्मथितं वा समानयेत् ॥ अर्चयेल्लोकपालांश्च प्रागारभ्य प्रदक्षिणं । कुंडे कृत्वाऽऽज्यभागांतं सर्वमुल्लेखनादिकं ॥ स्वगृह्योक्तविधानेन पायसेन तु होमयेत् । आयुष्कामो घृतेनाग्नौ जुहुयाल्लक्षसंख्यया ॥ अयुतं वा सहस्रं वा शतमष्टोत्तरं तु वा । दूर्वात्रिकैर्वा जुहुयान्मधुरत्रयसंयुतैः ॥ (मधुरत्रयं घृतमधुशर्कराः) गुडूचीखंडकैर्वापि चतुरंगुलमायतैः । अथवा जुहुयाद्विद्वान्मिश्रितैस्तिलतंडुलैः ॥ प्रक्षालितैस्तिलैर्वापि जुहुयाद्गोघृताप्लुतैः । पलाशसमिधो हुत्वा सर्वमायुरवाप्नुयात् ॥ अथवा गोघृताक्तेन पायसेनैव होमयेत् ॥ अथवा तर्पयेद्देवमुदकेन समाहितः ॥ आसीनः प्राङ्मुखो भूत्वाजपेद्वा पूर्वसंख्यया । ब्राह्मणान्भोजयेन्नित्यं वेदवेदांगपारगान् ॥ आरोग्यकामो जुहुयादर्ककाष्ठैर्घृताप्लुतैः । पयसा वापि जुहुयाद्गव्येनाज्येन वा पुनः ॥ पलाशसमिधो वापि सर्वरोगप्रशांतये । एवं रोगप्रशांतिः स्याद्रोगाणां चाप्यनुद्भवः ॥ अच्छिद्रैराम्रपर्णैस्तु पयोऽक्तैर्जुहुयाज्ज्वरे । गुडूचीखंडकैर्वापि

खादिरैर्वा घृतप्लुतैः ॥ प्रमेहे मधुना होमः पयसा वा घृतेन वा । औदुंबरसमिद्भिर्वा होम आमलकेन वा ॥ गुल्मे शाल्मलिहोमः स्यात्तिलैः कृष्णैर्घृतेन वा । वर्धमानसमिद्धोमः सद्यः शूलहरो भवेत् ॥ करंजसमिधो वापि निर्गुंडीसमिधोऽपि वा । तैलेनाभ्यज्य जुहुयाद्वातरोगप्रशांतये ॥ शमीसमिद्भिर्जुहुयादतिसारप्रशांतये । शांत्यर्थमक्षिरोगस्य पलाशसमिधः स्मृताः ॥ उन्मत्तसमिधो हुत्वा अपस्मारात्प्रमुच्यते । कुबेराक्षेंद्रवल्लीभ्यां नेत्रशूलेषु होमयेत् ॥ तैलेनाभ्यज्य जुहुयाद्दस्त्रखंडैस्तथैव च । मातुलिंगगुडूचीनां होमः कामलनाशनः ॥ ( कामलः कावीळइति प्रसिद्धः ) मधुरत्रयहोमेन शांतिः स्याद्राजयक्ष्मणः । होमाच्च फलमूलानां गर्भरोगः प्रशाम्यति ॥ कुष्ठे मसूरिकैर्होमो मधुत्रितयसंयुतैः । छिन्नोत्पलैस्तु जुहुयात्पलाशैर्वा घृतप्लुतैः ॥ अथवा तैलसंयुक्तैर्जुहुयाद्गौरसर्षपैः । ये चान्ये मुखरोगाः स्युः शिरोरोगास्तथैव च ॥ ते सर्वे प्रशमं यांति तिलैर्होमाद् घृतप्लुतैः । औदराणां तु रोगाणां सर्वेषां शांतिमिच्छता ॥ बिल्ववृक्षसमिद्धोमः कर्तव्यो द्विजसत्तम । अधःस्रावे तु जुहुयात्पद्मपत्रैर्घृतप्लुतैः ॥ दूर्वाभिर्वा पयोऽक्ताभिर्जुहुयाच्चंदनेन वा । निश्यश्वत्थसमिद्भिश्च रक्तस्रावे तु होमयेत् ॥ अथवा गोघृतेनैव रक्तातीसारशांतये । रोगेष्वन्येषु सर्वेषु कंठरोगे महोदरे ॥ त्रिभिः फलैस्तु जुहुयान्मधुक्षीरघृतप्लुतैः । मधुरत्रयहोमस्तु सर्वरोगप्रशांतिदः ॥ आयुर्वेदेषु यत्प्रोक्तं यस्य रोगस्य भेषजं । तस्य रोगस्य शांत्यर्थं तेन तेन च होमयेत् ॥ अथवाऽनेन मंत्रेण पावमानीभिरेव वा । तीर्थतोयेन देवेशमभिषिंचेत्समाहितः ॥ भूतज्वरग्रहादीनां सर्वेषामपि शांतये । अथवा तर्पणं कुर्यान्मंत्रैः पूर्वोक्तसंख्यया ॥ अथवा नियताहारो जपेन्मंत्रं समाहितः । एवं होमं द्विजः कुर्यात्तर्पणं जपमेव वा ॥ आयुरारोग्यसिद्ध्यर्थमात्मनो वा परस्य वा । एकाहं वा त्र्यहं वापि दशाहं द्वादशाहकं ॥ पक्षं मासं द्विमासं वा मासत्रयमथापि वा । अथवा चतुरो मासान् षण्मासानेकहायनं ॥ भये महति संजाते दीर्घकालं समाहितः । अल्पेऽल्पकालं कुर्वीत जपहोमादिकं त्रयं ॥

रोगकालोपयुक्तं यद्द्रव्यं शय्यासनादिकं । रोगमुक्तस्तु तत्सर्वं नोपयुंज्यात्कथंचन ॥ अपमृत्युजयोपायमहं वक्ष्याम्यतःपरं । मधुरत्रय-
युक्ताभिर्दूर्वाभिर्जुहुयाद्बुधः ॥ सहस्रमयुतं वापि शतमष्टोत्तरं तु वा । श्वेतार्ककुसुमैर्वापि जुहुयाद्गोघृतेन वा ॥ अपामार्गसमिद्भिर्वा तिलैः कृष्णैर्य-
वैरपि । अथवा गोघृतेनैव पयसा वाऽपि होमयेत् ॥ कपिलागोर्घृतं क्षीरं प्रशंसंति मनीषिणः । शनैश्चरादिनेऽश्वत्थं स्पृशन्मंत्रमिमं जपेत् ॥
साक्षान्मृतोऽपि मुक्तः स्यात्किं पुनस्त्वपमृत्युभिः । अथवा पयसा देवमभिषिच्य घृतेन वा ॥ पलाशखदिराश्वत्थसमिद्भिर्जुहुयात्तु वा ।
बिल्ववृक्षोद्भवैर्वापि सोऽपमृत्योर्विमुच्यते ॥ अथवा श्रपयित्वा तु चरुं रौद्रं द्विजोत्तम । अष्टोत्तरशतं हुत्वा मृत्युं जयति मानवः ॥ अथोपायां-
तरं वक्ष्ये साक्षान्मृत्युनिवर्तनं । हस्तमात्रप्रमाणेन वेदिं कुर्याद्विचक्षणः ॥ तन्मध्ये स्थापयेत्कुंभं सितसूत्रेण वेष्टितं । तंडुलैर्व्रीहिभिर्वापि च-
तुरस्रं समंततः ॥ वासोयुग्मेन संवेष्ट्य तीर्थतोयेन पूरितं । पल्लवान्क्षीरवृक्षाणामथवा चूतपल्लवान् ॥ प्रक्षिप्य तत्रालंकृत्य गंधमाल्याक्षतादि-
भिः । तत्रावाह्य महादेवं देवदेवं त्रियंबकं ॥ पूजयेद्गंधपुष्पाद्यैस्त्र्यंबकेत्यनया ऋचा । ततोऽभिमंत्रयेत्कुंभं मंत्रेणानेन मंत्रवित् ॥ अष्टोत्तरस-
हस्रं तु अभिषिंचेत्ततो नरं । प्रोक्षयेद्वाऽथ कूर्चेन राजानं तु विशेषतः ॥ नापमृत्युभयं तस्य न च व्याधिकृतं भयं । परार्थे धनलोभेन मोहादज्ञानतोऽपि
वा ॥ मृत्युंजयजपं कुर्वन् स्वयं मृत्युमवाप्नुयात् । मातरं पितरं पुत्रं राजाचार्यौ विना सदा ॥ अथ रक्षाविधिं वक्ष्ये सर्वभूतभयापहं ।
औपासनाग्निहोत्रोत्थं गृहीत्वा भस्म वै सितं ॥ ततोऽभिमंत्र्य तद्भस्म तेनांगानि च संस्पृशेत् । अथापरं प्रवक्ष्यामि रोगमृत्युभयापहं ॥
ग्रहप्रेतोरगादिभ्यो भयं येन न जायते । यथेष्टेन सुवर्णेन कारयेदंगुलीयकं ॥ पंचलोहेन वा कुर्यात्त्रिलोहेनैव वा पुनः । ततः संपूज्य देवेशं
गंधपुष्पाक्षतादिभिः ॥ त्र्यंबकेणैव मंत्रेण मनसैव समाहितः । कुंडे वा स्थंडिले वापि विधिवन्मंत्रकोविदः ॥ गोघृतेनैव जुहुयाद्ध्यात्वा देवं निरं-

जनं । शतं सहस्रमयुतं नियुतं वापि तत्वतः ॥ होतुश्च दक्षिणे पार्श्वे हैमे वा राजतेऽपि वा । कांस्ये वा मृन्मये वापि पात्रे न्यस्यांगुलीय-
कं ॥ सर्वाहुतिषु संपातं तस्मिन्नपि नयेद्बुधः । अंगुलीयं स्पृशन्मंत्रं शतमष्टोत्तरं जपेत् ॥ अंगुल्यां सर्वरक्षार्थं धारयेदंगुलीयकं । अनेनैव विधानेन
सर्वान्याभरणानि च ॥ नवानि धारयेन्नित्यं जीवेद्वर्षशतं सुखी । अथ शांतिं प्रवक्ष्यामि सर्वोपद्रवनाशिनीं ॥ अद्भुतेषु च सर्वेषु दुःस्वप्नेषु द्विजोत्त-
म ॥ दिव्यांतरिक्षभौमानामद्भुतानां च दर्शने । प्रत्यक्षप्रतिभातेषु नानारूपेषु सर्वशः ॥ भूतप्रेतपिशाचानामावेशे शंकिते तथा । गृहमध्येऽग्निमा-
धाय श्रपयेत्पायसं चरुं ॥ तेनैव जुहुयादग्नौ मंत्रेणानेन संयतः । तिलौदनं वा जुहुयाच्छुद्धौदनमथापि वा ॥ अष्टोत्तरशतं मंत्री जुहुयाद्वा घृतेन
वा । पलाशखदिराश्वत्थबिल्वन्यग्रोधसंभवैः ॥ अपामार्गसमिद्भिर्वा जुहुयादथवा तिलैः । अथवाऽनेन मंत्रेण कोटिहोमं तु कारयेत् ॥ गव्येन
सर्पिषा विद्वान् यवव्रीहितिलैस्तु वा । अग्निमाधाय जुहुयात्समिच्चरुघृतादिकं ॥ भूतप्रेतपिशाचाश्च येचाप्यन्ये ग्रहादयः । ते सर्वे होमगंधेन
धूमसंस्पर्शनेन च ॥ मंत्रस्यास्य प्रभावेण निर्गच्छंतु गृहात्ततः । अथवाऽनेन मंत्रेण पूर्णकुंभं समाहितः ॥ अभिमंत्र्य गृहं सर्वं प्रोक्षयेत्तेन वा-
रिणा । अथ न्यासविधिं वक्ष्ये मंत्रस्यास्य महामुने ॥ अक्षराणि त्रयस्त्रिंदशस्मिन्मंत्रे तु देवता । आदावष्टौ वसून्विद्याद्रुद्रानेकादशोत्तरे ॥
ततश्च द्वादशादित्याः प्रजापतिरनंतरं । वषट्कारस्तूत्तमे तु सर्वाक्षरमयः शिवः ॥ एवमेतानि रूपाणि देवानां कथितानि वै । अक्षराणि
न्यसेन्मंत्री सर्वांगेषु समाहितः ॥ मूर्धादिपंचस्थानेषु प्रथमं पंचकं न्यसेत् । दक्षिणस्य करस्यापि संधिस्थानेषु पंचसु ॥ ततः पराणि पंचैव
वामहस्ते न्यसेत्ततः । ततस्तु दक्षिणे पादे संधिस्थानेषु पंचसु ॥ पराणि पंच विन्यस्य वामपादे तथा न्यसेत् । ततश्च दक्षिणे पार्श्वे वामपार्श्वे
न्यसेत्क्रमात् ॥ पृष्ठे नाभौ च गुह्ये च कुक्षौ च त्रितयं न्यसेत् । भ्रूमध्ये शिरसि गळे हृदये मातृका न्यसेत् ॥ एवं विन्यस्य सर्वाणि ततोऽ

ते प्रणवं जपेत् । स्वस्यांगे विन्यसेदेनं मंत्री मंत्रसमाहितः ॥ एनं द्रष्टुं न शक्तास्तु कृत्यारक्षोग्रहादयः । अथ काम्यानि कर्माणि प्रवक्ष्यामि समासतः ॥ श्रीकामो बिल्ववृक्षस्य समिद्भिरथवा फलैः ॥ पत्रैर्वाऽप्यस्य जुहुयान्महतीं श्रियमाप्नुयात् । गोकामः पयसा होमाल्लभते गां पयस्विनीं ॥ विद्यार्थी जुहुयाद्यस्तु रुद्राक्षैर्गोघृताप्लुतैः । विद्यां चायुस्तथा वित्तं लभते नाऽत्र संशयः ॥ अन्नाद्यकामो जुहुयादन्नमेव घृतप्लुतं । पलाशसमिधो हुत्वा ब्रह्मवर्चसमाप्नुयात् ॥ वृष्टिकामस्तु संपूज्य देवदेवं त्रियंबकं । अर्घ्यपाद्यादिभिर्देवं गोशृंगैरभिषेचयेत् ॥ आपोहिष्ठेतितिसृभिर्हिरण्यवर्णादिभिस्तथा । पवमानानुवाकेन त्र्यंबकेत्यनया ऋचा ॥ गंधपुष्पं तथा धूपं हविश्चैव निवेदयेत् । एवं संपूज्य देवेशं प्रणिपत्य प्रसाद्य च ॥ वैतसीभिः सामिद्भिस्तु जुहुयात्पयसा प्लुतैः । अयुतं वा सहस्रं वा जुहुयात्पयसाऽपि वा ॥ पुण्याहं वाचयेच्चैव ब्राह्मणानृतमंत्रतः । दशाहाभ्यंतरे वृष्टिर्भवत्येव न संशयः ॥ वृष्टिकामश्चार्द्रवासा बृहद्वटसमुद्भवैः । समिद्भिर्जहुयान्मंत्री सद्यो वृष्टिमवाप्नुयात् ॥ नाभिदघ्ने जले स्थित्वा ध्यायन्वै पुष्टिवर्धनं । जपेत्त्रैयंबकं मंत्रं महतीं वृष्टिमाप्नुयात् ॥ अग्निहोत्रात्समादाय सितं भसितमुत्तमं । अनया तु ऋचा हुत्वा जलेऽवृष्टिं निवारयेत् ॥ जले हुत्वेत्यर्थः । पुत्रकामस्तु जुहुयात्पायसं घृतसंयुतं। चरुशेषं स्वयं भुक्त्वा पुत्रं प्राप्नोति मानवः ॥ पौर्णमास्यां तिलान् हुत्वा घृताक्तान् विंदते सुतं । गोचर्ममात्रमालिप्य गोमयेनाथ भूतलं ॥ धान्यराशीन्विनिक्षिप्य तन्मध्ये स्थापयेद्बुधः । विंशतिं कलशांस्तत्र सितसूत्रेण वेष्टितान् ॥ तीर्थतोयेन संपूर्णान्भूषितान्पल्लवादिभिः । त्रैयंबकेण मंत्रेण ततस्तानभिमंत्र्य च ॥ अथ वंध्यां स्त्रियं तैस्तु कलशैरभिषेचयेत् । अचिराल्लभते पुत्रमायुष्मंतं यशस्विनं ॥ वस्त्रकामस्तु जुहुयात्कुसुमैः कालसंभवैः । यद्वर्णं जुहुयात्पुष्पं तद्वर्णं वस्त्रमाप्नुयात् ॥ धान्यं तिलाज्यसंयुक्तं हुत्वा कन्यामवाप्नुयात् । देवतावश्यकामस्तु कृसरं घृतसंयुतं ॥ अष्टोत्तरसहस्रं तु जहुयात्पायसेन वै । हविः-

शेषं स्वयं भुक्त्वा जपेन्मंत्रमिमं पुनः ॥ यां देवतां समुद्दिश्य करोत्येवमतंद्रितः । प्रत्यक्षभूता सा देवी वरमिष्टं प्रयच्छति ॥ इत्थं लोकं वशे कुर्यान्नक्षत्रे रुद्रदैवते । करवीरसमिद्भिस्तु तैलेनाक्तैर्घृतेन वा ॥ अष्टोत्तरसहस्रं तु हुत्वैवोच्चाटयेद्रिपून् । निर्गुंडिकासमिद्भिस्तु श्वेतार्कक्षीरसंयुतैः ॥ कालपंजरहोमं तु कुर्वंतो म्रियते रिपुः । उन्मत्तसमिधो होमात्परस्योच्चाटनं भवेत् ॥ अथान्यदपि यत्क्रूरं कल्पोक्तं मारणादिकं । तत्सर्वं नैव कर्तव्यं ब्राह्मणे नृपतौ तथा ॥ ऋत्विजा कारयेदेतत्तदा देया च दक्षिणा ॥ निष्कं सुवर्णं च तदर्धमर्धं सहस्रमाने कथिताऽत्र दक्षिणा । माषस्त्वशक्तैरपि तत्कनिष्ठं कदापि कुर्यादधमाधमं न ॥ लैंगे उत्तरार्धे त्रिपंचाशदध्याये । सूत उवाच । त्र्यंबकेण च मंत्रेण देवदेवं त्रियंबकं । पूजयेद्बाणलिंगे वा स्वयंभूतेऽपि वा पुनः ॥ ऋषितीर्थे देवतीर्थे यथावदनुपूर्वशः । अष्टोत्तरसहस्रेण पुंडरीकेण शंकरं ॥ रक्तोत्पलसहस्रेण तथा नीलोत्पलेन च । संपूज्य पायसं दत्वा घृतमोदनकं पुनः ॥ मुद्गान्नं मधुसंयुक्तं भक्ष्याणि सुरभीणि च । अग्नौ होमश्च विपुलो यथावदनुपूर्वशः ॥ पूर्वोक्तैरपि पुष्पैश्च चरुणा च विशेषतः । जपेद्वै नियुतं सम्यक्कालमृत्यूपशांतये ॥ जातिपुष्पेण वश्यार्थी जुहुयादस्तेन वा घृतेन करवीरेण कुर्यादाकर्षणं द्विजः ॥ विद्वेषणं विषेणैव कुर्याद्धालाहलस्य च । तैलेनोच्चाटनं प्रोक्तं स्तंभनं मधुना स्मृतं ॥ तिलेन मोहनं प्रोक्तं ताडनं रुधिरेण तु । खरस्य च गजस्याथ उष्ट्रस्य च यथाक्रमं ॥ स्तंभनं सर्षपैश्चापि पाटनं लशुनेन च । मारणोच्चाटनं चैव द्रोहीबीजेन संयतः ॥ बंधनं स्नुहिपत्रेण सेनास्तंभमतः परं । घृतेन सर्वसिद्धिः स्यात्पयसा ऋद्धिरुच्यते ॥ तिलेन रोगनाशश्च कमलेन धनं लभेत् । कांतिं मधूकपुष्पेण सावित्र्या चायुतत्रयं ॥ जपादिप्रभृतीन्कुर्यात्स्विष्टांतं पूर्ववत्स्मृतं । दानहेमाद्रौ शौनकः । त्र्यंबकंयजामहइति शिखायां न्यसेत् । सुगंधिंपुष्टिवर्धनमिति हृदये । उर्वारुकमिवबंधनादिति बाह्वोः । मृत्योर्मुक्षीयमामृतादिति नाभौ । पादगुल्फे च जंघो-

रुजघने कटिमेढ्रयोः । नाभौ कुक्षिद्वये पार्श्वे कक्षयोः कुचयोर्हृदि ॥ स्कंधे कृकाटिकायां च कूर्परे मणिबंधके । कनिष्ठाऽनामिकामध्ये तर्जन्यं-
गुष्ठपाणिषु ॥ कंठे च चुबुके वक्रे नासिकाकर्णचक्षुषि । ललाटे मूर्ध्नि चूडायां वर्णान्मंत्रस्य विन्यसेत् ॥ देवीपुराणे । ॐजूंसइति मंत्रोऽयं
ख्यातो मृत्युंजयः परः । मृत्युंजयस्तु देवोऽयं चतुर्भुजस्त्रिनेत्रकः ॥ अक्षमालाधरो देवो दक्षिणेन तु पाणिना । वामेनामृतकुंडीं च धारयन्नमृता-
न्वितां ॥ वरदाभयपाणिश्च दिव्याभरणभूषितः । शुक्लः सुनीलवासाश्च पद्मस्योपरि संस्थितः ॥ जां जीं तस्य शिरो ज्ञेयं हौंजूंसश्च शिखा मता ।
जैं वषट्कवचं ज्ञेयं जौं नेत्रं च प्रकीर्तितं ॥ जं फडस्त्रं समुद्दिष्टं षडंगोऽयं भवेत्सदा । ओंकार आह्वानमंत्र ओंकारो वै विसर्जने ॥ अष्टौ तु
शक्तयः पूज्याः पंचाक्षरसमन्विताः । जया च विजया चैव अजिता चापराजिता ॥ भद्रकाली कपाली च क्षेम्या मृत्युपराजिता । ॐजूंसइतिमंत्रेण
पूज्यो मृत्युंजयः शिव इति “लिं० पु० मृतसंजीवनो मंत्रो मया लब्धस्तु शंकरात् । जप्त्वा हुत्वाऽभिमंत्र्यैवं जलं पीत्वा दिवानिशं ॥ लिंगै-
स्य संनिधौ ध्यात्वा नास्ति मृत्युभयं द्विज” इति मृत्युंजयविधिः॥ ॥ अथ प्रयोगः । कर्ता देशकालौ स्मृत्वा मम जीवशरीराविरोधेनामुकरो-
गस्य समूलनाशेनापमृत्युनिवारणद्वारा क्षिप्रारोग्यार्थममुकसंख्यया महात्युंजयमंत्रजपमहं करिष्ये । विप्रद्वारा कारयिष्यइति वा संकल्प्य गणेश-
पूजनपुण्याहवाचनमातृकापूजावृद्धिश्राद्धानि कृत्वा आचार्यं वस्त्राद्यैर्वृणुयात् । अथाचार्य आचम्य प्राणानायम्य देशकालौ स्मृत्वाऽमुक-
स्यारोग्यार्थममुकाज्ञया त्र्यंबकपूजनजपादि करिष्ये इत्युक्त्वा पृथ्वीतिमंत्रेणासनं कृत्वा अपसर्पंत्विति भूतान्युत्साद्य तालत्रयं कृत्वा मूलेन लमिति
वा १२वारं वामनासामापूर्य मूलेन यमिति वा १६ कुंभकं कृत्वा मूलेन रमिति वा १२ रेचयेत् । यमिति १२ देहं संशोष्य रमित्यग्निबीजेन
दग्ध्वा वमित्यमृतबीजेनाप्लाव्य आत्मन आकाश आकाशाद्वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी तस्या देहोत्पत्तिं विभाव्य हमित्यमृतं स्रावयित्वा

प्राणप्रतिष्ठां कृत्वा शिवोऽहमिति विभाव्येष्टदेवतां नत्वा वामे गुरुपरमगुरुपरात्परगुरुपरमेष्ठिगुरून् स्वबीजनामभिर्नत्वा दक्षिणे गणेशदु-
र्गाक्षेत्रपालान्नत्वा मूलेन करशुद्धिं कृत्वा मूलेन प्राणानायम्य अस्य श्रीमहामृत्युंजयमंत्रस्य वसिष्ठ ऋषिः । अनुष्टुप् छंदः । मृत्युंजयो रुद्रो
देवता । हौं बीजं । जूं शक्तिः । सः कीलकं । जपे विनियोगः । शुद्धत्र्यंबके त्र्यं बीजं अं शक्तिः वं कीलकमिति मंत्रकोशे । शिरोमुखहृदयगुह्य-
पायुपादेषु ऋष्यादीन्विन्यस्य मूलेन करशुद्धिं कृत्वा प्रणवं करतलयोर्न्यस्य ॐअग्नये हृदयाय० । त्र्यंबकाय शिरसेस्वाहा । त्रिनेत्राय शिखा-
यै वषट् । वासिष्ठाय कवचा० । अनुष्टुप्छंदसे नेत्रत्रयाय० । रुद्रदेवतायै अस्त्रायफट् । अथ षडंगः । त्र्यंबकं हृदयायनमः । यजामहे
शिरसेस्वाहा । सुगंधिं शिखायैवषट् । पुष्टिवर्धनं उर्वारुकमिवबंधनात्कवचायहुं । मृत्योर्मुक्षीय नेत्रत्रयाय० । माऽमृतात् अस्त्रायफट् । अथाक्षरन्यासः ।
सर्वत्र प्रणवादिनमोंऽतत्वं । त्र्यं दक्षपादमूले । बं दक्षजानुनि । कं दक्षगुल्फे । यं दक्षपादांगुलिमूलेषु । जां तदग्रेषु । मं वामपादमूले । हें
वामजानुनि । सुं वामगुल्फे । गं वामपांदागुलिमूलेषु । धिं तदग्रेषु । पुं गुह्ये । ष्टिं आधारे । वं उदरे । र्धं हृदये । नं कंठे । उर्वारुकिमी-
त्येतानि दक्षबाहुसंधिषु । वबंधनान्मृ वामबाहुसंधिषु । त्यों मुखे । र्मुं क्षीं दक्षवामनासयोः । यं नेत्रयोरावृत्त्या । मां कर्णयोः । मृं भ्रुवोः ।
तात् शिरसि । अथ पादन्यासः । ॐत्र्यंबकंयजामहे पूर्ववक्त्राय नमः । सुगंधिंपुष्टिवर्धनं पश्चिमवक्त्राय० । उर्वारुकमिवबंधनात् दक्षिणवक्त्रा-
य० । मृत्योर्मुक्षीयमामृतात् उत्तरवक्त्राय० । सर्वर्चा ऊर्ध्ववक्त्राय० । अथाक्षरन्यासः । त्र्यं शिरसि । बं कंठे । कं मुखे । यं जां नेत्रयोः । मं नाभौ । हें
हृदि । सुं पृष्ठे । गं धिं कुक्ष्योः । पुं लिंगे । ष्टिं पायौ । वं र्धं ऊर्वोः । नं बस्तौ । उं तन्मूले । र्वा अंत्रे । रुं कं जान्वोः । मिं वं जंघयोः । बं धं स्तनयोः
। ना न्मृ पार्श्वयोः । त्यो र्मु पादयोः । क्षी य पाण्योः । मा मृ नासयोः । तात् शिरसि । अथ पदन्यासः । सर्वत्र नमोंतं । त्र्यंबकं शिरसे

नमः । यजामहे भ्रुवोः । सुगंधिं नेत्रयोः । पुष्टिवर्धनं मुखे । उर्वारुकं गंडयोः । इव हृदये । बंधनात् उदरे । मृत्योः गुह्ये । मुक्षीय
ऊर्वोः । मा जानुनोः । अमृतात्पादयोः । एते न्यासा मंत्रकोशेऽपि तुल्याः । अथाक्षरवस्वादिन्यासः । ॐ त्रिं धराय शिरसि नमः ।
यं ध्रुवाय नेत्रयोः । बं सोमाय कर्णयोः । कं आपाय नासयोः । यं अनिलाय मुखे । जां अनलाय दक्षबाहुमूले । मं प्रत्यूषाय दक्षकूर्परे ।
हें प्रभासाय दक्षमणिबंधे । सुं वीरभद्राय दक्षांगुलिमूले । गं शंभवे तदग्रेषु । [illegible]गिरिशाय वामबाहुमूले । पुं अजायैकपदे वामकूर्परे ।
ष्टिं अहये बुध्न्याय वाममणिबंधे। वं पिनाकिने वामांगुलिमूले । र्धं अपराजिताय तदं[illegible] । नं भुवनाधीश्वराय दक्षपादमूले[illegible]उं कपा[illegible] क्ष-
जानौ । र्वां स्थाणवे दक्षगुल्फे । रुं भर्गाय दक्षपादांगुलिमूले । कं धात्रे तदग्रेषु । मिं दे[illegible]म्णे वामोरुमूले । वं मित्राय ध्य[illegible]
वामगुल्फे । धं अंशाय वामपादांगुलिमूलेषु। नां भगाय तदग्रेषु । न्मृं इंद्राय दक्षपा[illegible] त्र्यों विवस्वते वामपार्श्वे । [illegible]
न्याय भ्रूमध्ये । यं त्वष्ट्रे ललाटे । मां विष्णवे शिरसि । मृं प्रजापतये गले । ताहं[illegible]ाय हृदये । प्रणवं जपेत् । ष[illegible]बकंयं
एतान्मुखस्य पूर्वपश्चिमदक्षिणोत्तरेषु विन्यसेत् । जां उरसि । मं गले । हें मुखे । सुं ग[illegible] धिं नाभौ । पुं हृदि । ष्टि पृष्ठे । व ध कुक्ष्योः
। नं लिंगे । उं पायौ । र्वां ऊर्वोः । रुं कं जानुनोः । मिं वं जंघयोः । बं धं स्तनयोः । [illegible]शिर्श्वयोः । त्र्यों मुं पादयोः । क्षीं यं पाण्योः ।
मां मृं नासयोः । तात् शिरसि । । अथ हेमाद्रौ शौनकोक्तन्यासः । त्र्यंबकंयजामहे शिखोयां । सुगंधिपुष्टिवर्धनं हृदये । उर्वारुकमि-
वबंधनात् बाह्वोः । मृत्योर्मुक्षीयमामृतात् नाभौ । त्र्यं पादयोः । बं गुल्फयोः । कं जंघयोः । यं ऊर्वोः । जां जघने । मं कटौ । हें मेढ्रे ।
सुं नाभौ । गं कुक्ष्योः । धिं पार्श्वयोः । पुं कक्षयोः । ष्टिं स्तनयोः । वं हृदि । र्धं स्कंधे । नं कंठे । उं कूर्परयोः । र्वां मणिबंधयोः । रुं

कनिष्ठिकयोः । कं अनामिकयोः । मिं मध्यमयोः । वं तर्जन्योः । बं अंगुष्ठयोः । धं पाण्योः । नां कंठे । न्मृं चुबुके । त्यों मुखे । मुं नासयोः । क्षीं कर्णयोः । यं नेत्रयोः । मां ललाटे । मृं मूर्ध्नि । तात् शिखायां । एते केवलमृत्युंजयन्यासाः । महामृत्युंजयेऽप्येत एव । किंतु प्रत्यक्षरं व्यात्दतित्रयं प्रणवपूर्वकं जपेत् । ॐभूः ॐभुवः ॐस्वः । ॐ ष्यं दक्षपादमूलेइत्यादि । ॐहौं ॐजूं ॐसः इति वा प्रतिवर्णं प्रतिपदमादौ वदेत् । अथ नामषडंगः । ॐहौं ॐजूं ॐसः ॐनमोभगवतेरुद्राय शूलपाणयेस्वा[illegible]ाय० । ॐहौं० रुद्रायामृतमूर्तये मां जीवय शिरसेस्वाहा । ॐहौं० रुद्राय चंद्रशिरसे जटिने शिखायैवषट् । ॐहौं० रुद्राय [illegible]य ह्रां ह्रीं ह्रूं कवचायहुं । ॐहौं० रुद्राय त्रिलोचनाय ऋग्यजुःसाममंत्रायस्वाहा नेत्रत्रयायवौ० । ॐहौं० रुद्राय प्रलयाग्नित्रयाय [illegible] ज्वल मां रक्ष रक्ष घोरमूर्त[illegible]ाहा ॥ अथ द्वितीयषडंगः । ॐहौं ॐजूं ॐसः ॐनमोभगवते रुद्राय त्र्यंबकाय त्रिनेत्रा[illegible] पुरांतकाय त्र्यंबकं त्वदया[illegible] नीलग्रीवाय शशांककृतशेखरायामृतवर्षिणे यजामहे शिरसेस्वाहा । ॐहौं० रुद्राय [illegible]व्रचर्मपरिधानाय शंकराय व[illegible] शिखायैवषट् । ॐहौं० रुद्राय स्रवदमृतचंद्रबिंबकलाधराय कर्पूरगौराय शांताय उर्वा[illegible]मिवबंधनात् कवचायहुं । ॐहौं [illegible]ाय [illegible]ना-ममंत्राय ज्योतीरूपाय ज्ञानात्मने मृत्योर्मुक्षीय नेत्रत्रयाय० । ॐहौं० रुद्रायाग्निवे[illegible]य दुष्टग्रहनिवारणाय धूर्जटयेऽघोरमूर्तये ज्वलज्वल रुद्र शक्तित्रिशूलधर नित्यं मां रक्ष रक्ष सर्वतो दिशं अघोराय मामृतात् अस्त्रायफट् । ततः पीठादौ मध्ये वृत्तं तद्बहिश्चतुरस्रं तद्बहिः षट्कोणं तद्बहिरष्टदलद्वयं ततश्चतुष्कोणमिति यंत्रं विलिख्य । धर्माय० ज्ञानाय० वैराग्याय० ऐश्वर्याय० । अधर्माय० अज्ञानाय० अवैराग्याय० अनैश्वर्याय० । कृताय० त्रेतायै० द्वापराय० । सत्वाय० रजसे० तमसे० । सूर्यमंडलाय० सोममंडलाय० वह्निमंडलाय० इति संपूज्य मृत्युं-

जयस्तु देवोऽयं चतुर्भुजस्त्रिनेत्रकः । अक्षमालाधरो देवो दक्षिणेन तु पाणिना ॥ वामेनामृतकुंडीं च धारयन्नमृतान्वितां । वरदाभयपाणिश्च दिव्याभरणभूषितः ॥ शुक्लः सुनीलवासाश्च पद्मस्योपरि संस्थितः । इति हेमाद्र्युक्तरीत्या । अच्छस्वच्छारविंदस्थितडमरुकरावस्थितं पूर्णकुंभौ द्वाभ्यां वेदाक्षमाले निजकरकमलाभ्यां घटौ नित्यपूर्णौ । द्वाभ्यां तौ च स्रवंतौ शिरसि शशिकलाबंधुरे प्लावयंतौ सोऽयं देवो दधानः प्रदिशतु विशदाकल्पजालः श्रियं नः ॥ इति प्रपंचसारे मंत्रकोशोक्तरीत्या । बद्धपिंगजटाजूटं नागभूषणभूषितं । द्वादशाक्षं पंचवक्त्रमष्टादशभुजं विभुमिति वा । हस्ताभ्यां कलशद्वयामृतरसैराप्लावयंतं [illegible]रो द्वाभ्यां तौ दधतं मृगाक्षवलयं द्वाभ्यां [illegible]हतं परं । अंकन्यस्तकरद्वयामृतघटं कैलाससंस्थं शिवं स्वच्छांभोजगतं नवेंदुमुकुटं दे[illegible] त्रिनेत्रं भजे । इति वा ध्य[illegible] ध्यानं [illegible]गेण मध्ये देवमावाह्य स्थापनीसंनिधापनीसंनिरोधिनीमुद्राः प्रदर्श्य मूलेनासनपाद्यार्घ्य[illegible]नमधुपर्कस्नानवस्त्रयज्ञोपवीत[illegible] प्यावर[illegible]णपूजां कुर्यात् । मध्ये ईशानं । पूर्ववक्त्रे तत्पुरुषं । दक्षिणे वामदेवं । पश्चिमे अघोरं [illegible] वक्त्रे सद्योजातं । ततः ष[illegible]ग्न्यादिकोणेषु । ह्रां हृदयायनमः । ह्रीं शिरसेस्वाहा । ह्रूं शिखायैवषट् । ह्रैं कवचायहुं । ह्रौं नेत्रत्रया[illegible]ट् । ह्रः अस्त्रायफट् । पुरतः । निवृत्त्यै० प्रतिष्ठायै० विद्यायै० शांत्यै० इति चतुष्कोणे । गं गणपतयेनमः । मं मृत्यवे० । दुं दुर्गायै० क्षं क्षेत्रपाल[illegible] इति चतुष्पत्रे । अथाष्टदले । ब्राह्म्यै० माहेश्वर्यै० कौमार्यै० वैष्णव्यै० वाराह्यै० इंद्राण्यै० चामुंडायै० चंडिकायै० । तद्बहिः । चंडभैरवाय० क्रोधभैरवाय० उन्मत्तभैरवाय० कपालभैरवाय० संहारभैरवाय० आपदुद्धारभैरवाय० कालभैरवाय० गौरभैरवाय० । तद्बहिः । जयायै० विजयायै० अजितायै० अपराजितायै० भद्रकाल्यै० कपाल्यै० क्षेम्यायै० मृत्युपराजितायै० । तद्बहिः । इं इंद्राय० अं अग्नये० यं यमाय० निं निर्ऋतये० वं वरुणाय० वां वायवे० सों

सोमाय० ईं ईशानाय० । ईशानेंद्रयोर्मध्ये ह्रां ब्रह्मणे० निर्ऋतिवरुणयोर्मध्ये ह्रीं विष्णवे० इति संपूज्य । मंत्रकोशे तु षडंगैः प्रथमावरणं । सूर्याय० इंदवे० भूम्यै० तोयाय० अग्नये० वायवे० आकाशाय० आत्मने० इति द्वितीयं । रामायै० राकायै० प्रभायै० ज्योत्स्नायै० पूर्णायै० उषायै० पूरिण्यै० उग्रायै० इति तृतीयं । विश्वायै० विद्यायै० सितायै० पुष्ट्यै० संध्यायै० दारायै० शिवायै० निशायै० इति चतुर्थं । लोकपालैः पंचमं । तदस्त्रैः षष्ठमित्यावरणान्युक्तानि । ततो धूपदीपनैवेद्यफलतांबूलदक्षिण[illegible]जनप्रदक्षिणानमस्कारान्कृत्वा मृत्युंजय महारुद्र त्राहि मां शरणागतं । जन्ममृत्युजरारोगैः पीडितं कर्मबंधनैः ॥ तावकस्त्वद्गतप्राण[illegible]चित्तोऽहं सदा मृड । इति विज्ञाप्य देवेशं जपेन्मृत्युंजयं परं ॥ ततो जपं कृत्वा पुनः षडंगं कृत्वा जपं निवेदयेत् । अयुतं पुरश्च[illegible] इति प्रयोगः ॥ ॥ अथ[illegible] ॐ भूर्भुवः स्वः । ॐ त्र्यंबकं० ऋक् । ॐ स्वः भुवः भूः ॐ । इति मृत्युंजयः । केवलऋग[illegible] । ॐ हौं जूं सः । ॐ भूर्भु[illegible]त्र्यंबकं० ऋक् । ॐ स्वः भुवः भूः । ॐ सः जूं हौं ॐ । इति मृतसंजीवनी ॥ ॐहौं ॐजूं [illegible]सः । ॐभूः ॐभुवः ॐस्वः [illegible] ॐस्वः ॐभुवः ॐभूः । ॐसः ॐजूं ॐहौं ॐस्वाहा । इति महामृत्युंजयः ॥ ऋग्वि[illegible]ने । त्रिरात्रं नियतोऽनश्नन् श्रपयत्पायस[illegible]त-नाहुतिशतं पूर्णं जुहुयात्सर्पिषा द्विजः ॥ समुद्दिश्य महादेवं त्र्यंबकं त्र्यंबकेत्यृचा । ए[illegible]पर्वशतं कृत्वा जीवेदब्दशतं सुखी ॥ इति कमलाकरभट्टकृते शांतिरत्ने मृत्युंजयविधानं ॥

॥ अथ पुरुषसूक्तविधिः । विष्णुधर्मोत्तरे पुष्कर उवाच । प्रतिवेदं महाभाग यत्सूक्तं पौरुषं स्मृतं । सर्वकामकरं ज्ञेयं पवित्रं मधुसूदन ॥ एकैकया ऋचा राम स्नातो दत्वा जलांजलीन् । पौरुषेण तु सूक्तेन मुच्यते सर्वकिल्बिषैः ॥ अंतर्जलगतो जप्त्वा सूक्तमेतत्तु पौरुषं । सर्वकल्मषनिर्मुक्तो यथेष्टां लभते गतिं ॥ एकैकया ऋचा स्नातः पुष्पं पुष्पं निवेदयेत् । पुरुषाय जले

राम सर्वपापैः प्रमुच्यते ॥ एकैकया ऋचा स्नातो दत्वा राम फलं फलं । सर्वकामानवाप्नोति यान्कांश्चिन्मनसेच्छति ॥ पौरुषेण तु सूक्तेन प्राणायामो महाफलः । जपहोमौ तथा राम सर्वकल्मषनाशनौ ॥ सुरापो ब्रह्महा स्तेनस्तथैव गुरुतल्पगः । पापेभ्यो विप्रमुच्येत जप्त्वा सूक्तं तु पौरुषं ॥ कृच्छ्रैर्विशोधितः पूर्वं मध्याह्ने सलिलोपगः । स्नातस्तु पौरुषं सूक्तं जपेन्नित्यमतंद्रितः ॥ संवत्सरेण देवेशं वासुदेवं प्रपश्यति । स्वयमेव महाभाग शाकमूलफलाशनः ॥ तं तं काममवाप्नोति यं राम मनसेच्छति । श्रियमग्र्यां तथा रूपं जीवितं दीर्घमेव च ॥ अणिमा लघिमा प्राप्तिर्महिमा च भृगूद्वह । दुरवापमथान्यद्वा यत्किंचिन्मनसेच्छति ॥ अका पौरुषं जप्त्वा याति विष्णोः परं पदं । मांगल्य रमं पवित्रं संसारदुःखौघविनाशकारि । सुखप्रदं धर्मविदां नराणां मनोरथावाप्तिकरं प्र ॥ महार्णवे ऋग्विधाने । व धानं त्वर्चनं प्रति । अग्निकार्यं जपविधिं स्तोत्रं चैव तदात्मकं ॥ कुर्याद्यथोक्तविधिना मुखः शुद्धमानसः । प्रथम तीयां दक्षिणे करे ॥ तृतीयां वामपादे तु चतुर्थीं दक्षिणे न्यसेत् । पंचमीं वामजानौ तु षष्ठीं क्षिणे तथा ॥ सप्तमीं वाम मीं दक्षिणे तथा । नवमीं नाभिदेशे तु दशमीं त्द्दये तथा ॥ एकादशीं कंठदेशे द्वादशीं वामबाहु शीं दक्षिणे च आस्यदेश चतुदशा ॥ अक्ष्णोः पंचदशीं चैव षोडशीं मूर्ध्नि विन्यसेत् । एवं न्यासविधिं कृत्वा पंचांगानि समाचरेत् ॥ ब्र त्यादिकाभिर्ऋग्भिः पंचांगकल्पना । त्द्दयं शिरः शिखा कवचमस्त्रं चेति पंचांगानि । यथा देहे तथा देवे न्यासं कृत्वा विधानतः [ मंत्रन्यासं पुरा कृत्वा स्वदेहे देवतासु च ] गायत्र्योंकारन्यस्तांगः पूजयेद्विष्णुमव्ययं । तत्रादौ संकल्पं कृत्वा न्यासद्वयं कुर्यात् । अस्य सूक्तस्य श्रीनारायण ऋषिः । पुरुषो देवता अनुष्टुप् छंदः । अंत्या त्रिष्टुप् । जपादौ विनियोगः । तत्र जपे होमे चार्चनं नियतमिति तदेवाह । आद्ययावाहयेद्देवमृचा तु पुरुषोत्तमं । द्वितीय-

यासनं दद्यात्पाद्यं चैव तृतीयया ॥ चतुर्थ्याऽर्घ्यं प्रदातव्यं पंचम्याऽऽचमनं तथा । षष्ठ्या स्नानं प्रकुर्वीत सप्तम्या वस्त्रमेव च ॥ यज्ञोपवीतमष्टम्या नवम्याभरणं तथा । ( पुष्पं दशम्या दातव्यमेकादश्या तु धूपकं । द्वादश्या दीपकं दद्यात्त्रयोदश्या निवेदनं ॥ चतुर्दश्या नमस्कारः पंचदश्या प्रदक्षिणा । इति पाठांतरं ) दशम्या गंधदानं स्यादेकादश्या च माल्यकं । द्वादश्या धूपदानं स्यात्त्रयोदश्या च दीपकं ॥ चतुर्दश्या च नैवेद्यं पंचदश्या नमस्क्रिया । उद्वासनं तु षोडश्या उपचारास्तु षोडश ॥ स्नाने ब[illegible]वेद्ये दद्यादाचमनीयकं । दद्यात्पुरुषसूक्तेन यः पुष्पाण्यप एव वा । अर्चितं तेन वै सर्वं त्रैलोक्यं सचराचरं । दक्षिणां तु यथाशक्त्[illegible]र्चा प्रदापयेत् । ततः प्रदक्षिणां कृत्वा जपं कुर्यात्समाहितः । यथाशक्ति जपित्वा च सूक्तं चास्मै निवेदयेत् । देवस्य दक्षिणे [illegible] कुंडं स्थंडिलमेव वा । क[illegible] तु प्रोक्षणं तु द्वितीयया ॥ तृतीययाऽग्निमादध्याच्चतुर्थ्या तु समिंधनं । पंचम्या त्वाज्यसंस्कारश्चर[illegible]प्रपणं तथा ॥ षष्ठ्याऽनलस[illegible]त्पद्मासनं । चिंतयेत्तत्र देवेशं कालानलसमप्रभं ॥ विवृतास्यं वाहशीर्षं रक्तास्यं रक्त[illegible]वनं । ( वाहो हयः ) ततो [illegible]दीपं निवेदयेत् । पंचभिश्च ततः कुर्यात्सप्तम्यादि यथाक्रमं ॥ वह्नौ पूजयेदित्यर्थः । समिधः [illegible]चं पूर्वं जुहुयादभिघारितः । ततो घृतेन जुहु[illegible]णा च ततः पुनः ॥ एवं हुत्वा ततस्तस्य समीपे स्तोत्रमुच्चरेत् ॥ जितं ते पुंडरीकाक्ष नमस्ते विश्वभावन । नमस्तेऽस्तु हृषीकेश महापुरुष पूर्वज ॥ नमो हिरण्यगर्भाय प्रधानाव्यक्तरूपिणे । ओं नमो वासुदेवाय शुद्धज्ञानस्वभाविने ॥ देवानां दानवानां च सामान्यमधिदैवतं । सर्वदा चरणद्वंद्वं व्रजामि शरणं तव ॥ एकस्त्वमसि लोकस्य स्रष्टा संहारकस्तथा । अध्यक्षश्चानुमंता च गुणमायासमावृतः ॥ संसारसागरं घोरमनंतं क्लेशसाधनं । त्वामेव शरणं प्राप्य निस्तरंति मनीषिणः ॥ न ते रूपं न चाकारो नायुधानि न चास्पदं । तथापि पु-

रुषाकारो भक्तानां त्वं प्रकाशसे ॥ नैव किंचित्परोक्षं ते प्रत्यक्षोऽसि न कस्यचित्। नैव किंचिदसिद्धं ते न त्वं साध्योऽसि कस्यचित्॥ कार्याणां कारणं पूर्वं वचसां वाक्यमुत्तमं। योगिनां परमां सिद्धिं वदंति परमं पदं॥ अहं भीतोऽस्मि देवेश संसारेऽस्मिन्भयावहे। पाहि मां पुंडरीकाक्ष न जाने शरणं परं॥कालेष्वपि च सर्वेषु दिक्षु सर्वासु चाच्युत। शरीरेऽपि मतौचापि वर्धते मे महद्भयं॥त्वत्पादकमलादन्यन्न मे जन्मांतरेष्वपि। निमित्तं कुशलस्यास्ति येन गच्छामि सद्गतिं॥ विज्ञानं यदिदं प्राप्तं यदिदं ज्ञानमर्जितं। जन्मांतरेऽपि मे देव मा भूदस्यपरिक्षयः॥ दुर्गतावपि जातायां त्वं गतिस्त्वं मतिर्मम। दुर्गतावपि जातस्य त्वद्गतो मे [illegible]रथः॥ यदि नाथं च विंदेयं तावताऽस्मि[illegible]ती सदा। अकामकलुषं चित्तं मम ते पादयोः स्थितं॥ कामये वैष्णवत्वं तु सर्वजन्मसु [illegible]लं। इत्येवमनया स्तुत्या स्तुत्वा दे[illegible] किंकरोऽस्मीति चात्मानं देवाय विनिवेदयेत्। पुरुषस्य हरेः सूक्तं स्वर्ग्यं धन्यं यशस्करं। [illegible]त्मज्ञानमिदं पुण्यं योगज्ञानमिदं पर[illegible] जपेन्नित्यं पश्यन्नात्मानमात्मनि॥ फलानि भुक्त्वोपवसेन्मासमद्भिश्च वर्तयेत्। अरण्ये [illegible]सेन्नित्यं जपन्निममृषिं मुनिः॥ ऋ[illegible]षि मंत्रं। ऋग्भिस्त्रिषवणे काले स्नायादप्सु समाहितः। स्नाने एताभिर्मार्जनमघमर्षणं चेत्यर्थः। आ[illegible]पतिष्ठेत सूक्तेनानेन नित्यशः। आज्याहुतीरनेनैव हुत्वैवं चिंतयेदृषिं॥ ऋषिः सूक्तद्रष्टा नारायणः। ऊर्ध्वं मासात्फलाहारस्त्रिभिर्वर्षैज[illegible]दं। तद्भक्तस्तन्मना युक्तो दशवर्षाण्यनन्यभाक्॥ साक्षात्पश्यति तं देवं नारायणमनामयं। अनासदयमानोऽपि भक्तिं न परिहापयेत्॥ भक्तानुकंपी भगवान् जायते पुरुषोत्तमः। येन येन च कामेन जपेत्तत्प्रयतः सदा॥ स स कामः समृद्धः स्याच्छ्रद्दधानस्य कुर्वतः॥ होमं वाप्यथवा जाप्यमुपहारमथो चरुं। कुर्वीत येन कामेन तत्सिद्धिमुपधारयेत्॥ ज्ञातिश्रैष्ठ्यं महद्वित्तं यशो लोके परा गतिः। पापेभ्यो विप्रमोक्षश्च भवेत्सर्वं न संशयः॥ अथाभिधीयते कर्म पु-

त्रकामस्य वैष्णवं । शुक्लपक्षे शुभे वारे सुनक्षत्रे सुगोचरे ॥ द्वादश्या पुत्रकामस्तु चरुं कुर्वीत वैष्णवं ॥ दंपत्योरुपवासः स्यादेकादश्यां सुरा-
लये ॥ ऋग्भिः षोडशभिः सम्यगर्चयित्वा जनार्दनं ॥ चरुं पुरुषसूक्तेन श्रपयेत्पुत्रकाम्यया ॥ प्राप्नुयाद्वैष्णवं पुत्रमचिरात्संततिक्षमं । द्वादशद्वादशी-
ष्वेवं पयसा निर्वपेच्चरुं ॥ यः करोति सहस्रं तु याति विष्णोः परं पदं । हुत्वाऽग्नौ विधिवत्सम्यगृग्भिः षोडशभिर्बुधः ॥ कृतांजलिपुटो भूत्वा स्तवं ताभिः
प्रयोजयेत् । केशवं मार्गशीर्षे तु पौषे नारायणं विदुः ॥ माधवं माघमासे तु गोविंदं फाल्गुने [illegible] ॥ चैत्रे चैव तथा विष्णुं वैशाखे मधुसूदनं ॥ ज्येष्ठे
त्रिविक्रमं विद्यादाषाढे वामनं विदुः । श्रावणे श्रीधरं विद्याद्धृषीकेशं ततः परे ॥ आश्वि[illegible]नाभं तु दामोदरमतः परे । द्वाद[illegible]तानि नामानि
प्रतिमासं तु पूजयेत्॥आयुष्मंतं सुतं सूते यशोमेधासमन्वितं॥धनवंतं प्रजावंतं धार्मिकं स[illegible] तथा ॥ अत्र स्वगृह्योक्तविधिना पयसि चरुः कार्यः।
श्रपणसमये सूक्तमावर्तयेत् । सकलसूक्तेनैकाहुतिः । एवं सहस्रहोमः । स चायुतजपो[illegible]र्यः । कृष्णैकादश्यामुपक्रम्यायुतं [illegible]काद-
श्यां दंपती उपोष्य द्वादश्यां चरुं सहस्रं जुहुयादिति महार्णवः । अथापरः प्रकारोऽयमे[illegible]श्यामभोजनं । दंपत्योः पुरुषस्त[illegible]रोधि-
नि ॥ काले जपेदिदं सूक्तमेकादश्यां निरंतरं । द्वादश्यां प्रयतो भूत्वा पयसा निर्वपेच्चरुं ॥ [illegible]दश० । एवमेकादश्युपवासादिना । हुत्वाज्य [illegible]बा-
त्र ऋग्भिः षोडशभिर्बुधः । कृतांजलिपुटो भूत्वा स्तवं चाभिः प्रयोजयेत् ॥ समिधोऽश्वत्थवृक्षस्य हुत्वाज्यं जुहुयात्पुनः । उपस्थानं हुताशस्य
ध्यात्वा च मधुसूदनं ॥ आग्नेयैर्मंत्रैरुपस्थानमिति महार्णवः । युक्तं तु पुरुषसूक्तेनैव । हविर्होमं ततः कुर्यात्प्रत्यृचं वाग्यतः शुचिः । सूक्तेन
जुहुयादाज्यमादावंते च पूर्ववत् ॥ हविःशेषं नमस्कृत्य नारी नारायणं पतिं । भक्षयित्वा हविःशेषं लब्धाशीः संविशेत्क्षणं ॥ आहारांतरत्या-
गेन हविःशेषं भुक्त्वा वामशायिनी स्यादित्यर्थः । ततः कृत्वा त्विदं कर्म कर्तव्यं द्विजतर्पणं । द्वितीया स्त्री निवर्तेत यावद्गर्भं न विंदति ॥ यया

ऊर्वोस्तृतीयं विन्यस्य चतुर्थं गुह्यदेशतः । पंचमं नाभिदेशे तु षष्ठं तु हृदये न्यसेत् ॥ सप्तमं कंठदेशे तु मुखे चाष्टममुत्तमं । नवमं नासिका-
यां तु दशमं नेत्रयोर्द्वयोः ॥ एकादशं ललाटे तु द्वादशं शीर्ष्णि विन्यसेत् । त्रयोदशं तु कवचं हुं कृत्वाऽस्त्रे तु फट् तथा ॥ एवं न्यासविधिं
कृत्वा ततो मुद्रां प्रदर्शयेत् । एषतेरुद्रभागस्तमिति मुद्राप्रदर्शनं ॥ श्रीकामः शीर्ष्णि कुर्वीत तेजस्कामस्तु नेत्रयोः । मुखे त्वन्नाद्यकामस्तु
ग्रीवायां रोगनाशने ॥ हृदये सर्वकामस्तु नाभौ ज्ञानी प्रदर्शयेत् । प्रजाकामस्तु गुह्ये वै पशुकामस्तु जंघयोः ॥ जानुनोर्ग्रामकामस्तु राष्ट्र-
कामस्तु पादयोः । वशीकरणकामस्तु वामहस्ते प्रदर्शयेत् ॥ पापक्षयेऽभिचारे वा व्याधेरपगमे तथा । बहिः शरीरात्कुर्वीत शिवस्याक्षेति च
स्मरन् ॥ एवं प्रदर्शयित्वा तु ततो ध्यानं समाचरेत् । त्रिलोचनं चतुर्बाहुं सर्वाभरणभूषितं । नागयज्ञोपवीतं च व्याघ्रचर्मोत्तरीयकं ॥ वृष-
स्कंधसमारूढमुमादेहार्धधारिणं । अमृतेनाप्लुतं शांतं चंद्रार्धकृतशेखरं ॥ शुद्धस्फटिकसंकाशं जटामुकुटमंडितं । वरदाभयहस्तं च सर्वकाम-
फलप्रदं ॥ एवं ध्यात्वा द्विजः सम्यगनंगांगहरं हरं । अंगानां यजनं कुर्यात्सम्यग्भक्तिपरायणः ॥ हृदये हृदयं जप्त्वा मूर्ध्नि सूक्तं च पौ-
रुषं । शिखायामुत्तरं चैव नारायणमनुत्तमं ॥ कवचेऽप्रतिरथं तद्वदस्त्रे च शतरुद्रियं । जप्त्वांऽगानि जपेच्छांतिं त्रिः शांतिरिति चोच्चरेत् ॥
शांतिं शंनोवातः ऋचंवाचमित्याद्यां । स त्रिविधोऽपि रुद्रः प्रत्येकं पंचधा । रूपं रुद्रो रुद्री महारुद्रोऽतिरुद्रश्चेति । तत्र नमकचमकमात्रमु-
भयं रूपं । अन्ये शातातपेनोक्ताः । षडंगैकादशी रुद्रो रुद्र्येकादशरुद्रतः । एकादशभिरेताभिर्महारुद्रश्च कथ्यते ॥ एकादशमहारुद्रैरतिरुद्र इती-
रितः । तथा । विधितो नमकावृत्ती रुद्र एकादशात्मिका । रुद्रस्यैकादशावृत्त्या रुद्रैकादशिनी स्मृता ॥ एकादशभिरेताभिर्महारुद्रश्च कथ्यते ।
एकादशमहारुद्रैरतिरुद्र इतीष्यते ॥ अस्यार्थमाह महार्णवः । पूर्वन्यासांते एकादशनमकानुवाकान् पठित्वाऽऽद्यं चमकानुवाकं पठेत् । पुनस्तान्पठि-

त्वा द्वितीयं चमकानुवाकमित्येकादशावृत्त्या रुद्र इत्युच्यते। एकादशिनी रुद्र इति पर्यायः। तदाह बौधायनः।नमस्ते रुद्रमन्यइवत्येकादशानामनुवाकानामेकमेकं जपेदिति। सर्वनमकान्पठित्वा एकैकं चमकानुवाकं पठेदित्यर्थः। तेनैकरूपे सर्वचमकजपो नतु विभागः। तैरेकादशरुद्रै रुद्रीत्युच्यते। सैव लघुरुद्रो रुद्रैकादशिनीति वोच्यते। ताभिरेकादशभिर्महारुद्रः। तैरेकादशावृत्तैरतिरुद्र इति। एतदेवाहतुर्हेमाद्रौ कौशिकबौधायनौ। सद्यादिपंचमंत्रांश्च रुद्रानेकादशैव तु। जपित्वा सर्वरुद्रांश्च चमकाद्यं ततो जपेत्॥ पुनरेतज्जपेत्सर्वं द्वितीयं चमकं तथा। एवमेकादशगुणान् क्रमेण चमकांस्तथा॥ रुद्रैकादशिनी त्वेषा सर्वकामफलप्रदा। सर्वपापक्षयकरी सर्वशांतिप्रदायिनी॥ एकादशगुणा सैव रुद्र इत्यभिधीयते। रुद्रो लघुरुद्रः॥ रुद्र एकादशगुणो महानित्यभिधीयते। महानेकादशगुणस्त्वतिरुद्र इहोच्यते॥ रुद्रं महातिरुद्रं च जपेत्कार्यस्य गौरवात्। अयं रुद्रैकादशिनीकृत्या महारुद्रादिप्रकारः सर्वशाखिनां जपे होमेऽभिषेके च समानः। काण्वकातीयानां त्वेकादशधा चमकविभागं वक्ष्यामः। तथा। ततो होमं प्रकुर्वीत नमःशंभवमंत्रतः। रुद्रैकादशिनीजप्ये त्रयस्त्रिंशदथाहुतीः॥ रुद्रे शतत्रयं प्रोक्तं षष्ट्या न्यधिकयाऽधिकं। चत्वारश्च तथा रुद्रे सहस्राः सप्तवर्जिताः॥ चत्वारिंशत्सहस्राश्च होतव्याश्चतुरुत्तराः। ऊनाश्चैवाष्टसप्तत्या त्वतिरुद्रे विनिश्चयः॥ पापक्षयेऽभिचारे च तथा व्याधिविमोचने। पालाश्यः समिधः कार्या नान्यत्रोत्पातदर्शनात्॥ औदुंबर्यश्च समिधो मध्वक्ताश्च तथाऽक्षताः। ग्राह्याश्चान्नाद्यकामेन श्रियै शांत्यै च पायसं॥ सर्वकामेन वा ग्राह्यमायुर्वृद्ध्यै तिलाः स्मृताः। घृताक्ता अथवा दूर्वास्तेजस्कामेन वै घृतं॥ व्रीहयः पशुकामेन राष्ट्रकामेन वै यवाः। उपविश्य शुचौ देशे दूर्वास्तंबे जपेद्यदि॥ जुहुयाच्छ्वेतपुष्पाणि स विश्वं कुरुते वशं। स्पृष्ट्वाऽश्वत्थं जपेद्यस्तु रुद्रैकादशिनीं नरः॥ रोगान् ज्वरातिसारादीन् नाशयेदुल्बणानपि। होमः पलाशसमिधा कर्तव्यो मधुसंयुतः॥ एकादशमहारुद्रान्परच-

कागमे पुनः ॥ जपेदेकादशगुणान् होमस्तु विविधः स्मृतः । तिलैराज्येन संसिक्तैर्विधिवत्तन्निवर्तयेत् ॥ रुद्रैकादशिनीजप्ये शतमेकोनमिष्यते । सहस्राश्च तथा रुद्रे नवत्यैकोनया युताः ॥ एवं त्रिगुणिताः कार्या महारुद्रातिरुद्रयोः । वृष्टिकामेन वा योज्या हस्त्यश्वामयशांतये ॥ उद्भवे त्वद्भुतानां च ग्रहाणां तु विपर्यये । गृहग्रामादिशांत्यै च तिलाश्वाज्येन संयुताः ॥ होमांते सर्वकामानां कूष्मांडैश्चापि वा जपः । होतव्यमाज्यं विधिवन्महाव्यात्हृतिभिस्तथा ॥ परिषिच्य ततो वह्निं तत्त्वायामीति चार्च्य च । अभिषेकं ततः कुर्यान्मंत्रैस्तल्लिंगकैः शुचिः ॥ आदावंते च संपूज्य पार्वतीसहितं शिवं । लोकपालांश्च संपूज्य विधिवच्छिवसंनिधौ ॥ गंगां दुर्गां च मंत्रेण विधिवद् द्विरदाननं । स्नपनोक्तविधानेन त्वरितेन नमस्कृतिः ॥ तर्पयेद्द्विविधै रत्नैः पयसा पायसेन वा । प्रीयतां शंभुरित्युक्त्वा भूमिदेवान् शुचिः शुचीन् ॥ ( भूमिदेवा ब्राह्मणः ) दत्वा तु दक्षिणां तेभ्यः प्रणिप्रत्य विसर्जयेत् ॥ एवं कृते स भगवान्प्रीतः कामान्प्रयच्छति ॥ अकामस्य फलं मुक्तिर्नात्र कार्या विचारणा । बौधायनोक्तमत्रोक्तं सर्वकामसमृद्धये ॥ अयं रुद्रैकादशिनीप्रकार आपस्तंबशाखीयरुद्रपरः । माध्यंदिनकाण्वादिशाखिनां तु चमकेष्वेकादशानुवाकाभावाच्चमकानेकादशधा विभज्यैकैकं भागं नमकेषु संयोज्यैकादशिनीं कुर्यात् । होमेऽप्येवं । अत्र षडंगन्यासो वैकल्पिकः । पंचांगरुद्राणामित्युक्तेरिति केचित् । अभिषेके तदुक्तेः षट् । अन्यत्र पंचेति महार्णवः । बौधायनोक्तैस्तैत्तिरीयशाखीयरुद्रे पंचांगन्यासाः । षडंगेतिस्मृतिर्वाजसनेय्यादिपरा । बृहत्पराशरेण तथोक्तेरित्यन्ये । अभिषेकरुद्रपरेत्यपरे । यत्तु छंदोगानां सामविधानब्राह्मणे । आवोराजा तद्वोवर्ग आज्यंदोहानि देवव्रतानि चैषा रौद्री नाम संहितैनां प्रयुंजन् रुद्रं प्रीणातीत्युक्तं । आवोराजेत्येकं साम । तद्वोवर्गश्चत्वारि । आज्यंदोहानि त्रीणि । देवव्रतानि त्रीणि । एतत्फलांतरार्थं प्रयोगांतरं । नत्वेतैर्महारुद्रादिकरणे प्रमाणमस्ति । तेन यद्गुर्जराणा-

मेतद्दशात्सामभिर्महारुद्राद्याचरणं यच्च ऋग्वेदिना रुद्रसूक्तैस्तन्निर्मूलं भ्रांतिकृतमभिमानमात्रमित्युपेक्ष्यं। मंत्रस्य प्रतिनिध्यभावाच्च। अतएव बृहत्पराशरेण कुर्याद्विधानंरुद्राणांयजुर्वेदेनसंमितमित्युक्तं। अथ बृहत्पराशरोक्तः कातीयानां विशेषः। इषेत्वादिषु मंत्रेषु खंब्रह्मांतेषु याः क्रियाः। दशप्रणवयुक्तास्ता भूर्भुवःस्वरितीति च॥ दशप्रणवा द्वेधा। आदौ प्रणवमुच्चार्य व्याहृतीः प्रणवान्विताः। मंत्रादौ प्रणवः कार्यो मंत्रांते प्रणवः पुनः॥ ततो व्याहृतिसंयुक्तस्त्वंते च प्रणवः सदेत्येकः पक्षः। अन्यस्तु। आदौ प्रणवमुच्चार्य सप्तव्याहृतयस्ततः। मंत्रादौ प्रणवः कार्यो मंत्रांते प्रणवः पुनरिति। तथा। मनोज्योतिरबोध्यग्निर्मूर्धानं च मर्माणिते। मानस्तोकइति ह्येतत्प्रथमं पंचकं स्मरेत्॥ ततो यातेरुद्रेत्याद्यैराद्यं न्यासं दशाक्षरस्य वर्णैर्द्वितीयं त्रातारमित्याद्यैः संपुटं च बौधायनवदुक्त्वाह। सुत्रामादिदिशांपालान् प्राच्यादिषु स्मरेदथ। रौद्रीकरणमेतद्वै कृत्वा पापात्प्रमुच्यते इत्याद्युक्त्वा। पंचास्यं सौम्यमात्मानं सर्वाभरणभूषितं। मृगलांछनमूर्धानं शुद्धस्फटिकसंनिभं॥ फणासहस्रविस्फूर्जदुरगेंद्रोपवीतिनं। सप्तार्चिरुज्ज्वलज्ज्वालजटाजूटकिरीटिनं॥ सहस्रकरविभ्राजत्खट्वांगादिविभूषितं। देदीप्यमानं चंद्रार्कज्वलदग्नित्रिनेत्रिणं॥ जगद्बाधिर्यकृन्नादचंचड्डमरुधारिणं। केयूरबद्धनागेंद्रमूर्धरत्नविराजितं॥ मेखलाकिंकिणीमालामुक्ताहारविराजितं। घर्घराव्यक्तनिर्गच्छद्गंभीरारावनूपुरं॥ सहेमपट्टनीलाभं व्याघ्रचर्मोत्तरीयकं। दिग्देवतासमायुक्तं सुरासुरनमस्कृतं॥ द्विजो ध्यात्वैवमात्मानं सम्यग्रुद्रस्वरूपिणं। संप्रध्वस्तांतरायः संस्ततो यजनमारभेत्॥ अनुलिप्ते सुगुप्ते च देशे गोचर्ममात्रके। स्थंडिलेऽम्बुजमालिख्य मंत्रमालिख्य तं पुनः॥ दशाक्षरमित्यर्थः। तत्र पूजादिकं कुर्यान्नमःशंभवायेति च। यत्तु तेनैकादशकलशस्थापनमुक्त्वा तत्र रुद्रपूजनं रुद्रैश्चाभिमंत्रणमुक्तं तत्काम्यं प्रयोगांतरं। नतु रुद्रांगं। तच्च वक्ष्यामः। मानोमहांतमिति च सिद्धं मंत्रं स्मरेद्विजः। दशाक्षरेण मंत्रेण दद्यात्पाद्यार्घ्यके द्विजः

सहेदं कर्म कृतं तां विहायान्यामृतावपि नोपेयात् । सर्वाभिः सह कर्तृत्वे तु न दोषः । ऋतावन्यस्त्रिया अगमने नियमातिक्रमदोषोऽस्त्येव । किंत्वल्पः । तत्र शक्तौ प्रत्यृतु प्राजापत्यः । अशक्तौ त्रिरात्रद्विरात्रादि । अपुत्रा मृतपुत्रा च या च कन्यां प्रसूयते । क्षिप्रं सा जनयेत्पुत्रमृष्यशृंगो यथाऽब्रवीत् ॥ बृहत्पराशरोऽप्येवं विधिमुक्त्वा । होमांते दक्षिणां दद्याद्धेनुं वासस्तथा तिलान्। भूमिं हिरण्यं वस्त्राणि यथासंभवमेव वा ॥ इति शांतिरत्ने पुरुषसूक्तविधिः ॥ ॥ अथ दीपस्थानं । सर्वत्र जपो दीपस्थाने कार्यः । तद्यथा । युग्मं स्वराणां विलिखेच्च पूर्वं कादींश्च वर्गान् क्रमशः क्षमींशे । स्थानाधिपाद्याक्षरमस्ति यत्र तं दीपदेशं मुनयो वदंति ॥ इदमेव कूर्मचक्रं । इयांस्तु भेदो यद्ग्रामनामाद्यवर्णे कूर्ममुखमिति । तदुक्तं शिवचंद्रिकायां । अकारादिस्वरद्वंद्वं पूर्वादिष्वष्टसु न्यसेत् । तथा कादीन् सप्तवर्णान्न्यसेच्छिवदिशं विना ॥ ग्रामनामाद्यवर्णस्तु यो यस्यां दिशि तिष्ठति । तत्र कूर्ममुखं ज्ञेयमन्यांगानीतरत्र च ॥ मंत्रसिद्धिं मुखे विद्यात्करयोरल्पकं फलं । निष्फलं पादयोर्मध्ये औदासीन्यं तु पादयोः ॥ वधबंधनदुःखानि पुच्छदेशे भवंति हि । एवं रुद्रजपादावपीति केचित् । अन्ये त्वस्य तांत्रिकजपपर[illegible]जपे न नियम इत्याहुः । अस्यापवादस्तत्रैव । कुरुक्षेत्रे प्रयागे च गंगासागरसंगमे । महाकाले च काश्यां च दीपस्थानं न चिंतयेत् ॥ इति दीपस्थानं ॥

॥ अथ रुद्रविधिः । स च रावणभाष्यभट्टभास्करविद्यारण्यभाष्यहेमाद्रिमहार्णवाद्यालोचनेनोच्यते । तत्र रुद्रस्य जपे होमेऽभिषेके च श्रुतिस्मृत्यादौ विनियोगो दृश्यते । तत्र जाबालिश्रुतिः । किंजप्येनामृतत्वं नो ब्रूहि शतरुद्रियेणेत्येतानि ह वा अमृतनामधेयान्येतैर्ह वा अमृतो भवतीति । कैवल्योपनिषदि । यः शतरुद्रियमधीते सोऽग्निपूतो भवति स्वर्णस्तेयात्पूतो भवति ब्रह्महत्यायाः पूतो भवति कृत्याकृत्यात्पूतो भवति। अनेन ज्ञानमाप्नोति संसारार्णवनाशनं । तस्मादेनं विदित्वैव कैवल्यफलमश्नुतइति । हेमाद्रौ बौधायनः । अथातः पंचांगरुद्राणां जपहोमार्चनविधिं

व्याख्यास्यामः। विधिशब्दस्य जपाद्यैः प्रत्येकमन्वयः। अर्चनमभिषेक इति महार्णवः। शातातपपराशरौ। मद्यं पीत्वा गुरुदारांश्च गत्वा स्तेयं कृत्वा ब्रह्महत्यां च कृत्वा। भस्मच्छन्नो भस्मशय्यां शयानो रुद्राध्यायी मुच्यते सर्वपापैः॥ इदं रहःकृते मासमात्रं ज्ञेयं। रुद्राध्यायी भवेद्भक्त्या मासमेकमतंद्रितः। प्रायश्चित्तं भवेदेतद्रहस्यस्य न संशय इति पराशरपुराणात्। पाद्मे शिवगीतासु। यस्तु रुद्रं जपेन्नित्यं ध्यायमानो ममाकृतिं। षडक्षरं वा प्रणवं निष्कामो विजितेंद्रियः॥ अथाथर्वशिरोमंत्रं कैवल्यं वा रघूत्तम। स तेनैव च देहेन शिवः संजायते ध्रुवं॥ वायवीये। सर्वेषु ग्रहदोषेषु दुःस्वप्नाद्भुतदर्शने। जपन् रुद्रान्सकृद्विप्रः सर्वदोषैः प्रमुच्यते॥ यमः। कुंतापं वालखिल्यांश्च निवित्प्रैषान्वृषाकपिं। होतन्रुद्रान् सकृज्जप्त्वा मुच्यते सर्वपातकैः॥ शुक्रियारण्यकजपो गायत्र्या च विशेषतः। सर्वपापहरा ह्येते रुद्रैकादशिनी तथा॥ हेमाद्रौ [illegible]बौधायनौ। रुद्रैकादशिनी त्वेषा सर्वकामफलप्रदा। सर्वपापक्षयकरी सर्वशांतिप्रदायिनी॥ विष्णुधर्मोत्तरेऽपि। रुद्राणां च तथा जप्यं सर्वाघविनिषूदनं। सर्वकामकरो होमस्तथा सर्वत्र शांतिदः॥ अजाविकानामश्वानां कुंजराणां तथा गवां। मनुष्याणां नरेंद्राणां बालानां योषितामपि॥ ग्रामाणां नगराणां च देशानामपि भार्गव। उपद्रुतानां धर्मज्ञ व्याधितानां तथैव च॥ मरके समनुप्राप्ते रिपुजे च तथा भये। रुद्रहोमः परा शांतिः पायसेन घृतेन वा॥ हेमाद्रौ कालिकापुराणे। यः पुनः सततं भक्त्या अभ्यर्च्य शशिशेखरं। जपेद्ध्यायेत्सदा रुद्रान्सोऽपि याति परं पदं॥ अथेहते फलं किंचिदैहिकं पुष्कलं तदा। तानेव हि जपेद्रुद्रान् शुचिर्भूत्वा समाहितः॥ अथवेदं जगत्सर्वं वशीकर्तुं समीहते। तदा रुद्रं जपेद्भूयो ध्यायमानो महेश्वरं॥ तेन जपरुद्रो होमरुद्रोऽभिषेकरुद्रश्चेति त्रिधा रुद्र उक्तः। आद्यो द्विधा। केवलजपात्मको होमांगश्च। अभ्यंगिरसौ। एकादशगुणान्वापि रुद्रानावर्त्य धर्मवित्। महापापैरपि स्पृष्टो मुच्यते नात्र संशयः॥ सर्वपापानि

नश्यंति रुद्रैकादशिनीजपादिति कालिकापुराणादौ जपमात्रोक्तेः। जपाद्दशांशतो होमस्तथा होमात्तु तर्पणं। तर्पणस्य दशांशेन मार्जनं कथितं किल ॥ मार्जनस्य दशांशेन ब्राह्मणानपि भोजयेत्। जपोऽर्चापूर्वको होमस्तर्पणं चाभिषेचनं ॥ भूदेवपूजनं पंचप्रकारोक्ता पुरस्क्रिया। होमाशक्तौ जपं कुर्याद्धोमसंख्याचतुर्गुणं ॥ एवं कृते तु मंत्रस्य जायते सिद्धिरुत्तमेति। पुरश्चरणचंद्रिकादौ जपमात्रे दशांशहोमोक्तेः। तेन तर्पणाद्यपि सिद्धं। होमरुद्रे तु तर्पणाद्यनाशंक्यमेव। जपमात्रे तदुक्तेः। अन्ये तु पुरश्चरण एवायं विधिः। अतएव हेमाद्रिमहार्णवादौ तर्पणाद्यनुक्तिः। तेन तदुक्तं जपो होमो विप्रभोजनं चेत्येव कार्यमित्याहुर्वृद्धाः। वृद्धयाज्ञवल्क्यः। सुरापः स्वर्णहारी च रुद्रजापी जले स्थितः। सहस्रशीर्षाजापी च मुच्यते सर्वकिल्बिषैः ॥ सर्वपापहरा ह्येते रुद्रैकादशनी तथा। वेदमेकगुणं जप्त्वा ततोऽह्नैव विशुध्यति॥ हेमाद्रौ कालिकापुराणे। यदाऽऽमुष्मिकमीहेत फलं लोकेष्वनल्पकं। तदा रुद्रान्जपेन्नित्यं ध्यायमानो महेश्वरं ॥ यश्च सागरपर्यंतां दद्याद्भूमिं सकांचनां। तस्मादप्यधिकं तस्य सकृद्रुद्रजपाद्भवेत् ॥ वायुपुराणेऽप्येवं। तथा। नमकं चमकं चैव पौरुषं सूक्तमेव च। नित्यं त्रयं प्रयुंजा[illegible] [illegible]लोके महीयते॥ चमकं नमकान्होतॄन्पुरुषसूक्तं च यो जपेत्। प्रविशेत्स महादेवं गृहं गृहपतिर्यथा॥ रोगवान्पापवांश्चैव रुद्रान्जप्त्वा जितेंद्रियः। रागात्पापात्प्रमुक्तोऽसावतुलं सुखमश्नुते॥ लैंगे उत्तरार्धे त्रिपंचाशदध्याये। मृत्युंजयविधिं वक्ष्ये बहुना किं द्विजोत्तमाः। रुद्राध्यायेन विधिना घृतेन नियुतं क्रमात् ॥ सघृतेन तिलेनैव कमलेन च यत्नतः। दूर्वया गोघृक्षीरमिश्रया मधुना तथा ॥ चरुणा सघृतेनैव केवलं पयसाऽपि वा। जुहुयात्कालमृत्योस्तु प्रतीकारः प्रकीर्तितः ॥ सूतसंहितायां। यः श्रद्धया युतो नित्यं शतरुद्रियमभ्यसेत्। स्वर्णस्तेयात्सुरापानाद्दुष्कृताचरणात्तथा ॥ मुच्यते ब्रह्महत्याया इति कैवल्यशाखिनः। वायुपुराणे। तपस्तपति योऽत्यर्थं सहस्राब्दानि संयमी। गवां कोटिप्रदानं यः करोति त्रि-

धिवद्भुरौ ॥ न स तत्फलमाप्नोति यत्सकृद्रुद्रजापिनः । रुद्रेभ्यस्तु परं नास्ति जपो ध्यानं हुतं तपः ॥ तथा । अनपत्यादिदोषेषु शाकिन्यादिग्रहेषु च । सर्वज्वरविनाशाय रुद्रा जप्या न संशयः ॥ आपस्तंबः । यस्य रुद्रः प्रजां पशून्वाभिमन्यते उदङ् परेत्य रुद्रान् जपंश्चरेदित्ययज्ञसंयुक्तः कल्प इत्यादि रावणभाष्ये ज्ञेयं । तत्रादौ व्रतमुक्तं हेमाद्रौ कालिकापुराणे । कृच्छ्रमादौ स्वयं चीर्त्वा पराकं च तथा पुनः । कृत्वा ध्यायन्महादेवमिदं भूयः समाचरेत् ॥ स्नात्वा त्वीशं समभ्यर्च्य उषित्वा सप्तशर्वरीः । जपेद्रुद्रांस्तथाऽजस्रं तदंते प्राशयेद् घृतं ॥ अपरेऽहनि संजाते समाप्यैवं व्रतं पुनः । भास्कराभिमुखो भूत्वा तद्दिने तान् जपेद्बहून् ॥ भूयश्चाह्नि परे रुद्रं संपूज्य विधिवत्ततः । घृताक्तैर्बिल्वपत्रैश्च रुद्रहोमं प्रकल्पयेत् ॥ एवं सम्यग्व्रते नूनं कृतेऽसौ जायते द्विजः । साक्षाद्रुद्रो महातेजास्ततः कामांस्तु साधयेत् ॥ शांतिहेमाद्रौ [illegible]ः । बौधायनोक्तमेवाहं प्रवक्ष्ये कौशिको द्विजः । कामिनां सर्वकामार्थमकामानां च मुक्तये ॥ अकामः सर्वकामो वा जपेद्यः शतरुद्रियं । लिंगाभ्याशेऽथवा तीर्थे स्नानं कृत्वा यथाविधि ॥ ( अभ्याशे समीपे ) रक्षार्थं तु शिखाग्रंथिमूर्ध्वकेशीतिमंत्रतः । भूतानि प्रार्थयेत्तद्वदुत्तिष्ठंत्वितिमंत्रतः ॥ सहस्राणीतिमंत्रेण प्रार्थयेच्च ततो महीं । ककुभः प्रार्थयेत्तिष्ठन्येपथामितिमंत्रतः ॥ उपविश्य शुचौ देशे प्राणानायम्य वाग्यतः । संकल्प्य जपहोमौ तु यदर्थे येन वेति च ॥ रुद्रप्रश्नस्य छंदोऽत्र स्यादनुष्टुबृषिस्तथा । अघोरः सर्वपापघ्न आदित्यो देवता परः ॥ न्यासं भवादिभिः कृत्वा नमोऽतैः प्रणवान्वितैः । मंत्रैरष्टभिरीशानं बलाद्युक्तैः शुभप्रदैः ॥ भवं च पादयोर्न्यस्य शर्वं न्यस्योरुमध्यतः । ईशानं गुह्यदेशे तु नाभौ पशुपतिं न्यसेत् ॥ रुद्रं च हृदि विन्यस्य मुखे चोग्रं तु विन्यसेत् । भीमं ललाटदेशे तु महांतं शीर्षिण विन्यसेत् ॥ सर्वैस्तु कवचं कार्यमेकैकेनास्त्रमुत्तमं । तथैवांत्यानुवाकस्थैर्मंत्रैर्द्वादशभिः शुचिः ॥ न्यासं कृत्वाऽनुलोम्येन वर्जयित्वाऽभिचारकं । आद्यं तु पादयोर्न्यस्य द्वितीयं जानुदेशके ॥

॥ न्यासमंत्रैश्च सोंकारैर्मानस्तोकइति ह्यपि । शंभवायेतिमंत्रेण दद्याद्गंधोदकादिकं ॥ पुष्पधूपप्रदीपादीन् यथालाभं निवेद्य च । दशाक्षरेण तेनैव नमस्कुर्यात्पुनर्द्विजः ॥ शिखा तस्य तु रुद्रस्योत्तरनारायणः स्मृतः । शिरः पुरुषसूक्तं च शिवसंकल्पकं च तद्वत् ॥ कवचं चाऽप्रतिरथं नेत्रं विभ्राड्बृहत्स्मृतं । शतरुद्रियमस्त्रं च देवस्यास्त्रं प्रकल्पयेत् ॥ शतरुद्रियं रुद्राध्यायं । अथातःशतरुद्रियंजुहोतीति तस्यैव शतरुद्रियशब्देनाभिधानात् । एवं तैत्तिरीयाणामपि । महार्णवस्तु त्वमग्नेरुद्रइति शतरुद्रीयं वदन् भ्रांत एव । रूपशब्देन सादृश्यवाचिना गौणतोक्तेः । पंचांगानि स्मरेदष्टप्रणवं च जपेद्द्विजः । पंचांगानि सद्योजातादीनि । हेमाद्रौ चैवं । उद्धृत्य प्रणवेनेशं विकिरेण विसर्जयेत् ॥ एवं पूजां कृत्वा जपं कुर्यात् । तत्रैकादशिन्यां चमकं विनैव रुद्राध्यायमात्रस्यैकादशधाऽऽवृत्तिः । एकादशगुणान्रुद्रान्जपित्वारुद्रतांव्रजेदिति बृहत्पराशराद्यै रुद्रमात्रजपोक्तेः । चमकानां च रुद्रशब्दवाच्यत्वाभावादिति केचित् । तन्न । अस्य प्रयोगांतरत्वादत्र रुद्रैकादशिनीमहारुद्रादिप्रकारानुक्तेः । जपमात्रोक्त्या होमे तदप्रसंगात्सर्वोपसंहारेण प्राप्तेर्बाधकाभावाच्च । अन्ये तु सर्वचमकानां प्रत्यावृत्ति जपमाहुः । तत्तु निर्मूलं । तेन बौधायनहेमाद्र्यादिसंवादात्काण्वानां कातीयानां चाष्टौ चमकानुवाकानेकादशधा कृत्वा प्रत्यावृत्त्येकैकं भागं योजयेदित्येव साधु । एवं होमेऽपि । चमकविभागास्तु । आदौ चत्वारोऽनुवाकाः । ते च वाजश्चमइति चतस्रः । सत्यंचमइति चतस्रः । उर्क्चमइति चतस्रः । अश्माचमइति तिस्रः । इति प्रथमः । अग्निश्चमइंद्रश्चमइति तिस्रः कंडिकाः । इति द्वितीयः । अꣳशुश्चमइति तिस्रः । इति तृतीयः । अग्निश्चमे घर्मश्चमइति द्वे । इति चतुर्थः । एकाचमेतिस्रश्चमइत्येका । इति पंचमः । चतस्रश्चमेऽष्टौचमइत्येका । इति षष्ठः । त्र्यविश्चमे त्र्यवीचमइति द्वे । इति सप्तमः । वाजायस्वाहेत्येका । इत्यष्टमः । अयंतेराट् । इति नवमः । आयुर्यज्ञेनेति द्वे । इति दशमः । सोमश्चयजुश्चेत्येका । इत्येकादश इति । अत्र मूलं तु ।

अथवसोर्धारांजुहोतीत्युपक्रम्य इदंचमइदंचमइति चमकानुक्त्वा अथाधैंद्राणिजुहोति । अथग्रहान्जुहोति । अथैतान्यज्ञक्रतून्जुहोति । अथा-
युजःस्तोमान्जुहोति । अथयुग्मतोजुहोति । अथवयांसिजुहोति । अथनामग्राहंजुहोति । अथाहेदंतेराट् । अथकल्पान्जुहोति । अथाहस्तोमश्च-
यजुश्चेत्यादयः श्रुतयो जाग्रतीति दिक् । अयं हि श्रुतावेकादशधाविभाग एतद्विषय एव । विषयांतराभावात् । तत्त्वं तु भागेष्वनुवाकत्वाभावान्न-
मकानुवाकेष्वेकमेकंयोजयेदिति बौधायनसूत्रहेमाद्र्यादावनुवाकानुषंगेण भागहारयोगादष्टमानुवाकस्यैव प्रयाजैकादशत्वकपालमंत्रस्यांत्यस्य
नवकपाल इवाभ्यासः । अतएव दशमेऽध्याये एकविंशेनातिरात्रेणेत्यादिस्तोमविवृद्धावेकविंशतिमनुब्रूयादिति सामिधेनीवृद्धौ च वेदेऽन्यत्र सत्त्वा-
दागमेन संख्यापूरणमुक्तं । यत्त्वन्यत्राऽप्रसिद्धं तत्र प्रयाजादिनाऽभ्यासेनैव पूरणमुक्तं । आपस्तंबसूत्रेऽप्यंताल्लोपोविवृद्धिर्वेत्युक्तं । एवमत्रांत्यस्यैव च-
मकानुवाकस्य त्रिरभ्यासो युक्तः । अष्टाकपालमंत्रस्यैंद्राग्ने इव सामिधेनीवृद्धौ स्तोमवृद्धौ चैकविंशतिमनुब्रूयादितिवदन्यत्र चमकानुवाकाऽप्रसि-
द्धयागमबाधे प्रयाजैकादशत्ववदभ्यासस्यैव प्राप्तेरंताल्लोपोविवृद्धिर्वेत्यापस्तंबोक्तेश्च । यत्तु कातीयाः काण्वाश्च परशुरामीयं पठंति । सामगाद्यं
जपेद्रुद्रं केवलानि नवांतरे । सांगं सशीर्षकं चांत्यं निरंगमिति केचनेति । अंत्यं रूपं पठित्वांऽगानीति केचित् । अन्ये तु संपुटे मानाभावा-
त्प्रथमावृत्तिवदादावंगानि ततो रुद्र इत्याहुः । वयंसोमेत्यष्टावृचः शीर्षं । उग्रश्चेत्यादिसप्तरुद्रजपश्चेत्याहुः । तद्वचनाभावान्निर्मूलमंधपरं-
परामात्रमित्युपेक्ष्यं । तथा । शिवसंकल्पं हृदयं सूक्तं स्यात्पौरुषं शिरः । प्राहुर्नारायणीयं च शिखां तस्योत्तराभिधं ॥ अद्भ्यःसंभूत-
इत्युत्तरनारायणमित्यर्थः । आशुःशिशानः कवचं नेत्रं विभ्राड्बृहत्स्मृतं । शतरुद्रीयमस्त्रं स्यात् षडंगक्रम ईरितः ॥ हृच्छिरस्तु शिखा
वर्म नेत्रं चास्त्रं महामते । प्राहुर्विधिज्ञा रुद्रस्य षडंगानि स्वशास्त्रतः ॥ अत्र मूलं बृहत्पराशरोक्तं प्रागुक्तं । एषामृषिदैवतच्छंदांसि तेनैवोक्ता-

नि । अक्षतान्वा तिलान्वापि यवान्वा समिधोऽपि वा । शंभवायेति जुहुयात्सर्वांस्तानाज्यसिक्तकान् ॥ पंच पंचाथ षड्वाऽऽद्या अष्टावष्टौ दशापि वा । दशदशैकादश वा जुहुयात्साधको द्विजः ॥ जपतर्पणहोमादौ रतो यो वत्सरं जपेत् । अथ प्रयोगांतराण्याह । अथातः सिद्धिकामः सन्कंदमूलफलाशनः । गोमूत्रयावकक्षीरदधिशाकाज्यभोजनः ॥ हविष्यभोजनो वाऽसौ विप्रो मुन्यन्नभोजनः । जपहोमादि कुर्वाणो यथोक्तफलभाग्भवेत् ॥ शिरसा सह रुद्राणां जप्त्वैकादशिनीं ध्रुवं । सर्वे मंत्रा भवंत्यस्य ब्राह्मणस्योक्तकारिणः ॥ एकादश शुभान्कुंभानाहरेद्विधिवच्च तान् । सहिरण्यान्सवस्त्रांश्च फलपुष्पोपशोभितान् ॥ गंधोदकाक्षतैर्युक्तान्पूजयेद्रुद्रभक्तितः । अथैकादशभी रुद्रैरेकैकमभिमंत्रयेत् ॥ एवं संपूज्य तान्कुंभान्नमस्कृत्याभिमंत्र्य च । एकादशाहमात्मानमन्यं वा हितकाम्यया ॥ विनायकोपसृष्टं वा स्नापयेत्काकपद्धतं । ( काकपादस्पृष्टमित्यर्थः ) मृतवत्सां काकवंध्यां स्नापयेच्च तथातुरं ॥ अनड्वाहं च वस्त्रं च दद्याद्धेनुं च दक्षिणां । भोजयेद्विदुषो विप्रान्समाप्तौ कर्मणो द्विजः ॥ नमोगणेभ्य इत्यस्य मंत्रस्य ब्राह्मणोऽयुतं । जप्त्वा च श्रीफलैर्हुत्वा सर्वकार्येषु सिद्धिभाक् ॥ नमोअस्तुनीलग्रीवायेत्येतन्मंत्रेण सप्त वा । आवर्त्योदकमामंत्र्य विषार्तश्रवणे जपेत् ॥ विषेण मुच्यते सद्यः कालदष्टोऽपि जीवति । ग्रहग्रस्तं तथा प्रेतरक्षःशाकिनिदूषितं ॥ प्रमुंचधन्वनइति भस्मना सर्षपैस्तथा । ताडयेन्मुंचमुंचेति शीघ्रमेव विमुंचति ॥ नमःशंभवइत्यस्य मंत्रस्य वाऽयुतं द्विजः । जप्त्वा खदिरसमिधो हुत्वा विप्रः सहस्रकं ॥ कटुतैलप्लुताः सम्यङ् मंत्रांते चामुकं हन । फट्कारेण च जुहुयात्क्षयोऽरेरचिराद्भवेत् ॥ जलमध्ये शतावृत्त्या सद्यो वृष्टिर्निगद्यते । नाभिमात्रे जले विप्रः प्रविश्य जुहुयाजलं ॥ कुर्यादेकार्णवां पृथ्वीं मंत्रमाहात्म्यतो भृशं । इत्यादि ज्ञेयं ॥ ॥
अथ प्रयोगः । कर्ता देशकालौ स्मृत्वा अमुककामनयाऽमुकरुद्रजपं होममभिषेकं वा स्वयं ब्राह्मणद्वारा वा करिष्ये इति संकल्प्य गणेश-

पूजापुण्याहवाचनमातृकापूजानांदीश्राद्धानि कृत्वाचार्यं ब्रह्माणमृत्विजश्च वृणुयात् । तत ऋत्विजो देशकालौ स्मृत्वाऽमुकरुद्रजपं करिष्य इत्युक्त्वा न्यासान्कुर्युः । तत्र बौधायनोक्ताः पंच न्यासाः सर्वेषां समानाः । कात्यायनपरिशिष्टे त्वन्ये न्यासा उक्ताः । ब्रह्मयज्ञारंभे यथाविधि स्नात्वा छंदःपुरुषं शरीरे न्यसेदित्युक्त्वा तिर्यग्बिलश्चमस ऊर्ध्वबुध्नस्तस्य चक्षुषी गोतमभरद्वाजौ श्रोत्रे विश्वामित्रजमदग्नी नासिके वसिष्ठकश्यपौ वागत्रिर्गायत्री छंदोऽग्निं देवतां शिरसि विन्यसेत् । उष्णिहं सवितारं ग्रीवास्वनूके बृहती बृहस्पतिं बाह्वोर्बृहद्रथंतरे द्यावापृथिवी मध्ये त्रिष्टुभमिंद्रं श्रोण्योर्जगतीमादित्यं मेढ्रेऽतिच्छंदसं प्रजापतिं पायौ यज्ञायज्ञियं वैश्वानरमूर्वोरनुष्टुभं विश्वान्देवानष्ठीवतोः पंक्तिं मरुतः पादयोर्द्विपदां विष्णुं प्राणेषु विच्छंदसं वायुं न्यूनातिरिक्तेष्वंगेषु न्यूनाक्षरं छंद आपो देवतेत्येवं सर्वांगेषु योजयित्वा देवमयः संपद्यते शापानुग्रहसमर्थो भवति ब्रह्मतेजः प्रवर्धते न कुतश्चिद्भयं विंदत ऋङ्मयो यजुर्मयः साममयस्तेजोमयोऽमृतमयः संभूय ब्रह्मैवाभ्येति तस्मादेतन्नाऽब्रह्मचारिणे नाऽतपस्विने नाऽसंवत्सरोषिताय नाऽप्रवक्त्रेऽनुब्रूयादित्यादि । तदेतद्ब्रह्मयज्ञे सर्वजपेषु चोक्तमनुक्रमण्यां । अस्य रुद्रजपमात्रांगत्वे किं मानमिति न विद्मः । तथा जातवेदसइति पुरश्चरणं । चतुःस्रक्तिरित्यासनं । मनोज्योतिरिति हृदये । अबोध्यग्निरिति शिरसि । मूर्धानंदिवइति शिखायां । मर्माणितइति कवचं । विश्वतश्चक्षुरिति नेत्रे । मानस्तोक इत्यस्त्रं । अथ न्यासाः । तत्र पंचांगन्यासेषु शिखाद्यस्त्रांतमेकत्रिंशदंगन्यासः प्रथमः । मूर्धादिपादांतं दशांगन्यासो द्वितीयः । पादादिमूर्धांतं पंचांगन्यासस्तृतीयः । गुह्यादिमस्तकांतं पंचांगन्यासश्चतुर्थः । हृदयाद्यस्त्रांतं पंचांगन्यासः पंचमः । षडंगन्यासपक्षे प्रजननादिषोडशांगन्यासः षष्ठः । हेमाद्रौ महार्णवे च बौधायनः । अथातः पंचांगरुद्राणां न्यासपूर्वकं जपहोमार्चनविधिं व्याख्यास्यामो यातेरुद्रशिवातनूरिति शिखायामस्मिन्महत्यर्णवइति शिरसि ।

सहस्राणीति ललाटे । हंसःशुचिषदिति भ्रुवोर्मध्ये । त्र्यंबकमिति नेत्रयोः । अत्र कातीयानामग्निर्ज्योतिरिरिति नेत्रं । नमःस्रुत्याय च पथ्याय-
चेति कर्णयोर्मानस्तोकइति नासिकायामवतत्येति मुखे । नीलग्रीवौ द्वौ कंठे । नमस्तेअस्त्वायुधायेति बाह्वोः । यातेहेतिरित्युपबाह्वोः । येतीर्था-
नीति हस्तयोः । सद्योजातमितिपंचानुवाकान् पंचस्वंगुलीषु । नमोवःकिरिकेभ्य इति हृदये। येवृक्षेष्वित्युदरे । नमःशंभवइति कक्षयोः । नमो-
गणेभ्य इति पृष्ठे । नमोहिरण्यबाहवइति पार्श्वयोः । विज्यंधनुरिति जठरे । हिरण्यगर्भ इति नाभौ । मीढुष्टमेति कट्यां । येभूतानामधिपतयइति
गुह्ये । सशिराजातवेदाइत्यपाने । मानोमहांतमित्यूर्वोः।एषतेइति जान्वोः। संसृष्टजिदिति जंघयोः । विश्वंभूतमिति गुल्फयोः । येपथामिति पादयोः।
अध्यवोचदिति कवचं । नमोबिल्मिने इत्युपकवचं । नमोअस्तुनीलग्रीवायेति तृतीयनेत्रं । प्रमुंचधन्वनइत्यस्त्रं । यएतावंतश्चेति दिग्बंधः । इति
प्रथमो न्यासः । ॐनमोभगवतेरुद्रायेति नमस्कारं न्यसेत् । ओंकारं मूर्ध्नि विन्यस्य नकारं नासिकाग्रतः । मोकारं तु ललाटे वै भकारं
मुखमध्यतः ॥ गकारं कंठदेशे तु वकारं हृदि विन्यसेत् । तेकारं दक्षिणे हस्ते रुकारं वामतो न्यसेत् ॥ द्राकारं नाभिदेशे तु यकारं पाद-
योर्न्यसेत् । इति द्वितीयः । अत्र कातीयास्तृतीयन्यासांतरमाहुः । यथा। शीर्षे तु विन्यसेद्रुद्रं ललाटे चंद्रशेखरं । नेत्रे त्रिलोचनं देवं भैरवं श्रोत्र-
योर्न्यसेत् ॥ घ्राणे तु शंकरं देवं मुखे पशुपतिं तथा । नीलकंठं कंठदेशे हृदये व्यापकं न्यसेत् ॥ करे गंगाधरं देवं शिवं नाभौ तु विन्य-
सेत् । महादेवं तथा गुह्ये जंघयोस्त्र्यंबकं न्यसेत् ॥ सर्वज्ञं विन्यसेत्पादे शिवं सर्वत्र विन्यसेदिति । तन्निर्मूलं । बौधायनः । सद्यं च पादयो-
र्न्यस्य वामं न्यस्योरुमध्यतः । अघोरं हृदि विन्यस्य मुखे तत्पुरुषं न्यसेत् ॥ ईशानं मूर्ध्नि विन्यस्य हंसो नाम सदाशिवः । हंसहंसेति यो
ब्रूयाद्धंसो नाम सदाशिवः । एवं न्यासविधिं कृत्वा ततः संपुटमारभेत् ॥ इति तृतीयः । त्रातारमिंद्रं त्वंनोअग्ने सुगंनःपंथा असुन्वंतं तत्त्वाया-

स्यानोनियुद्धिर्वयंसोम तमीशानमस्मेरुद्राः स्योनापृथिवीत्येतत्संपुटमिंद्रादीन्दिक्षु विन्यस्यैवमेवात्मनि रौद्रीकरणं कृत्वा त्वगास्थिगतैः पापैः प्रमुच्यते सर्वभूतेष्वपराजितो भवति। यक्षगंधर्वभूतप्रेतपिशाचब्रह्मराक्षसयमदूतशाकिनीडाकिनीसर्पश्वापदतस्कराद्युपद्रवाः सर्वे ज्वलंतं पश्यंतु। माऽस्रक्षंतु। मनोज्योतिरबोध्यग्निर्मूर्धानं मर्माणिते जातवेदाइति गुह्योदरत्हृदयमुखशिरःस्वभिमंत्र्यात्मरक्षा कर्तव्या। इति चतुर्थः। शिवसंकल्पं त्हृदयं पुरुषसूक्तं शिर उत्तरनारायणं शिखाऽप्रतिरथं कवचं शतरुद्रियमस्त्रं पंचांगं सकृज्जपेदष्टांगं प्रणम्य हिरण्यगर्भो यः-प्राणतो ब्रह्मजज्ञानं महीद्यौरुपश्वासयाऽग्नेनयेमंयमप्रस्तरमाहिसीद यातेअग्नेयज्ञियातनूस्तये॰ सक्षयएहीत्यंतं। यथावःस्वाहाग्नयेदाशेमेति-निपाहीत्यंता ऋचो जपेत्। अथात्मानं रुद्ररूपं ध्यायेत्। अत्र क्वचिदर्थ उच्यते। सर्वत्र तैत्तिरीयः पाठः। उपबाहुः प्रकोष्ठः। सद्योजातादीन्पंचस्वंगुलीष्वंगुष्ठतर्जन्यादिषु। नमोवःकिरिकेभ्य इत्यादौ देवानाऽस्त्हृदयेभ्य इत्यस्योत्तरेष्वनुषंगः। नमोहिरण्येत्यादौ नमोंऽतं यजुः। सशिराजातवेदाइत्यपान इति। अस्यार्थः। जातवेदसेसुनवामसोमेत्यस्या ऋचोऽग्रेतनं तामग्निवर्णातपसाऽग्नेत्वंपारय विश्वानिनोदुर्गहा पृतनाजितऽस्सहमानमुग्रमिति ऋक्चतुष्टयं शिर इत्युच्यते। तेन जातवेदसे इत्याद्याः पंचर्चः अपाने न्यसेदिति। द्वितीयन्यासे। ॐनम इत्यादिना नमस्कृत्य ॐमूर्ध्ने नमः। नं नासिकायैनमः। मों ललाटाय नम इत्यादि न्यसेत्। तृतीये। सद्योजातं प्रपद्यामीत्यादिपंचमंत्रान् पंचस्थानेषु न्यसेत्। तत्र ईशानःसर्वविद्यानामित्यंते सदाशिवों हंस इति मूर्ध्नि न्यसेत्। अत्र कातीया हेमाद्युक्तैः सद्योजातादिपंचभिः पंचवक्त्रन्यासे प्रालेयामलबिंदुकुंदधवलमित्यादिपंचश्लोकैस्तद्ध्यानं ऋद्ध्याद्यष्टत्रिंशत्कलान्यासं चाहुस्तत्प्रतिष्ठाया-मुक्तं। अत्र तु यजमानप्रतारणामात्रं निर्मूलं चेत्युपेक्ष्यं। चतुर्थे। त्रातारमित्यादिदशमंत्रैरिंद्रायनम इत्याद्यैश्च पूर्वादिदिक्षिंद्रादिभ्योंऽजलिं कुर्यात्।

संपुटोऽजलिः । एतैः संपुटं कृत्वा पुनरेतैरावृत्त्या नमस्कुर्यादिति महार्णवः । मनोज्योतिरिति गुह्ये । अग्नेर्ध्यग्निरित्युदरे । मूर्धानंदिवइति हृदये । मर्माणिते॰ मदंतुदेवाइति मुखे । जातवेदायदिवापावकोसि॰ ददद्भ्यावतृत्स्वेति शिरसि । इयमेवात्मरक्षेत्युच्यते । पंचमन्यासे तु । यज्जाग्रत इति षड्चः पठित्वा हृदयाय॰इति हृदये । सहस्रशीर्षेत्यष्टादशर्चं सूक्तं पठित्वा शिरसेस्वाहेति शिरसि । तत्र तथालोका२ँअकल्पयन्नित्यंते वेदाहमेतंपुरुषंमहांतं॰ धातापुरस्ताद्यमुदाजहारेति ऋग्द्वयमुपांत्यमधिकं । ततोऽद्भ्यःसंभूतःपृथिव्यैरसाच्चेत्यादि सर्वमनिषाणेत्यंतमुत्तरनारायणं पठित्वा शिखायैवषट् इति शिखायां । आशुःशिशानइति पंचदशर्चं विश्वाहाशर्मयच्छत्वित्यंतं सूक्तमुक्त्वा कवचायहुं इति कवचं । कातीयास्तु विभ्राडितिसप्तदशभिर्नेत्रमत्राहुः । ततः त्वमग्नेरुद्रइत्यनुवाकेन शतरुद्रियेण भूर्भुवःसुवःस्वाहेत्यंतेनास्त्रायफट् इत्यस्त्रमिति महार्णवः । तन्न । चयने शतरुद्रियंजुहोतीत्यादौ शतरुद्रियशब्देन रुद्रस्यैवोक्तेः । यत्तु सावित्रचयने श्रुतौ त्वमग्नेरुद्रइति शतरुद्रियस्य रूपमित्युक्तं तद्रूपमित्युक्तेर्गौणं । नचात्र गौणग्रहणे मानमस्ति । तेन रुद्राध्यायेनैवास्त्रं युक्तं । महार्णवस्तु भ्रांत एव । अत्र न्यासांगमंत्राणामृषिदैवतच्छंदांसि पाठभेदश्च महार्णवे ज्ञेयः । विस्तरान्नोच्यते । कातीयास्तु । नमस्तेरुद्रेतिषोडशर्चः शतरुद्रियमाहुः । ततो हिरण्यगर्भ इत्याद्यैरष्टांगं प्रणम्य ध्यानं । यथा । शुद्धस्फटिकसंकाशं त्रिनेत्रं पंचवक्त्रकं । गंगाधरं दशभुजं सर्वाभरणभूषितं ॥ नीलग्रीवं शशांकांकं नागयज्ञोपवीतिनं । व्याघ्रचर्मोत्तरीयं च वरेण्यमभयप्रदं ॥ कमंडल्वक्षसूत्राभ्यामन्वितं शूलपाणिनं । ज्वलंतं पिंगलजटाशिखमुद्योतकारिणं ॥ अमृतेनाप्लुतं हृष्टमुमादेहार्धधारिणं । दिव्यसिंहासनासीनं दिव्यभोगसमन्वितं ॥ दिग्देवतासमायुक्तं सुरासुरनमस्कृतं । नित्यं च शाश्वतं शुद्धं ध्रुवमक्षरमव्ययं ॥ सर्वव्यापिनमीशानं रुद्रं वै विश्वरूपिणं । एवं ध्यात्वा द्विजः सम्यक् ततो यजनमारभेत् ॥ इति पंचांगन्यासाः । शातात-

पमते षडंगन्यासाः । तत्र पंचोक्ताः । षष्ठस्तु । प्रजननेब्रह्मातिष्ठतु । तिष्ठतु तिष्ठतां तिष्ठंत्विति यथार्हं सर्वत्र पठेत् । पादयोर्विष्णुः । हस्तयोर्हरः । बाह्वोरिंद्रः । जठरेऽग्निः । हृदये शिवः । कंठे वसवः । वक्त्रे सरस्वती । नासिकयोर्वायुः । नयनयोः सूर्याचंद्रमसौ । कर्णयोरश्विनौ देवौ । ललाटे रुद्रः । मूर्ध्न्यादित्याः । शिरसि शिवः । पृष्ठे पिनाकी । पुरतः शूली । पार्श्वयोः शिवशंकरौ । सर्वत्र वायुः । बहिः सर्वतोऽग्निर्ज्वालामालापरिवृतस्तिष्ठतु । सर्वेष्वंगेषु सर्वा देवता यथास्थानं तिष्ठंतु । माऽरक्षंतु । ततः अग्निर्मेवाचिश्रितइत्याद्यैर्यथालिंगमंगानि संमृशेत् । यथा । अग्निर्मेवाचिश्रितः । वाग्घृदये । हृदयंमयि । अहममृते । अमृतंब्रह्मणि । इति जिह्वां । वायुर्मेप्राणेश्रितः । प्राणोहृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । इति प्राणस्थानं हृदयं । यद्वा नासिके । सूर्योमेचक्षुषिश्रितः । चक्षुर्हृदये इत्यादि । इति चक्षुषी । चंद्रमामेमनसिश्रितः । मनोहृदयेइति वक्षः । दिशोमेश्रोत्रेश्रिताः । श्रोत्रंहृदयेइति श्रोत्रे । आपोमेरेतसिश्रिताः । रेतोहृदयेइति गुह्यं । पृथिवीमेशरीरेश्रिता । शरीरंहृदयेइति शरीरं ।ओषधिवनस्पतयोमेलोमसुश्रिताः।लोमानि०। इति लोमानि । इंद्रोमेबलेश्रितः। बल०। इति बाहू । पर्जन्योमेमूर्ध्निश्रितः।मूर्धा०। इति मूर्धानं । ईशानोमेमन्यौश्रितः।मन्यु०। इति हृदयं । आत्मामआत्मनिश्रितः । आत्माहृदये । तदेव । पुनर्मआत्मापुनरायुरागात् । पुनःप्राणःपुनराकूतमागात्।वैश्वानरोरश्मिभिर्वावृधानः । अंतस्तिष्ठत्वमृतस्यगोपाः । इति सर्वांगं । इति षडंगः । हेमाद्रौ कौशिकस्तु । संकल्प्यजपहोमावित्युक्त्वा न्यासद्वयमाह । तद्यथा । न्यासं भवादिभिः कुर्यान्नमोंतैः प्रणवान्वितैः।भवं च पादयोर्न्यस्य शर्वं न्यस्योरुमध्यतः ॥ ईशानं गुह्यदेशे तु नाभौ पशुपतिं न्यसेत् । रुद्रं च हृदये न्यस्य मुखे चोग्रं तु विन्यसेत् ॥ भीमं ललाटपट्टे च महांतं शीर्षिण विन्यसेत् । तथैवांत्यानुवाकस्य मंत्रैर्द्वादशभिः शुचिः ॥ न्यासं कृत्वाऽनुलोम्येन वर्जयित्वाऽभिचारकं । आद्यं तु पादयोर्न्यस्य द्वितीयं

जानुदेशतः ॥ ऊर्वोस्तृतीयं विन्यस्य चतुर्थं गुह्यदेशतः । पंचमं नाभिदेशे तु षष्ठं च हृदये न्यसेत् ॥ सप्तमं कंठदेशे तु मुखे चाष्टममुत्तमं ।
नवमं नासिकायां तु दशमं नेत्रयोर्द्वयोः ॥ एकादशं ललाटे तु द्वादशं शीर्ष्णि विन्यसेत् । त्रयोदशं तु कवचं कृत्वाऽस्त्रेण तु फट् तत इति ।
अथ सामान्यतो रुद्रस्य ऋष्यादि । तत्र सर्वेषामग्निर्भगवान्वा ऋषिः । रुद्रः शंभुर्वा देवता । महाविराट्छंदः । चमकानुवाकानामग्निः कांड ऋषिः ।
वाजादयोऽन्नादिविशेषा देवताः । आद्या गायत्र्याग्नावैष्णवी । शिष्टं यजुः । जपे वि० । । अथ विशेषतः । यथा । आद्यायाः कश्यपस्तत
आत्रेयस्ततः कश्यपस्ततो द्वयोर्गौतमो धूम्रस्ततः कण्वस्ततो द्वयोः कश्यपो मरुत्वांस्ततो भगवांस्ततस्तिसृणां भगवान् द्वितीयानुवाके
मंडूकस्तृतीये भगवांश्चतुर्थे दुर्वासाः पंचमषष्ठयोर्भगवान्सप्तमानुवाके हेमकेशोऽष्टमे नवमे च नमोवःकिरिकांतं भगवानवशिष्टस्याग्नि-
र्दशमानुवाके द्रापेइति द्वयोः पुलह इमारुद्रायेति द्वयोर्मांडव्यस्ततो देवराण् मानस्तोके इति भगवानाराात्तइत्यत्रिः स्तुहिश्रुतमिति वै-
याघ्रः परिणोरुद्रस्येति भगवांस्ततो वैराजस्ततः पुलहस्ततो नारदस्ततश्चतुर्णां दुर्वासास्तत आसमाप्तेर्देवल इत्यृषयः । । अथ देवताः ।
असौयस्ताम्रइति द्वयोरादित्यात्मा यातेरुद्रेति स्कंदात्मा मानोमहांतमिति नंदीश्वरात्मा यातइषुरध्यवोचं नमोअस्तुनीलग्रीवायेत्यासां
चतुर्थपंचमषष्ठानुवाकानामारात्ते मीढुष्टमेतिद्वयोश्च शंभुर्यातेहेतिस्तिस्रोऽष्टमानुवाके नवमे च नमोवःकिरिकांतं मानस्तोके परिणइत्येतेषां च
भगवानवशिष्टानां रुद्र इति देवताः । । अथ छंदांस्यसौयस्ताम्रोऽवसर्पत्येत्यनयोरास्तारपंक्तिरसौयोवसर्पतीति षट्पदा जगती इमारुद्रा-
येति चतस्रो जगत्य आरात्त इति तिस्रस्त्रिष्टुभो मीढुष्टमेति पंचपदा त्रिष्टुप् शिष्टा अनुष्टुभः । यातेरुद्रेति स्वराडनुष्टुप् । यामिषुं निचृदनुष्टुप् ।
अध्यवोचदित्यनुष्टुप् । द्वितीयानुवाके महागायत्री तृतीये बृहती चतुर्थे उष्णिक् पंचमषष्ठयोर्महाविराट् सप्तमे महापंक्तिरष्टमनवमयो-

महात्रिष्टुप् शिष्टानि यजूंषीति छंदांसि । जपे वि० ॥ ॥ अथाभिषेकः । तत्र पंचांगरुद्राणांजपहोमार्चनविधिमिति बौधायनोक्तेः प्रागुक्ताः पंचन्यासा भवंत्येव । अथातोरुद्रस्नानार्चनविधिंव्याख्यास्यामइति तेनैवोक्त्वा प्रजननेब्रह्मातिष्ठत्वित्यादिषष्ठन्यासोक्तेः षष्ठोऽपि भवति । ततश्च समुच्चयः । तेनाग्निर्मेवाचीत्याद्यैर्यथालिंगमंगानि संस्पृश्येत्यंतं प्रागुक्तन्यासषट्कं कृत्वा आराधितोमनुष्यैस्त्वं सिद्धैर्देवासुरादिभिः । आराधयामि भक्त्या त्वां मां गृहाण महेश्वरेति मनसाऽऽवाह्य गंधाद्यैः पंचोपचारैः संपूज्य त्र्यंबकंयजामहइत्यथैनमाराधयेत् । आवाहनाभिन्नान् पंच षड्वा त्र्यंबकमित्यनेन कुर्यादित्यर्थः । आत्वावहंतुहरयःसचेतसःश्वेतैरश्वैःसहकेतुमद्भिर्वाताजवैर्बलवद्भिर्मनोजवैरायाहिशीघ्रंममहव्यायशर्वोमिति दक्षिणनासया पुष्पेण पीठस्थे लिंगे संयोज्यावाह्य सद्योजातंप्रपद्यामीत्यावाहनं ददाति । त्र्यंबकं सद्योजातायवैनमोनमइत्यासनं । त्र्यंबकं भवेभवेनातिभवेभवस्वमामिति पाद्यं । त्र्यंबकं भवोद्भवायनम इत्यापोहिष्ठेत्याद्यब्लिंगाभिश्च स्नानं । अथाद्भिस्तर्पयति । भवं देवं तर्पयामि । शर्वं देवं तर्प० । ईशानं देवं० । पशुपतिं देवं० । रुद्रं देवं० । उग्रं देवं० । भीमं देवं० । महांतं देवं० । त्र्यंबकं ज्येष्ठायनम इत्याचमनीयं । त्र्यंबकं श्रेष्ठायनम इति मधुपर्कं । त्र्यंबकं कालायनमइति गंधं । कलविकरणायनमइति पुष्पं । सर्वभूतदमनायनम इति धूपं । मनोन्मनायनम इति दीपं । भवोद्भवायनमइति नैवेद्यं । । अथाष्टौ पुष्पाणि । भवाय देवाय नमः । शर्वाय० ईशानाय० पशुपतये० रुद्राय० उग्राय० भीमाय० महते देवाय नम इति । अथाऽघोरेभ्यइतितिभिः सदाशिवोमित्यंतैरघोरतनूरुपतिष्ठते । अथैतस्य हिरण्मयेन मूर्ध्नि कलशेन संततधारां निषिंचेन्मधुना सर्पिषा पयसा वेक्षुरसेन नारिकेलेन वाऽऽम्ररसेन वा तदलाभ उदकेन वा नमस्तेरुद्रमन्यव इत्येकादशानामनुवाकानामेकमेकं जपेत्सर्वेषां पारे पुनराराधयेदुत्तमाराधने तदेतद्विधानमुक्तं । यत्र रुद्राभिषेक उक्तस्तत्रैत-

द्विधानं ज्ञेयमित्यर्थः । तेनाभिषिक्तेनोदकेनाक्षीभ्यामित्यनुवाकेनाब्लिंगाभिश्चापादात्संमृज्यात्पापक्षयार्थी व्याधिमोचनार्थी जीवनार्थी श्रीकामः शांतिकामः पुष्टिकामो मोक्षार्थी च कुर्यादेवं कुर्वन्सिद्धिमाप्नोत्याचार्याय दक्षिणां ददाति दश गाः सवत्साः स्वर्णभूषिता वृषभैकादशास्तद- लाभ एकां गां दद्यादित्याह भगवान् बौधायनः ॥ ॥ अथ महास्नानं । हेमाद्रौ लैंगे । स्नानं पलशतं ज्ञेयमभ्यंगः पंचविंशतिः । पला- नां द्वे सहस्रे तु महास्नानं प्रकीर्तितं ॥ स्नाप्य लिंगं मदीयं च गव्येनैव घृतेन च । विशोध्य सर्वद्रव्यैस्तु वराद्भिरभिषिंचाति ॥ ( वराद्भिः तीर्थादिपुण्योदकैरित्यर्थः ) महास्नाने प्रसक्ते तु स्नानमष्टगुणं स्मृतं । जलेन केवलेनैव गंधतोयेन शक्तितः ॥ अनुलेपनं तत्सर्वं पंचविंशत्पलेन वै । शमीपत्रं च विधिना बिल्वपत्रं च पंकजं ॥ दशद्रोणैस्तु नैवेद्यमष्टद्रोणैरथापि वा । दशद्रोणसमं पुण्यमाढके तु विधीयते ॥ वित्तहीनस्य भक्तस्य नात्र कार्या विचारणा । जागरं कारयेत्तत्र प्रार्थयेत्तु यथाक्रमं ॥ भृत्यैः प्रदक्षिणं सार्धं प्रार्थेल्लिंगं महेश्वरं । मंत्रस्तु । द्रव्यहीनैर्मंत्रहीनैः श्रद्धाहीनैः सुरेश्वर । कृतं चाप्यकृतं चापि क्षंतुमर्हसि शंकर ॥ विशेषो मत्कृते व्रतकमलाकरे ज्ञेयः । इति महास्नानं ॥ ॥ अथ रुद्रहोमः । स द्विधा । समग्रहोमः प्रधानभूतो जपांगभूतश्चेति । तत्राद्ये मूलं जपहोमार्चनविधिंव्याख्या- स्यामः । रुद्रहोमःपराशांतिःपायसेनघृतेनवेत्यादि बौधायनविष्णुधर्मादिवचनं प्रागुक्तं । अंगभूतस्तु दशांशहोमः शतांशश्च । स च तिलाद्यैः कार्य इति महार्णवः । अत्र यद्यपि तेन मूलं नोक्तं तथाप्यन्यमंत्रजपसामान्येन तेनोक्तं । तन्निर्मूलं । भवन्नपि आज्यद्रव्यमनादेशेजुहोति- षुविधीयतइति सामान्यवचनादाज्येन स्यात् । नतु तिलद्रव्यके मानमस्ति । अतएव हेमाद्रिणा रुद्रजपांगहोमो वाचनिक एवोक्तो नतु दशांशादिः । यथाह तत्रैव बौधायनः । ततो होमं प्रकुर्वीत नमःशंभवमंत्रतः । रुद्रैकादशिनीजप्ये त्रयस्त्रिंशदथाहुतीः ॥ रुद्रे शतत्रयं प्रोक्तं

षण्णुग्या न्यधिकया युतं । रुद्रे लघुरुद्रे । चत्वारश्च महारुद्रे सहस्राः सप्तवर्जिताः ॥ चत्वारिंशत्सहस्राश्च कर्तव्याश्चतुरुत्तराः । ऊनाश्च सप्त-
सप्तत्या ह्यतिरुद्रे विनिश्चयः ॥ स च होमो नमःशंभवइतिमंत्रेण कार्य इति हेमाद्रिः । स च पूर्वोक्तविष्णुधर्मोक्तेः पायसेन घृतेन वा कार्य
इत्युक्तं प्रतिभाति । तेन हेमाद्रिमते मंत्रविभाग एव नास्ति । अयं च जपांगहोम एव । जप्यइति सप्तम्या मंद्रंप्रायणीयायामितिवदंगित्वा-
वगतेः । प्रधानभूते समग्रहोमे त्वस्याऽसंभवान्महार्णवोक्तः श्रुतिकल्पसूत्रादिषु चयनप्रकरणोक्त एव मंत्रविभागो ग्राह्यः । महार्णवेन तु
प्रधाने समग्रहोममंत्रविभागस्यावश्यकत्वाज्जपांगेऽप्ययमेव ग्राह्यः । क्लृप्तत्वादपेक्षितत्वाच्चेत्युक्तं । शिष्टैश्चायमेवादृतः । स इदानीमुच्यते । तत्र
मंत्रविभागः पंचधा । त्रेधा षोढा षोडशधा अष्टाचत्वारिंशत्पक्ष एकोनसप्तत्युत्तरशतपक्षश्चेति । अंत्यः प्रतिमंत्रपक्ष इत्युच्यते । तत्राद्य-
श्चरमायामिष्टकायांजुहोतीत्युक्त्वा त्रेधाविभक्तंजुहोतित्रयइमेलोका इति श्रुत्योक्तः । बौधायनोऽपि । नमस्तेरुद्रमन्यव इत्येताननुवाकांस्त्रे-
धाविभज्येति । अत्र द्वौ पक्षौ । आद्यानुवाकचतुष्कमेको भागः । अपरं चतुष्कं द्वितीयो भागः । अंत्यानुवाकत्रयं तृतीयो भाग इत्येकः
पक्षः । यद्वा नमस्तेरुद्रेत्यारभ्य सभापतिभ्यश्चवोनमइत्यंत एको भागः । नमोअश्वेभ्यइत्यादिनमःपार्यायचावार्यायचेत्यंतो द्वितीयः । नमः-
प्रतरणायेत्यादिरासमाप्तेस्तृतीयः । षोढाभागस्तु । तिस्रउत्तराआहुतीर्जुहोतिषट्संपद्यंतेषड्वाऋतव इति श्रुत्योक्तः । शतपथेऽपि । सचाशी-
त्यांचाशीत्यांचस्वाहाकरोतीत्यादिना षोढा विभाग उक्तः । षोडशधा विभागो बौधायनोक्तः । यथापि वा प्रथमादुपक्रम्य नमस्तक्षभ्य
इति जानुदघ्ने जुहोति । रथकारेभ्यश्चवइत्युपक्रम्य नमःस्वायुधायेति नाभिदघ्ने शेषेण प्रागवतानेभ्य आस्यदघ्ने हुत्वा सहस्राणिसहस्र-
शइति दशावतानान्हुत्वाऽन्वारोहाञ्जुहोति । नमोरुद्रेभ्योयेपृथिव्यामिति जानुदघ्ने धारयमाणो नमोरुद्रेभ्योयेंऽतरिक्ष इति नाभिदघ्ने

नमोरुद्रेभ्योयेदिवीत्यास्यदम्ने हुत्वेति । एते त्रयः पक्षा न प्रचरंति। अथाऽष्टाचत्वारिंशत्पक्षः । तत्राद्येऽनुवाके पंचदशमंत्राः। ततोऽष्टाव-
नुवाकाअष्टौयजूंषीति काशकृत्स्नोक्तेर्नवमांतं त्रयोविंशतिः। दशमे द्वादशेति पंचत्रिंशत्। एकादशे दशऋचस्त्रीणि यजूंषीति त्रयोदशेत्यष्टा-
चत्वारिंशत्। तदयं संग्रहः। आद्ये पंचदश प्रोक्ता दशमे द्वादश स्मृताः। एकादशेऽग्निभूम्यः स्युरष्टौ शिष्टा यजूंषि च॥ प्रतिमंत्रपक्षे त्वे-
कोनसप्तत्युत्तरशतं मंत्राः। तत्राद्येऽनुवाके पंचदशमंत्राः। द्वितीये त्रयोदश। तृतीयचतुर्थयोः प्रत्येकं सप्तदश। एते द्वितीयादिचतुर्थ्यंतमुभ-
यतोनमस्कारा मंत्राः। पंचमषष्ठयोः प्रत्येकं पंचदशमंत्राः। सप्तमे षोडश। अष्टमे सप्तदश। नवमे एकोनविंशतिः। एषु पंचमादिनवमांतेषु
पुरस्तान्नमस्कारा मंत्राः। तत्र देवानांहृदयेभ्य इत्यस्योत्तरमंत्रचतुष्टयेऽनुषंगः। अयं च होमादावेव विभज्य प्रयोगः। जपाभिषेकादौ
तु विभागाभावाद्यथाध्ययनं पाठः। एवमन्यत्राप्यनुषंगे ज्ञेयं। दशमे द्वादशमंत्राः। एकादशे त्रयोदशेति। यत्तु शाकपूणिर्द्वितीयादिनव-
मांतानुवाकेषु नमस्कारादिनमस्कारांतमेकंयजुरित्याह तत्रोभयतोनमस्कारेषु स्पष्टो विभागः। यत्र त्वेको नमःशब्दो यथा नमोभवायच
रुद्रायचनमःशर्वायेत्यादौ तत्र द्वितीयो नमःशब्दः पूर्वस्यांतत्वेन द्वितीयस्यादित्वेन च काकाक्षिवदुभयत्र संबध्यते। यद्वा द्वितीयतृतीय-
चतुर्थानुवाकपरं। यच्च यास्को नमस्काराद्येकंयजुरिति। तत्पंचमादिनवमांतपरमिति महार्णवः। तदयं संग्रहः। बाणेंदवो १५ वह्नि-
भुवोऽ १३ श्वभूम्यो १७ नगेंदवः १७ पंचदशे १५ षुभूमयः १५। नृपाऽ १६ श्वभूम्यं १७ कभुवोऽ १९ थ भास्करा १२ विश्वे १३
समस्ता ग्रहभूमिपाः स्युः १६९॥ एते विभागा नमकेष्वेव। चमकेषु त्वाह बौधायनः। अग्नाविष्णूसजोषसइतिचतुर्गृहीतंहुत्वेत्युक्त्वा वाज-
श्चमेप्रसवश्चमइति संततांवसोर्धारांजुहोत्यामंत्रसमापनादिति। मंत्रः सर्वे चमका आद्योऽनुवाको वा। तेनाद्ययर्चा हुत्वा सर्वैश्चमकैरेका-

हुतिः । प्रत्यनुवाकांतमेकादशाहुतयो वा । तेन द्वे आहुती द्वादश वा । इदं वसोर्धारोक्तमप्यपेक्षितत्वाद्धोमेऽपि ज्ञेयं । यद्वा एकादशानामनुवाकानामेकमेकंजपेदितिबौधायनोक्तेर्यथा जपे एकैकस्य चमकस्यावृत्तिस्तथा होमेऽपि । तेनाद्यचमकेन सर्वेण हुत्वाऽन्यैः प्रत्येकमित्येकादशाहुतय इति पक्षत्रयं महार्णवे उक्तं । अथ त्रेधाविभागादिना शतांशेन च होमस्य प्रचाराभावाद्दशांशहोमे समग्रहोमे चाष्टाचत्वारिंशत्पक्षे प्रतिमंत्रपक्षे चाऽऽहुतिसंख्योच्यते । तत्रैकरूपे दशांशहोमो नाशंक्य एव । विभागाभावात् । एकादशिन्यां त्वेकेन रूपेण होमः । शिष्टैकरूपे विभागाऽयोगात्तद्दशांशहोमः । एवं महारुद्रादावपीति महार्णवः । अस्मद्गुरवस्त्वष्टाचत्वारिंशत्पक्षे पंचाहुतयः प्रतिमंत्रपक्षे च सप्तदशाहुतय आद्यैर्मंत्रैः कार्याः । अंताल्लोपोविवृद्धिर्वेत्यास्तंबोक्तेरित्याहुः । तत्तु यत्र त्रिकपालो नवकपाल इति संख्या श्रुता तत्रैव । अत्र तदभावान्न तद्युक्तं । अतएव समविभागाऽयोगान्मूलाभावाच्च हेमाद्र्युक्तो वाचनिक एव नमःशंभवेचेतिमूलमंत्रेण होमो नतु दशांशेनेति वयं । महार्णवमंगीकृत्य तूच्यते । अत्र मामकाः श्लोकाः । रुद्र्यां दशांशेऽष्टाचत्वारिंशत्पक्षेंऽकवेदकाः ४९ । समग्रहोमे तत्रैव खवेदशरसंख्यकाः ५४० ॥ प्रतिमंत्रे दशांशे तु खाऽद्रिचंद्राहुतीर्हुनेत् १७० । प्रतिमंत्रे सर्वहोमे शराद्रिवसुचंद्रकाः १८७५ ॥ इति रुद्रैकादशिन्यां संख्या । लघुरुद्रे दशांशे तु खांऽकबाणाहुतीर्हुनेत् ५९० । समग्रहोमे तत्रैव खाग्न्यंकखशराः स्मृताः ५०९३० ॥ प्रतिमंत्रे दशांशे तु लघुरुद्रे प्रकीर्तिताः । चंद्रवेदखखा युग्मं २००४१ सर्वहोमे वदाम्यहं ॥ चंद्राद्रिशरखा युग्मं २०५७१ लघुरुद्रे त्विदं स्मृतं । इति लघुरुद्रे । महारुद्रेऽष्टचत्वारिंशत्पक्षे त्वाहुतीर्हुनेत् । षट्सहस्री शरशती चत्वारिंशद्दशांशके ६०५४० ॥ तत्रैव सर्वहोमे तु खवेदाग्निशरर्तवः ६५३४० । प्रतिमंत्रे महारुद्रे दशांशे त्वाहुतीर्हुनेत् ॥ द्वाविंशतिसहस्राणि षट्शतानि दशैव च २२६१० । प्रतिमंत्रे महारुद्रे सर्वहोमे वदाम्यहं ॥

लक्षद्वयं सहस्राणि विंशतिश्च षडुत्तरा । द्वे शते सप्ततिश्चैकाऽधिका संख्येयमीरिता २२६२७१ ॥ इति महारुद्रहोमसंख्या । अथाति-
रुद्रेऽष्टाचत्वारिंशत्पक्षे दशांशके । एकसप्ततिसाहस्रमशीत्यंताऽष्टशत्यपि ७१८८०॥ प्रतिमंत्रे दशांशे तु सार्धलक्षद्वयं स्मृतं । सहस्रोनं सर्वहोमे
त्वतिरुद्रे वदाम्यहं ॥ अष्टचत्वारिंशभागे सप्तलक्षाणि चैव हि । सहस्राणि तथा सप्तदश सार्धचतुःशती ७१७४५० ॥ प्रतिमंत्रे सर्वहोमे पंचविं-
शतिलक्षकाः । एकादशसहस्रोनास्त्वतिरुद्रे समीरिताः ॥ क्वचिदल्पांतरं त्वत्र न गण्यं सूरिभिर्मम । इदं तैत्तिरीयशाखयोक्तं। वाजसनेयिकाण्वादिशा-
खया तु प्रतिमंत्रपक्षे षष्ट्युत्तरशतविभागान्न्यूनसंख्या। नमः शंभवायेति वा होमो ज्ञेयः ।इयं च वसोर्धारासहिताहुतिसंख्या । घृतकुंभवसोर्धारां
पातयेदनलोपरि । औदुंबरीमथार्द्रां च ऋज्वीं कोटरवर्जितां ॥ बाहुमात्रां स्रुचं कृत्वा ततः स्तंभद्वयोपरि । घृतधारां तया चाज्यमग्नेरुपरि पात-
येत् ॥ श्रा। ययेत्सूक्तमाग्नेयं वैष्णवं रौद्रमैंदवं । महावैश्वानरं साम ज्येष्ठसाम च पाठयेदिति मात्स्योक्तेः । आग्नेयसूक्तादि प्रागुक्तबौधायनोक्तेः
सर्वचमकांते ज्ञेयं । इयं वसोर्धारा यद्यपि मात्स्ये लक्षहोमे एवोक्ता तथापि चयने दृष्टत्वात्फलहेतुत्वाच्च रुद्रे कार्येति महार्णवः । सा च
पूर्णाहुत्यनंतरं कार्या । शौनकोऽपि । अयाश्चेत्यादिभिर्हुत्वा समुद्रादूर्मिसूक्ततः। संततामाज्यधारां तां पूर्णाहुतिमथाचरेत् ॥ अत्र पूर्णाहुतेरुपर्या-
ज्यधारा तूष्णीं देयेति केचित् ।वसोर्धारापरमिदमिति तु युक्तं ।अतएव हेमाद्रौ मदनरत्ने च शांतिकांडे देवीपुराणे वसोर्धारोत्पत्तिमुक्त्वा
सर्वत्र सोक्ता । अत्र होमसंख्यावशात्कुंडं कार्यं । तदुक्तं भविष्ये । रत्निमात्रं शतार्धे तु शते चारत्निमात्रकं । सहस्रे त्वथ होतव्ये कुर्या-
त्कुंडं करात्मकं ॥ द्विहस्तमयुते तद्वल्लक्षहोमे चतुष्करं । दशलक्षमिते होमे षट्करं संप्रचक्षते॥ यत्तु मात्स्ये । द्विहस्तविस्तृतं तद्वच्चतुर्ह-
स्तायतं पुनः । लक्षहोमे भवेत्कुंडं योनिवक्त्रं त्रिमेखलमिति। तत्तु शीघ्रदाहिवृतादौ द्विहस्तं लक्षहोमे ज्ञेयं । यवचर्वादौ चतुर्हस्तं । सिद्धांत-

शेखरे। लक्षार्धे त्रिकरं कुंडं लक्षहोमे चतुष्करं । कुंडं पंचकरं प्रोक्तं दशलक्षाहुतौ क्रमात् ॥ षड्ढस्तं लक्षविंशत्यां कोट्यर्धे सप्तहस्तकमिति। अत्र न्यूनसंख्योदिते कुंडेऽधिको होमो विधीयत इति कुंडरत्नाकरोक्तेरांतरालिको होमो न्यूनसंख्योक्ते कुंडे कार्यः। तच्च कुंडमैशान्यां। मंडपमध्ये च वेदी। तत्रैका वेदिका कार्या यज्ञमंडपमध्यतः। मध्यस्तंभांतरं यावत्तावन्माना करोच्छ्रयेति परशुरामोक्तेरिति केचित्। प्रागुत्तरं समासाद्य प्रदेशं मंडपस्य तु । शोभनं कारयेत्कुंडं यथावल्लक्षणान्वितमित्ययुतहोमे मात्स्योक्तेर्हेमाद्र्यादिलिखनाच्चैवमाभाति । अस्मद्गुरवस्तु परशुरामोक्तेर्निर्मूलत्वान्मध्ये तु मंडपस्यापि कुंडं कुर्याद्विचक्षणइति वृद्धवसिष्ठोक्तिर्मात्स्ये च प्राक्पूर्वमंडपस्योत्तरमुत्कृष्टं मध्यमं प्रदेशं प्राप्येत्यर्थान्मध्ये कुंडं । अन्यथा गर्तस्योत्तरपूर्वेण वितस्त्युच्छ्रायसंमिता। पूर्वोत्तरे हस्तमिताऽथवेदी ग्रहादिदेवेश्वरपूजनायेति मात्स्ये बाधापत्तेश्च लक्षहोमवन्मध्ये कुंडं तद्विकृतित्वादित्याहुः। मध्ये वेदिश्च दीक्षातुलादावेव। नात्र। उपयोगाभावात् । रुद्रेवेदिश्चैशाने ग्रहवेदेर्भिन्नाचारप्राप्ता तांत्रिकी वाऽस्तु। रुद्रस्य काम्यत्वेऽपि ग्रहमखविकृतित्वे न क्षतिः। यत्तु परशुरामः । मंडपोऽष्टगुणः कुंडात्कुंडं होमानुसारत इति। स चतुर्हस्ते कुंडे द्वात्रिंशद्धस्तस्य मंडपस्य क्वाप्यनुक्तेर्निर्मूलो मूर्खश्चेत्युपेक्ष्यः। अत्र केचिद्वेद्यां रुद्रपीठमाहुः। यथोक्तं स्कांदे। प्रणम्य जगतामीशमुमादेहार्धधारिणं। यंत्रोद्धारमहं वक्ष्ये रुद्रकल्पानुसारतः ॥ मध्ये वृत्तं समालिख्य तन्मध्ये च दशाक्षरं। बहिरष्टदलं पद्मं ततः षोडशपत्रकं ॥ चतुर्विंशतिपत्राब्जं द्वात्रिंशत्पत्रकं तथा । चत्वारिंशत्पत्रकं तु वृत्तं सूर्यसमप्रभं॥ पंचपद्मात्मकं वृत्तं चतुरस्रं च भूगृहं। सत्वं रजस्तमश्चेति त्रिगुणैः परितो वृतं॥ चतुर्द्वारं द्वारदेशे बहिर्नागसमन्वितं। रुद्रपीठमिति ख्यातं देवतास्तत्र विन्यसेत्॥ चत्वारिंशच्छतं चैकं देवतानामुदाहृतं । कर्णिकामध्यदेशे तु रुद्रं पंचास्यमालिखेत् ॥ नमोभगवतेरुद्रायेति तारादिकं न्यसेत्। सोऽयं दशाक्षरो मंत्रः सर्व-

कामार्थसिद्धिदः ॥ प्रणवादिनमोंतानि पंचास्यानि ततः परं । सद्योजातं वामदेवमघोरं तदनंतरं ॥ ततस्तत्पुरुषं प्रोक्तमीशानं पंचमं क्रमात् ।
दलेष्वष्टसु नंद्यादीन्पूर्वादिक्रमतो न्यसेत् ॥ पूज्यपूजकयोर्मध्ये प्राची स्याद्यंत्रलेखने । आदौ नंदी महाकालो गणेशवृषभौ क्रमात् ॥ अ-
नंतरं भृंगिरिटिः स्कंदोमाचंडसंज्ञकाः । प्रधानमिदमाख्यातं प्रथमावरणे ततः ॥ षोडशारे ततः पद्मे द्वितीयावरणे यजेत् । अनंतं च तथा
सूक्ष्मं शिवं चैकपदं तथा ॥ एकरुद्रं त्रिमूर्तिं च श्रीकंठं वामदेवकं । ज्येष्ठं श्रेष्ठं तथा रुद्रं कालं कलविकरणं ॥ बलं बलविकरणं बलप्रमथनं
तथा । तृतीयावरणे पद्मे चतुर्विंशद्दले तथा ॥ अणिमा महिमा चेति लघिमा गरिमा तथा । प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चाष्टसिद्धयः ॥
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा । वाराह्यैंद्री च चामुंडा चंडिका चेति ताः क्रमात् ॥ ततोऽष्टस्वसितांगादीन्भैरवान्विन्यसेत्पुनः ।
असितांगो रुरुश्चंडः क्रोध उन्मत्तभैरवः ॥ कालभीषणसंहारभैरवाश्चाष्ट कीर्तिताः । द्वात्रिंशत्पत्रके पूर्वे भवाष्टकमुदाहृतं ॥ भवः शर्वेशा-
नपशुपतिरुद्रोग्रभीमकाः । महांश्चैवेति विख्याता भवाद्यष्टौ प्रकीर्तिताः ॥ ततोऽनंतो वासुकिश्च तक्षकश्च कुलीरकः । कर्कोटकः शंखपा-
लः कंबलोऽश्वतरस्तथा ॥ ततोऽष्टसु न्यसेद्वैन्यं पृथुं हैहयमर्जुनं । शाकुंतलेयं भरतं बलराममिति क्रमात् ॥ ततः कुलाचलानष्टौ दलेष्वष्ट-
सु विन्यसेत् । हिमवान्निषधो विंध्यो माल्यवान्पारियात्रकः ॥ मलयो हेमकूटश्च गंधमादनसंज्ञकः । चत्वारिंशद्दले पद्मे पंचमावरणे न्यसेत् ।
इंद्राद्यष्टौ लोकपालानष्टसु क्रमशो लिखेत् ॥ इंद्रमग्निं यमं चैव निर्ऋतिं वरुणं तथा । वायुं कुबेरमीशानं दलेष्वष्टसु विन्यसेत् ॥ इंद्रादिलो-
कपालानामष्टौ शक्तीस्ततो लिखेत् । शची स्वाहा च वाराही खड्गिनी वारुणी तथा ॥ मृगारूढा च कौबेरी शूलिनी च तथाऽष्टमी । त-
तोऽष्टानामायुधानि वज्रादीन्यष्टसु न्यसेत् ॥ वज्रं शक्तिर्दंडखड्गौ पाशांकुशगदा अपि । त्रिशूलं लोकपालानामायुधानि क्रमाल्लिखेत् ॥ ततोऽ

ष्टौ वाहनान्येषामष्टसु क्रमशो लिखेत् । ऐरावतं तथा मेषं महिषं प्रेतसंज्ञकं ॥ मकरं च मृगं चैव नरं च वृषभं तथा । ऐरावतादयोऽथाष्टौ दिग्गजास्तदनंतरं ॥ ऐरावतः पुंडरीको वामनः कुमुदोऽजनः । पुष्पदंतः सार्वभौमः सुप्रतीकश्च दिग्गजाः ॥ इंद्रादयोऽष्टौ दिक्पालाः पंचपद्मात्मकाद्बहिः । इंद्रं विन्यस्य पूर्वस्यामाग्नेय्यामग्निमेव च ॥ दक्षिणस्यां यमं चैव नैर्ऋत्यां निर्ऋतिं तथा । प्रतीच्यां वरुणं वायुं वायव्यां विन्यसेत्ततः ॥ कुबेरं चैव कौबेर्यामैशान्यामीशमालिखेत् । विरूपाक्षं तु विन्यस्य आग्नेय्यामग्नियोगतः ॥ नैर्ऋत्यां निर्ऋतेर्योगे विश्वरूपं तु विन्यसेत् । वायव्यां वायुयोगे च लिखेत्पशुपतिं तथा ॥ ऐशान्यामूर्ध्वलिंगं च न्यसेदीशानयोगतः । प्रागादिक्रमतो लेख्याः शेषाद्यां भूगृहाद्बहिः ॥ विप्रवर्णं श्वेतरूपं सहस्रफणमंडितं । शेषं विन्यस्य पूर्वस्यां पूजयेदुपचारकैः ॥ तक्षकं वैश्यवर्णं च नीलं पंचशतैः फणैः । युक्तमुत्तुंगकायं च आग्नेय्यां दिशि विन्यसेत् ॥ अनंतं विप्रवर्णं च तथा कुंकुमवर्णकं । सहस्रफणसंयुक्तं दक्षिणस्यां प्रपूजयेत् ॥ वासुकिं क्षत्रियं पीतवर्णं सप्तशतैः फणैः । युक्तमुत्तुंगकायं च नैर्ऋत्यां दिशि विन्यसेत् ॥ शंखपालं क्षत्रियं च पीतं सप्तशतैः फणैः । युक्तमुत्तुंगकायं च वायव्यां दिशि पूजयेत् ॥ कंबलं शूद्रवर्णं च कृष्णं त्रिशत्फणैर्युतं । कौबेर्यां दिशि विन्यस्य पूजयेच्च विधानतः ॥ कर्कोटकं शूद्रवर्णं श्वेतं त्रिशत्फणायुतं । ऐशान्यां दिशि विन्यस्य पूजयेद्विधिवत्ततः ॥ रुद्रपीठमिदं सर्वं रुद्रकल्पेषु विश्रुतं । शंभुना स्वयमाख्यातं भक्तानुग्रहकाम्यया ॥ कुंकुमागुरुकर्पूरैर्भूर्जपत्रेऽथवा पटे । लिखितं पूजयेद्भक्त्या सर्वकामार्थसिद्धिदं ॥ यंत्रं मंत्रमयं प्रोक्तमाख्याता देवतेति च । पूजनीयं प्रयत्नेन तेनेदं देवतामयं ॥ नाग्निचोरभयं तत्र न च राजभयं क्वचित् । यत्रेदं लिखितं यंत्रं पूज्यते विधिवत्सदा ॥ ( यंत्रं रुद्रयंत्रं ) एता देवताश्चतुर्थ्यंतनमोंततत्तन्मंत्रैरावाह्य पूजयेत् । अत्र मूलं चिंत्यं । तदैशान्यां रुद्रकलशं संस्थाप्य तत्र वरुणं संपूज्य रुद्रैकादशिनीजपार्थं विप्रं वृणुयादित्यपि वृद्धाः ।

ततो यजमानेन त्यागे कृते ग्रहेभ्यः सांगेभ्यो ग्रहयज्ञवद्धुत्वा रुद्रहोमे कृते रुद्रपीठदेवताभ्य आज्यं हुत्वा स्विष्टकृदादिप्रायश्चित्तहोमांते दिक्पालेभ्यो नवग्रहादिभ्यश्च माषभक्तबलीन्दत्वा समुद्रादूर्मिरितितृचेन मूर्धानं पुनस्त्वादित्याः पूर्णादर्वि सप्तते धामंते इति पूर्णाहुतिं हुत्वा सर्वचमकेनाऽग्निमीळेनवभिः विष्णोर्नुकं षड्भिरातेपितः पंचदशभिः स्वादिष्ठयेति दशभिर्महावैश्वानरज्येष्ठसामभ्यां च वसोर्धारां हुत्वा पूर्णपात्रविमोकादिशेषं समाप्य ऋत्विग्भ्यो दक्षिणां दद्यात् । तत्र रुद्रदक्षिणोक्ता बौधायनसूत्रे । सौवर्णशतं सुवर्णोपधानं वा दद्यादृषभो रुद्रस्य दक्षिणेति । एकादश गा दद्यादिति शालीकिः । उपधानं हैमतंतुकृतमुपबर्हणं । सौवर्णशतं शतच्छिद्रं । रुद्रो लघुरुद्रः । प्रकारांतरमाह महार्णवः । तत्र सौवर्णनिष्काणां दशसाहस्रिकोत्तमा । तदर्धा मध्यमा प्रोक्ता तृतीया त्रिसहस्रिका ॥ उत्तमा त्रिशती वा स्याद्द्विशती मध्यमा मता । शतमात्राऽधमा ज्ञेया प्रकारः कीर्त्यतेऽपरः ॥ उत्तमा तु चतुःषष्टिस्तदर्धं मध्यमा स्मृता । चतुर्विंशतिरन्या स्यादथान्यो विधिरुच्यते ॥ सहस्रं दक्षिणा देया दशपूरुषकर्तृके । शतानि पंच देयानि ऋत्विक्पंचककर्तृके ॥ अथैककर्तृके देयं शतत्रयमिति स्थितिः । बृहत्पराशरः । अनड्वाहं च वस्त्रं च दद्याद्धेनुं च दक्षिणामित्याह । इयं प्रत्येकं । महारुद्रे तु शातातपः । महारुद्रजपं चैव कारयेच्च यथाविधि । जुहुयाच्च दशांशेन दूर्वामाज्यपरिप्लुतां ॥ एकादशस्वर्णनिष्काः प्रदातव्याऽत्र दक्षिणा । एकादश पशूंश्चैव दद्याद्वित्तानुसारतः ॥ पशुर्गौः । रुद्रायगामिति श्रुतेः । अन्येभ्योऽपि यथाशक्त्या द्विजेभ्यो दक्षिणां दिशेदिति । ततो ग्रहादिकलशोदकेनाभिषिक्तो यजमानो ग्रहादीनामुत्तरपूजां कृत्वा विसृज्य । श्रीरुद्रप्रतिमां स्वर्णमयीं वस्त्रयुगान्वितां । श्रीरुद्रप्रीतये चापि प्राप्तानिष्टनिवृत्तये ॥ प्रार्थिताभीष्टसंसिद्ध्यै तुभ्यं श्रीरुद्ररूपिणे । संप्रदद्यां विधानेन यथोक्तफलमस्तु मे ॥ इति रुद्रप्रतिमामाचार्याय दत्वाऽग्निं संपूज्य विसृज्य विप्रान्रुद्रैकादशिन्यां त्रीनेकं वेति

संभोज्य कर्मेश्वरार्पणं कुर्यादिति । पुत्रार्थमहारुद्रे विशेषं त्वनपत्यत्वहरे कर्मविपाके वक्ष्यामः । अवांतरमंत्रप्रयोगा भाष्योक्ता भट्टभास्करोक्ताश्च महार्णवे ज्ञेयाः । इति शांतिरत्ने रुद्रविधानं ॥ ॥ अथ वेदपारायणं । तत्रादौ कलशस्थापनाद्युक्तं महार्णवे । तीर्थे देवालये गेहे प्रशस्ते सुपरिष्कृते । कलशं सुदृढं तत्र सुनिर्णिक्तं सुभूषितं ॥ ( निर्णिक्तं क्षालितं ) पुष्पपल्लवमालाभिश्चंदनैः कुंकुमादिभिः । मृत्तिकायवसंमिश्रं वेदिमध्ये न्यसेत्ततः ॥ पंचाशद्भिः कुशैः कार्यो ब्रह्मा पश्चान्मुखस्थितः । स्नापितः स्थापितः कुंभे चतुर्बाहुश्चतुर्मुखः ॥ वत्सजान्वाकृतिं वेदमुत्तराग्रैः कुशैः कृतं । ब्रह्मोपधाने कृत्वा तं ततः स्वस्त्ययनं पठेत् ॥ प्रतिष्ठां कारयेत्पश्चात्पूजाद्रव्यमथोच्यते । यज्ञोपवीतनैवेद्यवस्त्रचंदनकुंकुमैः ॥ स्रग्धूपदीपैस्तांबूलैरक्षतैश्च पितामहं । ब्रह्मजज्ञानमिति वा गायत्र्या वा प्रपूजयेत् ॥ उपाध्यायस्तु संपूज्य यथापाठं पठेत्ततः । ततो वक्ष्यमाणहोमादि कृत्वा पठेदित्यर्थः । तत्रैव बौधायनः । स्थंडिलं कल्पयित्वाऽग्निमुपसमाधाय संपरिस्तीर्याज्येनैताभ्यो देवताभ्यो जुहोत्यग्नये सोमाय विश्वेभ्यो देवेभ्यो ब्रह्मण ऋषिभ्य ऋग्भ्यो यजुर्भ्यः सामभ्यः श्रद्धायै मेधायै प्रज्ञायै धारणायै श्रियै ह्रियै सावित्र्यै सवित्रे प्रजापतये कांडऋषये सोमाय कांडऋषयेऽग्नये कांडऋषये विश्वेभ्योदेवेभ्यः कांडऋषिभ्यः सांहितीभ्यो देवताभ्य उपनिषद्भ्यो वारुणीभ्यो देवताभ्य उपनिषद्भ्यो हव्यवाहाय विश्वेभ्योदेवेभ्योऽनुमत्यै स्विष्टकृते च पृथक् स्वाहाकारेण हुत्वा व्याहृतिभिश्च हुत्वा पुनः परिषिंचातिसमाप्ते चैता यजुषा तर्पयति । एवमृग्वेदस्य कांडऋष्यादिवर्जमास्विष्टकृतस्तेषां स्थाने शतर्चिभ्यो माध्यमेभ्यो गृत्समदाय विश्वामित्राय वामदेवायाऽत्रये भरद्वाजाय जामदग्न्याय गौतमाय वसिष्ठाय प्रगाथेभ्यः पावमानीभ्यः क्षुद्रसूक्तेभ्यो महासूक्तेभ्यो महानाम्नीभ्य इति । ततो वेदादिमारभ्य संततमधीयीतेत्याह भगवान्बौधायनः ॥ ॥ अथाऽनक्षत्पारायणं । अथातोऽनक्षत्पारायणविधिं व्याख्यास्याम आसमाप्ते

र्नाश्नीयाद्यथाशक्ति वा पयः फलान्योदनं वा हविष्यमात्रमल्पं भुक्त्वा तदा शेषमधीयीत ग्रामात्प्राचीमुदीचीं वा दिशमुपनिष्क्रम्याग्निमुप-
समाधाय परिस्तीर्येध्मं प्रदायाज्येनैताभ्यो देवताभ्यो जुहोति । अग्नये सोमायेंद्राय प्रजापतये बृहस्पतये विश्वेभ्यो देवेभ्यो ब्रह्मण ऋषि-
भ्य ऋग्भ्यो यजुर्भ्यः सामभ्यः श्रद्धायै मेधायै प्रज्ञायै धारणायै सदसस्पतयेऽनुमतये श्रियै ह्रियै सावित्र्यै सवित्रे प्रजापतये सोमाय कां-
डऋषयेऽग्नये कांडऋषये विश्वेभ्यो देवेभ्यः कांडऋषिभ्यः सांहितीभ्यो देवताभ्य उपनिषद्भ्यो याज्ञिकीभ्य उपनिषद्भ्यो वारुणीभ्यो देवताभ्य
उपनिषद्भ्यो हव्यवाहाय विश्वेभ्यो देवेभ्यो वरुणेभ्योऽनुमत्यै स्विष्टकृते च पृथक् स्वाहाकारेण हुत्वा व्याहृतिभिश्च पुनः परिषिंचाति समाप्ते चैता
यजुषा तर्पयति । अंते एता अग्निसोमाद्या यजुषा यजुर्वेदेन सह तर्पयेत् । यद्वा भूर्देवांस्तर्पयामीत्यादियजुषा तर्पयित्वाऽग्न्यादींस्तर्पयेदित्यर्थमाह
महार्णवः । एवमृग्वेदिनां कांडऋष्यादिवर्जमास्विष्टकृतस्तेषां स्थाने शतर्चिभ्यइत्यादिमहानाम्नीभ्यइत्यंतं प्राग्वत् । ततो वेदादिमारभ्य संतत-
मधीयीत । नास्यांतराऽनध्यायो नास्यांतरा जननमरणे अशुचिः । आशौचं नेहेत्यर्थः । नांतरा व्याहरेन्न विरमेद्यावदंतमधीयीत । यावत्पर्यंतं
पठेत्तावन्मध्ये न विरमेन्नान्यच्च वदेदित्यर्थः । यदंतरा विरमेत्त्रीन्प्राणानायम्य प्रणवं वा प्रविधाय यावत्कालमधीयीत ततः सर्वनिशांतरं
संग्रामारण्यसलिलं लोप्य परिदध्यात् । निशांतरं संध्यानिशादीन् लोप्य विहाय परिदध्यात्समापयेदित्यर्थः । आदावंते च ब्राह्मणभो-
जनं दक्षिणां च दद्यात् । य एतेन वेदमधीयीत स ततः पूतो वेदो भवति मनःशुद्धिश्च भवति । वेदरूपो भवतीत्यर्थः। द्वाभ्यां पारायणाभ्यामृग्भिश्चाऽ-
भोजन इहाधीतेऽन्तेभ्यः प्रमुच्यते । त्रिभिः पतनीयेभ्यः शूद्रायां रेतः सिक्त्वा गंगाऽप्सु निमग्नश्च भवति । चतुर्भिः शूद्रान्नभोजनात् स्त्रीसे-
वनाच्च पंचभिरयाज्ययाजनादग्राह्यग्रहणात् । षड्भिर्ब्राह्मणतरस्त्रीलोहितकरणात्पशुहननात्सुवर्णस्तेयात्पतितसंयोगाच्च । सप्तभिः प्राजापत्यस्य

हीनाचरणाद्यज्ञोपबंधनाच्च । अष्टभिश्चांद्रायणस्य गुरुतल्पगमनाद्रजस्वलागमनाच्च ।नवभिः सुरापानाद्दशभिरसोमपानादेकादशभिर्ब्राह्मणहननाद्वा-
दशभिः पुनर्जन्मेहजन्मकृतैः सर्वैः पापैः प्रमुच्यते स्वर्गं लोकं गच्छति पितॄन् स्वर्गं लोकं गमयत्यग्निष्टोमादिक्रतुभिरिष्टं भवति । वेदाध्या-
यी सदैव स्यादपाप्मा सत्यवाक् शुचिः । यं यं कामयते कामं तं तं वेदेन साधयेत् ॥ असाध्यं नास्ति यत्किंचिद्ब्रह्मणो हि फलं महदिति ।
ऋग्विधाने । आदावेव तु सावित्र्या कर्म कुर्वीत शांतये। पुष्टये पशुलाभाय धनलाभाय भूतये॥ एषा हि संहिता देवैः सर्वब्रह्ममयी निचृत् ।
उग्रेण तपसा दृष्टा विश्वामित्रेण धीमता ॥ होमांश्च जपयज्ञांश्च नित्यं कुर्वीत चैतया । सर्वकामसमृद्ध्यर्थं परब्रह्मेदमुच्यते ॥ एषैव
प्रतिलोमोक्ता पच्छः शत्रुविनाशिनी । अक्षरप्रतिलोमेयमभिचारेषु शस्यते ॥ सर्वसंहितया प्रत्यृचं होम आज्येन तिलैर्वा। आज्यं द्रव्यमना-
देशे जुहोतिषु विधीयतेइति ब्राह्मोक्तेः । सर्वपापहरो होमास्तिलैः सर्वत्र शस्यतइति विष्णुधर्मोत्तराच्च । एवं सामवेदादावपि । शातातपः ।
कृच्छ्रो देव्ययुतं चैव वेदपारायणं तथा । तिलहोमसहस्रं च सममेतच्चतुष्टयं ॥ (देवी गायत्री ) इदं केवले । अनश्नतस्तु चांद्रसमं । इति
वेदपारायणं ॥ ॥ अथ जातवेदाकल्पः । शौनकः । जातवेदस इत्येतत्सूक्तं सर्वार्थसाधनं । आयुरारोग्यसुखदं भूमिदं शत्रुनाशनं ॥
यद्यद्वांछति वा विप्रस्तत्तदाप्नोत्यसंशयं । सूक्तेनानेन जुहुयाच्छुक्लांबरधरः शुचिः ॥ जपेद्वा नियतो मंत्रं हविष्याशी जितेंद्रियः । पशुपुत्र-
धनार्थी च प्रत्येकं लक्षमभ्यसेत् ॥ कुंडे वा स्थंडिले वापि होमं कुर्यादतंद्रितः । चतुरस्रं भवेत्कुंडं मेखलाद्यसंयुतं ॥ स्थंडिलाद्याज्यभागांतं
यज्ञतंत्रं प्रकल्पयेत् । दुर्गामावाहयेत्कुंभे सायुधाष्टमहाभुजां ॥ नीलोत्पलदलश्यामां किरीटाद्यैर्विभूषितां । ततश्चाराध्य तां देवीं तस्मिंस्ती-
र्थोदकान्विते ॥ आवाहनेन हविषा समिद्भिश्च पृथक्पृथक् । मंत्रेणानेन जुहुयादष्टोत्तरशताहुतीः ॥ ततः स्विष्टकृतं चैव होमशेषं समापयेत् ।

उत्थायाथ जपेन्मंत्रमेतं श्रद्धासमन्वितः ॥ ऋग्विधाने । जातवेदसइत्यादि सदा स्वस्त्ययनं जपेत् । दुर्गे पथि प्रयातस्य नास्याऽरिभ्यो भयं
भवेत् ॥ राजकार्ये स्वयूथे वा अभिशस्तोऽप्यनेकधा । अशक्ये प्रतिभाकार्ये भये प्राणांतकेऽपि वा ॥ जातवेदसइत्येतां जपंस्तेभ्यः प्रमु-
च्यते । सिसाधयिषुरर्थं च प्रास्थितो मनसा जपेत् ॥ सिद्धार्थः स्वस्तिमानेति चोरैर्बाध्येत नाऽध्वनि । कृतार्थः स्वगृहानाच्छन्नेतामेव सदाऽभ्य-
सेत् ॥ उदिते सवितर्येतां जपेदस्तंगते तथा । अहःस्वस्त्ययनं प्राता रात्रिस्वस्त्ययनं निशि ॥ व्युष्टायां च जपेन्नित्यमेतां दुःस्वप्ननाशि-
नीं । इति जातवेदाकल्पः ॥ ॥ अथ त्वरितरुद्रविधानं । शिवपूजां विधाय संकल्प्य मूलेन प्राणानायम्य अस्य त्वरितरुद्रमंत्रस्या
थर्वण ऋषिः । अनुष्टुप् छंदः । श्रीत्वरितरुद्रो देवता । नम इति बीजं । अस्त्विति शक्तिः । त्वरितरुरुद्रप्रीत्यर्थं जपे विनि०। अथ मूलेन कर-
शुद्धिं कृत्वा प्रणवं करतलयोर्विन्यस्य षडंगं कुर्यात् । तद्यथा । ॐ योरुद्रः अंगुष्ठाभ्यांनमः । ॐ अग्नौ तर्जनी० । ॐ योअप्सु मध्यमा० । ॐ य-
ओषधीषु अनामिका० । ॐ योरुद्रोविश्वाभुवनाविवेश कनिष्ठिका०। ॐ तस्मैरुद्रायनमोअस्तु करतलकरपृष्ठाभ्या० । एवं हृदयादिन्यासः ।
ॐयोरुद्रो हृदयाय० । ॐअग्नौ शिरसे० । ॐयोअप्सु शिखायैवषट् । ॐयओषधीषु कवचायहुं । ॐयोरुद्रोविश्वाभुवनाविवेश नेत्रत्रयाय० ।
ॐतस्मैरुद्रायनमोअस्तु अस्त्रायफट् । ॐह्रीं हुंफट् इत्येस्त्रण दिग्बंधः । अथ पदन्यासः । ॐ यः पादाभ्यां० । रुद्रः जंघाभ्यां०। अग्नौ जा-
नुभ्यां० । यः ऊरुभ्यां० । अप्सु गुह्याय० । यः मेढ्राय० । ओषधीषु नाभ्यै० । यः उदराय० । रुद्रः हृदयाय० । विश्वा कंठाय०। भुवना
मुखाय० । विवेश नासिकायै० । तस्मै नेत्रत्रया० । रुद्राय भ्रूमध्याय० । नमः ललाटाय० । अस्तु शिरसे नमः । अथ ध्यानं । रुद्रं चतु-
र्भुजं देवं त्रिनेत्रं वरदाऽभये । दधानमूर्ध्वहस्ताभ्यां शूलं डमरुमेव च ॥ अंकसंस्थामुमां पद्मे दधानां च करद्वये । अधःकरद्वये कुंभं मातुलिं-

गं च बिभ्रतीं ॥ एवं ध्यात्वा मूलमंत्रेणावाहनादिषोडशोपचारैरभ्यर्च्य नित्यमष्टोत्तरशतं जपेत् । एषतेरुद्रभागइति मुद्रा। । अथ होमविधिः।
लिंगाभिमुख उपविश्य घृताहुतीर्जुहुयात् । एवं कृतपुरश्चरणो भवति । घृताक्षतैर्मुक्तिकामः । दूर्वाभिरायुष्यकामः । कन्याकामो लाजैः ।
अपामार्गैरर्थकामः । मधुपुष्पैर्वश्यकामः । श्रीफलैः श्रीकामः । सिद्धार्थैः पुष्टिकामः । खादिरैस्तेजस्कामः । औदुंबरैः पुत्रकामः । पलाशैः सर्व-
कामः । गुडूचीखंडैर्ज्वरनिवृत्तिर्भवति । उत्पलैर्दधिमधुघृतैरष्टसहस्रं जुहुयात् । यथेष्टा श्रीर्भवति । बिल्वपत्रैर्दधिमधुघृताक्तैः सहस्रहोमाज्ज्व-
रं नाशयति । शाल्मलीसमिद्भिः शशरुधिराक्तैरष्टसहस्रं जुहुयात् । शत्रूणां सद्यो मरणं भवति । अक्लिन्नवासा अर्काभिमुखः सहस्रं मासैक-
मात्रं जप्त्वा यक्षराक्षसगंधर्वादीन्वशयाति । मासद्वयेनेंद्रादीन्वशयति । मासत्रयेण ब्रह्मादिदेवा समागच्छंति । स नरो विरूपाक्षो भूतगणैः परिवृ-
तो महादेव इत्याह भगवान्बौधायनः । हेमाद्रौ शांतिकांडे । भीष्म उवाच । अथ त्वरितरुद्रस्य न्यासमुद्राः क्रमेण तु । जपहोमा-
दिकं सर्वं कथ्यते सर्वसिद्धये ॥ यस्य कुक्षौ जगत्सर्वं स्थावरं जंगमं च यत् । दुःखच्छिदे नमस्तस्मै ब्रह्मविष्णुशिवात्मने ॥ छंदोऽनुष्टु-
बथर्वा च ऋषिस्त्वरितसंज्ञके । देवता त्वरितो रुद्रो बीजं शक्तिर्नमोस्त्विति ॥ देवागारे नदीतीरे शुचौ देशेऽथ वाग्यतः । उपविश्य नियम्या-
सून्संकल्प्य त्वहृदि संस्थितं ॥ करयोस्तूभयोश्चैव मूलमंत्रेण विन्यसेत् । क्रमेण तु षडंगानां न्यासः स्याध्दृदयादिभिः॥न्यासं मंत्रपदैः कुर्यात्पंचभि-
र्हृदयादिकं । योरुद्रोऽग्नौ त्वहृदि न्यस्य शीर्षिण योअप्स्विति न्यसेत्॥ यओषधीषु शिखायां योरुद्रः कवचे न्यसेत् । विश्वाभुवनाविवेशेति
नेत्रं वै समुदाहृतं ॥ तस्मैरुद्रायइत्यस्त्रं न्यास एवमुदाहृतः । अंगुल्यग्राणि मूलेषु कृत्वांऽगुष्ठेन पडियेत् ॥ सा मुद्रा शुभदा प्रोक्ता
ततो ध्यानं समाचरेत् । एषतेरुद्रभागेति लिंगमुद्राप्रदर्शनं ॥ श्रीकामः शीर्षिण कुर्वीत तेजस्कामस्तु नेत्रयोः । मुखे त्वन्नाद्यकामस्तु ग्रीवायां

रोगनाशने ॥ हृदये सुखकामस्तु नाभौ ज्ञानप्रदं भवेत् । प्रजाकामस्तु गुह्ये वै पशुकामस्तु जंघयोः ॥ जानुनोर्ग्रामकामस्तु सर्वकामस्तु गुल्फयोः । वशीकरणकामस्तु वामबाहौ प्रदर्शयेत् ॥ पापक्षयेऽभिचारे च व्याधेरपगमे तथा । बहिः शरीरात्कुर्वीत शिवस्याग्रे तु विन्यसेत् ॥ चतुर्भुजं त्रिनेत्रं च शुद्धस्फटिकसंनिभं । अमृतेन च पूर्णौ द्वौ कलशौ हस्तयोर्द्वयोः॥ (दधानमिति शेषः) हस्तद्वयेन योगस्य कृतमुद्रं स्थिरासनं । सर्वकामप्रदं शांतं शंकरं करुणाकरं ॥ उग्रकर्मणि चैवोग्रमूर्तिं ध्यायेदुमापतिं । द्विभुजं नागपाशं च शूलपाणिं जटाधरं ॥ एवं ध्यात्वा महादेवं समभ्यर्च्य सुभक्तितः ॥ अधःशाय्येकभक्ताशी ब्रह्मचारी हविष्यभुक् । अयुते द्वे जपेत्पूर्वं प्रत्यहं पूजयेच्छिवं ॥ जुहुयात्तद्दशांशेन तद्दशांशेन तर्पणं । मार्जनं तद्दशांशेन तद्दशांशेनभोजनं ॥ पुरश्चरणमेवं च कृत्वा संपूज्य शंकरं । जपेत्त्वरितरुद्रं तु सर्वकामफलप्रदं ॥ श्रीकामः शांतिकामो वा जपेल्लक्षमतंद्रितः । बिल्वसमिद्भिः श्रीकामः शांतिकामः शमीमयैः ॥ जुहुयादाज्यसंमिश्रैस्तर्पणं मार्जनं तथा । एवं सर्वेषु कामेषु होमांते जुहुयद्यवैः ॥ जप्त्वा लक्षं तु पुत्रार्थी पायसं जुहुयात्ततः । वित्तार्थी श्रीफलैर्होमं आयुर्वृद्ध्यै च दूर्वया ॥ तिलैरप्याज्यसंमिश्रैस्तेजस्कामो घृतेन च । व्रीहिभिः पशुकामस्तु राष्ट्रकामस्तु वै यवैः ॥ पायसं सर्वकामेन होतव्यं शर्करान्वितं । मध्वक्तान्याम्रपर्णानि तीव्रज्वरविनाशने । महाभूतज्वरे चैव गुडूचीभिर्हुनेद्ध्रुवं । सर्वरोगविनाशाय सूर्यस्याभिमुखं जपेत् ॥ अयुते द्वे जपेद्धोमः कार्योऽर्कसमिधैः शुभैः । औदुंबरैरन्नकामस्तेजस्कामस्तु खादिरैः ॥ अपामार्गसमिद्धोमाद्भूतबाधा विनश्यति । ग्रहबाधाविनाशाय जपेदश्वत्थसंनिधौ ॥ लवणान्वितदध्यक्तास्तीक्ष्णाग्राश्वत्थसंभवाः । जुहुयात्समिधः शुष्काः स्वाहांतं मंत्रमुच्चरेत् ॥ दशपंचाहुतीर्हुत्वा गच्छगच्छेत्युदीरयेत् । यावद्धोमं बलिर्देयः पुरुषाहारसंमितः ॥ एवं कृते विमुच्येत पुमान्स्त्री वा महाग्रहात् । यं जेतुमिच्छेत्पुरुषं तत्स्थानाभिमुखो जपेत् ॥ जुहुयाच्छतप-

त्राणि स दुष्टः क्षयमाप्नुयात् । लाजहोमेन कन्यार्थी कन्यां प्राप्नोति रूपिणीं ॥ लाजाश्च मधुसंयुक्ताः श्वेतपुष्पाणि वा पुनः । हूयंते हरिते देशे तस्य विश्वं वशे भवेत् ॥ वामांगमुन्नतं कृत्वा स्त्रीवाशीत्वे विचक्षणः । हस्त्यश्वामात्यशांत्यर्थं तिलैश्चाज्येन संयुतैः ॥ होमस्थानं तु संप्राप्य कुंभमेकं जलान्वितं । मंत्रयित्वाऽष्टसाहस्रं चूतशाखां तु निक्षिपेत् ॥ अभिषेकैश्च तैस्तेषां शाखाप्रोक्तैः प्रदक्षिणं । गृहग्रामादिशांतिश्च सर्वैः कार्या तु पूर्ववत् ॥ वास्तुपूजा च कर्तव्या एकाशीतिपदैः शुभैः । ईशानाय बलिः कार्यो भूतानां पतये तथा ॥ एवं कृते पशूनां च प्रजानां शांतिमाप्नुयात् । अद्भुतेषु च सर्वेषु निशायां ग्रामबाह्यतः ॥ उपविश्य जपेद्रुद्रं त्वरितं बलिभिः सह । होमः पलाशसमिधैः कर्तव्यो घृतसंयुतैः ॥ ईशानाय बलिः कार्यो यस्यां दिशि तदद्भुतं ॥ तदाशापतये चैव पशूनां पतये तथा ॥ वृद्धिकामो जपेल्लक्षं तिलैर्होमो घृतान्वितैः । बलिपूजा प्रकर्तव्या शिवस्य वरुणस्य च ॥ सर्वकामेषु चैवाथ त्वरितस्य जपो भवेत् । अयुतद्वयमल्पे तु यावल्लक्षं ततोऽधिके ॥ एवं कृते तु सिद्धिः स्यान्निष्कामः प्राप्नुयाच्छिवं । ऐहिकामुष्मिकान्भोगान्भुक्त्वा सायुज्यमाप्नुयात् ॥ इति त्वरितरुद्रविधानं ॥ ॥ अथ स्वप्नाः । तत्र दैवज्ञादीन् देवं च संपूज्येत्युक्त्वाऽद्भुतसागरे पराशरः । अभ्यर्च्य मंत्रैस्तु पुरोहितस्तु संयम्य तस्यां भुवि संस्कृतायां । दर्भैस्तु कृत्वा सुरभाक्षतैश्च किरेत्समंतात्सितसर्षपैश्च ॥ ब्राह्मीं सदूर्वामथ नागपुष्पीं कृत्वोपधानं शिरसि क्षितीशः । पूर्णान्घटान्पुष्पफलान्वितास्यानाशासु कुर्याच्चतुरः क्रमेण ॥ यजाग्रतोदूरमुदैतिदैवमावर्त्य मंत्रान्प्रणतस्त्रिरेतान् । " शां० सा० मंत्रानिति बहुवचनेन सर्वं सूक्तं षड्टचं गृह्यते " तथैकभुग्दक्षिणपार्श्वशायी स्वप्नं परीक्षेत यथोपदेशं ॥ नमः शंभो त्रिनेत्राय रुद्राय वरदाय ते । वामनाय विरूपाय स्वप्नाधिपतये नमः ॥ भगवन्देवदेवेश शूलभृद्वृषवाहन । इष्टानिष्टे ममाचक्ष्व स्वप्ने सुप्तस्य शाश्वत ॥ एकवस्त्रे कुशास्तीर्णे सुप्तः प्रयतमानसः । निशांते पश्यति स्वप्नं

शुभं वा यदि वाऽशुभं ॥ शुभस्वप्नानाह बृहद्यात्रायां वराहः । शैलप्रासादनागाश्ववृषभारोहणं हितं । चंद्रतारार्कग्रहणं परिमार्गणमेव च ॥
भूम्यंबुधीनां ग्रसनं शत्रूणां च वधक्रिया । जयो विवादद्यूतेषु संग्रामे च तथा जयः ॥ भक्षणं चैव मांसानां मत्स्यानां पयसां तथा । दर्शनं
रुधिरस्यापि स्नानं वा रुधिरेण च ॥ सुरारुधिरमद्यानां पानं क्षीरस्य पायसः । ( पायसस्येत्यर्थः ) अंत्रेण वेष्टितं भूमौ निर्मलं गगनं तथा ॥
मुखेन दोहनं शस्तं महिषीणां तथा गवां । सिंहीनां हस्तिनीनां च वडवानां तथैव च ॥ प्रसादो देवविप्रेभ्यो गुरु-
भ्यश्च तथा शुभः । अंभसा त्वभिषेकश्च ज्ञेयं राज्यप्रदं हि तत् ॥ राज्याभिषेकश्च तथा छेदनं शिरसोऽपि च । मरणं वह्निलाभश्च
वह्निदाहो गृहादिषु ॥ तथोदकानां तरणं तथा विषमलंघनं । हस्तिनीवडवानां च गवां च प्रसवो गृहे ॥ आरोहणं गजेंद्राणां रोदनं च
तथा शुभं । परस्त्रीणां तथा लाभस्तदालिंगनमेव च ॥ निगडैर्बंधनं धन्यं तथा विष्ठाऽनुलेपनं । बीजानां भूमिपालानां सुहृदामपि दर्शनं ॥
शुभान्येतानि प्रोक्तानि राज्यलाभकराणि च । अद्भुतसागरे पराशरः । स्वांगप्रज्वलनं परोपशमनं शक्रध्वजालिंगकृत्संयुक्तापि नैर्निपत्य च त-
था प्रक्षेपणं दिक्षु च । बद्धो वा निगडैर्ग्रसेच्च दहनं नार्योन्मितो बाहुना छन्नं वा द्विरदादिरोहणविधिर्दिव्योऽपि च ब्राह्मणः ॥ दिनकरशशितारा भक्ष-
णस्पर्शनानि विशरणमपि मूर्ध्नः सप्त पंच त्रिधा वा । वृषभगृहनरेंद्रश्वेतसिंहाधिरोहो ग्रसनमुदधिभूम्योर्भूमिराज्यप्रदानि ॥ विपुलरणविमर्दद्यूत-
वादैर्जयश्च पशुमृगमनुजानां लब्धिरध्यासनं वा । विडशनपरिलेपोऽगम्यनारीगमो वा स्वमरणशिखिलाभः सस्यसंदर्शनं च ॥ सितसुरभिम-
नोज्ञालेपमाल्यांबराणां द्विजसुरगुरुराज्ञां दर्शनान्याशिषश्च । मणिरजतसुवर्णांभोजपात्रेषु भुंक्ते घृतदधिपरमान्नं सर्वमेतच्छुभं स्यात् ॥ बृहस्पतिसंहि-
तायां । यस्तु श्वेतेन सर्पेण दंशितो दक्षिणे भुजे । सहस्रलाभस्तस्य स्यात्पूर्णे तु दशमे दिने ॥ उरगो वृश्चिको वापि जलूका दशते यदि ।

विजयं चार्थसिद्धिं च पुत्रं तस्य विनिर्दिशेत् ॥ बलाकां कुक्कुटीं क्रौंचीं लब्ध्वा यः प्रतिबुध्यते । कोशांतां लभते भूमिं भार्यां च प्रियवादिनीं ॥
रुधिरं पिबति स्वप्ने सुरां वा पिबति क्वचित् । ब्राह्मणो लभते विद्यामितरस्तु धनं लभेत् ॥ क्षीरं पिबति यः स्वप्ने सफेनं मेहने कृते । सोम-
पानं भवेत्तस्य धनं वा बहु निर्दिशेत् ॥ दधिलाभे धनं तु स्याद् घृतलाभे ध्रुवं यशः । घृतप्राशे महाक्लेशो यशस्तु दधिभक्षणे ॥ गोधूमैर्वा
यवैर्वापि लाभं सिद्धार्थकेषु च । पुष्पे प्राप्ते धनं विद्यात्फले वृद्धिरनुत्तमा ॥ आसने शयने याने शरीरे वाहने गृहे । ज्वलमाने विबुध्येत
तस्य श्रीः सर्वतोमुखी ॥ वराहः । वृश्चिकादिदशनं मणिरत्नकांचनं कलशदीपकिशोराः । वत्सहंसशशकार्भकलाभः पुत्रलाभाय ॥ विष्णुधर्मे ।
एकस्यां यदि वा रात्रौ शुभं वा यदि वाऽशुभं । पश्चाद्दृश्येत यत्तत्र तस्य पाकं विनिर्दिशेत् ॥ ॥ अथ दुःस्वप्नाः । अद्भुतसागरे देवलः ।
रक्तगंधांबरस्रग्वी गच्छेद्दै दक्षिणामुखः । खरोष्ट्रमहिषारोही त्रिमासान्नाभिजीवति ॥ श्वभ्रे यो निपतेत्स्वप्ने द्वारं चास्य पिधीयते । न
चोत्तिष्ठति यस्तस्मात्तदंतं तस्य जीवितं ॥ मार्कंडेयः । वात्या मूत्रपुरीषं तु सुवर्णं रजतं तथा । प्रत्यक्षमथवा स्वप्ने जीवेत्तु दशमासकं ॥
केशांगारं तथा भस्म उरगं निर्जलां नदीं । दृष्ट्वा स्वप्ने दशाहात्तु मृत्युरेकादशे दिने ॥ करालैर्विकटैः कृष्णैः पुरुषैरुद्यतायुधैः । पाषाणैस्ता-
ड्यते स्वप्ने सद्योमृत्युर्भवेन्नरः ॥ कृष्णरक्तांबरधरा गायंति च हसंति च । दक्षिणाशां नयेन्नारी स्वप्ने सोऽपि न जीवति ॥ वराहः ।
हरिणारोहे भ्रमणं मृत्युर्नचिरेण सूकरारोहे । उष्ट्रारोहे व्याधिर्वृद्धिः स्यात्कुंजरारोहे ॥ मात्स्ये विष्णुधर्मे च । मलिनांबरधारित्वमभ्यंगः पंकदि-
ग्धता ॥ उच्चात्प्रपतनं चैव दोलारोहणमेव च ॥ शक्रध्वजस्य पतनं पतनं शशिसूर्ययोः । देवद्विजातिभूपानां प्रजानां क्रोध एव च ॥ आलिं-
गनं कुमारीणां विधवानां च मैथुनं । हानिश्चैव स्वगात्राणां विरेकवमनक्रिया॥(विरेको मलविसर्जनं) दक्षिणाशाभिगमनं व्याधिनाऽभिभवस्तथा ।

फलोपहारश्च तथा शाड्लानां विशोधनं ॥ गृहाणां चैव भंगश्च गृहसंमार्जनं तथा । क्रीडा पिशाचक्रव्यादवानराश्वतरैरपि ॥ काषायवस्त्रधारित्वं तद्वत्क्रीडनकं तथा । तैलपानावगाहौ च रक्तमाल्यानुलेपनं ॥ एवमादीनि चान्यानि दुःस्वप्नानि विनिर्दिशेत् ॥ पराशरः । कायस्यालेपनं वा कलुषजलमषीगोमयस्नेहपंकैर्दग्जिह्वादंतबाहुप्रपतनमथवाऽनर्थशोकप्रदानि । लैंगे । मुक्तकेशो हसंश्चैव गायते नृत्यते नरः । याम्यां दिशमितो गच्छेत्तदंतं तस्य जीवितं ॥ अन्येऽप्युद्योगभीष्मद्रोणकर्णपर्वयुद्धकांडादौ भारतरामायणादौ ज्ञेयाः । मात्स्ये विष्णुधर्मे च । स्वप्नस्तु प्रथमे यामे संवत्सरफलो भवेत् । षड्भिर्मासैर्द्वितीये च त्रिभिर्मासैस्तृतीयके ॥ चतुर्थे मासमात्रेण फलं भवति नान्यथा । स्वप्नचिंतामणौ । सूर्योदये तु दृष्टः सद्यः फलदायकः स्वप्नः । पराशरः । पादद्विपादोत्तरपादवृद्ध्या वर्षार्धमासत्रयमासकालाः । निशाविभागेषु चतुर्षु दृष्टाः स्वप्ना अनिष्टेष्टफलप्रदाः स्युः ॥ वराहः । आद्ये वर्षाद्वत्सरार्धाद्द्वितीये पाको वर्षार्धार्धभागे तृतीये । मासात्पाकः शर्वरीपश्चिमांते यामे॰ भवेत्सः ॥ ऐतरेयोपनिषदि । अथ स्वप्नाः पुरुषं कृष्णं कृष्णदंतं पश्यति स एनं हंति वराह एनं हंति मर्कट एनमास्कंदयत्याशु वायुरेनं प्रवहति सुवर्णं खादित्वाऽपगिरति मध्वश्नाति बिसानि भक्षयत्येकपुंडरीकं धारयति खरैर्वराहैर्युक्तैर्याति कृष्णां धेनुं कृष्णवत्सां नलदमाली दक्षिणामुखो व्राजयति स यद्येतेषां किंचित्पश्येदुपोष्य पायसं स्थालीपाकं श्रपयित्वा रात्रीसूक्तेन प्रत्यृचं हुत्वाऽन्येनान्नेन ब्राह्मणान्भोजयित्वा चरुं स्वयं प्राश्नीयादिति । अत्र लक्षहोमः कार्यः । दुःस्वप्नाद्भुतदर्शने इति पूर्वमुक्तेः । तथा चंडीपाठोऽपि । शांतिकर्मणि सर्वत्र तथा दुःस्वप्नदर्शने । ग्रहपीडासु चोग्रासु माहात्म्यं शृणुयान्मम ॥ दुःस्वप्नं च नृभिर्दृष्टं सुस्वप्नमुपजायते इति मार्कंडेयपुराणात् । पराशरः । देवद्विजाग्निप्रतिपूजनानि मंत्रोपवासादि पवित्रसेवा । तिलान्नगोभूमिहिरण्यदानं दुःस्वप्नसंदर्शननाशनानि ॥ नद्यंबुसंस्पर्शन-

मंत्रहोमतिलप्रदानं जपनं च भूयः। शांतिर्जपो होमजलान्नदानं दुःस्वप्नहंतॄणि पयश्च गांगं ॥ तिलानामयुतं तत्र जुहुयात्तु समाहितः। तिलोसीति च मंत्रेण धेनुं दद्याच्च दक्षिणां ॥ ब्राह्मणांस्तर्पयेत्तत्र दक्षिणाभोजनादिना। दानं च विविधं देयमशुभानां विनाशने ॥ षड्भिर्मासैस्तु संपूर्णैरन्यथा मरणं भवेत्। मात्स्ये। स्तुतिश्च वासुदेवस्य तथा तस्य च पूजनं। गजेंद्रमोक्षश्रवणं ज्ञेयं दुःस्वप्ननाशनं ॥ स्तुतिः कृष्णसहस्रनामजपः। पुण्योदुःस्वप्ननाशन इत्युक्तेः। प्रयोगपारिजाते शौनकः। स्वप्नोत्पातेषु चैतेषु कालराज्यधिदेवता। पूजाविधानं पूर्वोक्तं कुर्यादत्रापि यत्नतः ॥ होमं कुर्यात्प्रयत्नेन रात्रावेव द्विजोत्तमः। प्रत्यृचं पायसं हुत्वा रात्रीव्यख्यदिति क्रमात् ॥ अष्टोत्तरशतं हुत्वा सूक्तेनानेन यत्नतः। स्वप्नाधिपतिमंत्रेण हुनेदष्टोत्तरं शतं ॥ कालरात्रिमंत्रेणेत्यर्थः। गुरवे दक्षिणां दद्याद्वस्त्रहेमपशूनपि। यद्युक्तदक्षिणादानेऽप्यशक्तो होमकर्मणि ॥ हिरण्यं दक्षिणां दद्यात्तदानीमेव वा बुधः। वस्त्रकुंभादि सकलं तद्धोत्रे प्रतिपादयेत् ॥ स एव। यद्यनिष्टफलं स्वप्नं पश्येत्तस्योच्यते विधिः। अद्यानोदेवसवितरित्यृचा पूर्वमेकया ॥ ततः परं यच्चगोषुदुःष्वप्न्यमितिपंचभिः। ऋग्भिः परं ततो योमेराजन्युज्यइति त्वृचा ॥ ऋग्भिः सर्वाभिरेताभिरुपतिष्ठेत भास्करं। एवं कृते तु दुःस्वप्नदर्शनं निष्फलं भवेत् ॥ अथस्वप्नस्येति जपन्प्रातः प्रातर्दिने दिने। दुःस्वप्नं नुदते कृत्स्नं न तस्माद्विंदते भयं ॥ अत्र श्राद्धमपि कार्यं। श्राद्धार्हद्रव्यसंपत्तौ तथा दुःस्वप्नदर्शने। जन्मर्क्षे ग्रहपीडासु श्राद्धं कुर्वीत चेच्छयेति पृथ्वीचंद्रोदये मार्कंडेयपुराणात्। एतदस्माभिर्निर्णयसिंधावुक्तं। इति शांतिरत्ने दुःस्वप्नशांतिः ॥ ॥ अथ वास्तुशांतिः। तत्कालोऽस्माभिर्निर्णयसिंधावुक्तः। किंचिदुच्यते। नारदः। सौम्यफाल्गुनवैशाखमाघश्रावणकार्तिकाः। मासाः स्युर्गृहनिर्माणे पुत्रारोग्यधनप्रदाः ॥ बादरायणः। वैशाखे फाल्गुने पौषे श्रावणे मार्गशीर्षके। सूत्रारंभः शिलान्यासः स्तंभारंभश्च शस्यते ॥ दैवज्ञवल्लभः। शोको धान्यं पंचता निष्पशुत्वं

स्वातिनैःस्व्यं संगरं मृत्युनाशः । संगरं रत्नधान्यमिति कालादर्शे पाठः । स्वं श्रीप्राप्तिं वह्निभीतिं च लक्ष्मीं कुर्युश्चैत्राद्या गृहारंभकाले ॥ मा-
त्स्ये तु । आषाढे भृत्यरत्नानि पशुवर्गमवाप्नुयात् । मार्गशीर्षे तथा धान्यं पौषे तस्करतो भयमित्याषाढः शुभः पौषश्चाशुभ उक्तः । रत्नमा-
लायां । कर्कनक्रहरिकुंभगतेऽर्के पूर्वपश्चिममुखानि गृहाणि । तौलिमेषवृषवृश्चिकयाते दक्षिणोत्तरमुखानि शुभानि ॥ गर्गः । त्र्युत्तरे मृगरोहि-
ण्योः पुष्ये मैत्रे करत्रये । धनिष्ठाद्वितये पौष्णे गृहारंभः प्रशस्यते ॥ मात्स्ये । आदित्यभौमवर्जं तु सर्वे वाराः शुभावहाः । चंद्रादित्यबलं लब्ध्वा लग्ने
शुभनिरीक्षिते ॥ स्तंभोच्छ्रायादि कर्तव्यमन्यत्तु परिवर्जयेत् । प्रासादेष्वेवमेव स्यात्कूपवापीषु चैव हि ॥ पूर्वं भूमिं परीक्षेत पश्चाद्वास्तुं प्रक-
ल्पयेत् । भूपरीक्षोक्ता तत्रैव । अरत्निमात्रे गर्ते च स्वनुलिप्ते तु सर्वतः । घृतमामशरावस्थं कृत्वा वर्तिचतुष्टयं ॥ ज्वालयेद्भूपरीक्षार्थं पूर्णं
तत्सर्वदिङ्मुखं । दीप्तौ पूर्वादि गृह्णीयाद्वर्णानामनुपूर्वशः ॥ वास्तुः सामूहिको नाम दीप्यते सर्वतस्तु यः । शुभदः सर्ववर्णानां प्रासादेषु
गृहेषु च ॥ अरत्निमात्रं गर्तं तु कृत्वा तत्खातपूरणे । अधिके श्रियमाप्नोति न्यूने हानिः समे समं ॥ कालकृष्टेऽथवा देशे सर्वबीजानि वाप-
येत् । त्रिपंचसप्तरात्रेण यत्र रोहंति तान्यपि ॥ ज्येष्ठोत्तमा कनिष्ठा भूर्वर्जनीयतरा मता । वराहः । दक्षिणपूर्वे कोणे कृत्वा पूजां शिलां न्य-
सेत्प्रथमां । शेषाः प्रदक्षिणेन स्तंभाश्चैवं समुत्थाप्याः ॥ लल्लः । स्नानं च पाकं शयनं च भोज्यं गजालयं वाजिगृहं धनस्य । देवस्य पूर्वा-
दिदिशि क्रमेण मध्ये सभा भूपनिवेशनाय ॥ आश्वलायनसूत्रे । यत्र सर्वत आपो मध्यं समेत्य प्रदक्षिणं शयनीयं परीत्य प्राच्यः स्यंदेरन्नप्रवद-
त्यस्तर्वं समृद्धं । वसिष्ठः । स्वगृहात्पश्चिमे भागे पितृस्वाग्रजमंदिरं । गृहपादा गृहस्तंभाः समाः कार्याश्च नाऽसमाः ॥ नात्युच्छ्रितं नातिनीचं
कुड्योत्सेधं यथारुचि । भित्तिः पक्केष्टकाभिर्वा दारुणाप्यथवा मृदा ॥ कार्या चित्रपटैर्वापि तृणैः पत्रैश्च न क्वचित् । गर्गः । द्वारं प्रयत्नात्कर्तव्यं

सर्वद्वारप्रतिष्ठितं । परकोणैः परद्वारैः परस्तंभैः परद्रुमैः ॥ कूपवृक्षादिभिश्चैव हतं द्वारं निरर्थकं । राजतो भयमत्युच्चैरतिनीचैस्तु चौरतः ॥ विनाशश्चातिविस्तीर्णे संवृते चाति च क्षुधा । अतिप्रमाणे दारिद्र्यमत्यल्पे व्याधितो भयं ॥ जिह्मे त्वर्था विनश्यंति कुटिले ऋणवद्भवेत् । " शां० सा० कूपस्थानं वसिष्ठसंहितायां । ऐश्वर्यं पुत्रहानिश्च स्त्रीनाशो निधनं भवेत् । संपच्छत्रुभयं सौख्यं पुष्टिः प्रागादितः क्रमात् ॥ कूपे कृते मध्यमे तु धनहानिश्च वास्तुतः । तस्मात्सम्यग्विचार्याथ कूपं कुर्वीत बुद्धिमान् ॥ तत्रैव । पुंनागाऽशोकतिलकशमीबकुलचंपकाः । दाडिमीपिप्पलीद्राक्षापिचुमर्दजपामराः ॥ बंधूकपूगपनससरोजगृहमल्लिकाः । मल्लिकापाटलीजातिनालिकेरास्तृणद्रुमाः ॥ एते गृहांगणे वृक्षाः सर्वदा मंगलप्रदाः । प्लक्षकर्कंधुवृक्षौ द्वौ गृहस्योत्तरतः शुभौ ॥ न्यग्रोधोदुंबराश्वत्थाः प्रागादिषु शुभप्रदाः । अगस्तिमातुलिंगाख्यहरिद्राकदलीस्तुषाः । स्वयं प्रजाता अप्येते दुःखशोकभयप्रदाः ॥ नारदसंहितायां । स्नानागारं दिशि प्राच्यामाग्नेय्यां पाचकालयं । याम्यायां शयनागारं नैर्ऋत्यां शस्त्रमंदिरं ॥ प्रतीच्यां भोजनगृहं वायव्यां पशुमंदिरं । भांडागारं तूत्तरस्यामैशान्यां देवमंदिरं ॥ " नारदः । प्रवेशो मध्यमो ज्ञेयः सौम्यकार्तिकमासयोः । माघफाल्गुनवैशाखज्येष्ठमासेषु शोभनः ॥ रत्नकोशे । पुष्ये धनिष्ठामृदुवारुणेषु स्वायंभुवर्क्षे तिसृषूत्तरासु । अक्षीणचंद्रे शुभदो नृपस्य तिथावरिक्ते च गृहप्रवेशः ॥ वसिष्ठः । कृत्वा शुक्रं पृष्ठतो वामतोऽर्कं विप्रान्पूज्यानग्रतः पूर्णकुंभं । रम्यं हर्म्यं तोरणस्रग्वितानैः स्त्रीभिः स्रग्वी गीतवाद्यैर्विशेच्च ॥ लग्नात्प्रागादितो दिक्षु द्वौ द्वौ राशी निवेशयेत् । एकमेकं न्यसेत्कोणे वामशुक्रं विचिंतयेत् ॥ नारदः । अकपाटमनाच्छन्नमदत्तबलिभोजनं । गृहं न प्रविशेद्धीमानापदामाकरो हि तत् ॥ मृत्पेटिकां स्वर्णरत्नधान्यशैवलसंयुतां । गृहमध्ये हस्तमात्रगर्ते वास्तुं च विन्यसेत् ॥ हेमाद्रौ मात्स्ये । एकाशीतिपदं कृत्वा रेणुभिः [ रेखाभिः ] कनकेन तु । पश्चात्पिष्टेनानुलिंपे-

स्सूत्रेणालोड्य सर्वतः ॥ दश पूर्वायता रेखा दश चैवोत्तरायताः । सर्ववास्तुविभागेषु विज्ञेया नवका नव ॥ पदस्थान्पूजयेद्देवांस्त्रिंशत्पंचदशै-
व तु । द्वात्रिंशद्बाह्यतस्तेषु पूज्याश्चांतस्त्रयोदश ॥ मध्ये नवपदो ब्रह्मा चत्वारस्त्रिपदाः स्मृताः । विंशतिस्त्वेकपदिकास्तावंतो द्विपदाः स्मृ-
ताः ॥ नामतस्तान्प्रवक्ष्यामि स्थानानि च निबोधत । ईशानकोणादिषु तान्पूजयेत्क्रमशो नरः॥ शिखी चैवाथ पर्जन्यो जयंतः कुलिशायुधः।
सूर्यः सत्यो भृशश्चैव आकाशो वायुरेव च ॥ पूषा च वितथश्चैव गृहक्षतयमावुभौ । गंधर्वो भृंगराजश्च मृगः पितृगणस्तथा ॥ दौवारिकोऽथ
सुग्रीवः पुष्पदंतो जलाधिपः । असुरः शोषपापौच रोगोऽहिर्मुख्य एव च ॥ भल्लाटः सोमसर्पौ च अदितिश्च दितिस्तथा । बहिर्द्वात्रिंशदेते
तु तदंतश्चतुरः शृणु ॥ ऐशानादिचतुष्कोणसंस्थितान्पूजयेद्बुधः । आपश्चैवाथ सावित्रो जयो रुद्रस्तथैव च ॥ मध्ये नवपदे ब्रह्मा तस्याष्टौ
च समीपगान् । साध्यानेकांतरान्विद्यात्पूर्वादौ नामतः शृणु ॥ अर्यमा सविता चैव विवस्वान्विबुधाधिपः । मित्रोऽथ राजयक्ष्मा च तथा
पृथ्वीधरः स्मृतः ॥ अष्टमश्चापवत्सस्तु परितो ब्रह्मणः स्मृताः । आपश्चैवापवत्सश्च पर्जन्योऽग्निर्दितिस्तथा ॥ पदिकानां तु वर्गोऽयं त्वेवं कोणे-
ष्वशेषतः ॥ तन्मध्ये तु बहिर्विंशद्द्विपदास्ते तु सर्वतः । अर्यमा च विवस्वांश्च मित्रः पृथ्वीधरस्तथा ॥ ब्रह्मणः परितो दिक्षु त्रिपदास्ते तु सर्व-
तः । मूर्धन्यग्निः समाविष्टो मुखे चाऽऽपः समाश्रितः ॥ पृथ्वीधरोऽर्यमा चैव स्तनयोस्तावधिष्ठितौ । वक्षःस्थले चापवत्सः पूजनीयः सदा
बुधैः ॥ नेत्रयोर्दितिपर्जन्यौ श्रोत्रेऽदितिजयंतकौ । सर्पेंद्रावंससंस्थौ तु पूजनीयौ प्रयत्नतः ॥ सूर्यसोमादयस्तद्वद्बाह्वोः पंच च पंच च । रुद्रश्च
राजयक्ष्मा च वामहस्ते समास्थितौ ॥ सावित्रः सविता तद्वद्धस्तं दक्षिणमास्थितौ । विवस्वानथ मित्रश्च जठरे संव्यवस्थितौ ॥ पूषा च पापयक्ष्मा
च हस्तयोर्मणिबंधने ॥ तथैवासुरशोषौ च वामपार्श्वे समास्थितौ । पार्श्वे तु दक्षिणे तद्वद्वितथः सगृहक्षतः । ऊर्वोर्यमांबुपौ ज्ञेयौ जान्वोर्ग-

धर्वपुष्पकौ ॥ जंघयोर्भृंगसुग्रीवौ स्फिक्स्थौ दौवारिको मृगः । जयशक्रौ तथा मेढ्रे पादयोः पितरस्तथा ॥ मध्ये नवपदे ब्रह्मा हृदये स तु पूज्यते । "अ० पु० । गृहे च नगरादौ च एकाशीतिपदैर्यजेत् ।" चतुःषष्टिपदो वास्तुः प्रासादे ब्रह्मणा स्मृतः । ब्रह्मा चतुष्पदस्तत्र कोणेष्वर्धपदास्तथा । बहिः कोणेषु चाष्टौ तु सार्धाश्चोभयसंस्थिताः ॥ विंशतिर्द्विपदाश्चैव चतुःषष्टिपदे स्मृताः । पूजामाह नारदः । वास्तुमंत्रेण वास्तुज्ञो दूर्वादध्यक्षतादिभिः । वसिष्ठः । प्रणवेनार्चयेद्वापि अथवा स्वस्वनामभिः ॥ मात्स्ये । होमस्त्रिमेखले कार्यः कुंडे हस्तप्रमाणके । यवैः कृष्णतिलैश्चैव समिद्भिः क्षीरवृक्षजैः ॥ पलाशैः खदिरैश्चापामार्गोदुंबरसंभवैः । कुशदूर्वाभवैर्वाऽपि मधुसर्पिःसमन्वितैः ॥ कार्यस्तु पंचभिर्बिल्वैर्बिल्वबीजैरथापि वा । होमांते भक्ष्यभोज्यैस्तु वास्तुदेशे बलिं हरेत् ॥ तद्वद्विशेषनैवेद्यमिदं दद्याक्रमेण तु ॥ ईशकोणे घृताक्ताद्रीं शिखिने विनिवेदयेत् ॥ ओदनं सोत्पलं [सफलं] दद्यात्पर्जन्याय घृतान्वितं । जयंताय ध्वजं पीतं पैष्टं कूर्मं च संत्यजेत् ॥ इंद्राय पंचरत्नानि पैष्टं च कुलिशं तथा । वितानकं च सूर्यायापूपं सक्तूंस्तथैव च ॥ सत्याय घृतगोधूमं मत्स्यान्दद्याद्भृशाय च । शष्कुलीश्चांतरिक्षाय दद्यात्सक्तूंश्च वायवे ॥ लाजाः पूष्णे तु दातव्या वितथे चणकौदनं । गृहक्षताय मध्वन्नं यमाय पिशितौदनं ॥ गंधौदनं च गंधर्वे भृंगे मेषस्य जिह्विकां [ भृंगराजस्य भृंगकं ]। मृगाय यावकं दद्यात्पितृभ्यः कृसरं तथा ॥ दौवारिके दंतकाष्ठं पैष्टं कृष्णबलिं तथा । सुग्रीवेऽपूपकान्दद्यात्पुष्पदंताय पायसं ॥ कुशस्तंबेन संयुक्तं तथा पद्मं च वारुणे । पिष्टं हिरण्मयं दद्यादसुराय सुरा मता ॥ घृतौदनं च शोषाय यवान्नं पापयक्ष्मणे । घृतलड्डूंस्तु रोगाय नागे पुष्पफलानि तु ॥ सर्पिर्मुख्याय दातव्यं मुद्गौदनमतःपरं । भल्लाटस्थानके दद्यात्सोमाय घृतपायसं ॥ नागाय शालिजं पिष्टमदित्यै पोलिकास्तथा । दितेस्तु पूरिका दद्यादित्येवं बाह्यतो बलिः ॥ क्षीरमापाय दातव्यमापवत्साय वै दधि । सावित्रे लड्डुकान्दद्यात्समरीचं कुशो-

दकं ॥ सवित्रे गुडपूपांश्च जयाय घृतचंदनं । विवस्वते पुनर्देद्याद्रक्तचंदनपायसं ॥ हरितालौदनं दद्यादिंद्राय घृतसंयुतं । गुडौदनं तु मित्राय
रुद्राय घृतपायसं ॥ आमं पक्कं तथा मांसं देयं स्याद्राजयक्ष्मणे । पृथ्वीधराय मांसानि कूष्मांडानि च दापयेत् ॥ शर्करापायसं दद्यादर्यम्णे
पुनरेव हि । पंचगव्यं यवांश्चैव तिलाक्षतमयं चरुं ॥ भक्ष्यं भोज्यं च विविधं ब्रह्मणे तु निवेदयेत् । एवं संपूजिता देवाः शांतिं कुर्वंति ते सदा ॥ सर्वेषां
कांचनं दद्याद्ब्रह्मणे गां पयस्विनीं । राक्षसीनां बलिर्देयः स च यादृग्यथा शृणु ॥ मांसौदनं घृतं पद्मकेसरं रुधिरान्वितं । ईशानभागमाश्रित्य
चरक्यै विनिवेदयेत् ॥ मांसौदनं सरुधिरं हरिद्रौदनमेवच । आग्नेयीं दिशमाश्रित्य विदार्यै च निवेदयेत् ॥ दध्योदनं सरुधिरं मत्स्यखंडेश्चसंयुतं ।
पीतरक्तं बलिं दद्यात्पूतनायै तु नैर्ऋते ॥ वायव्यां पापराक्षस्यै मत्स्यमांसं सुरासवं । “ वि.मा. मांसौदनं तु स्कंदाय अर्यम्णे घृतपोलिकां । मांसं सरुधिरं
दद्याज्जृंभकाय तु पश्चिमे । पिलिपिच्छाय रक्तानि पीतानि विनिवेदयेत् ॥ भक्ष्यं भोज्यं दिगीशेभ्यस्तत्तन्मंत्रैर्निवेदयेत् ।” पायसं वापि दातव्यं स्वनाम्ना
सर्वतः क्रमात् ॥ नमस्कारांतयुक्तेन प्रणवाद्येन सर्वतः । तदभावे दर्भपुष्पदध्यक्षतयुतं बलिं ॥ गोमयेनोपलिप्तायां मंडलात्पूर्वतः क्षितौ । गंधा-
दिपूर्वकं सार्वभौतिकं च बलिं हरेत् ॥ भूतेभ्यश्च पितृभ्यश्च राक्षसेभ्यस्ततः पृथक् । पिशाचेभ्योऽपि मातृभ्यो गणेभ्यश्च पृथक्पृथक् ॥ दिव्यांत-
रिक्षभौमेभ्यः प्रणवाद्यैर्नमोंतकैः । ततः सर्वौषधिस्नानं यजमानस्य कारयेत् ॥ द्विजांस्तु पूजयेद्भक्त्या ये चान्ये गृहमागताः । एतद्वास्तूपशमनं
कृत्वा कर्म समाचरेत् ॥ प्रासादभवनोद्यानप्रारंभे परिवर्तने । जीर्णोद्धारे तथोत्थाने तथा गृहनिवेशने ॥ द्वाराभिवर्तने तद्वत्प्रासादपरिवर्तने ।
पुरवेश्मप्रवेशे च सर्वदोषोपशांतये ॥ वास्तूपशमनं कृत्वा ततः सूत्रेण वेष्टयेत् । राक्षोघ्नपावमानेन सूक्तेन भवनादिकं ॥ अनेन
विधिना यस्तु प्रतिसंवत्सरं बुधः । गृहे वाऽऽयतने कुर्यान्न स दुःखमवाप्नुयात् ॥ न च व्याधिभयं तस्य न च बंधुधनक्षयः । जीवेद्वर्षशतं स्वर्गे

कल्पमेकं वसेन्नरः ॥ गृह्योक्तहोमविधिना बलिकर्म कुर्यात्प्रासादवास्तुशमने च विधिर्य उक्तः । गृह्योक्तशांतेरस्याश्च समुच्चय इत्यर्थः । संतर्पयेद्द्विजवरानथ भक्ष्यभोज्यैः शुक्लांबरः स्वभवनं प्रविशेत्सुरूपं ॥ कृत्वाऽग्रतो द्विजवरानथ पूर्णकुंभं दध्यक्षताम्रदलपुष्पफलोपशोभि । दत्वा हिरण्यवसनानि तथा द्विजेभ्यो मांगल्यशांतिनिलयं स्वगृहं विशेच्च ॥ आश्वलायनः । बीजवतोगृहान्प्रपद्येतेति । वसिष्ठसंहितायामप्येवमेव शांतिरुक्ता किंचिद्विशेषयुक्ता । तत्रैव । वास्तुपूजामकृत्वा यः प्रविशेन्नवमंदिरं । रोगान्नानाविधान् क्लेशानश्नुते सर्वसंकटान् ॥ इति शांतिरत्ने वास्तुशांतिः ॥ ॥ अथास्मत्पितृकृतो वास्तुशांतिप्रयोगः । गृहप्रवेशे प्रागुक्तप्रवेशादिनात्पूर्वे शुभे पूर्वाह्णे गृहारंभादौ तु सद्यो यजमानः सस्त्रीकः शुचिः प्राङ्मुख आचमनादिदेशकालस्मरणांते अस्य वास्तोः शुभतासिद्ध्यर्थं ( मम सपरिवारस्य अस्मिन्वास्तौ चिरकालसुखनिवाससिद्धिपूर्वकं सर्वसंकटनानाविधरोगक्लेशबंधुधनक्षयदुःखरक्षोविघ्नोपशमसंपदारोग्यपुत्रपौत्रादिधनधान्यसमृद्धिचिरजीवनस्वर्निवाससिद्धिद्वारा श्रीपर० ) सग्रहमखां वास्तुशांतिं करिष्ये इति संकल्प्य गणेशपूजादि ऋत्विग्वरणांतं कुर्यात् । तत्र ऋत्विजश्चत्वारः । तत आचार्यः पुरुषसूक्तजपांते यदत्रेतिद्वाभ्यां भूतप्रेतपिशाचाद्या अपक्रामंतु राक्षसाः । स्थानादस्माद्व्रजंत्वन्यत्स्वीकरोमि भुवं त्विमामित्यनेन च गौरसर्षपान्विकीर्य पंचगव्येन दर्भैः शुचीवोहव्येति त्रिभिरापोहिष्ठेतितृचेन च सर्वं गृहं प्रोक्ष्य स्वस्त्ययनजपादि प्रादेशकरणांतं कुर्यात् । ततो गृहादौ यजमानैकहस्तमितं चतुरस्रं सयोनि त्रिमेखलं कुंडं चतुरंगुलोत्सेधं स्थंडिलं वा विधाय तत्पूर्वतश्चतुरंगुलोन्नतं हस्तमितं वेदिद्वयं मृदा विधाय उत्तरवेदेरैशानादिकोणचतुष्टये विशंतु भूतले नागा लोकपालाश्च सर्वतः । अस्मिन् गृहेवतिष्ठंतु आयुर्बलकराः सदेतिमंत्रेण चतुरः शंकून् रोपयेत् ( मयूखे तु लोहकीलरोपणमुक्तं ) प्रतिरोपणं मंत्रावृत्तिः । प्रासादादौ तु गृहशब्दस्थाने तत्तन्नामोहनीयं । एवं प्रा-

सादेऽपीति सर्वांतेऽतिदेशात् । ततो रोपणक्रमेण शंकुपार्श्वे अग्निभ्योऽप्यथ सर्पेभ्यो ये चान्ये तत्समाश्रिताः । तेभ्यो बलिं प्रयच्छामि पुण्य-मोदनमुत्तममिति मंत्रावृत्त्या माषभक्तबलीन्दद्यात् । ततो वेद्युपरिवस्त्रे कुंकुमादिना सुवर्णरजतादिशलाकया । ॐशांतायैनमः १ यशोवत्यै० २ कांतायै० ३ विशालायै० ४ प्राणवाहिन्यै० ५ सत्यै० ६ सुमत्यै० ७ नंदायै० ८ सुभद्रायै० ९ सुरथायै० १० इत्योंकारादिनमोंतैर्नामभिः पश्चादारभ्य प्रागंता उदक्संस्थाः समा अंगुलद्वयांतरा दशरेखाः कृत्वा पुनः हिरण्यायै० १ सुव्रतायै० २ लक्ष्म्यै० ३ विभूत्यै० ४ वि-मलायै० ५ प्रियायै० ६ जयायै० ७ ज्वालायै० ८ विशोकायै० ९ इडायै० १० इतिनामभिस्तथैव दक्षिणारंभा उदगंताः प्राक्संस्था दशरेखाः कृत्वा कुंडे स्थंडिले वाऽग्निं प्रतिष्ठाप्य दक्षिणवेद्यां वस्त्रे ग्रहमंडलं विलिख्य तत्र ग्रहादीन्संस्थाप्य षोडशोपचारैः संपूज्य तदै-शान्यां कलशं संस्थाप्य वास्तुमंडलं गत्वा तत्र ऐशानकोणपदादारभ्य प्रतिमासु तंडुलपुंजेषु वा शिख्यादिदेवताः प्रणवादिनमोंतनाममंत्रै-रावाहयेत् । तत्र ऐशानकोणपदे वास्तोः शिरसि । शिखिनेनमः शिखिनमावाहयामि १ एवमग्रेऽपि । तद्दक्षिणैकपदे दक्षिण[illegible] पर्जन्यं २ तद्दक्षिणपदे तत्पश्चिमपदे च दक्षिणश्रोत्रे जयंतं ३ तद्दक्षिणपदद्वये दक्षिणांसे कुलिशायुधं ४ तद्दक्षिणपदद्वये दक्षिणबाहौ सूर्यं ५ तद्दक्षि-णपदद्वये दक्षिणबाहावेव सत्यं ६ तद्दक्षिणपदद्वये दक्षिणकूर्परे भृशं ७ तद्दक्षिणोपरिस्थैकपदे दक्षिणप्रबाहावाकाशं ८ तद्दक्षिणाग्नेयकोणपदे दक्षिणप्रबाहावेव वायुं ९ तत्पश्चिमैकपदे दक्षिणमणिबंधे पूषणं १० तत्पश्चिमपदे तदुत्तरपदे च दक्षिणपार्श्वे वितथं ११ तत्पश्चिमपदद्वये दक्षि-णपार्श्वे एव गृहक्षतं १२ तत्पश्चिमपदद्वये दक्षिणोरौ यमं १३ तत्पश्चिमपदद्वये दक्षिणजानौ गंधर्वं १४ तत्पश्चिमपदद्वये दक्षिणजंघायां भृंगराजं १५ तत्पश्चिमोपरिस्थैकपदे दक्षिणस्फिचि मृगं १६ तत्पश्चिमे नैर्ऋतकोणपदे पादयोः पितॄन् १७ तदुत्तरैकपदे वामस्फिचि दौवारिकं १८

तदुत्तरपदे तत्प्राक्पदे च वामजंघायां सुग्रीवं १९ तदुत्तरपदद्वये वामजानौ पुष्पदंतं २० तदुत्तरपदद्वये वामोरौ जलाधिपं २१ तदुत्तरपदद्वये वामपार्श्वे असुरं २२ तदुत्तरपदद्वये वामपार्श्वे एव शोषं २३ तदुत्तरोपरिस्थैकपदे वाममणिबंधे पापं २४ तदुत्तरवायव्यकोणपदे वामप्रबाहौ रोगं २५ तत्प्रागेकपदे वामप्रबाहावेवाऽहिं २६ तत्प्राक्पदे तद्दक्षिणपदे च वामकूर्परे मुख्यं २७ तत्प्राक्पदद्वये वामबाहौ भल्लाटं २८ तत्प्राक्पदद्वये वामबाहावेव सोमं २९ तत्प्राक्पदद्वये वामांसे सर्पं ३० तत्प्राक्पदद्वये वामश्रोत्रे अदितिं ३१ तत्प्रागुपरिस्थैकपदे वामनेत्रे दितिं ३२ तद्दक्षिणे शिखिपदाधःकोणपदे मुखे आपं ३३ आग्नेये वायुपदाधःकोणपदे दक्षिणहस्ते सावित्रं ३४ नैर्ऋते पितृपदाधःकोणपदे मेढ्रे जयं ३५ वायव्ये रोगपदाधःकोणपदे वामहस्ते रुद्रं ३६ मध्यगतनवकोष्ठात्मकब्रह्मस्थानसंलग्नैशानकोणपदाद्दक्षिणपदत्रये दक्षिणस्तने अर्यमणं ३७ तद्दक्षिणाग्नेयकोणपदे दक्षिणहस्ते सवितारं ३८ तत्पश्चिमपदत्रये जठरदक्षिणभागे विवस्वंतं ३९ तत्पश्चिमनैर्ऋतकोणपदे वृषणयोर्विबुधाधिपं ४० तदुत्तरपदत्रये जठरवामभागे मित्रं ४१ तदुत्तरवायव्यकोणपदे वामहस्ते राजयक्ष्माणं ४२ तत्प्राक्पदत्रये वामस्तने पृथ्वीधरं ४३ तत्प्रागैशानकोणपदे उरस्यापवत्सं ४४ मध्ये नवपदेषु हृन्नाभ्योर्ब्रह्माणं ४५। तत उत्तरे वास्तोष्पतेप्रतीत्यस्य वसिष्ठो वास्तोष्पतिस्त्रिष्टुप्। वास्तोष्पत्यावाहने०। वास्तोष्पतेप्रतिजानीह्यस्मानिति मंत्रेण सौवर्णं राजतं वा वृषवास्तुं स्थापयेत् ४६। ततो मंडलाद्बहिरैशानादिकोणेषु क्रमेण चरकीं ४७ विदारीं ४८ पूतनां ४९ पापराक्षसीं ५०। पूर्वादिदिक्षु च क्रमेण स्कंदं ५१ अर्यमणं ५२ जृंभकं ५३ पिलिपिच्छं ५४ च प्राग्वन्नाममंत्रैः संस्थाप्य प्रागाद्यष्टदिक्षु इंद्रादींस्तत्तन्मंत्रैर्नामभिर्वा संस्थाप्य तदस्त्वित्यावाह्यासनाद्युपचारैः प्रत्येकमेकत्र वा कांडानुसमयेन पदार्थानुसमयेन वाऽभ्यर्च्य

मंडलादैशान्यामकालकमव्रणं कलशं संस्थाप्य तत्र गंधौषधीयवदूर्वापंचपल्लवसप्तमृत्फलपंचरत्नानि प्रक्षिप्य वस्त्रेणाभिवेष्ट्य यवपूरितं पूर्ण-
पात्रं निधाय वरुणमावाह्य तत्र तीर्थान्यावाहयेत्। तत आचार्योऽन्वाधानं कुर्यात्। तत्र चक्षुषीआज्येनेत्यंते ग्रहान् अमुकसंख्याभिः समित्तिला-
ज्याहुतिभिः। अधिदेवताः प्रत्यधिदेवताः विनायकादीन् अमुक० समित्तिलाज्याहुतिभिः। शिख्यादिपंचचत्वारिंशद्देवताः अष्टसहस्राष्टशताष्टा-
विंशत्यष्टान्यतमसंख्याभिः औदुंबरसमित्तिल ( यव ) पायसाज्याहुतिभिः। वास्तुं वास्तोष्पतइति चतसृभिर्ऋग्भिः क्रमेण अष्टसहस्राद्यन्य-
तमसंख्याभिः औदुंबरसमित्तिल०। पुनर्वास्तुं वास्तोष्पतइति चतसृभिः वास्तोष्पतेध्रुवास्थूणामित्यनया च क्रमेण प्रत्यृचं पंचैकान्यतरसंख्या-
भिर्बिल्वाहुतिभिस्तद्बीजाहुतिभिर्वा। चरक्यादीन् अष्टोत्तरशताद्यन्यतमसंख्याभिः औदुंबरसमित्तिल०। शेषेणेत्यादिप्रणीताप्रणयनांते शिख्यादि-
देवताभ्यः प्रत्येकममुष्मैत्वेति निर्वापप्रोक्षणपूर्वकमाज्यभागांतं कुर्यात्। ततो यजमानेनाग्नेर्दक्षिणत उपविश्याऽन्वाधानोक्तदेवताभ्य उक्तसंख्यया
तत्तद्द्रव्याण्युत्सृज्ये नममेति त्यागे कृते ऋत्विग्भिः सह प्रधानहोमं कुर्यात्। स चेत्थं। नवग्रहेभ्यः क्रमेणार्कपलाशखादिरापामार्गपिप्पलोदुंबर-
शमीदूर्वाकुशाख्याः समिधः प्रत्येकमष्टशतमष्टाविंशतिमष्टौ वा प्रादेशमात्रास्तत्संख्याश्च तिलाज्याहुतीस्तत्तन्मंत्रैर्जुहुयात्। यदा तेभ्यश्चरुरपि
तदाप्याहुतिसंख्या सैव। केचित्त्वेकैका चर्वाहुतिरित्याहुः। ततोऽधिदेवताप्रत्यधिदेवताविनायकादिभ्यस्तन्न्यूनसंख्यया तथैव तत्तद्ग्रहाधिदेवता-
दिभ्यस्तत्तद्ग्रहसमिधः पालाश्यो वा। ग्रहाणामष्टपक्षे एताभ्यश्चतस्र इति शिष्टाः। अत्र तिसृभिर्दूर्वाभिरेकाहुतिरिति सख्या कार्या। कुशेषु
त्रिपत्रेणैकेति। ततः शिख्यादिभ्यः प्रागुक्तप्रणवादिस्वाहांतनामभिः प्रत्येकमष्टसहस्रमष्टशतमष्टाविंशतिमष्टौ वाऽऽहुतीः समित्तिलयवपायसाज्यै-
र्जुहुयात्। अत्र समिध उदुंबरस्य मुख्यास्तदलाभेऽश्वत्थादीनामपि। सर्वाः समिधो मधुघृतदधिभिर्मधुघृतक्षीरैर्वाऽभ्यक्ता होतव्याः। तिलाः

कृष्णा एव । पयो गोरेव । केचित्तिलेषु यवानाहुः । ततो वास्तवे वास्तोष्पतइति चतसृभिः क्रमेण समित्तिल (यव) पायसाज्यानि जुहुयात् ।
पुनर्वास्तवे वास्तोष्पत इति चतसृभिर्वास्तोष्पतेध्रुवेत्यनया च प्रत्यृचं पंच एकैकं वा घृताक्तं बिल्वं जुहुयात् । वास्तोष्पतइति चतसृणां
वसिष्ठो वास्तोष्पतिस्त्रिष्टुबंत्या गायत्री । वास्तोष्पतेध्रुवास्थूणामितीरिंबिठिर्वास्तोष्पतिर्बृहती । होमे वि॰ । ततश्चरक्यादिभ्यो मुख्यन्यूनसंख्यया
समिदादिद्रव्याणि जुहुयात् । मुख्येभ्योऽष्टसंख्यायामत्र चतुःसंख्यत्वमिति शिष्टाः । एतानि सर्वाणि द्रव्याणि हस्तेनैव होतव्यानि । ततः
स्विष्टकृदादिप्रायश्चित्तहोमांते इंद्रादिदिक्पालेभ्यो नवग्रहेभ्यो विनायकादिभ्यश्च सदीपमाषभक्तबलीन्दत्वा स्रुच्याज्यं द्वादशगृहीतं चतुर्गृहीतं
वा कृत्वा नारिकेलादिफलं तत्र संस्थाप्य मूर्धानमिति पूर्णाहुतिं जुहुयात् । मूर्धानंदिवो भरद्वाजो वैश्वानरस्त्रिष्टुप् । पूर्णाहुतिहोमे वि॰ । ततः
प्रणीतानिनयनादिकर्मशेषं समाप्य वास्तुमंडलपश्चिमदेशे ॐ शिखिनेनमः एषपायसबलिर्नममेत्येवं शिख्यादिभ्यो बलीन्दद्यात् । तान्विप्रे घृत-
युतपायसेन । क्षत्रियादौ वक्ष्यमाणैः पक्कैस्तदभावे पायसेनेति ( ततः शक्तौ सत्यां सर्वेभ्यः सुवर्णेन बलिदानं । ब्रह्मणे तु गां पयस्विनीं दद्यादि-
ति विशेषः ) ततश्चरक्यादिभ्यस्तथैव माषभक्तबलीन्दद्यात् । तत आचार्यादयः समुद्रज्येष्ठा इत्यादिवैदिकैः सुरास्त्वामित्यादिपौराणैश्च मंत्रैर्यजमानं
सामात्यं सपत्नीकं शांतिकलशोदकेनाभिषिच्य सर्वौषधीभिरनुलिप्य स्नापयेयुः । तत आचार्यो ब्रह्मस्थाने सुरूपां भूषितां स्त्रीरूपां पृथ्वीं ध्यात्वा
ॐधरायैनम इति मंत्रेण पूजयेत् । सर्वदेवमयं वास्तु वास्तुदेवमयं परमिति पठित्वा पावमानेन सूक्तेन राक्षोघ्नेन च वेष्टयेत् । छिन्ने सूत्रेऽ-
शुभं । ततो दुग्धपूर्णया जलपूर्णया च सस्तनकुंभ्या तथैव सूक्तद्वयेन धाराद्वयमविच्छिन्नं कुर्यात् । अथ यजमानो गृहस्याग्नेये आकाशपदे
जानुदघ्नमवटं खनित्वा तं गोमयेनोपलिप्य शुक्लचंदनपुष्पाक्षतादिभिरलंकृत्य शाल्यादिसप्तबीजानि दध्योदनं च प्रक्षिप्य नवकुंभं जलपूर्णं

शुक्लैकपुष्पयुतं गंधादिभिरर्चितं हस्तद्वयेनादाय जानुभ्यामवनिं गत्वा ॐनमोवरुणायेति तज्जलेन गर्तं पूरयेत् । तत्रावर्ते प्रदक्षिणे पुष्पे चोर्ध्वमुखे शुभं । वैपरीत्ये त्वशुभं । ततो मृन्निर्मितपेटिकायां सप्तबीजदध्योदनशैवालफलपुष्पाणि प्रक्षिप्य पूर्वस्थापितं वृषवास्तुं तूर्यमंगलघोषेणानीय तस्यां संस्थाप्य गंधादिभिः संपूज्य प्रार्थयेत् । पूजितोऽसि मया वास्तो होमाद्यैरर्चनैः शुभैः । प्रसीद पाहि विश्वेश देहि मे गृहजं सुखं ॥ वास्तुपुरुष नमस्तेऽस्तु भूशय्याभिरत प्रभो । मद्गृहं धनधान्यादिसमृद्धं कुरु सर्वदेति । ततः पेटिकामाच्छाद्य तस्मिन्गर्ते शनैर्निक्षिपेत् । सशैलसागरां पृथ्वीं यथा वहसि मूर्धनि । तथा मां वह कल्याण संपत्संततिभिः सहेति । गर्ते च तयैव मृदा पूरिते मृद आधिक्ये उत्तमं । साम्ये मध्यमं । न्यूनत्वे त्वधमं फलं विद्यात् । गर्तोपरिभूमिं गोमयेनोपलिप्य शुक्लगंधपुष्पाक्षतैर्भूषयेत् (धरापूजाद्येतदंतं मानसोल्लासे जयमाधवीयेऽप्यस्ति ) ततोऽग्नेः पश्चिमत आचार्यं संपूज्यालंकृतां सवत्सां गां वासोयुगं च दक्षिणां दत्वा ब्रह्मऋत्विग्भ्यो यथाशक्ति दत्वा ग्रहाणां शिख्यादिवास्तुदेवतानां च पूजां कृत्वा क्षमाप्य उत्तिष्ठ॰ यांतुदेवेति च विसर्जने कृते तत्प्रतिमाद्याचार्यहस्ते प्रतिपाद्याग्निं संपूज्य गच्छगच्छेति विसृज्य ब्राह्मणैः शांतिं पाठयित्वा ग्रहादीनां शिख्यादीनां च प्रीत्यर्थं प्रत्येकं त्रींस्त्रीनेकैकं यथाशक्ति वा ब्राह्मणान्संभोज्याशिषो गृहीत्वा सुहृद्युतो भुंजीत ॥ एवं प्रथमेऽह्नि वास्तुशांतिं विधाय द्वितीयेऽन्हि गृहप्रवेशं कुर्यात् । स चेत्थं । नवं जलपूर्णं पल्लवोपेतं दूर्वायुतं सुधालिप्तं वस्त्रवेष्टितं सपूर्णपात्रं सफलं कलशमंजलिना गृहीत्वा यजमानो ब्राह्मणान्वितः सदारपुत्रस्तूर्यघोषेण स्वस्तिसूक्तेन कनिक्रददिति च गृहं प्रविश्य प्रधानगृहमध्ये धान्योपरि तं कलशं स्थापयेत् । ततो गृहस्थैर्यार्थं पुण्याहं वाचयित्वा ब्राह्मणान्संपूज्य भोजयित्वाऽऽशिषो गृहीत्वा सुहृद्युतो भुंजीत । केचित्त्वेकाशीतिपदे एव मंडले स्थापनपूजनहोमबलिदानेषु ब्रह्मादिपूर्वत्वमिच्छंति । यथा । मध्यनवपदेषु वा-

स्तोर्त्दन्नाभ्योर्ब्रह्मा । तत्प्राक्संलग्नपदत्रये दाक्षिणस्तनेऽर्यमा । ब्रह्मपदसंलग्नदक्षिणपदत्रये जठरदक्षिणभागे विवस्वान् । तस्यैव पश्चिमसंलग्न-
पदत्रये जठरवामभागे मित्रः । तस्यैवोदक्संलग्नपदत्रये वामस्तने पृथ्वीधरः । ब्रह्मपदसंलग्ने ईशानपदे उरस्यापवत्सः । आग्नेयपदे दक्षिहस्ते
सविता। नैर्ऋतपदे वृषणयोर्विबुधाधिपः । वायव्यपदे वामहस्ते राजयक्ष्मा । आपवत्सपदसंलग्नैशानपदे मुखे आपः। सवितृपदसंलग्नाग्नेयपदे द-
क्षिणहस्ते सावित्रः। विबुधाधिपपदसंलग्ननैर्ऋतपदे मेढ्रे जयः । यक्ष्मपदसंलग्नवायव्यपदे वामहस्ते रुद्रः । मंडलैशानकोणपदात् शिख्यादीन्दि
त्यंतान्प्राग्वत् संस्थाप्य चरक्यादीन्प्राग्वदावाह्य तेनैव क्रमेण पूजनहोमादि कुर्यात् । इतरत्पूर्ववदिति ॥ ॥ प्रासादारामादौ तु चतुःष-
ष्टिपदं मंडलं कुर्यात् । तत्र । लक्ष्मीः यशोवती कांता सुप्रिया विमला शिवा सुभगा सुमतिः इडा ९ इत्येतैर्नर्मोतनामभिः प्रागग्रा उदक्संस्था
नवरेखाः कृत्वा । धन्या प्राणा विशाला स्थिरा भद्रा जया निशा विरजा विभवा ९ एतैर्नर्मोतैर्नामभिरुदगग्राः प्राक्संस्था नवरेखाः कृ-
त्वा मध्यमपदचतुष्टयमेकीकृत्य तत्कोणचतुष्टयाद्बहिः कोणचतुष्टयगतरेखाभिः पदान्यर्धीकृत्य शिख्यादीन् स्थापयेत् । तत्रैशानपददक्षिणार्धे
शिरसि शिखिनं । तद्दक्षिणसार्धपदे दक्षिणनेत्रे पर्जन्यं। तद्दक्षिणपदद्वये दक्षिणश्रोत्रे जयंतं । तद्दक्षिणपदद्वये दक्षिणांसे कुलिशायुधं। तद्दक्षि-
णपदद्वये दक्षिणबाहौ सूर्यं । तद्दक्षिणपदद्वये दक्षिणबाहावेव सत्यं । तद्दक्षिणसार्धपदे दक्षिणकूर्परे भृशं । तद्दक्षिणाग्नेयकोणपदार्धे दक्षिणप्रबा-
हावाकाशं । तत्पश्चिमार्धे दक्षिणप्रबाहावेव वायुं। तत्पश्चिमसार्धपदे दक्षिणमणिबंधे पूषणं । तत्पश्चिमपदद्वये दक्षिणपार्श्वे वितथं । तत्पश्चिमप-
दद्वये दक्षिणपार्श्वे एव गृहक्षतं । तत्पश्चिमपपदद्वये दक्षिणोरौ यमं । तत्पश्चिमपदद्वये दक्षिणजानौ गंधर्वं । तत्पश्चिमसार्धपदे दक्षिणजंघायां
भृंगराजं । तत्पश्चिमे नैर्ऋतपदार्धे दक्षिणस्फिचि मृगं । तदुत्तरार्धे पादयोः पितॄन् । तदुत्तरसार्धपदे वामस्फिचि दौवारिकं । तदुत्तरपदद्वये

वामजंघायां सुग्रीवं । तदुत्तरपदद्वये वामजानौ पुष्पदंतं । तदुत्तरपदद्वये वामोरौ जलाधिपं । तदुत्तरपदद्वये वामपार्श्वे असुरं । तदुत्तरसार्धपदे वामपार्श्व एव शोषं । तदुत्तरवायव्यपदार्धे वाममणिबंधे पापं । तत्प्राक्पदार्धे वामप्रबाहौ रोगं । तत्प्राक्सार्धपदे वामप्रबाहावेवाऽहिं । तत्प्राक्पदद्वये वामकूर्परे मुख्यं । तत्प्राक्पदद्वये वामबाहौ भल्लाटं । तत्प्राक्पदद्वये वामबाहावेव सोमं । तत्प्राक्पदद्वये वामांसे सर्पं । तत्प्राक्सार्धपदे वामश्रोत्रेऽदितिं । तत्प्रागर्धपदे वामनेत्रे दितिं । मध्यपदेष्वैशानपदोत्तरार्धे मुखे आपं । आग्नेयपदोत्तरार्धे दक्षिणहस्ते सावित्रं । नैर्ऋतपदोत्तरार्धे मेढ्रे जयं । वायव्यपदोत्तरार्धे वामहस्ते रुद्रं । मध्ये प्राक्पदद्वये दक्षिणस्तनेऽर्यमणं । आग्नेयपददक्षिणार्धे दक्षिणहस्ते सवितारं । तत्पश्चिमपदद्वये जठरदक्षिणे विवस्वंतं । नैर्ऋतपदपूर्वार्धे वृषणयोर्विबुधाधिपं । तदुत्तरपदद्वये जठरवामे मित्रं । वायव्यपदपश्चिमार्धे वामहस्ते राजयक्ष्माणं । तत्प्राक्पदद्वये वामस्तने पृथ्वीधरं । ऐशानपददक्षिणार्धे उरस्यापवत्सं । मध्यपदचतुष्टये त्वन्नाभ्योर्ब्रह्माणं । [illegible] उत्तरे वास्तोष्पतइति कलशवास्तुं । चरक्यादिस्थापनं तु पूर्ववत् । तत्र तत्र गृहपदे प्रासादादिपदमूह्यं । अपरेऽह्नि प्रवेशश्चात्र नास्ति । [illegible]त्सर्वंमाविशिष्टं । ( यद्वा ब्रह्मादीनावाहयेत् । तत्र मध्यमपदचतुष्टये त्हृदये ब्रह्मा । पूर्वपदद्वये दक्षिणस्तनेऽर्यमा । दक्षिणपदद्वये जठरदक्षिणे विवस्वान् । पश्चिमपदद्वये जठरवामे मित्रः । उत्तरपदद्वये वामस्तने पृथ्वीधरः । आग्नेयपदार्धयोर्दक्षिणोत्तरयोर्दक्षिणहस्ते सावित्रसवितारौ । नैर्ऋतपदार्धयोर्वृषणमेढ्रयोर्विबुधाधिपजयौ । वायव्यपदार्धयोर्वामहस्ते राजयक्ष्मरुद्रौ । ऐशानपदार्धयोरुरोमुखयोरापापवत्सौ । तत ऐशानपददक्षिणार्ध इत्यादि प्राग्वत् । ततो वास्तुपूजादि सर्वं पूर्ववत् ) इति श्रीमन्नारायणभट्टसूरिसूनुभट्टरामकृष्णविरचितः पौराणवास्तुशांतिप्रयोगः ॥ ॥ अथ सूत्रोक्ता वास्तुशांतिः । सा च द्विजानां पूर्वोक्तया समुच्चीयते । पूर्वोक्तायां त्वशक्तौ स्वस्वसूत्रोक्तैव कर्तव्या । तयापि सिद्धेः । येषां तु सूत्रे नास्ति

तेषां शूद्राणां च पूर्वोक्तैव। तस्याः सर्वसाधारण्येन विधानात्। अतश्च न शूद्रमात्रविषयत्वं। तस्मात्सूत्रोक्ता पूर्वया समुच्चीयते। तत्राश्वलायनीयगृह्योक्तायाः प्रयोगः। काष्ठादिनिर्मितं संपन्नं गृहं व्रीह्यादिबीजसंयुतं शोभने मुहूर्ते ब्राह्मणैः सह सतूर्यघोषं प्रविश्य शुचिदेशे चतस्रः शिलाः संस्थाप्य तासु दूर्वा निधाय तत्र मणिकसंज्ञं मृद्भांडं स्थापयेत्। पृथिव्याअधिसंभवेति। अरंगरोवावदीतित्रेधाबद्धोवरत्रया। इरामुहप्रशंसत्यनिराममपबाधतामिति वा। ततो मणिके जलमासिंचेत्। ऐतुराजावरुणोरेवतीभिरस्मिन्स्थानेतिष्ठतुमोदमानः। इरांवहंतोघृतमुक्षमाणामित्रेणसाकंसहसंविशंत्विति। ततस्तज्जलं पात्रांतर आदाय तत्र गंधदूर्वाः शमीशाखामुदुंबरशाखां वा व्रीहीन्यवान्फलं हिरण्यं च क्षिप्त्वा दूर्वाभिः शाखया च सर्वगृहं प्रागादितः प्रदक्षिणं व्रजन् शंनइंद्राग्नीइतिसूक्तेन त्रिः प्रोक्षेत्। शंनइंद्राग्नीइति पंचदशर्चस्य स[...]स्य वसिष्ठो विश्वेदेवास्त्रिष्टुप्। प्रोक्षणे वि०। सकृत्सूक्तपाठः। तत आपोहिष्ठेतित्रिभिः प्रागादितस्त्रिरविच्छिन्नामुदकधारां दद्यात्। आपोहि[...]चस्यांबरीषः सिंधुद्वीप आपो गायत्री। धारायां वि०। अत्रापि सकृत्पाठः। ततो मध्येगृहं गृह्यमग्निं प्रतिष्ठाप्य वास्तोष्पतिं चतुर्वारं चरुणा[...]प्रधानं संकीर्त्यान्वाधाय पूर्णपात्रनिधानांते वास्तोष्पतये चतुष्कृत्वस्तूष्णीं निरुप्य तथैव प्रोक्ष्याज्यभागांतं कृत्वाऽवदानधर्मेणावदाय वास्तोष्पतइति चतुर्भिर्मंत्रैः स्वाहांतैर्जुहुयात्। वास्तोष्पतइति चतसृणां वसिष्ठो वास्तोष्पतिस्त्रिष्टुबंत्या गायत्री। होमे०। वास्तोष्पतयइदंनममेति सर्वत्र त्यागः। ततः स्विष्टकृदादिहोमशेषं समाप्य शिष्टेन चरुणाऽन्येन चान्नेन शतं तदर्धं तदर्धं सामान्यपरिभाषया बहुवचनादशक्तस्त्रीन्वा ब्राह्मणान्भोजयेत्। चरोः पूर्वं तत्रान्यः पाको न कार्यः। ततः शिवंवास्तुशिवंवास्त्वितिभवंतोब्रुवंत्विति ब्राह्मणान्ब्रूयात्। तैः शिवंवास्तुशिवंवास्त्वित्युक्तः सुहृद्युतो भुंजीतेति। विशीर्णगृहसजीकरणेऽप्येतदिष्यते। साधारणशांतिवत्। प्रासादवास्तुशांतिदुर्गप्रतिष्ठाराजाभिषेकादिकं तु मत्कृते पूर्तकम-

लाकरे ज्ञेयं। इति श्रीभट्टरामकृष्णविरचित आश्वलायनगृह्योक्तवास्तुशांतिप्रयोगः ॥ ॥ अथ बौधायनसूत्रोक्ता गृहादिशांतिः । अथातो गृहशां-
तिकर्म गृहवृद्धिमिच्छन्मासि मास्यृतावृतौ संवत्सरे संवत्सरे वाऽऽपूर्यमाणपक्षे पुण्ये नक्षत्रे गृहशांतिमारभेताऽपामार्गशमीशिरीषपलाशोदुंबरसदा-
भद्रमुस्तातृणैरिंद्रवल्लया गृहं संमार्ष्टि मानस्तोकइति पंचगव्येन दर्भमुष्टिना वा संप्रोक्षति यतइंद्रस्वस्तिदाविशइति द्वाभ्यां कृणुष्वपाजइत्ये-
तेनानुवाकेन सिद्धार्थान्प्रकीर्य वास्तुमध्येऽथ देवयजनोल्लेखनप्रभृत्याग्निमुखात्कृत्वा पक्वाज्जुहोति वास्तोष्पते वास्तोष्पतइति द्वाभ्यामथाज्याहुती-
रुपजुहोति वास्तोष्पतेध्रुवास्थूणामिति षड्भिरनुच्छंदसं सावित्र्या सहस्रं जुहुयात्स्विष्टकृत्प्रभृतिसिद्धमाधेनुवरप्रदानाद् ब्राह्मणानन्नेन परिविष्य
पुण्याहं स्वस्तिऋध्दिमिति वाचयीतैवं प्रयुंजानो महांतं पोषं पुष्यति बहवः पुत्रा भवंति नैव बालाः प्रमीयंते न ग्रहा व्याधयो गृह्णंति न
दंष्ट्रिणोऽपवातयेयुर्न तस्करसर्पराक्षसपिशाचा बाधंते यदि गावः प्रतप्येरन् गवां मध्ये आहुतिसहस्रं जुहुयाद्गवां शांतिरित्याचक्षते द्विपाच्चतु-
ष्पदां चैतदेव व्याख्यातं वासो दक्षिणेत्याह भगवान्बौधायनः। इति बौधायनोक्ता गृहादिशांतिः ॥ ॥ अथ दुष्टरजोदर्शनशांतिः । तत्फल-
माह मदनरत्ने नारदः । अमारिक्ताऽष्टमीषष्ठीद्वादशीप्रतिपत्स्वपि । परिघस्य तु पूर्वार्धे व्यतिपाते च वैधृतौ ॥ संध्यासूपप्लवे विष्ट्यामशुभं
प्रथमार्तवं । उपप्लवो ग्रहणं। रोगी पतिव्रता दुःखी पुत्रिणी भोगभागिनी । पतिव्रता क्लेशभागी सूर्यवारादिषु क्रमात् ॥ वैधव्यं सुतलाभश्च मै-
त्र्यं शत्रुविनाशनं । मित्रलाभः शत्रुहानिः कुमतिर्बंधुनाशनं ॥ मरणं वंशवृद्धिश्च निराहारः कुलक्षयः । तेजश्च सुतनाशश्च कुलहानिस्तिथिक्र-
मात् ॥ गर्गः ।सुभगा चैव दुःशीला वंध्या पुत्रसमन्विता । धर्मयुक्ता व्रतघ्नी च परसंतानमोदिनी॥ सुपुत्रा चैव दुष्पुत्रा पितृवेश्मरता सदा ॥ दीना
प्रजावती चैव पुत्राढ्या चित्रकारिणी ॥ साध्वी पतिप्रिया नित्यं सुपुत्रा कष्टचारिणी । स्वकर्मनिरता हिंस्रा पुण्यपुत्रादिसंयुता ॥ नित्यं धनचयासक्ता

पुत्रधान्यसमन्विता। मूर्खा चाऽज्ञा पुण्यवती दस्रर्क्षादेः क्रमात्फलं॥ नारदः। कुलीरवृषचापांत्यनृयुक्कन्यातुलाघटाः। राशयः शुभदा ज्ञेया नारीणां प्रथमार्तवे॥ गर्गः। सुभगा श्वेतवस्त्रा स्याद्दृढवस्त्रा पतिव्रता। क्षौमवस्त्रा क्षितीशा स्यान्नववस्त्रा सुखान्विता॥ दुर्भगा जीर्णवस्त्रा स्याद्रोगिणी रक्तवासा। नीलांबरधरा नारी पुष्पिता विधवा भवेत्॥ वस्त्रे स्युर्विषमा रक्तबिंदवः पुत्रमाप्नुयात्। समाश्वेत्कन्यका चेति फलं स्यात्प्रथमार्तवे॥ ज्योतिर्निबंधे वसिष्ठः। आद्यर्तौ पौषशुक्रोर्जमधुशुचिनभस्याश्वयुक्पापवारा रिक्तापर्वाष्टषष्ठ्यः पितृपरसदने रात्रिसंध्याऽपराह्णाः। मिश्रोग्राऽमूलतीक्ष्णं विवरमनरुणाल्पाधिकास्रं च राष्ट्रोत्पातः पापस्य लग्नं न सदरुणजरन्नीलचित्रांबरं च॥ आद्यर्तौ दुर्भगा नारी विष्कंभे चेद्रजस्वला। वंध्या चैवातिगंडे च शूले शूलवती भवेत्॥ गंडे तु पुंश्चली नारी व्याघाते चात्मघातिनी। वज्रे च स्वैरिणी प्रोक्ता पाते च पतिनाशिनी॥ परिघे मृतवंध्या च वैधृतौ पतिमारिणी। शेषाः शुभावहा योगा यथानामफलप्रदाः॥ अत्र स्त्रीसंगवर्जनमाह वसिष्ठः। प्रभूतदोषे यदि दृश्यते तु रजस्तदा शांतिककर्म कार्यं। विवर्जयेदेव तथैकशय्यां यावद्रजोदर्शनमुत्तमेऽह्नि॥ शांतौ कृतायामपीत्यर्थः "शां० सा० प्रभूतदोषे वैधव्यनिःसंततित्वापादके इति केचिदर्थमाहुः। ग्रहणे तु रजोदर्शने दोषैकत्वेऽपि शांतिः। ग्रहणे चंद्रसूर्यस्य० ऋतुदर्शनादिति शौनकेन निरपेक्षस्यैव तस्य निमित्तत्वोक्तेः"। शांतिमाह प्रयोगपारिजाते शौनकः। सार्तवानां तु नारीणां शांतिं वक्ष्यामि शौनकः। तिथिवारर्क्षयोगेभ्यो लग्नमध्यमसप्तमात्॥ ग्रहेभ्यो दुःस्थितेभ्यश्च तत्तद्दोषक्षयाय च। अर्थपुत्रादिलाभाय दंपत्योरभिवृद्धये॥ पंचमेऽह्नि चतुर्थे वा ग्रहातिथ्यपुरःसरं। तस्मिन्नहनि कर्तव्य ऋतुहोमो विधानतः॥ आचार्यं वरयेत्प्राज्ञं भुवनेश्वरितुष्टये। होमार्थं च जपार्थं च वरयेदृत्विजो बहून्॥ यजमानो द्विजैः सार्धं शांतिहोमं समाचरेत्। गृहादीशानदिग्भागे देवतापूजनाय च॥ द्रोणप्रमाणधान्येन व्रीहिराशित्रयं भवेत्। "सं०

कौ० । पलं सुवर्णाश्वत्वारः कुडवः प्रस्थमाढकः । द्रोणश्च खारिका चेति पूर्वपूर्वाच्चतुर्गुणं ॥ " कुंभत्रयं न्यसेद्राशौ तंतुवस्त्रादिवेष्टितं ॥ पूरयेत्तीर्थसलिलैः प्रतिकुंभं पृथक्पृथक् । सूक्तेनाथ नवर्चेन प्रसुवआपइत्यथ ॥ ऋचा याःप्रवतस्तद्वद्वायव्या च ततः क्रमात् । मध्यकुंभे क्षिपेद्धान्यमौषधानि च हेम च ॥ ( धान्यपदेन सप्तधान्यानीति कौस्तुभादौ । धान्यंव्रीहिःस्तंबकरितिकोशाद् व्रीहय एव वा ) ततश्च पंचरत्नानि गंधपुष्पाक्षतादिकान् । औषधानि तु वक्ष्यंते मुनिभिः शांतिकर्मणि ॥ उदुंबरः कुशा दूर्वा राजीवश्वटबिल्वकाः । विष्णुक्रांता च तुलसी बर्हिषं शंखपुष्पिका ॥ शतावर्यश्वगंधा च निर्गुंडी सर्षपद्वयं । अपामार्गः पलाशश्च पनसो जीवकस्तथा ॥ प्रियंगवश्च गोधूमा व्रीहयोऽश्वत्थ एव च । क्षीरं च दधि सर्पिश्च पद्मपत्रं तथोत्पलं ॥ कुरंटकत्रयं गुंजा वचाभद्रकमुस्तकाः । द्वात्रिंशदौषधानीह यथासंभवमाहरेत् ॥ गजाश्वरथ्यावल्मीकसंगमन्हदगोकुलात् । राजद्वारप्रदेशाच्च मृदमानीय निक्षिपेत् ॥ मृत्तिकाश्चौषधादीनि तन्मंत्रेण क्षिपेत्क्रमात् । कुंभोपरि न्यसेत्पात्रं कांस्यमृद्वेणुताम्रजं ॥ तस्योपरि न्यसेद्वस्त्रे प्रतिमां भुवनेश्वरीं । तन्मूल्यं वा न्यसेत्तत्र इंद्राणीं च पुरंदरं ॥ आचार्यः पूजयेद्देवीमंगाद्यावरणानि च । अन्यो वा पूजनं कुर्याद् गायत्र्या मंत्रसारया ॥ इंद्राणीं पूजयेद्देवीमिंद्राणीमासुनारिषु । इंद्रत्वावृषभं त्विंद्रमुपचारैः प्रपूजयेत् ॥ तन्मध्यमं स्पृशन्कुंभं मंत्रेण भुवनेश्वरीं । जपेद्गायत्रीमाहोमाच्छ्रीसूक्तं च जपेत्ततः ॥ " सं० कौ० । जपेदाचार्य आहोमा० । अन्वाधानात्मकहोमतंत्रारंभपर्यंतमित्यर्थः । अनेनैवाशयेनाऽन्वाधानंततःकुर्यादितिश्लोके आचार्यग्रहणं । ततश्चाग्निस्थापनादिग्रहपूजांतं यजमानेन कर्तुमुचितं " स्पृशन्वै दक्षिणं कुंभमृत्विगेको जपेदथ । चत्वारि रुद्रसूक्तानि चतुर्मंत्रोत्तराणि तु ॥ संस्पृशन्नुत्तरं कुंभं श्रीरुद्रं रुद्रसंख्यया । शंनइंद्राग्नीसूक्तं च तत्रैव संस्पृशन् जपेत् ॥ ( रुद्रं नमस्तेरुद्रेत्याद्येकादशानुवाकात्मकं । यत्तु चमकसहितस्य जप इत्युक्तं तत्प्रा-

मादिकं । महाग्निचयनस्थविनियोगपर्यालोचनया तस्य रुद्रत्वाभावात् । एकादशिन्यादौ तु वाचनिकं चमकस्य रुद्रांगत्वं । अतएव भट्टभास्करीयभाष्ये वायुपुराणे चमकंनमकंचैवेत्यादिना पृथगुपादानेन विनियोग उक्तः । आपस्तंबोऽपि । रुद्रान्जपेत्प्रथमोत्तमौवेति । रुद्रान्नमस्ते-रुद्रमन्यवइत्यादीनेकादशानुवाकानिति तद्व्याख्यायां हरदत्तः) कुंभस्य पश्चिमे देशे शांतिहोमं समाचरेत् । अन्वाधानं ततः कुर्याद्धोमतंत्रं समारभेत् ॥ पूर्णपात्रनिधानांतं कृत्वाचार्यो द्विजैः सह । दूर्वाभिस्तिलगोधूमैः पायसेन घृतेन च ॥ ( जुहुयादिति शेषः ) पायसं श्रपयेत्तत्र सावित्रं च हविश्च तत् । " सं० कौ० श्रपयेत्तत्रेति गृहसिद्धान्नग्रहणं व्यावर्त्यते । सावित्रंचहविश्चतदित्यत्र तच्छब्देन हविश्चतुष्टयकाले सवित्र-इति चतुर्थ्यंतेन देवतोद्देशः कार्य इति ज्ञाप्यते । लभ्यते चात्र मंत्रसंवादः । पार्वणेष्विति तद्धितविसंवादिनो मंत्रात्पूर्णमासायेत्युद्देशोंऽगीक्रि-यते याज्ञिकैः । संवादे तु कैमुतिकन्यायेनैव तत्सिद्धिः । नचैवं भुवनेश्वरीदेवत्यहोमाभावापत्तिः । वाचनिकत्वेनेष्टत्वात् । वस्तुतस्तु षुञ् प्राणिप्रसव इतिधातोर्व्युत्पन्नः सावितृशब्दः प्रकृतफलदातृत्वेन प्रथमप्रयाजे समिच्छब्दोऽग्नेरिव लिंगानादरेण भुवनेश्वरीप्रतिपादक इति न विरोधः " कृत्वाज्यभागपर्यंतं हविरुद्वासनादिकं । तिसृभिश्चैव दूर्वाभिरेकैका चाहुतिर्भवेत् ॥ आभिर्मंत्रप्रयुक्ताभिर्गायत्र्या जुहुयात्क्रमात् । ( मंत्रप्रयुक्ताभिरित्यनेनैव सिद्धे गायत्र्येति वचनं गायत्र्यैव जुहुयादिति नियमार्थं । तेनैंद्राणींद्रमंत्राभ्यां न होमः । अभिमंत्र्यप्रयुक्ताभि-रितिपाठेऽपि सावित्रीकरणकाभिमंत्रणस्य दृष्टार्थत्वाय स एवार्थः । गायत्र्यैवतुहोतव्यमिति वक्ष्यमाण एवकारोऽप्यत्रानुकूल एव ) अष्टोत्तर-सहस्रं वा शतमष्टोत्तरं तु वा ॥ अष्टाविंशतिभिर्वापि अथवा चाष्टसंख्यया । (एतदर्धमधिकं संस्कारेंदौ शौनककारिकाख्यमूलग्रंथे चोपलभ्यते । अत्र खलेकपोतन्यायेन भावनायां संख्याया द्रव्याणां च प्रथममन्वये जाते पार्ष्ठिकान्वयकाले पूर्वान्वितसंख्यायामेव यावद्द्रव्यसंबंधः । प्रतिद्रव्यं

संख्यासंबंधे पूर्वान्वितसंख्याबाधापत्तेः। अतो न संख्यावृद्धिः। यत्र त्वावृत्तिबोधकं पृथक्पदाद्यस्ति तत्र विशेषवचनाद्भवत्वावृत्तिः । नतु तदभावे सेति बोध्यं ) तिलमिश्रैश्च गोधूमैर्द्रव्येणाज्याहुतीर्हुनेत् ॥ ( घृताक्ततिलमिश्रगोधूमैरित्यर्थः ) जुहुयात्पायसेनैव आज्येन च हुनेत्क्रमात् । ( क्रमादित्युक्तेरेकद्रव्यहोमोत्तरमपरद्रव्यहोमः ) हविश्चतुष्टयेनैव प्रत्येकं समसंख्यया ॥ गायत्र्यैव तु होतव्यं हविरत्र चतुष्टयं । " शां० सा० एवकारादिंद्राणींद्रयोर्होमो नास्तीति केचित् । सं० रे० अनादिष्टत्वादाज्येन तयोर्होमं इत्यनंतोक्तिस्तु होमविध्यभावान्नादर्तव्या " ततः स्विष्टकृतं हुत्वा रज्जुप्रहरणं तथा । अयाश्चेत्यादिभिर्हुत्वा समुद्रादूर्मिसूक्ततः ॥ संततामाज्यधारां तां पूर्णाहुतिमथाचरेत् । परिषेचनपर्यंतं होमशेषं समापयेत् ॥ अथाभिषेकं कुर्वीत प्रतिकुंभस्थितोदकैः । ऋतुमत्याः स्त्रियाः शांत्यै दंपतिभ्यां सुखाय च ॥ आपोहिष्ठेति नवभिः सूक्तेन च ततः परं । इंद्रोअंगतृचेनैव पावमानीः क्रमेण तु ॥ उभयंशृणवच्चनः स्वस्तिदाविश एकया । त्र्यंबकेण मंत्रेण जातवेदस एकया ॥ समुद्रज्येष्ठा इत्यादि त्रायंतामिति च त्रिभिः । इमाआपस्तृचेनैव देवस्यत्वेतिमंत्रतः ॥ ( अत्र सार्वविभक्तिकेन तसिना प्रथमत्यागे कारणाभावात्तृतीयैकवचनमेवोपस्थाप्यते । तथाच देवस्यत्वेतिमंत्रेणेत्यर्थः । स च स्वशाखीय एव । तत्त्यागे मानाभावात् । तैत्तिरीयमंत्रोपादानं तु विचार्यं ) मंत्रेणाथ तमीशानं त्वमग्नेरुद्र इत्यथ । तमुष्टुहीति मंत्रेण भुवनस्यपितरं तथा ॥ यातेरुद्रेतिमंत्रेण शिवसंकल्पमंत्रतः । ( अत्रापि प्राग्वदेव व्याख्यानं । नच स्वशाखायां शिवसंकल्पमंत्राभाव इति वाच्यं । प्राचीनतरपुस्तकेष्वष्टमाष्टकेऽष्टमाध्याये २४ वर्गांते शिवसंकल्पसूक्तस्य परिशिष्टत्वेनोपलंभात् । ऋग्विधाने तस्मिन्नेव स्थले तद्विनियोगोपलंभाच्च ) इंद्रत्वावृषभं पंचमंत्रैश्चैवाभिषेचयेत् ॥ सा च वस्त्रांतरं धृत्वा पुनश्चोपवसेत्सती । ( उपवसनं समीपोपवेशनं ) विप्रान्विधिवदभ्यर्च्य गंधपुष्पाक्षतादिभिः ॥ धेनुं पयस्विनीं दद्यादा-

चार्याय च भूषणैः। (सहेति शेषः। दक्षिणात्वेन चास्या न दक्षिणांतरं। अनत्रस्थाप्रसंगात्। अतएव धेनुन्यायेनाऽदक्षिणत्वे प्राप्ते सदक्षिणनित्य.ग्रि-
मवचने प्रतिप्रसवकरणात्सदक्षिणत्वमिति प्रयोगरत्ने) सदक्षिणमनड्वाहं प्रदद्याद्रुद्रजापिने ॥ ऋत्विग्भ्यश्चाथ सर्वेभ्यो दद्याद्वै दक्षिणां ततः।
महाशांतिं प्रजप्याथ विप्राशीर्वचनं ततः ॥ (प्रजप्येति क्त्वाप्रत्ययेन समानकर्तृकत्वाद्यजमान एव शांतिं जपेत्। भट्टास्तु ब्राह्मणा महा-
शांतिं जपेयुरित्यूचुस्तद्विचार्यमिति संस्कारेंदौ) ब्राह्मणान्भोजयेत्पश्चाद्भुंजीत स्वजनैः सह। [इयं शांतिः पंचमेऽह्निचतुर्थेवेति पूर्वमुक्तेः
रजोनिवृत्त्यनुरोधेन चतुर्थे पंचमे वा दिने विष्ट्यादिरहिते कार्या। तदतिक्रमे तु शुद्धे कालेऽग्निचक्रादि विचार्य। एवमन्यत्राप्युक्तकाले
शांतिकादौ। कौस्तुभे तु बहुतरदोषदुष्टे प्रथमरजोदर्शने द्वितीयादिरजोदर्शनोत्तरं स्वल्पदोषदुष्टे तु तदनंतरमेव गर्भाधानप्रत्यासन्नदिने सा
कार्येत्युक्तं। तत्राद्यः पक्षः प्रभूतदोषेयदिदृश्यतइत्यादिवसिष्ठोक्तिविरुद्धः। द्वितीयस्तु पंचमेह्निचतुर्थेवेति स्वोदाहृतमूलविरुद्ध इति स्पष्टमेव)
मदनरत्ने ऋषिपुत्रसंहितायां त्वन्यथोक्तं। प्रथमार्तवदोषाणां शांतिं कुर्यादनंतरं। तिथिनक्षत्रवारादिदेवानां पूजनं पृथक् ॥ स्थंडिलं कारये-
त्तत्र चतुराढकशालिभिः। आढकं तंडुलाश्चैव आढकौ तिलयावकौ ॥ आढकस्तु। पलं च कुडवः प्रस्थ आढको द्रोणखारिके। धान्यमा-
नेषु बोद्धव्याः क्रमशोऽमी चतुर्गुणा इत्युक्तं। उपर्युपरि संस्तीर्य तन्मध्ये नलिनं लिखेत् ॥ दर्भैराच्छाद्य तन्मध्ये कर्णिकायां न्यसेद्घटं।
पुण्योदकेन संपूर्णमौषधादिमसन्वितं ॥ सहदेव्येकपत्रा च विष्णुक्रांता सभद्रिका। बिल्वपत्रसहितानि चूर्णयित्वा न्यसेद्घटे ॥ कुष्ठं मांसी
हरिद्रे द्वे भुरा शैलेयचंदनं। वचा कचोरमुस्ताख्याः सर्वौषध्यो दश स्मृताः ॥ गजाश्वरथ्यावल्मीकसंगमाद्ध्रदगोकुलात्। राजद्वारप्रदेशाच्च
मृदमानीय निक्षिपेत् ॥ पंचगव्यं च कुमुदं तथा मुक्ताफलानि च। वज्रवैदूर्यमाणिक्यविद्रुमानि विनिक्षिपेत् ॥ एवं कुंभं समासाद्य अर्चे-

द्रंधादिभिः शुभैः। सावित्र्या च जपेत्कुंभं स्पृशन्दशशतं द्विजः॥ एवं प्रदोषकाले तु तोयैस्तां स्नापयेत्ततः। स्वगृह्योक्तविधानेन होमं कुर्यात्प्रयत्नतः॥ दूर्वाज्येन तिलैर्हुत्वा सावित्र्या चैव मंत्रतः। अष्टोत्तरसहस्रं वा शतमष्टाधिकं तथा॥ तत्संख्यया त्रिधा हुत्वा दूर्वाज्येन तिलैः समं॥ ब्राह्मणान्भोजयित्वा तु देवं संपूजयेत्ततः। एवं समासतः प्रोक्तं नारीणां प्रथमार्तवे इति। तत्रैव नारदः। तिथ्यृक्षवारा निंद्याश्चेच्छेफकर्म निवारयेत्। दोषाधिक्ये गुणाल्पत्वे तत्तथापि न कारयेत्॥ दोषाल्पत्वे गुणाधिक्ये शेफकर्म समाचरेत्॥ निंद्यर्क्षतिथिवारेषु यत्र पुष्पं प्रदृश्यते॥ तत्र शांतिं प्रकुर्वीत घृतदूर्वातिलाक्षतैः। प्रत्येकं शतमष्टौ च गायत्र्या जुहुयात्ततः॥ स्वर्णगोभूतिलान्दद्यात्सर्वदोषापनुत्तये। भर्ता तत्राभिगमनं त्यजेदाशस्तदर्शनादिति। शिष्टैः प्रयोगपारिजाताद्यैश्च शौनकोक्तैवादृता। इति दुष्टरजोदर्शनशांतिः॥ ॥ अथ प्रयोगः। कर्ता रजोदर्शनात्पंचमे चतुर्थे वा दिने विष्ट्यादिरहिते तदसंभवे दिनांतरे वा शांतियोग्ये ऋतुस्नातया पत्न्या सहित उपविश्याचमनादिदेशकालस्मरणांते मम पत्न्याः प्रथमरजोदर्शने अमुकदुष्टमासादिसूचितसकलानिष्टपरिहारपूर्वकमर्थपुत्रादिलाभदंपत्यभिवृद्धिद्वारा श्रीप० सग्रहमखां शौनकोक्तां रजोदर्शनशांतिं करिष्ये इति संकल्प्य गणेशपूजादिऋत्विग्वरणांतं कुर्यात्। तत आचार्यः प्रादेशांते गृहस्यैशान्यां मध्ये दक्षिणोत्तरयोश्च महीद्यौरिति मंत्रावृत्त्या भूमिं स्पृशेत्। एवमुत्तरक्रियास्वपि मंत्रावृत्तिः क्रमश्च। ( भूमिप्रार्थनपक्षे तु सकृदेव पाठः ) ओषधयःसमिति द्रोणप्रमाणव्रीहिभी राशित्रयं कृत्वा तत्राकलशेष्विति कुंभत्रयं संस्थाप्य प्रसुवआपइतिनवर्चस्य सूक्तस्य सिंधुक्षिन्नद्यो जगती । याःप्रवतो वसिष्ठो नयः शक्करी। कलशेषूदकपूरणे०। इति जलेनापूर्य गंधद्वाराभिति गंधं त्रिषु क्षिप्त्वा मध्यकुंभे गायत्र्या यवव्रीहितिलमाषकंगुश्यामाकमुद्रान् व्रीहीनेव वा क्षिप्त्वा याओषधीरित्युदुंबरादिद्वात्रिंशदौषधानि यथासंभवं वा क्षिपेत्। ततस्त्रिष्वपि गायत्र्यादिमंत्रैः पंचगव्यानि। स्योने-

ति मृदः । कांडात्कांडादिति दूर्वाः । अश्वत्थेवइति पंचपल्लवान् । याःफलिनीरिति पुष्पफले । सहिरत्नानीति पंचरत्नानि । हिरण्यरूपइति हि-
रण्यं च निक्षिप्य युवासुवासाइति वस्त्रेणावेष्टय पूर्णादर्वीति यवादिपूरितं पूर्णपात्रत्रयं निधाय तदुपरिनिहितवस्त्रत्रये कुंकुमादिनाऽष्टदलानि
कृत्वा मध्यकुंभे प्रतिमायां तन्मूल्ये वा गायत्र्या विश्वामित्रो भुवनेश्वरी गायत्री । भुवनेश्वर्यावा० । मंत्रांते अंगाद्यावरणसहितां भुवनेश्वरी-
मावाह्य दक्षिणकुंभे प्रतिमायां तन्मूल्ये वा इंद्राणीं वृषाकपिरिंद्राणी पंक्तिः । इंद्राण्यावा० । इतींद्राणीं । उत्तरकुंभे प्रतिमायां तन्मूल्ये वा इं-
द्रत्वा विश्वामित्र इंद्रो गायत्री । इंद्रावाह० । इतींद्रं चावाह्यावाहनक्रमेण तत्तन्मंत्रैः कांडानुसमयेन षोडशोपचारैः संपूज्य मध्यकुंभं स्पृश-
न्गायत्रीमष्टसहस्रं १०८ वा जपित्वा श्रीसूक्तं जपेत् । हिरण्यवर्णामिति पंचदशर्चस्य सूक्तस्य कर्दमानंदचिक्लीतेंदिरासुताः श्रीरनुष्टुप् । पंचमी
षष्ठी च त्रिष्टुभौ चतुर्थ्यंत्या च प्रस्तारपंक्तिः । जपे० । तत एकऋत्विग्दक्षिणकुंभं स्पृशन्रुद्रसूक्तानि जपेत् । कद्रुद्रायेति नवर्चस्य सूक्तस्य क-
ण्वो रुद्रो गायत्र्यंत्यानुष्टुप् । इमारुद्रायतवसइत्येकादशर्चस्य सूक्तस्य कुत्सो रुद्रो जगत्यंत्ये त्रिष्टुभौ । आतेपितरितिपंचदशर्चस्य सूक्तस्य गृ-
त्समदो रुद्रस्त्रिष्टुप् । इमारुद्रायेतिचतुर्ऋचस्य सूक्तस्य वसिष्ठो रुद्रो जगत्यंत्या त्रिष्टुप् । आवोराजानं वामदेवो रुद्रस्त्रिष्टुप् । तमुष्टुह्यत्री रुद्र-
स्त्रिष्टुप् । भुवनस्यपितरमृजिश्वा रुद्रस्त्रिष्टुप् । त्र्यंबकं वसिष्ठो रुद्रोनुष्टुप् । जपे० । अथान्यऋत्विगुत्तरकुंभं स्पृशन्नेकादशवारं रुद्रं जपित्वा शं-
नइंद्राग्नीसूक्तं जपेत् । नमकानुवाकानामग्नी रुद्रो महाविराट् । शंनइति पंचदशर्चस्य सूक्तस्य वसिष्ठो विश्वेदेवास्त्रिष्टुप् । जपे० । तत आचार्यः
स्थापितदेवतानां पश्चिमतः स्थंडिलेऽग्निं तदैशान्यां ग्रहांश्च प्रतिष्ठाप्यान्वादध्यात् । तत्र ग्रहादिकीर्तनांते भुवनेश्वरीं ( सवितारं वा ) प्रधान०
दूर्वातिलमिश्रगोधूमपायसाज्यैः प्रतिद्रव्यं अष्टसहस्राष्टशताद्यन्यतमसंख्याहुतिभिः । इंद्राणीमिंद्रं च तैरेव द्रव्यैः प्रत्येकं प्रतिद्रव्यं अष्टशताष्टाविं-

शत्यष्टान्यतमसं॰ ( इंद्राणींद्रयोर्होमाभावपक्षे तु तदुत्कीर्तनं न कार्यं ) शेषेणेत्यादिप्रणीतास्थापनांते उक्तदेवताभ्यतूष्णीं निर्वापप्रोक्षणपूर्वक-
माज्यभागहोमांते यजमानेन त्यागे कृते यथान्वाधानं होमं कुर्यात्। तत्र तिसृभिर्दूर्वाभिर्दधिमध्वाज्याक्ताभिरेकाहुतिः । दूर्वाहोमोत्तरं घृताक्त-
तिलमिश्रगोधूमैर्मृगीमुद्रया होमः। तदुत्तरं पायसेन तदुत्तरं घृतेनेत्येवं होमं कृत्वा स्विष्टकृदादिप्रायश्चित्तहोमांते दिक्पालेभ्यो नवग्रहेभ्यो
विनायकादिभ्यो भुवनेश्वरींद्राणींद्रेभ्यः क्षेत्रपालाय च सदीपमाषभक्तबलीन्दत्वा समूद्रादूर्मिरित्येकादशर्चस्य सूक्तस्य वामदेवोग्निस्त्रिष्टुवंत्या
जगती । पूर्णाहुतौ॰ । इति पूर्णाहुतिं हुत्वा संस्रावहोमादिशेषं समाप्य धृतनववस्त्रं प्राङ्मुखं यजमानं तादृशीं च पत्नीं सऋत्विगाचार्य
उदङ्मुखः कुंभचतुष्टयोदकैरभिषिंचेत् । तत्र मंत्राः । आपोहिष्ठेति नवर्चस्य॰। इंद्रोअंगेतितिसृणां गृत्समद इंद्रो गायत्री। त्रिभिष्ट्वमितिसप्तानां
वसिष्ठ आद्यानां त्रयाणामग्निस्ततो विश्वेदेवा गायत्री। द्वितीयांऽत्ये द्वे चानुष्टुभौ । उभयंश्रृणवद्वर्ग इंद्रो बृहती। स्वस्तिदाविशः शास इंद्रोऽनु-
ष्टुप् । त्र्यंबकं वसिष्ठो॰। जातवेदसे कश्यपोग्निर्जातवेदास्त्रिष्टुप्। समुद्रज्येष्ठाइति चतसृणां वसिष्ठ आपस्त्रिष्टुप् । त्रायंतामिति तिसृणां सप्तर्षय
आपोनुष्टुप् । इमाआपइतितिसृणामैतरेय आपोऽनुष्टुब्जगत्यनुष्टुभः। देवस्यत्वेत्यस्यैतरेयः सविताऽश्विनौ पूषा च यजुः। तमीशानं गोतम
ईशानो जगती । त्वमग्नेरुद्रो गृत्समदोग्निर्जगती । तमुष्टुह्यत्री रुद्रस्त्रिष्टुप्। भुवनस्यपितरमृजिश्वा रुद्रस्त्रिष्टुप्। यातेरुद्र कश्यपो रुद्रः स्वरा-
डनुष्टुप्। यज्जाग्रतइति षण्णां प्रजापतिर्मनस्त्रिष्टुप्। इंद्रत्वेतिपंचानां विश्वामित्र इंद्रो गायत्री । अभिषेके॰ । ततो ग्रहादिमंत्रैः सुरास्त्वा-
मित्यादिपौराणैस्तच्छंयोरिति चाभिषेकांते सुस्नातौ दंपती शुक्लांबरगंधमाल्यादि धृत्वोपविशेतां। तत आचार्येण देवतोत्तरपूजने कृते यजमानो
विभूतिं धृत्वाचार्यादीन्गंधादिभिः संपूज्याचार्याय धेनुं रुद्रजापिने सदक्षिणमनड्वाहं ऋत्विभ्यो यथाशक्तिदक्षिणामाचार्याय विसर्जितदेवतापीठं

च दत्वा महाशांतिमंत्रान्जपेत् । ते च । आनोभद्राः० स्वस्तिनोमिमीता० शंनइंद्राग्नी० त्यमूषुवाजिनमिति सूक्तानि तच्छंयोरिति च जप्त्वा शक्त्या विप्रान्संभोज्य भूयसीं दत्वाऽऽशिषो गृहीत्वा कर्म समापयेत् । । ग्रहणे रजोदर्शने तु विशेषः । "प्र०र० स चोपरागस्य पौर्णमास्यमावास्याभ्यामविनाभावात्तदरितिक्तवारादौ दुष्टे प्रागुक्तशांत्या समुच्चीयते । निमित्तभेदात् । अदृष्टार्थत्वाच्च । प्रत्यक्षविध्यभावे तत्कार्यकारित्वाऽनवगमेनामनहोमैर्नारिष्टहोमानामिवानया तन्निवृत्तियोगात् । ग्रहणमात्रे त्वियमेव । अत्र च पुनःश्रवणाभावान्नवग्रहमखः कृताकृत इति विवेकः । यदा तु पूर्वशांतिसमुच्चयस्तदा कालैक्यात्कर्त्रैक्याच्चाग्नेयादिवत्तंत्रप्रयोगः" तत्र केवलायाः प्रयोगः पूर्वं ग्रहणजननशांत्युक्तो द्रष्टव्यः। तत्र मम पत्न्याः चंद्रोपरागे प्रथमरजोदर्शनसूचितेत्यादि संकल्पे वाच्यं । सूर्यग्रहणे तु सूर्योपराग इत्यूहः । पूर्वोक्तशांतिसमुच्चये तु मम पत्न्याः अ० दुष्टमासादौ चंद्रोपरागे च ( सूर्योपरागे इत्यूहः ) प्रथमरजोदर्शनसूचित० सग्रहमखां शौनकोक्तां दुष्टमासादिविहितां ग्रहणविहितां शांतिं च समानतंत्रेण करिष्य इति संकल्प्य ऋत्विक्पूजांतं कुर्यात् । तत आचार्यः भुवनेश्वर्यादिपूजातः प्राक्पश्चाद्वा तत उदीच्यां चंद्रादीन्संपूज्य यथोपक्रमं निर्वापहोमाभिषेकान्कुर्यादिति विशेषः । अन्यत्सर्वं समानं । इति शांतिरत्ने दुष्टरजोदर्शनशांतिप्रयोगः ॥

॥ अथ नारायणबलिः संगृह्यते । " ध० सिं० कृतेऽपि गर्भाधाने यदि गर्भोत्पत्त्यभावो मृतापत्यता वा तदा प्रतिबंधकप्रेतोपद्रवनिवृत्त्यर्थं नारायणबलिर्नागबलिश्च कार्यः । तत्र नारायणबलिः शुक्लैकादश्यां पंचम्यां श्रवणे वा । कालांतरानुपलब्धेः " गृह्यपरिशिष्टे । अथ नारायणबलिरर्वाक्संवत्सराच्छुद्धे काले शुक्लैकादश्यां स्नातः शुचौ देशे विष्णुं वैवस्वतं यमं च यथावदभ्यर्च्य तदग्रे तिलमिश्रान्मधुघृतप्लुतान्दशपिंडान्विष्णुरूपं प्रेतं ध्यायन् काश्यपगोत्रदेवदत्तायंतेपिंडइति दक्षिणाग्रेषु दर्भेषु दक्षिणामुखः प्राचीनावीती पराचीनेन पाणिना दत्वा

पिंडान्गंधादिभिरभ्यर्च्य प्रवाहणांतं कृत्वा नद्यां क्षिपेदथ रात्रावयुग्मान्ब्राह्मणान्निमंत्र्योपोषितः श्वो मध्यंदिने विष्णुमभ्यर्च्य प्रेतमुद्दिश्य ब्राह्मणानेकोद्दिष्टविधिना भोजयित्वा तृप्तेषु ब्राह्मणसमीपे पिंडविधिना निनयनांतं तूष्णीं कृत्वा विष्णवे ब्रह्मणे शिवाय सपरिवाराय यमाय विष्णोऽयंतेपिंड इत्येवं चतुरः पिंडान्भुक्तशेषेण दक्षिणसंस्थं दत्वाऽथ पंचमं काश्यपगोत्र देवदत्तेति प्रेतं ध्यात्वा तद्रूपाय विष्णवे विष्णोऽयंत इति दद्यादथाचांतान्दक्षिणया संतोष्यैकं तेषु गुणवंतं विशेषतो वस्त्राभरणगोहिरण्यैः प्रेतबुद्ध्या तोषयेदथ तैः पवित्रपाणिभिः प्रेताय काश्यपगोत्रायायंते तिलोदकांजलिरिति तिलोदकं दापयित्वाऽनेन नारायणबलिकर्मणा भगवान्विष्णुरिमं देवदत्तं शुद्धमपापं कर्मार्हं करोत्विति वाचयित्वा विसृजेदेष नारायणबलिकल्प एवमन्यामपि स्वाभिमतदेवतां यमद्वितीयायामभ्यर्च्य विधिमिमं कुर्यात्सोऽप्येनमपापं करोति नतु पुण्यकृतोऽपि बलिमेनमकृत्वा पारलौकिकं कुर्यात्कृतं नोपतिष्ठतेंऽतरिक्षे विनश्यति तस्माद्यथासंभवमपि कुर्यात् । इति नारायणबलिः ॥

॥ अथ प्रयोगः । कर्ता शुक्लैकादश्याद्युक्तकाले नदीतीरे देवालयादौवा स्नातः आचमनादिदेशकालस्मरणांते मदीयकुलाभिवृद्धिप्रतिबंधकप्रेतस्य प्रेतत्वनिवृत्तिद्वारा श्री० नारायणबलिं करिष्ये इति संकल्प्य महीद्यौरित्यादिविधिना कलशद्वयं संस्थाप्य तत्र प्रतिमयोः विष्णुं वैवस्वतं यमं चावाह्य पुरुषसूक्तेन यमायसोमामिति च षोडशोपचारैः पूजयेत् ( अत्र क्वचित्परिशिष्टपुस्तके विष्णुं ब्रह्माणं शिवं वैवस्वतं यमं प्रेतं चेति पाठांतरोपलंभात् कुंभपंचके पंचाप्येते पूज्या इति केचिदाहुः ) ततस्तत्पूर्वतो दर्भेण तूष्णीं लेखामुल्लिख्य तत्र दक्षिणाग्रान्कुशानास्तीर्य तेषु शुंधतांविष्णुरूपीप्रेत इति दशस्थानेषु दक्षिणसंस्थमपो निनीय दक्षिणामुखः प्राचीनावीती सव्यं जान्वाच्य काश्यपगोत्रदेवदत्तप्रेत विष्णुदैवतायंतेपिंडइति कुशेषु मधुघृततिलयुतान्दशपिंडान् विष्णुरूपं प्रेतं ध्यायन्पितृतीर्थेन दत्वा गंधादिभिस्तानभ्यर्च्य विसृज्य नद्यादौ

क०

क्षिपेत् । तस्यामेव रात्रौ श्वः करिष्यमाणश्राद्धे क्षणः क्रियतामित्येकं त्रीन्पंच वेत्येवमयुग्मान्दिप्राग्निमंत्र्योपोषितो जागरं कुर्यात् । श्वोभूते मध्याह्ने विष्णुं संपूज्य विष्णुरूपं प्रेतं ( विष्णुब्रह्मशिवयमप्रेतान्वा ) उद्दिश्यैकोद्दिष्टविधिना प्रादप्रक्षालनादितृप्तिप्रश्नांते ब्राह्मणसमीपे पिंडपितृयज्ञवद्रेषाकरणाद्यवनेजनांतं तूष्णीं कृत्वा विष्णवे ब्रह्मणे शिवाय सपरिवाराय यमायेति चतुरः पिंडान्नाममंत्रैर्दत्वा विष्णुरूपं प्रेतं ध्यायन् काश्यपगोत्र देवदत्तविष्णुरूपप्रेतायंतेपिंडइति पंचमं पिंडं च दत्वाऽर्चनादिप्रवाहणांते आचांतान्दक्षिणादिभिः संतोष्य तेष्वेकस्मै गुणवते प्रेतबुद्ध्या वस्त्राभरणगोहिरण्यानि दत्वा भवंतः प्रेताय तिलोदकांजलिदानं कुर्वंत्विति विप्रान्वदेत् । ते च पवित्रपाणयः कुशतिलतुलसीदलयुतं जलांजलिं प्रेताय काश्यपगोत्राय विष्णुरूपिणेऽयं तिलोदकांजलिरिति दद्युः । ततः अनेन नारायणबलिकर्मणा भगवान्विष्णुरिमं देवदत्तं प्रेतं शुद्धमपापं कर्मार्हं करोत्विति तान्वाचयित्वा विसृज्य कर्म समाप्य स्नात्वा भुंजीत । अत्र निर्णयसिंधौ कश्चिद्विशेष उक्तः । स तत्रैव ज्ञेयः । इति नारायणबलिप्रयोगः ॥ ॥ अथ नागबलिः । शौनकः । अथ वक्ष्यामि सर्पस्य संस्कारविधिमुत्तमं । सिनीवाल्यां पौर्णमास्यां पंचम्यां वाऽपि कारयेत् ॥ कृतसर्पवधो विप्रः पूर्वजन्मनि वा यदि । स्नात्वागत्य ततो ब्रह्मदंडं दद्याद्द्विजातये ॥ वधमाख्यापयेत्पापी चरेत्कृच्छ्रांश्चतुर्दश । वधेऽत्र जन्मनि कृते लोहदंडं द्विजातये ॥ दद्यात्पापविशुद्ध्यर्थं श्रोत्रियाय कुटुंबिने । विप्राय दंडमूल्यं वा ह्यभावे सति दापयेत् ॥ याज्ञवल्क्योऽप्याह । उरगेष्वायसोदंडइति । मूल्यमाह । निष्कत्रयं द्विनिष्कं वा निष्कमेकं कनीयसं । अनुमत्यादिकर्तॄणां निष्कमर्धं तदर्धकं ॥ इदं स्वर्णरौप्ययोः शक्त्या ज्ञेयं । वित्तशाठ्यं न कुर्वीत दद्याद्वित्तानुसारतः । अनुज्ञां च गुरोर्लब्ध्वा संस्कुर्यात्तदनंतरं ॥ तथा । प्रियंगुव्रीहिगोधूमतिलपिष्टेन वा पुनः ।

कृत्वा सर्पाकृतिं शूर्पे निधाय प्रार्थयेदहिं ॥ मंत्रस्तु । एहि पूर्वमृत सर्प अस्मिन्पिष्टे समाविश । संस्कारार्थमहं भक्त्या प्रार्थयामि समाहितः ॥
वस्त्रोपवीतगंधाद्यैः संपूज्य च हरेद्बलिं । प्रक्षालितांघ्रिपाणिस्तु आचम्योपविशेद्भुवि ॥ कुर्यात्संस्कारसंकल्पं प्राणायामपुरःसरं । यज्ञोपवीति-
ना कार्यं सर्पसंस्कारकर्म तु ॥ लौकिकाग्निं प्रतिष्ठाप्य समिदाधानमाचरेत् । ततोऽग्नेरग्निदिग्भागे भूमिं संप्रोक्ष्य वारिभिः ॥ चितिं कृत्वाऽथ
संस्तीर्य कुशैराग्नेयकाग्रकैः । पर्युक्ष्याग्निं परिस्तीर्य परिषिच्य समर्चयेत् ॥ कृत्वेध्माधानमाघारौ चक्षुषी च यथाविधि । सर्पं गृहीत्वा यत्नेन
चितिमारोपयेत्सुधीः ॥ अपः स्पृष्ट्वा स्पृशेच्छ्रोत्रं गत्वा चाग्निसमीपतः । स्रुवेण जुहुयादाज्यमग्नौ व्याहृतिभिस्त्रिभिः ॥ सर्पास्ये जुहुयादाज्यं
व्याहृत्या च समस्तया । आज्यशेषं स्रुवेणैव सर्पदेहे निषेचयेत् ॥ स्रुवं तत्र निधायाथ यज्ञपात्राणि बर्हिषि । चितिं प्रदक्षिणीकृत्य प्रणिपत्य
क्षमापयेत् ॥ चमसस्थैर्जलैः सर्पं व्याहृत्याऽभ्युक्ष्य पाणिना । अग्नेरक्षाणइत्यनया सर्पायाग्निं प्रदापयेत् ॥ उपतिष्ठेद्दह्यमानं नमोस्तुसर्पमंत्रतः ।
ज्ञानतोऽज्ञानतो वापि कृतः सर्पवधो मया ॥ पूर्वजन्मनि वा सर्प तत्सर्वं क्षंतुमर्हसि । इति संप्रार्थ्य नागेंद्रं स्नात्वागत्य ततः पुनः॥क्षीराज्येन
ततश्चाग्निं प्रोक्ष्य व्याहृतिभिस्त्रिभिः । हुते सर्पे जलेनाग्निमभिषिंचेत्ततःपरं ॥ नास्थिसंचयनं कुर्यात्स्नात्वाचम्य गृहं व्रजेत् । ब्रह्मचर्यादिकं
कार्यं त्रिरात्राशौचमिष्यते ॥ सचैलं तु चतुर्थेऽह्नि स्नात्वा विप्रान्समर्चयेत् । सर्पोऽनंतस्तथा शेषः कपिलो नाग एव च । कालिकः शंखपाल-
श्च भूधरश्चेति वै क्रमात् ॥ पादप्रक्षालनं कुर्यादेभिर्नामपदैः पृथक् । गंधपुष्पाक्षतैर्धूपदीपाद्यैरर्चयेद्द्विजान् ॥ घृतपायसभक्ष्यैश्च द्विजानष्टौ तु भो-
जयेत् । "सं० कौ० । इति सर्पस्य संस्कारं कृत्वा नागबलिं ततः । दत्वा स्वर्णमयं नागमपराधात्प्रमुच्यते ॥ ब्रह्मलोके च ये सर्पाः ० सदा ॥
एवं स्तुत्वा तु नागेंद्रमाचार्याय निवेदयेत् । आचार्याय ततो दद्यात्कृष्णां गां वृषभेण हि । वस्त्रालंकरणैः पूज्य ब्राह्मणं ब्राह्मणीं तथा । पूजये-

द्विधिवद्भक्त्या ब्राह्मणांश्चैव तोषयेत् ॥ ” एवं कृते विधाने तु सर्पसंस्कारकर्मणि । सर्पहिंसाकृतात्पापान्मुच्यते नात्र संशयः ॥ कृत्वा सर्पस्य संस्कारमनेन विधिना नरः । विरोगो जायते क्षिप्रं संततिं लभते शुभां ॥ उपद्रवविनिर्मुक्तो भवेत्सर्पप्रसादतः । ततः पूर्वकृतं कर्म याति नाशं महामते । क्षीणपापो विशुद्धात्मा विष्णुलोके महीयते ॥ इति नागबलिः ॥

॥ अथ प्रयोगः । स च सिनीवाल्यां पौर्णमास्यां पंचम्यामाश्लेषायुतनवम्यां वा कार्यः । कर्ता पर्षदं प्रदक्षिणीकृत्य नत्वा तदग्रे गोवृषनिष्क्रयं निधाय मम सभार्यस्येहजन्मनि जन्मांतरे वा ज्ञानतोऽज्ञानतो वा जातसर्पवधोत्थदोषपरिहारार्थं प्रायश्चित्तमुपदिशंतु भवंतः । सर्वेधर्मविवेक्तारइत्यादिश्लोकांते प्रणम्य तैरुपदिष्ट आचमनादिदेशकालस्मरणांते पर्षदुपदिष्टं चतुर्दशकृच्छ्रप्रायश्चित्तं अमुकप्रत्याम्नायेनाहमाचरिष्यामीति संकल्प्य वपनादिविधिना तदाचरेत् । वपनासंभवे द्विगुणः कृच्छ्रप्रत्याम्नायः । पुनर्देशकालौ स्मृत्वा मम सर्पवधदोषपरिहारार्थं ब्राह्मणाय लोहदंडदानं ( तन्मूल्यदानं वा ) करिष्ये इति संकल्प्य ब्राह्मणं संपूज्य स्वस्त्यस्तु० इमं लोहदंडं सर्पवधदोषहरं सदक्षिणं अ० शर्मणे ब्राह्मणाय तुभ्यमहं० इति दत्वा गुर्वनुज्ञां लब्ध्वा प्रियंगुव्रीहिगोधूमतिलान्यतमपिष्टेन सर्परूपं कृत्वा शूर्पे निधाय प्रार्थयेत् । एहि पूर्वमृत सर्प अस्मिन्पिष्टे समाविश । संस्कारार्थमहं भक्त्या प्रार्थयामि समाहितः ॥ ततः भुजंगेशायविद्महे सर्पजातायधीमहि । तन्नोनागःप्रचोदयादित्यावाहनादिषोडशोपचारैः संपूज्य नत्वा भोः सर्प इमंबलिंगृहाणममाभ्युदयंकुर्विति पायसादिना बलिं दत्वा हस्तौ पादौ प्रक्षाल्याचामेत् । ततः शुद्धभूमावुपविश्य प्राणानायम्य देशकालौ स्मृत्वा मम सभार्यस्येह०हारशुभसंततिप्राप्तिद्वारा श्री सर्पसंस्कारकर्म करिष्ये इति संकल्प्य स्थंडिले लौकिकाग्निं प्रतिष्ठाप्य ध्यात्वाऽन्वादध्यात्-चक्षुषीआज्येनेत्यंते अग्निं वायुं सूर्यं चाज्येन सर्पमुखे प्रजापतिमाज्येन सर्पमाज्यशेषेण च सद्यो यक्ष्ये इत्युक्त्वा समिधावग्नावाधायाग्ने

राग्नेयभागे प्रोक्षितभूमौ चितिं कृत्वाऽग्निं चितिं च परिसमुह्याग्नेयाग्रदर्भैः परिस्तीर्य परिषिच्य षट्पात्रासादनाद्याज्यभागहोमांते सर्पं चित्या-
मारोप्य जलं श्रोत्रं च स्पृष्ट्वाऽग्निसमीपमेत्य व्यस्तसमस्तव्याहृतीनां प्रजापतिरग्निवायुसूर्यप्रजापतयो गायत्र्युष्णिगनुष्टुब्बृहत्यः। सर्पसंस्कार-
प्रधानाज्यहोमे०। इति व्यस्ताभिरग्नौ समस्ताभिश्च सर्पमुखे आज्यं हुत्वा हुतशेषमाज्यं स्रुवेणैव सर्पदेहे निषिंचेत्। नात्र स्विष्टकृदादि।
स्रुवं तत्रैव निधाय यज्ञपात्राणि बर्हिषि निदध्यात्। ततश्चितिं प्रदक्षिणीकृत्य प्रगम्य क्षमाप्य हस्तगृहीतैश्चमसजलैः भूर्भुवःस्वरिति सर्पं
पाणिनाऽभ्युक्ष्य अग्नेरक्षाणो वसिष्ठोऽग्निर्गायत्री। सर्पायाग्निदाने०। इति मंत्रेण सर्पायाग्निं दत्वा नमोअस्तुसर्पेभ्यो०। येदोरोचने०। याइषवो०।
कर्कोटक नमस्तेस्तु शंखपाल नमोस्तु ते। नागराज महादेव दिव्यरूपाय ते नमः॥ अफणाः फणिनो ये च सविषा निर्विषाश्च ये। सर्वेऽ-
वटेशयाः सर्पाः पुण्यमूर्ते नमोस्तु ते॥ त्वया भगवते श्रीमद्वासुदेवाय निर्मितं। स्वभोगेनैव पर्यंकमायतं भोगिनां वर॥ त्वयेयं जगती स्वा-
मिन्स्वफणामंडलोपरि। धृतैकदेशे ह्यणुवत्तस्मै तुभ्यं नमोनम इति दह्यमानं सर्पमुपस्थाय। त्राहि त्राहि महाभोगिन्सर्पोपद्रवदुःखतः। संततिं
देहि मे पुण्यां निर्दुष्टां दीर्घदेहिनीं॥ प्रपन्नं पाहि मां भक्त्या कृपालो दीनवत्सल। ज्ञानतोऽज्ञानतो वाऽपि कृतः सर्पवधो मया॥ ज-
न्मांतरे तथैतस्मिन्मत्पूर्वैरथवा विभो। तत्पापं नाशय क्षिप्रमपराधं क्षमस्व मे॥ इति प्रार्थ्य स्नात्वाऽऽगत्य व्याहृतिभिः क्षीराज्येनाग्निं संप्रोक्ष्य
हुते सर्पे जलेनाग्निं सिंचेत्। नात्राऽस्थिसंचयनं। इदं सर्वं सव्येनैव कार्यं। ततः स्नात्वाचम्य गृहं गच्छेत्। कर्ता सभार्यस्त्रिरात्रमाशौचं
ब्रह्मचर्यं च कुर्यात्। बौधायनमते त्वेकरात्राशौचं। ततश्चतुर्थेऽहनि सचैलं स्नात्वाऽष्टौ विप्रान्निमंत्र्याचम्य प्राणानायम्य देशकालौ संकीर्त्य
नागबल्यंगविहितं ब्राह्मणभोजनं करिष्ये। सर्पस्वरूपिणे ब्राह्मणाय इदंते पाद्यं। अनंतस्वरूपिणे० शेषस्व० कपिलस्व० नागस्व० कालि-

कस्त्र० शंखपाल० भूधरस्त्र० इति क्रमेण तेषां पादौ प्रक्षाल्य तानाचमय्य स्वयं चाचम्य विप्रान् प्राङ्मुखानुदङ्मुखान्वोपवेश्य सर्पस्वरू०
इदमासनं । आस्यतां । एवममनंतादिभ्यः । सर्पस्थाने क्षणः क्रियतां । प्राप्नोतु भवान् । एवमनंतस्थाने इत्यादि । भोः सर्पस्वरूप अयंते
गंधः । ततः पुष्पधूपदीपवस्त्रादि । एव मन्येषामपि पूजनांते चतुरस्रमंडलेषु पात्राणि निधाय पायसक्षभ्यादीन्परिविष्य सावित्र्या प्रोक्ष्य
परिषिच्य सर्पायेदमन्नममृतरूपं परिविष्टं परिवेक्ष्यमाणं चातृप्तेः स्वाहा संपद्यतां नमम । एवं सर्वेषां । आचांतेषु प्रागग्रास्तीर्णदर्भेषु भोः सर्प
अयंतेबलिर्नममेत्यादिनाममंत्रैः पिंडरूपान्पायसबलीन्दत्वा वस्त्रादिभिरभ्यर्च्य विप्रेभ्यस्तांबूलं दक्षिणां च दत्वा विसर्जयेत् । इदमपि सर्वं
सव्येनैव कार्यं । ततो महीद्यौरित्यादिविधिना स्थापितकलशे सौवर्णं नागं षोडशोपचारैरभ्यर्च्य प्रार्थयेत् । ब्रह्मलोके च ये सर्पाः शेषनाग-
पुरोगमाः । नमोस्तु तेभ्यः सुप्रीताः प्रसन्नाः संतु ते सदा ॥ विष्णुलोके च ये सर्पा वासुकिप्रमुखाश्च ये । नमोस्तु तेभ्यः० ॥ रुद्रलोके च ये
सर्पास्तक्षकप्रमुखास्तथा । नमोस्तु० ॥ खांडवस्य तथा दाहे स्वर्गं ये च समाश्रिताः । नमो०॥ सर्पसत्रे च ये सर्पा आस्तिकेनाभिरक्षिताः ।
नमोस्तु०॥ मलयाद्रौ च ये सर्पाः कर्कोटकमुखाश्च ये । नमो०॥धर्मलोके च ये सर्पा वैतरण्यां समाश्रिताः । नमो०॥ ये सर्पाः पर्वतीयेषु दरी-
संधिषु संस्थिताः । नमोस्तु०॥ ग्रामे वा यदि वाऽरण्ये ये सर्पाः प्रचरंति हि । नमो०॥ पृथिव्यामथ ये सर्पा ये सर्पा बलिसंस्थिताः । नमो० ॥ र-
सातले च ये सर्पा अनंताद्या महाबलाः । नमो० ॥ एवं स्तुत्वाचार्यं संपूज्य कृतस्य सर्पसंस्कारकर्मणः सांगतासिद्ध्यर्थं इमं हैमं नागं कल-
शवस्त्रदक्षिणायुतं अ० शर्मणे आचार्याय तुभ्यमहं० इति दत्वा तस्मै सवृषभां कृष्णां गां तन्निष्क्रयं वा दद्यात् । ततो दंपती वस्त्रालंका-
रादिभिर्यथाविभवमन्यान्ब्राह्मणांश्च संपूज्य यस्यस्मृत्या० । मया यत्कृतं सर्पसंस्काराख्यं कर्म तद्भवतां विप्राणां वचनाच्छ्रीपरमेश्वरप्रसादात्सर्वं

परिपूर्णमस्तु । तथास्त्विति ते ब्रूयुः । ततः कर्मणः सांगतायै यथाशक्ति ब्राह्मणान्संभोज्य भूयसीं दत्वा कर्म समापयेत् । इति नागबलिप्रयोगः ॥

॥ अथ कन्यावैधव्यहरः कुंभविवाहविष्णुमूर्तिदानविधिः । मार्कंडेयः । बालवैधव्ययोगे तु कुंभद्रुप्रतिमादिभिः । कृत्वा लग्नं ततः पश्चात्कन्योद्वाह्येति चापरे ॥ तत्र पुनर्भूत्वाऽभाव उक्तो विधानखंडे । स्वर्णांबुपिप्पलानां तु प्रतिमा विष्णुरूपिणी । तया सह विवाहे तु पुनर्भूत्वं न जायते ॥ सूर्यारुणसंवादे । विवाहात्पूर्वकाले च चंद्रताराबलान्विते । विवाहोक्तेन विधिना कुंभेन सह चोद्वहेत् ॥ सूत्रेण वेष्टयेत्पश्चाद्दशतंतुविधानतः । कुंकुमालंकृतं देहं तयोरेकांतमंदिरे ॥ " सं० कौ० आसमंताच्चंदनपुष्पादिभिरलंकृतं कुंभं कन्यादेहं च वेष्टयेदित्यर्थः । मंदिरे तदुभयसंबंधिनि " ततः कुंभं च निःसार्य प्रभज्य सलिलाशये । ततोऽभिषेचनं कुर्यात्पंचपल्लववारिभिः ॥ कुंभप्रार्थना तत्रैव । वरुणांगस्वरूपाय जीवनानां समाश्रय । पतिं जीवय कन्यायाश्चिरं पुत्रसुखं कुरु ॥ देहि विष्णो वरं देव कन्यां पालय दुःखतः । ततोऽलंकारवस्त्राढ्यां वराय प्रतिपादयेत् ॥ मूर्तिदानमपि तत्रैवोक्तं । ब्राह्मणं साधुमामंत्र्य संपूज्य विविधार्हणैः । तस्मै दद्याद्विधानेन विष्णोर्मूर्तिं चतुर्भुजां ॥ शुद्धवर्णसुवर्णेन वित्तशक्त्याऽथवा पुनः । निर्मितां रुचिरां शंखगदाचक्राब्जसंयुतां ॥ दधानां वाससी पीते कुमुदोत्पलमालिनीं । सदक्षिणां च तां दद्यान्मंत्रानेतानुदीरयेत् ॥ यन्मया जन्मनि प्राचि भ्रंत्वा पतिसमागमं । विषोपविषशस्त्राद्यैर्हतो वाऽतिविरक्तया ॥ प्राप्तुवंत्या महाघोरं यशःसौख्यधनापहं । वैधव्याद्यतिदुःखौघं तन्नाशाय सुखाप्तये ॥ बहुसौभाग्यलब्ध्यै च महाविष्णोरिमां तनुं । सुवर्णनिर्मितां शक्त्या तुभ्यं संप्रददे द्विज ॥ अनघाऽद्याहमस्मीति त्रिवारं प्रजपेत्ततः । एवमास्त्विति तस्योक्तिं गृहीत्वा स्वगृहं विशेत् ॥ ( स्वगृहंविशेदित्युक्त्या गृहाद्बहिर्देवालयादाविदं कर्म कार्यमिति भाति) ततो वैवाहिकं कुर्याद्विधिं दाता मृगीदृश इत्यादि निर्णयसिंधौ ज्ञेयं । इति कुंभविवाहविष्णुमूर्तिदान-

विधिः ॥ ॥ अथ प्रयोगः। विवाहात्पूर्वं चंद्रताराबलान्विते शुभदिने पूर्वाह्णे पित्रादिः कर्ता आचमनादिदेशकालस्मरणांते अस्याः अ० नाम्न्याः मम कन्याया जन्मकालीनग्रहादियोगसूचितप्रबलवैधव्यदोषनिवृत्तिपूर्वकभर्तृचिरजीवनपुत्रादिसुखप्राप्तिद्वारा श्रीपर० कुंभेन सह विवाहं करिष्ये इति संकल्प्य गणेशपूजनादिनांदीश्राद्धांते महीद्यौरित्यादिविधिना कुंभं प्रतिष्ठाप्य पूर्णपात्रे प्रतिमयोः तत्त्वायामीति वरुणं इदंविष्णुरिति विष्णुं चावाह्य षोडशोपचारैः संपूज्य। वरुणांगस्वरूपाय जीवनानां समाश्रय। पतिं जीवय कन्यायाश्चिरं पुत्रसुखं कुरु। देहि विष्णो वरं देव कन्यां पालय दुःखतइति प्रार्थ्य विष्णुरूपिणे कुंभाय इमां कन्यां वस्त्राद्यलंकृतां श्रीरूपिणीं समर्पयामीति समर्प्य कुंभं कन्यां च कुंकुमेनालंकृत्य दुग्धाक्तद्विगुणशुक्लसूत्रेण परित्वेत्यादिभिरधस्तादुपरिष्टाच्च मंत्रावृत्त्या कुंभं कन्यां च पंचवारं परिवेष्ट्य सूत्रे निष्काश्य वरुणं विष्णुं च विसृज्य पूर्णपात्रमपसार्य कुंभं नीत्वा जलाशये प्रभज्य पंचपल्लवैः शुद्धोदकेन समुद्रज्येष्ठाइत्यादिभिः कन्यामभिषिच्य सोपस्करं प्रतिमाद्वयं कन्यावाससी च सदक्षिणानि ब्राह्मणाय दत्वा कर्म समाप्य ब्राह्मणान्भोजयेदिति। यद्वा ब्राह्मणाय विष्णुमूर्तिदानं कुर्यात्। तद्यथा। कन्या स्नात्वा देवालयादिपुण्यदेशे गत्वा आचम्य देशकालौ संकीर्त्य मम जन्मकालीन० श्रीप० महाविष्णुमूर्तिदानं करिष्ये इति संकल्प्य गणेशपूजनांते उक्तलक्षणसुवर्णप्रतिमायां महाविष्णुं षोडशोपचारैः संपूज्य श्रुतशीलादिसंपन्नं ब्राह्मणमाहूय यथाविभवं वस्त्रादिभिः संपूज्य तस्मै विष्णुमूर्तिं दद्यात्। तत्र मंत्राः। यन्मया जन्मनि प्राचि त्वेत्या पतिसमागमं। विषोपविषशस्त्राद्यैर्हतो वाऽतिविरक्तया॥ प्राप्नुवंत्या महाघोरं यशःसौख्यधनापहं। वैधव्याद्यतिदुःखौघं तन्नाशाय सुखाप्तये॥ बहुसौभाग्यलब्ध्यै च महाविष्णोरिमां तनुं। सुवर्णनिर्मितां शक्त्या तुभ्यं संप्रददे द्विजेति। ततस्तत्सांगतायै यथाशक्तिसुवर्णं दक्षिणां दत्वा अनघाद्याहमस्मीति विर्वदेत्।

एवमस्त्विति ब्राह्मणोऽपि त्रिः । ततो ब्राह्मणभोजनं संकल्प्य कर्म समाप्य स्वगृहं गच्छेत् । इति शांतिरत्ने कुंभविवाहविष्णुमूर्तिदानप्रयोगः ॥ ॥ अथार्कविवाहः । तृतीयमानुषीविवाहनिषेधात्तदर्थमर्कविवाह उच्यते । प्रयोगपारिजाते मात्स्ये । उद्वहेद्व्रतिसिद्ध्यर्थं तृतीयां न कदाचन । मोहादज्ञानतो वापि यदि गच्छेत्तु मानुषीं ॥ नश्यत्येव न संदेहो गर्गस्य वचनं यथा । संग्रहे । तृतीयां यदि चोद्वाहेत्तर्हि सा विधवा भवेत् । चतुर्थादिविवाहार्थं तृतीयेऽर्कं समुद्वहेत् ॥ आदित्यदिवसे वापि हस्तर्क्षे वा शनैश्चरे । शुभे दिने वा पूर्वाह्णे कुर्यादर्कविवाहकं ॥ ब्राह्मे । ग्रामात्प्राच्यामुदीच्यां वा सपुष्पं फलसंयुतं । परीक्ष्य यत्नतोऽधस्तात्स्थंडिलादि यथाविधि । कृत्वाऽर्कपुरतस्तिष्ठन् प्रार्थयेत्तं द्विजोत्तमः ॥ त्रिलोकवासिन्सप्ताश्व छायया सहितो रवे । तृतीयोद्वाहजं दोषं निवारय सुखं कुरु॥ तत्राध्यारोप्य देवेशं छायया सहितं रविं । वस्त्रैर्माल्यैस्तथा गंधैस्तन्मंत्रेणैव पूजयेत् ॥ ( तन्मंत्र आकृष्णेनेतीति प्रांचः । वस्तुतस्तु अर्कमभ्यर्च्यसौर्याचेत्यत्र शौनकेन सौरीविधानात् आकृष्णेनेत्यस्य लिंगेनानुक्रमण्या च सौरीत्वाभावाद्देवतावाचके पर्यायशब्दप्रयोगाभावस्य मीमांसकसंमतत्वाच्च सौर्यचैव पूजा युक्ता ) श्वेतवस्त्रेण संवेष्ट्य तथा कार्पासतंतुभिः । गंधपुष्पैः समभ्यर्च्य अद्भिर्लिंगैरभिषिच्य च । गुडौदनं तु नैवेद्यं तांबूलं च समर्पयेत् । चतुर्थे दिवसेऽतीते पूर्ववत्तां प्रपूज्य च । विसृज्य होममग्नौ च उद्वहेन्मानुषीं परां ॥ व्यासः । स्नात्वाऽलंकृतवासास्तु रक्तगंधादिभूषितं । सपुष्पफलशाखैकमर्कगुल्मं समाश्रयेत् ॥ सल्लक्षणेन संयुक्तमर्कं संस्थाप्य यत्नतः । अर्ककन्याप्रदानार्थमाचार्यं कल्पयेत्पुरा ॥ अर्कसंनिधिमागत्य तत्र स्वस्त्यादि वाचयेत् । नांदीश्राद्धं हिरण्येन अष्टवर्गान्प्रपूजयेत् ॥ ( महालये०मघासुचेति सिंधुस्थनिगमोक्त्या नांदीश्राद्धस्य द्वादशदैवतत्वे मात्रादिवर्गचतुष्टयार्थमष्टब्राह्मणेष्वष्टवर्गान् द्विरावृत्तान्मात्रादींश्चतुरो वर्गान्पूजयेदित्यर्थः ) पूजयेन्मधुपर्केण वरं विप्रस्य हस्ततः । ( विप्र

आचार्यः ) यज्ञोपवीतं वस्त्रं च हस्तकर्णादिभूषणं । उष्णीषं गंधमाल्यादि वरायास्मै प्रदापयेत् ॥ स्वशाखोक्तप्रकारेण मधुपर्कं समाचरेत् । ( त्रिप्रहस्तेन वरं पूजयेदित्युक्तेः प्रदापयेदित्युक्तेश्च संकल्पाद्याचार्यवरणांतमन्यकर्तृकमिति भाति । प्रयोगेषु तु वरकर्तृकमेवोक्तं ) अर्कं प्रदक्षिणं कुर्वन् जपेन्मंत्रमिमं बुधः ॥ मम प्रीतिकरा येयं मया सृष्टा पुरातनी । अर्कजा ब्रह्मणा सृष्टा अस्माकं परिरक्षतु ॥ पुनः प्रदक्षिणीकुर्यान्मंत्रेणानेन मंत्रवित् ॥ नमस्ते मंगले देवि नमः सवितुरात्मजे । त्राहि मां कृपया देवि पत्नी त्वं म इहागता ॥ अर्क त्वं ब्रह्मणा सृष्टः सर्वप्राणिहिताय च । वृक्षाणामादिभूतस्त्वं देवानां प्रीतिवर्धनः ॥ तृतीयोद्वाहजं पापं मृत्युं चाशु विनाशय ॥ ततश्च कन्यावरणं त्रिपुरुषं कुलमुच्चरेत् ॥ आदित्यः सविता चार्कः पुत्री पौत्री प्रपौत्रिका ॥ गोत्रं काश्यप इत्युक्तं लोके लौकिकमाचरेत् ॥ मुहूर्तेऽर्कं निरीक्षेत स्वस्तिसूक्तमुदीरयन् ॥ आशीर्भिः सहितैः कुर्यादाचार्यप्रमुखैर्द्विजैः । अथाचार्यं समाहूय विधिना तन्मुखाच्च तं । प्रतिगृह्य ततो होमं गृह्योक्तविधिना चरेत् ॥ ( प्रतिगृह्येत्यनेन तदुक्तकंकणबंधादि वक्ष्यमाणविष्णुपूजांतमुपलक्ष्यते ) अर्ककन्यामिमां विप्र यथाशक्ति विभूषितां । गोत्राय शर्मणे तुभ्यं दत्तां विप्र समाश्रय ॥ अंजल्यक्षतकर्माणि कृत्वा कंकणपूर्वकं । यावत्पंचावृतं सूत्रं तावदर्कं प्रवेष्टयेत् ॥ स्वशाखोक्तेन मंत्रेण गायत्रीमथवा जपेत् । पंचीकृत्य पुनः सूत्रं स्कंधे बध्नाति मंत्रतः ॥ बृहत्सामेति मंत्रेण सूत्ररक्षां प्रकल्पयेत् । अर्कस्य पुरतः पश्चाद्दक्षिणोत्तरयोस्तथा ॥ कुंभांश्च निक्षिपेत्पश्चादाग्नेयादिचतुष्टये । सवस्त्रं प्रतिकुंभं च त्रिसूत्रेणैव वेष्टयेत् ॥ हरिद्रागंधसंयुक्तं पूरयेच्छीतलं जलं । प्रतिकुंभे महाविष्णुं संपूज्य परमेश्वरं ॥ पाद्यार्घ्यादिनिवेद्यांतं कुर्यान्नाम्नैव मंत्रवित् । पुनः प्रदक्षिणं कृत्वा मंत्रमेतमुदीरयेत् ॥ मया कृतमिदं कर्म स्थावरेषु जरायुणा । अर्कापत्यानि नो देहि तत्सर्वं क्षंतुमर्हसि ॥ इत्युक्त्वा शांतिसूक्तानि जप्त्वा तं विसृजेत्पुनः । तं सूर्यं ।

(इदं सद्यः सूर्यविसर्जनं तु ब्राह्मोक्तचतुर्दिनव्यवधानासंभवे ज्ञेयं ) गोयुग्मं दक्षिणां दद्यादाचार्याय च भक्तितः ॥ इतरेभ्योऽपि विप्रेभ्यो दक्षिणां च स्वशक्तितः । तत्सर्वं गुरवे दद्यादंते पुण्याहमाचरेत् ॥ शौनकः । तृतीये स्त्रीविवाहे तु संप्राप्ते पुरुषस्य च । आर्कं विवाहं वक्ष्यामि शौनकोऽहं विधानतः ॥ अर्कसंनिधिमागत्य तत्र स्वस्त्यादि वाचयेत् । नांदीश्राद्धं प्रकुर्वीत स्थंडिलं च प्रकल्पयेत् ॥ अर्कमभ्यर्च्य सौर्या च गंधपुष्पाक्षतादिभिः । स्वयं चालंकृतस्तद्वद्वस्त्रमाल्यादिभिः शुभैः ॥ अर्कस्योत्तरदेशे तु समन्वारब्ध एतया । (एतयाऽर्ककन्यया) उल्लेखनादिकं कुर्यादाघारांतमतः परं ॥ आज्याहुतिं च जुहुयात्संगोभिरनयैकया । यस्मैत्वाकामकामायेत्येतयर्चा ततः परं ॥ व्यस्ताभिश्च समस्ताभिस्ततस्तु स्विष्टकृद्भवेत् । परिषेचनपर्यंतमयाश्चेत्यादिकं क्रमात् ॥ अत्र प्रयोगो मत्कृते निर्णयसिंधौ ज्ञेयः । “ वि० मा० अथ तृतीयभार्यापरिणयने तृतीयचतुर्थीकरणे तृतीयास्थाने स्त्रीलिंगवृक्षपरिणयविधानं । यदि चतुर्थीमपि परिणयति तदा तृतीयापरिणयने वृक्षपरिणयनं नास्ति । तथाच स्कांदे । चतुर्थीमपि कुर्यात्तु नोचेत्कुर्याद्विधानकं । विधानमादौ कृत्वा च पश्चात्परिणयेद्वधूं ॥ तृतीयां विधिवच्छ्रेष्ठां साधुसंततिसिद्धये । तथाच कालिकापुराणे । द्वे भार्ये च मृते पुंसस्तृतीयां कुरुते यदि । चतुर्थीमपि कुर्यात्तु नोचेत्कुर्याद्विधानकं ॥ भार्या त्वं मे नवा श्रेष्ठा तृतीया सुखसिद्धये । साक्षात्संग्रहसिद्ध्यर्थं ममात्र भव शोभना ॥ इत्युक्त्वा वृक्षोपर्यक्षतान्निक्षिपेत् । तदाऽर्कया विधातव्यं विवाहं विधिवच्छुभं ॥ अर्कयेति यदुक्तं तदर्कवृक्षस्य द्विलिंगता विद्यते । यदा त्वर्केणेति पुंस्त्वेन व्यवह्रियते तदा विशेषोऽस्ति । मंदारोऽर्कविशेषः । मंदारादितरो मंदारसजातीयो वृक्षविशेषोऽर्कशब्देनाभिधीयतइति । अर्कया सह यदा विवाहस्तदाऽर्काया ब्रह्मक्षत्रविड्जातीयत्वाभावात्पाणिशरप्रतोदग्रहणासंभवात्तद्रूपावलोकनेनैव विवाहः । तच्च रूपावलोकनमरिष्टपरिहारार्थं । यदि जीवत्पत्नीकस्तृतीयां परिणयति तदा

बदरी मातुलिंगी दाडिमी धात्रीत्येतासु सर्वासु मध्ये कयाचिदेकया सह कर्तव्यं विधानं । न त्वर्कयेति निश्चयः " इति शांरत्नेऽर्कविवाहः ॥

॥ अथ प्रयोगः । तृतीयविवाहात्प्राक् दिनचतुष्टयाधिकव्यवहिते रविवारे हस्तनक्षत्रे शनिवारे शुभे दिनांतरे वा पूर्वाह्णे ग्रामात्प्राच्यामुदीच्यां वा पुष्पफलयुतस्य रक्तगंधादिभूषितस्यार्कस्याधस्तादैशाने स्थंडिलं कृत्वा वराधिकवयस्कः पित्रादिर्वर एव वाऽर्कसमीपमागत्य आचमनादिदेशकालस्मरणांते मम करिष्यमाणतृतीयमानुषीपरिणयजन्यसकलारिष्टपरिहारपूर्वकसुखप्राप्तिद्वारा श्री॰ अर्कविवाहं करिष्य इति संकल्प्य (पित्रादिः कर्ता चेत्तेन ममेत्यत्र अ॰ शर्मणः पुत्रस्येत्याद्यूहः कार्यः) गणेशपूजनादिनांदीश्राद्धांतं कुर्यात् । तत्र नांदीश्राद्धे द्वादशदेवताः पूज्याः । ततः कन्यादानार्थमाचार्यं वृत्वा अर्कतरौ उदुत्यं प्रस्कण्वः सूर्यो गायत्री । सूर्यावा॰ । इति छायासहितं सूर्यमावाह्य षोडशोपचारैः पूजयेत् । तत्र आपोहिष्ठेतितिसृभिरभिषिच्य वस्त्रार्पणकाले श्वेतवाससा कार्पासतंतुभिश्चावेष्ट्य गंधाद्युपचारैर्गुडौदननैवेद्यतांबूलसहितैरर्चनांते तिष्ठन्प्रार्थयेत् । त्रिलोकवासिन्सप्ताश्व छायया सहितो रवे । तृतीयोद्वाहजं दोषं निवारय सुखं कुरु ॥ ततः । मम प्रीतिकरा येयं मया सृष्टा पुरातनी । अर्कजा ब्रह्मणा सृष्टा अस्माकं प्रतिरक्षतु ॥ इति प्रदक्षिणीकृत्य । नमस्ते मंगले देवि नमः सवितुरात्मजे । त्राहि मां कृपया देवि पत्नी त्वं म इहागता ॥ अर्क त्वं ब्रह्मणा सृष्टः सर्वप्राणिहिताय च । वृक्षाणामादिभूतस्त्वं देवानां प्रीतिवर्धनः । तृतीयोद्वाहजं पापं मृत्युं चाशु विनाशयेति पुनः प्रदक्षिणं कुर्यात् । ततोऽर्ककन्यावरणं । वरपक्षीया द्वौ चत्वारो वा वरगोत्रादि चतुर्थ्यंतमुच्चार्य अ॰ शर्मणेवरायेत्यंते काश्यपगोत्रां आदित्यस्य प्रपौत्रीं सवितुः पौत्रीमर्कस्य पुत्रीमर्ककन्यां भार्यात्वाय वृणीमह इति वदेयुः । वृणीध्वमित्याचार्यः । एवं त्रिः । वाग्दानं कृताकृतं । करणपक्षे । आचार्यः प्राग्वद्वरगोत्राद्युच्चार्य अर्ककन्यां दास्ये इत्युक्त्वा वरं मधुपर्केण पूजयेत् । तत्र सति संभवे वराय वस्त्रयज्ञोपवीताभरणोष्णी-

षाणि देयानि । ततो विप्रा अंतःपटं धारयंतो मंगलपद्यानि पठेयुः । अपसारिते च तस्मिन्वरः स्वस्तिनोमिमीतामितिसूक्तं पठन्सुमुहूर्तेऽर्कं निरीक्षेत । द्विजैश्चाशिषो देयाः । तत उदङ्मुख आचार्यः श्रीपर० काश्यपगोत्रामादित्यस्य० अर्ककन्यां तुभ्यमहंसंप्रददेइति वरहस्ते साक्षतं जलं क्षिप्त्वा प्रार्थयेत् । अर्ककन्यामिमां विप्र० समाश्रय । अथ वरोऽर्कं स्पृशन् कइदंकस्मा० गृह्णात्विति मंत्रं पठेत् । आचार्यो वराय दक्षिणां दद्यात् । ततो वरः परित्वेत्यादिभिर्गायत्र्या वा दुग्धाक्तद्विगुणशुक्लसूत्रेणार्कं पंचवारं प्रदक्षिणमावेष्ट्य सूत्रं बहिर्निष्कास्य पंचगुणीकृत्य कुंकुमाद्यलंकृतं तत्तूष्णीमर्कस्कंधे बद्ध्वा बृहत्सामेति कंकणरक्षां विधायाक्षतारोपणं कुर्यात् । तत्राचार्यः कन्याप्रतिनिधिः । ततोऽर्कस्य पूर्वपश्चिमदक्षिणोत्तरास्वाग्नेय्यादिविदिक्षु च क्रमेणाष्टौ कुंभान्संस्थाप्य हरिद्रागंधयुतजलेनापूर्य वस्त्रैर्वेष्टितान्सर्वांस्त्रिसूत्रेणावेष्ट्य पूर्णपात्रेषु महाविष्णुं नाममंत्रेणावाह्य पाद्यादिभिरभ्यर्च्य होमं कुर्यात् । वस्त्रमाल्याद्यलंकृतो वरः पूर्वोपकल्पितस्थंडिलस्य पश्चादुपविश्य देशकालौ स्मृत्वा अर्कविवाहहोमं करिष्ये इति संकल्प्य स्थंडिले योजकसंज्ञमग्निं प्रतिष्ठाप्य ध्यात्वाऽन्वादध्यात् । तत्र आघारदेवतेआज्येनेत्यंते बृहस्पतिं १ कामं सम्राजं २ अग्निं ३ वायुं ४ सूर्यं ५ प्रजापतिं ६ चैताः प्रधानदेवता आज्येन शेषेणस्विष्टकृतमित्याद्यग्न्यर्चनांते दक्षिणभागस्थयाऽर्ककन्ययाऽन्वारब्ध इध्माधानमाघारहोमं च कृत्वा प्रधानहोमं कुर्यात् । संगोभिरयास्यो बृहस्पतिस्त्रिष्टुप् । अर्कविवाहप्रधानाज्यहोमे० । संगोभिरांगिरसो० । बृहस्पतय इदं० । यस्मैत्वा वामदेवः कामः सम्राडनुष्टुप् । अर्कवि० । यस्मैत्वाकामकामाय० । कामाय सम्राज इदं० । व्यस्तसमस्तव्याहृतीनां० । एवं षडाहुतीर्हुत्वा स्विष्टकृद्धोमादिशेषं समाप्य पुनरर्कं प्रदक्षिणीकृत्य । मया कृतमिदं कर्म स्थावरेषु जरायुणा । अर्कापत्यानि नो देहि तत्सर्वं क्षंतुमर्हसीतिमंत्रांते शांतिसूक्तानि पठित्वा भुंजीत । द्वितीयादिदिनेषु प्राग्वत्सूर्यपूजनमग्निरक्षणं च कुर्यात् । पंचमेऽहनि पूजांते उत्तिष्ठेत्यनेनार्कस्थं

सूर्यं गच्छगच्छेत्यग्निं च विसृज्याचार्याय गोयुग्ममितरेभ्योऽपि शक्त्या दक्षिणां दत्वा नववस्त्राणि धृत्वा त्यक्तवस्त्राद्युपस्करमाचार्याय दत्वा पुण्याहं वाचयित्वा शक्त्या विप्रान्संभोज्याशिषो गृहीत्वा कर्म समापयेत् । अत्र चतुर्दिनव्यवधानाऽसंभवे शांतिसूक्तजपांते एव विसर्जनादि कार्यं । इत्यर्कविवाहप्रयोगः ॥ ॥ अथ श्रीशांतिः । " शां० सा० मेधातिथिः । चौले च व्रतबंधे च विवाहे यज्ञकर्मणि । भार्या रजस्वला यस्य प्रायस्तस्य न शोभनं ॥ सं० कौ० वृद्धगार्ग्यः । विवाहव्रतचूडासु माता यदि रजस्वला । तस्याः शुद्धेः परं कार्यं मांगल्यं मनुरब्रवीत् ॥ यदि चौलादिप्रारंभोत्तरं रजः प्रारंभात्प्रागपि रजसि मुहूर्तांतराभावो वा तदा शांतिं कृत्वा तदैव कार्यं । यथोक्तं कारिकानिबंधे । सूतिकोदक्ययोः शुद्ध्यै गां दद्याद्धोमपूर्वकं । प्राप्ते कर्मणि शुद्धा स्यादितरस्मिन्न शुध्यति ॥ अलाभे सुमुहूर्तस्य रजोदोष उपस्थिते । श्रियं संपूज्य तत्कुर्याद्वृत्रहत्याभयंकरीं [ श्रियं संपूज्य विधिवत्ततो मंगलमाचरेत् ] ॥ हैमीं माषमितां पद्मां श्रीसूक्तविधिनाऽर्चयेत् । प्रत्यृचं पायसं हुत्वाऽभिषिच्य शुभमाचरेदिति ॥ श्लोकभेदेन प्राप्तपदोक्तारंभस्य मुहूर्तांतरालाभस्य च श्रवणान्न परस्परसापेक्षत्वं " इति श्रीशांतिः ॥ ॥ अथ प्रयोगः । कर्ता आचमनादिदेशकालस्मरणांते ममामुकस्य अमुकमंगले ( मंगलारंभात्पूर्वं वा ) संस्कार्यजननीरजोदोषोपस्थितिसूचितसकलानिष्टनिरासपूर्वकशुभफलप्राप्तिद्वारा श्री० श्रीशांतिं करिष्य इति संकल्प्य ( अमुकस्येत्यत्र पुत्रस्य कन्यायाः पौत्रस्येत्यादि यथायथमूह्यं ) गणेशं संपूज्य पुण्याहं वाचयित्वाचार्यं वृणुयात् । आचार्यः प्रादेशकरणांते स्थंडिलात्पूर्वे महीद्यौरित्यादिविधिना कलशं संस्थाप्य तत्रोक्तलक्षणप्रतिमायां हिरण्यवर्णामितिपंचदशर्चस्यसूक्तस्य कर्दमानंदचिक्लीतेंदिरासुताः श्रीरनुष्टुप् । पंचमी षष्ठी च त्रिष्टुभौ । चतुर्थ्येता च प्रस्तारपंक्तिः । श्रीपूजने० । इतिसूक्तेन आवाहनाद्युपचारैः श्रियं संपूज्य स्थंडिलेऽग्निं प्रतिष्ठाप्य ध्यात्वाऽन्वाद-

ध्यात् । चक्षुषीआज्येनेत्यंते श्रियं प्रधानदेवतां पायसेन पंचदशाहुतिभिः शेषेणेत्यादि । गृहसिद्धपायसाधिश्रयणाद्याज्यभागहोमांते श्रीसूक्तेन प्रत्यृचमवदानधर्मेण पायसं हुत्वा स्विष्टकृद्धोमादिशेषं समाप्य स्थापितकलशोदकेन ससंस्कार्यं यजमानं श्रीसूक्तेन समुद्रज्येष्ठाइत्यादिमंत्रैश्चाभिषिंचेन् । ततो यजमानो विभूतिं धृत्वा देवतोत्तरपूजांते आचार्यं संपूज्य दक्षिणां दत्वा विसर्जितदेवताप्रतिमाद्युपस्करदानांते विप्रेभ्यो भूयसीं दत्वा कर्म समापयेत् । ततः पुनराचम्यदेशकालौस्मृत्वा मम पुत्रस्यामुकमंगले संस्कार्यजनन्याः शुद्धिसिद्ध्यर्थं कूष्मांडैर्होष्यामि।होमे समाप्ते पुनर्देशका० शुद्धिसिद्ध्यर्थं ब्राह्मणाय पयस्विधेनुदानं ( तन्मूल्यदानं वा) करिष्ये । पूजांते इमां पयस्विनीं धेनुं सदक्षिणां अ० शर्मणे ब्राह्मणायसंप्रददेनममेति दत्वा विष्णुं स्मरेत् । पित्रतिरिक्तकर्त्रंतरस्य पत्न्यां रजस्वलायां तु अ०शर्मणः संस्कार्यस्यामुकमंगले ममपत्नीरजोदोषेत्याद्यूहः । शेषं प्राग्वत् । इति श्रीशांतिप्रयोगः॥ ॥अथ कूष्मांडहोमविधिः संगृह्यते । "ध० सिं० नांदीश्राद्धोत्तरं सूतकमृतकयोः प्राप्तौ न विवाहादिप्रतिबंधः । विवाहव्रतयज्ञेषु श्राद्धे होमेऽर्चने जपे । आरब्धे सूतकं न स्यादनारब्धे तु सूतकं ॥ प्रारंभो वरणं यज्ञे संकल्पो व्रतसत्रयोः । नांदीमुखं विवाहादौ श्राद्धे पाकपरिक्रियेत्युक्तेः । इदं संनिहितमुहूर्तांतराभावादिसंकटे एव ज्ञेयं । संकटाभावे तु नांदीश्राद्धे जातेऽपि सूतकांते मुहूर्तांतरे एव मंगलं । सर्वोऽप्याशौचापवादोऽनन्यगतित्वे आर्तौ च ज्ञेय इति सिंधूक्तेः । सं० कौ० मुहूर्तांतरालाभे सामग्र्यां च कृतायां सूतकिनोऽप्यधिकारोपायमाह विष्णुः । अनारब्धविशुद्ध्यर्थं कूष्मांडैर्जुहुयाद् घृतं । गां दद्यात्पंचगव्याशी ततः शुध्यति सूतकी ॥ ततः शुध्यतीति पुनरुक्तिर्विवाहाद्युपयोगिपाकपरिवेषणादावपि शुद्धिज्ञापनार्था । गां पयस्विनीं दद्यात् । संकटे समनुप्राप्ते सूतके समुपस्थिते । कूष्मांडीभिर्घृतं हुत्वा गां च दद्यात्पयस्विनीं ॥ चूडोपनयनोद्वाहप्रतिष्ठादिकमाचरेत् । यदैव सूतकप्राप्तिस्तदैवाभ्युदयक्रियेति संग्रहोक्तेः „ इदं जननाशौचमात्रवि-

षयमिति मार्तंडादौ । प्रारंभोत्तरं सूतकप्राप्तावप्ययं होमः कार्य इति कौस्तुभे धर्मसिंधौ च चौलप्रकरणे उक्तं । होमप्रकारमाह जमदग्निः । आज्यभागानंतरेण कूष्मांडैर्जुहुयाद्द्विजः । यद्देवेत्यनुवाकैश्च त्रिभिर्हुत्वाऽऽज्यमन्वहमिति । अन्वहमित्युक्तिः पापस्य लघुगुरुत्वतारतम्येन त्रिरात्रादिपक्षाभिप्रायपरा । अत्र तु सूतकिनः शुद्धिसंपादनेन केवलं विवाहाद्यधिकारसिद्ध्यर्थमेव होमस्यास्य विधानात्तन्नापेक्षितं । इति कूष्मांडहोमविधिः ॥ ॥ अथ प्रयोगः । कर्ता आचमनादिदेशकालस्मरणांते मम पुत्रस्य कन्याया वा अमुकमंगले ( मंगलारंभात्पूर्वं वा ) उपस्थितसूतकदोषनिवृत्तिपूर्वकं शरीरशुद्ध्या प्राप्तकर्मण्यधिकारसिद्धिद्वारा श्रीपर० जमदग्निप्रोक्तं कूष्मांडहोमं करिष्य इति संकल्प्य गणेशं संपूज्य पुरुषसूक्तजपादिप्रादेशकरणांते स्थंडिले पावकसंज्ञमग्निं प्रतिष्ठाप्य ध्यात्वाऽन्वादध्यात् । तत्र चक्षुषी-आज्येनेत्यंते देवानादित्यान् । विश्वान्देवान् । द्यावापृथिवीसरस्वतीः । इंद्राग्निमित्रावरुणसोमधातृबृहस्पतीन् । जातवेदसं । अग्निं गार्हपत्यं । ज्योतिः । अग्निं । अग्निं गार्हपत्यं । अग्निं । अग्निं गार्हपत्यं द्विः । अग्निं । अग्निं गार्हपत्यं । अपः शुंधनीः । अपो हिरण्यवर्णाः । वरुणं द्विः । अग्नीवरुणौ द्विः। अग्निमयासं। अग्नींद्रौ। उग्रंपश्याराष्ट्रभृतावप्सरसौ। उग्रंपश्याराष्ट्रभृतौ। वरुणं चतुः। अग्नीवरुणौ द्विः । संकुसुकविकुसुकनिर्ऋथनिस्वनान् । कृत्यानिर्ऋती । दुःशंसानुशंसघणानुघणान् । त्वष्टारं । अग्निं। अग्निमायुर्दां । अग्निवरुणादितिविश्वदेवान् । अग्निं पवमानं त्रिः । अग्निं जातवेदसं । जातवेदसं । अग्निं वृत्रहणं । अग्निं । उषोनिम्रुचौ । देवान् । अग्निं जातवेदसं । अग्निं द्विः । ब्रह्माणं । वैश्वानरं ५१ चैताः प्रधानदेवता आज्येन शेषेणस्विष्टकृतमित्याद्याज्यभागहोमांते प्रधानहोमः । यद्देवाइत्यनुवाकत्रयस्य ब्रह्मा स्वयंभूर्ऋषिः । देवादयो देवताः । पंक्त्यादीनि छंदांसि । होमे० । ॐयद्देवादेवहेळनं० मितस्वाहा । देवेभ्य आदित्येभ्य इदं० । देवाजीवनकाम्या०

सजोषसः स्वाहा । विश्वेभ्यो देवेभ्य० । ऋतेनद्यावापृथिवी० मृदिमस्वाहा । द्यावापृथिवीसरस्वतीभ्य० । इंद्राग्नीमित्रावरुणौ० मारिमस्वाहा ।
इंद्राग्निमित्रावरुणसोमधातृबृहस्पतिभ्य० । सजातशंसा० मुमुग्धिस्वाहा । जातवेदस० । यद्वाचा० दुष्कृतास्वाहा । अग्नये गार्हपत्यायेदं० ।
येनत्रितो० आक्षिस्वाहा । ज्योतिषइ० । यत्कुसीद० दधामिस्वाहा । अग्नयइ० । यन्मयिमाता० मनेनसंस्वाहा । अग्नये गार्हपत्यायेदं० ।
यदापिपेषमातरं० भवामिस्वाहा । अग्नय इदं० । यदंतरिक्षं० मनेनसंस्वाहा । अग्नये गार्हपत्यायेदं० । यदाशसा० नसंस्वाहा । अग्नये
गार्हपत्यायेदं० । अतिक्रामामि० लोकंस्वाहा । अग्नयइ० । त्रितेदेवा० नसंस्वाहा । अग्नये गार्हपत्यायेदं० । दिविजाता० शुंधनीःस्वाहा ।
अद्भ्यः शुंधनीभ्य० । यदापोनक्तं० तनस्वाहा । अद्भ्यो हिरण्यवर्णाभ्य० । इमंमेवरुण० चकेस्वाहा । वरुणायेदं० । तत्त्वायामि० प्रमोषीः-
स्वाहा । वरुणाये० । त्वंनोअग्ने० मुग्ध्यस्मत्स्वाहा । अग्नीवरुणाभ्यामिदं० । सत्वंनोअग्ने० एधिस्वाहा । अग्नीवरुणाभ्यामिदं० । त्वमग्नेअ-
यास्य० भेषजंस्वाहा । अग्नये अयासइदं० । यददीव्यं० मुंचतांस्वाहा । अग्नींद्राभ्यामिदं० । यद्धस्ताभ्यां० मृणानिस्वाहा । उग्रंपश्याराष्ट्रभृ-
द्भ्यामप्सरोभ्यामि० । उग्रंपश्येराष्ट्र० रायस्वाहा । उग्रंपश्याराष्ट्रभृद्भ्यामिदं० । अवतेहेडो० कृतानिस्वाहा । वरुणायेदं० । उदुत्तमंवरुण०
स्यामस्वाहा । वरुणायेदं० । इमंमेवरुण० चकेस्वाहा । वरुणाये० । तत्त्वायामि० प्रमोषीःस्वाहा । वरुणाये० । त्वंनोअग्नेवरुणस्य० मुग्ध्यस्म-
त्स्वाहा । अग्नीवरुणाभ्यामिदं० । सत्वंनोअग्नेवमो० नएधिस्वाहा । अग्नीवरुणाभ्या० । संकुसुकोविकुसुको० चीचतंस्वाहा । संकुसुकविकु-
सुकनिर्ऋथनिस्वनेभ्यइदं० । निर्यक्ष्ममचीचते० मसिस्वाहा । कृत्यानिर्ऋतिभ्यामिदं० । दुःशंसानुशंसाभ्यां० मसिस्वाहा । दुःशंसानुशं-
नघणानुघणेभ्यइदं० । संवर्चसापयसा० ह्विलिष्टंस्वाहा । त्वष्ट्रइदं० । आयुष्टेविश्वतोदध० सुवामितेस्वाहा । अग्नयइदं० । आयुर्दाअग्ने० दि-

क०

मःस्वाहा॥अग्नयआयुर्द०। इममग्नआयुषे०यथासत्स्वाहा। अग्निवरुणादितिविश्वदेवेभ्यइदं०।अग्नआयूंषि०दुच्छुनाःस्वाहा॥ अग्नये पवमानायेदं०। अग्नेपवस्व० पोषःस्वाहा। अग्नये पवमानायेदं०। अग्निर्ऋषिः० गयःस्वाहा। अग्नये पवमानायेदं०। अग्नेजातान्प्रणु० उद्वौस्वाहा। अग्नये जातवेदसइदं०। सहसाजातान्० सपत्नान्स्वाहा। जातवेदस०। अग्नेयोनोभितो० माभरस्वाहा। अग्नये वृत्रघ्नइदं०। अग्नेयोनोभिदासति० दध्मसिस्वाहा। अग्नयइदं०। योनःशपादशपतो०समूहताःस्वाहा। उग्रोनिम्रुग्भ्यामिदं०। योनःसपत्नोयोरणा०किंचनस्वाहा। देवेभ्य०। योमांद्वेष्टि० माःस्वाहा। अग्नये जातवेदस०। योअस्मभ्य० कुरुस्वाहा। अग्नयइदं०। सःशितंमे० हितःस्वाहा। अग्नयइदं०। उदेषांबाहू० अहःस्वाहा। ब्रह्मणइदं०। पुनर्मनःपुनरायु० बिभ्रास्वाहा। वैश्वानरायदेनंमम ॥ ५१ ॥ एवमाज्याहुतीर्हुत्वा स्विष्टकृद्धोमादिकर्मशेषं समाप्य गायत्र्यादिमंत्रैः पंचगव्यं कृत्वा समंत्रं प्राश्य गां पयस्विनीं तन्निष्क्रयं वा ब्राह्मणाय दद्यात्। इति कूष्मांडहोमप्रयोगः॥

॥ अथ प्रतिकूलदोषशांतिः संगृह्यते। "शां० सा० स्मृतिचंद्रिकायां भृगुः। वाग्दानानंतरं यत्र कुलयोः कस्यचिन्मृतिः। तदोद्वाहो नैव कार्यः कृते वैधव्यमाप्नुयात् ॥ कुलयोर्वधूवरकुलयोरित्यर्थः। शौनकः। पिता पितामहश्चैव माता चैव पितामही। पितृव्यः स्त्री सुतो भ्राता भगिनी चाऽविवाहिता ॥ एभिरत्र विपन्नैश्च प्रतिकूलं बुधैः स्मृतं। अन्यैरपि विपन्नैस्तु केचिदूचुर्न तद्भवेत् ॥ एतच्च त्रिपुरुषोपलक्षणं। पुरुषत्रयपर्यंतं प्रतिकूलं स्वगोत्रिणां। प्रवेशनिर्गमौ तद्वत्तथा मुंडनमंडने ॥ प्रेतकर्माण्यनिर्वर्त्य चरेन्नाभ्युदयक्रियां। आचतुर्थं ततः पुंसि पंचमे शुभदं भवेदिति मेधातिथिवाक्येनोपसंहारात्। वधूवरयोः पितरमादाय पुरुषत्रयपर्यंतमित्यर्थः। अन्यथा आचतुर्थमित्यस्य पंचमइत्यस्य चाऽसंगत्यापत्तेः। ( वधूवरावादाय जन्यत्रिपुरुषी जनकत्रिपुरुषी च ग्राह्येति कौस्तुभादौ ) प्रतिकूलकृतश्च दोषो वर्षावधिरेव।

तथाच मेधातिथिः । वाग्दानानंतरं यत्र कुलयोः कस्यचिन्मृतिः । तदा संवत्सरादूर्ध्वं विवाहः शुभदो भवेत् ॥ संकटे तु मासोत्तरं शांतिं कृत्वा विवाहः कार्यः । प्रतिकूलेऽपि कर्तव्यो विवाहो मासतः परं । शांतिं विधाय गां दत्वा वाग्दानादि चरेत्पुनरिति ज्योतिःप्रकाशे वचनात् । वाग्दानादीत्येतदतद्गुणसंविज्ञानो बहुव्रीहिः । वाग्दानस्य पूर्वं कृतत्वेनावृत्त्ययोगादिति केचित् । पुनःपदेनावृत्त्युत्पत्तेरदृष्टार्थं पुनर्वाग्दानमिति गागाभट्टीये । सं० कौ० ज्योतिःसागरे । दुर्भिक्षे राष्ट्रभंगे च पित्रोर्वा प्राणसंशये । प्रौढायामपि कन्यायां नानुकूलं प्रतीक्ष्यते॥ अन्यत्रापि । दीर्घरोगाभिभूतस्य दूरदेशस्थितस्य च । उदासीनस्थितस्यापि प्रतिकूलं न विद्यते ॥ वि० मा० स्मृतिचंद्रिकायां गर्गः । कृते वाङ्निश्चये पश्चान्मृत्युर्मर्त्यस्य कस्यचित् । तन्मंगलं न कर्तव्यं नारीवैधव्यशंकया ॥ दंपत्योः पितरौ भ्राता उपनीतश्च सोदरः । पितृव्यस्ताद्दशश्चैव पितामहपितामही ॥ कृते वाङ्निश्चये पश्चान्मृतो भवति मानवः । एषां मध्ये तु यः कश्चित्प्रतिकूलं तदुच्यते ॥ प्रतिकूले तु संजाते विवाहं नैव कारयेत् । नारी वैधव्यमाप्नोति ह्यन्यथा कारयेद्यदि ॥ अतो दोषविनाशाय शांतिं कुर्याद्विचक्षणः । पुण्येऽह्नि विप्रकथिते कृत्वा पुण्याहवाचनं ॥ पूजयेत्प्रयतो देवान्यथाशक्ति हिरण्मयान् । श्रियं हरिं शिवां शंभुं मृत्युं चैव विशेषतः ॥ श्रीसूक्तेन श्रियं विष्णुमिदंविष्णुस्तु इत्यृचा । गौरीर्मिमायेति शिवां त्र्यंबकेण महेश्वरं ॥ परंमृत्योस्तु मंत्रेण मृत्युं संपूजयेत्ततः । वासःस्रग्गंधपुष्पाद्यैरनुपचारान्प्रकल्पयेत् ॥ अथाज्यभागपर्यंतमुपलेपादि पूर्ववत् । दूर्वातिलाज्यचरुणा हुनेदष्टोत्तरं पृथक् ॥ भूःस्वाहामृत्युर्नश्यतु सुखायवर्धतामिति । एवं व्याहृतिभिर्हुत्वा घृतेन च विचक्षणः ॥ स्विष्टकृदिध्मसंधानं प्रायश्चित्ताहुतीस्तथा । एवं समाप्य होमं तु दद्याद्विप्राय दक्षिणां ॥ गोहिरण्यं च वासांसि दत्वा स्वस्मात्प्रमुच्यते । इदं रिष्टप्रशमनं विधानं तु विचक्षणः ॥ ऐश्वर्यकीर्तिजननं पुत्रपौत्रविवर्धनं । सर्वमृत्युमति-

कस्य दीर्घमायुरवाप्नुयात् ॥ " अत्र विस्तरो विशेषश्च कौस्तुभादौ द्रष्टव्यः । इति प्रतिकूलदोषशांतिः ॥ ॥ अथ प्रयोगः । कर्ता दैवज्ञोक्ते शुभदिवसे आचमनादिदेशकालस्मरणांते मम पुत्रस्य कन्याया वा विवाहनिश्चयोत्तरं अमुकस्य मृत्युवशेनोपस्थितप्रतिकूलदोषसूचितसकरिष्टपरिहारपूर्वकं दीर्घायुःपुत्रपौत्रादिसुखैश्वर्यप्राप्तिद्वारा श्रीप० गर्गोक्तां शांतिं करिष्ये । गणेशं संपूज्य पुण्याहं वाचयित्वाचार्यं वृणुयात् । आचार्यः प्रादेशकरणांते पीठादौ प्रतिमासु हिरण्यवर्णामितिपंचदशर्चस्य सूक्तस्य कर्दमानंदचिक्लीतेंदिरासुताः श्रीरनुष्टुप् । पचमी षष्ठी च त्रिष्टुभौ । चतुर्थ्यंत्या च प्रस्तारपंक्तिः । श्रीपूजने० । इतिसूक्तेन श्रियं । इदंविष्णुर्मेधा० इति विष्णुं । गौरीर्मिमाय दीर्घतमा गौरी जगती । इति गौरीं । त्र्यंबकं वसिष्ठो० इति रुद्रं । परंमृत्यो सकुसुको मृत्युस्त्रिष्टुप् । इति मृत्युं चावाहनाद्युपचारैः संपूज्य तत्पश्चिमतः स्थंडिलेऽग्निं प्रतिष्ठाप्य ध्यात्वाऽन्वादध्यात् । तत्र चक्षुषीआज्येनेत्यंते अग्निं प्रधानदेवं दूर्वातिलाज्यचरुभिः प्रतिद्रव्यं अष्टोत्तरशतसंख्याभिराहुतिभिः । अग्निं वायुं सूर्यं प्रजापतिं चाज्येन शेषेणेत्याद्याज्यभागहोमांते भूःस्वाहामृत्युर्नश्यतुसुखायवर्धतांस्वाहेतिमंत्रेणोक्तद्रव्यैरुक्तसंख्यया होमं कृत्वा व्यस्तसमस्तव्याहृतिभिराज्यं हुत्वा स्विष्टकृद्धोमादिशेषं समाप्य देवतोत्तरपूजां कुर्यात् । ततो यजमान आचार्यं संपूज्य तस्मै गोहिरण्यवासांसि विसर्जितदेवतापीठं च दत्वा शक्त्या विप्रान्संभोज्य भूयसीं दत्वा शांतिं वाचयित्वा कर्म समापयेत् । इति प्रतिकूलदोषशांतिप्रयोगः ॥

॥ अथ ब्रह्मौदनात्पूर्वं प्रदोषगर्जितादौ शांतिः संगृह्यते । " वि० मा० । ब्रह्मौदनविधेः पूर्वं प्रदोषे गर्जितं भवेत् । ( गर्जितमिति वृष्ट्युत्पातयोरप्युपलक्षणं ) तदा विघ्नकरं ज्ञेयं बटोरध्ययनस्य तत् ॥ तस्य शांतिविधानं तु वक्ष्ये शास्त्रानुसारतः । स्वस्तिवाचनपूर्वं तु हवनं कारयेद्बुधः ॥ प्रधानं पायसं तत्र साज्यं साष्टशतं यजिः । ( यजिर्होमः ) सूक्तं बृहस्पतेर्विद्वान्पठेत्प्रज्ञाविवृद्धये ॥ गायत्री यजने मंत्रः प्रायश्चित्तं

तु सर्पिषा । धेनुं सवत्सकां दद्यादाचार्याय पयस्विनीं ॥ शीलान् होमविधेः पश्चाद्ब्राह्मणान्भोजयेत्ततः । शतमष्टोत्तरं धीमांस्ततो ब्रह्मौदनं पचेत् ॥ " इति प्रदोषगर्जितादिशांतिः ॥ ॥ अथ प्रयोगः । कर्ता आचमनादिदेशकालस्मरणांते ब्रह्मौदनपाकात्पूर्वं प्रदोषकालिकगर्जितेन सूचितस्य ब्रह्मचारिकर्तृकाध्ययनविघ्नस्य निरसनद्वारा श्रीप० शांतिं करिष्ये इति संकल्प्य गणेशं संपूज्य स्वस्तिवाचनं कृत्वा आचार्यं वृणुयात् । आचार्यः प्रादेशकरणांते स्थंडिलेऽग्निं प्रतिष्ठाप्यान्[illegible]यात् । तत्र चक्षुषीआज्येनेत्यंते सवितारं प्रधानदेवं घृताक्तपायसेन [illegible] संख्याभिराहुतिभिः । शेषेणस्विष्टकृतमित्यादिमरुतश्चाज्येनेत्य[illegible] सवितारमाज्येन विश्वान्देवानाज्यसंस्रावेणेत्यादि । गृहासि[illegible] श्रयण।द्याज्यभागहोमांते गायत्र्या १०८ संख्यया पायसं हुत्वा इमांधियमितिद्वादशर्चस्य सूक्तस्यायास्यो बृहस्पतिस्त्रिष्टुप् । जपे[illegible] स्विष्टकृदादियद्वोदेवाइत्याहु.यंते गायत्र्याऽऽज्याहुतिं हुत्वा कर्मशेषं समापयेत् । ततो यजमान आचार्यं संपूज्य तस्मै सवत्सां पयस्वि[illegible] दत्वा सुशीलान् १०८ ब्राह्मणान् भोजयित्वा भूयसीं दत्वा शांतिं वाचयित्वा कर्म समापयेत् । वृष्ट्युत्पातयोरपीयमेव शांतिः कार्या[illegible] संकल्पे प्रदोषकालिकगर्जितेनेत्यत्र अकालवृष्ट्या अमुकोत्पातेनेति वा यथायथमूह्यं । इति प्रदोषगर्जितादिशांतिप्रयोगः ॥ ॥ अथोग्ररथशांत्याख्या षष्टितमाब्दशांतिः संगृह्यते । शौनकः । अथातः संप्रवक्ष्यामि शांतिं चोग्ररथस्य तु । ब्रह्मक्षत्रियवैश्यानां शूद्राणां चैव योषितां ॥ यदि स्यात्षष्टिवर्षं तु तदा मृत्युर्भवेद्ध्रुवं । दुःस्वप्नानि च जायंते मातापित्रोर्मृतिस्तदा ॥ भार्यापुत्रवियोगश्च रोगव्याधिभयं तथा। ग्रहपीडा राजभयं रोगाश्च विविधाश्च ये ॥ दंतरोगा दृष्टिमांद्यं छायाया विकृतिस्तथा । नक्षत्राणि न दृश्यंते ध्रुवादीनि स्फुटान्यपि॥ भूतप्रेतपिशाचाद्या दृश्यंते विविधाश्च ये । एते चान्ये महोत्पाता जायंते षष्टिवत्सरे ॥ तद्रिष्टपरिहारार्थं शांतिं वक्ष्यामि शौनकः । लोभादनादरो यस्तु शांति-

कर्म न कारयेत् ॥ तस्मिन्वर्षे भवेन्मृत्युः सत्यमेव न संशयः । तस्मिन्वर्षे जन्मदिने जन्मर्क्षे वा यदा भवेत् ॥ तस्मिन्दिने तु संप्राप्ते मंगल-
स्नानमाचरेत् । दैवज्ञोक्ते शुभे काले चंद्रताराबलान्विते ॥ नित्यकर्माणि निर्वर्त्य ब्राह्मणानभिमंत्र्य च । ( अभिमंत्रणमामंत्रणमनुज्ञापनं वा )
आचार्य वरयेदादौ वेदवेदांगपारगं ॥ आचारवंतं धर्मज्ञं शांतिकर्मणि कोविदं । कामक्रोधविहीनं च रागद्वेषविवर्जितं ॥ गणेशं पूजयेदादौ
ततः पुण्याहवाचनं । मातृकाः पूजयित्वा तु नांदीश्राद्धमतः परं ॥ आचार्यब्रह्मवरणमन्वाधानमतः परं । सर्वौषधीः समानीय पंचत्वक्पंचप-
ल्लवं ॥ पंचरत्नं पंचगव्यं ततः पंचामृतं क्षिपेत् । कलशे च समानीय ग्रहातिथ्यपुरःसरं ॥ नवग्रहं समाराध्य मार्कंडेयं प्रधानकं । पलेन वा
तदर्धेन तदर्धार्धेन वा पुनः ॥ मार्कंडेयस्य प्रतिमां कारयेच्च प्रयत्नतः । प्रतिमां स्थापयेत्कुंभे वस्त्रयुग्मेन वेष्टयेत् ॥ उपचारैः षो
संपूज्य च विधानतः । ( अत्र चकारेण होमे वक्ष्यमाणानां मृत्युंजयाश्वत्थामाद्युपदेवानां पूजा कार्या । गोमुखप्रसवे यक्ष्महपूजावदिति
। वस्तुतस्तु तत्र प्रतिमांचविधानतइतिवदत्र विशेषवचनाभावान्मूलशांतावपूजितानामपि देवतानां होमस्य सर्वसंमतत्वाच्च नात्र तेष
मपेक्षितमिति बोध्यं ) समिदाज्यचरुद्रव्यैर्दूर्वाभिः परमान्नकैः ॥ [illegible]ष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वा । प्रत्येकं जुहुयादेतैर्मार्कंडेये
मार्कंडेय महाभाग सप्तकल्पांतजीवन । आयुरारोग्यमैश्वर्यं [illegible]म मुनिपुंगव ॥ मृत्युंजयं समुद्दिश्य दूर्वाभिश्च तिलैः सह । अ
वा त्रिसहस्रं वा सहस्रकं ॥ होमं कृत्वा विधानेन उपदेवान्यजेत्पृथक् । अश्वत्थामा बलिर्व्यासो हनुमांश्च बिभीषणः ॥ कृपः परशुरामश्च
एतांश्चैव पृथक्पृथक् । लाजहोमं प्रकुर्वीत यथाविभवविस्तरं ॥ श्रीसूक्तं रुद्रजाप्यं च आयुष्यं पुरुषसूक्तकं । वेदपारायणं चैव कर्तव्यं तु
विशेषतः ॥ होमशेषं समाप्याथ पूर्णाहुतिमतः परं । कलशोदकमादाय अभिषेकं तु कारयेत् ॥ यजमानं सपत्नीकं बंधुवर्गसमन्वितं । शांति-

सूक्तं पुरुषसूक्तं परंमृत्यो तथैव च ॥ आयुष्यं पावमानं च शिवसंकल्पषड्टचं । महाशांतिं प्रजप्याथ कलशं च प्रदापयेत् ॥ अभिषेकाप्लुतं
वस्त्रमाचार्याय निवेदयेत् । सालंकारां सवत्स्रां गामाचार्याय निवेदयेत् ॥ दशदानानि विप्रेभ्यः सुवर्णं शतमानकं । आज्यस्यावेक्षणं कुर्यात्ति-
लदानं तथैव च ॥ ब्रह्मणामाशिषो ग्राह्या नववस्त्रं तु धारयेत् । नीराजनं प्रकुर्वीत देवानामभिवादनं ॥ ब्राह्मणान्भोजयेत्पश्चात्सहस्रं वा शतं तु
वा । बंधुभिः सह भुंजीत दीर्घमायुश्च विंदति ॥ एवं यः कुरुते सम्यग्ग्रहशांतिं विधानतः । तस्यायुः शतवर्षांतं भवेदिति विनिश्चितं ॥
सर्वारिष्टविनाशश्च सर्वसंपद्भविष्यति । इत्युग्ररथशांत्याख्या षष्टितमाब्दशांतिः ॥ ॥ अथ प्रयोगः । कर्ता षष्टितमवर्षारंभदिने तद्द-
र्षांतर्गतजन्मर्क्षे वा शुभे काले चंद्रताराबलान्विते मंगलस्नानं विधाय कृतनित्यक्रियो विप्रानामंत्र्य तेभ्योऽनुज्ञां प्राप्य द्विराचमनादि-
देशकालस्मरणांते मम जन्मनः सकाशात्षष्टितमवर्षप्राप्त्या भविष्यत्त्वेन सूचितानां अपमृत्युदुःस्वप्नदर्शनमातापितृमृतिभार्यापुत्[illegible]
ग्रहपीडाराजभयविविधरोगच्छायाविकृतिस्फुटनक्षत्रध्रुवाद्यदर्शनयक्षरक्षोभूतप्रेतपिशाचादिविविधदर्शनानां अन्येषां च महोत्पातानां रिष्टरूपाणां
सद्यः परिहारपूर्वकं सर्वारिष्टविनाशदीर्घायुरारोग्यसर्वसंपद्भवनद्वारा श्रीप॰ सग्रहमखां शौनकोक्तां उग्ररथशांतिं करिष्ये इति संकल्प्य
गणेशपूजादिनांदीश्राद्धांते आचार्यं ब्रह्माणमृत्विजश्च वृणुयात् । तत आचार्य आचमनादिप्रादेशकरणांते ग्रहस्थापनादिकलशप्रार्थनांतं
कृत्वा तन्नैर्ऋत्यां स्थंडिलेऽग्निं प्रतिष्ठाप्य ध्यात्वाऽन्वादध्यात् । ग्रहादिकीर्तनांते मार्कंडेयं प्रधानदेवं समिदाज्यचरुदूर्वापायसैः प्रतिद्रव्यं १००८
संख्याभिराहुतिभिः । अष्टोत्तरशतसंख्याभिर्वा । मृत्युंजयं दूर्वातिलैः प्रतिद्रव्यं ५०००।२५००।१५०० पंचशतसंख्याभिर्वा । यद्वा तिलमिश्रदूर्वाभिः
१००००।५०००।३००० सहस्रसंख्याभिर्वा । अश्वत्थामानं १ बलिं २ व्यासं ३ हनुमंतं ४ बिभीषणं ५ कृपं ६ परशुरामं ७ चैतानुप-

त्वान् लाजैः प्रत्येकं २८ अष्टसंख्याभिर्वा। शेषेणेत्यादिसमिदाधानांते ग्रहाणामुत्तरतः महीद्यौरित्यादिविधिना कलशं संस्थाप्य इमंमइति जलेनापूर्य गंधद्वारामिति गंधं। याओषधीरिति सर्वौषधीः। रुवतिभीमइति पंचत्वचः। गायव्यादिमंत्रैः पंचगव्यानि। आप्यायस्वेत्यादिभिः पंचरत्नानि च क्षिप्त्वा दूर्वानिक्षेपादिपूर्णपात्रनिधानांते उक्तलक्षणप्रतिमायां मार्कंडेयं नाममंत्रेणावाह्य वस्त्रयुग्मेनावेष्ट्य षोडशोपचारैः संपूज्येध्माबर्हिषोः संनहनाद्याज्यभागांतं कृत्वा यजमानेन त्यागे कृते ग्रहादिहोमोत्तरं मार्कंडेय महाभाग सप्तकल्पांतजीवन। आयुरारोग्यमैश्वर्यं देहि मे मुनिपुंगवस्वाहेतिमंत्रेण समिदाज्यचरुदूर्वापायसानि त्र्यंबकमितिमंत्रेण दूर्वातिलान् तिलमिश्रदूर्वा वा उक्तसंख्यया हुत्वा अश्वत्थाम्नेस्वाहा। बलये० व्यासाय० हनुमते० बिभीषणाय० कृपाय०परशुरामायस्वाहेतिमंत्रैः प्रत्येकं २८ अष्टसंख्याभिर्वा लाजान् जुहुयात्। ततः श्रीसूक्तं रुद्राध्यायं च जपित्वायुष्यमंत्रान् जपेत्। ते च। एषवांदेवाविततिहृयोर्वामदेवोऽश्विनौ गायत्री। परावतोयइतिसप्तदशर्चस्य सूक्तस्य[illegible] विश्वेदेवा जगत्यंत्ये त्रिष्टुभौ। जपे०। ( आनोभद्राइति वाऽऽयुष्यसूक्तं ) ततः पुरुषसूक्तं च जपित्वा वेदपारायणं कार्यं। तदसंभवेऽग्निमीळइतिसूक्तजपः। ततः स्विष्टकृदादिप्रायश्चित्तहोमांते बलिदानं पूर्णाहुतिं च कृत्वा संस्रावहोमादिशेषं समाप्य स्थापितकलशोदकैः सकुटुंबं बंधुवर्गयुतं यजमानमभिषिंचेत्। तत्र मंत्राः। शंनइंद्राग्नीइतिपंचदशर्चस्य सूक्तस्य वसिष्ठो विश्वेदेवास्त्रिष्टुप्। सहस्रशीर्षेति षोडशर्चस्य०। परंमृत्योइति चतुर्दशर्चस्य सूक्तस्य संकुसुको विश्वेदेवास्त्रिष्टुप्। एकादशी प्रस्तारपंक्तिस्त्रयोदशी जगती चतुर्दश्यनुष्टुप्। एषवांदेवाविततिहृयो०। परावतोयइति सप्तदशर्चस्य०। स्वादिष्ठयेति दशर्चस्य सूक्तस्य मधुच्छंदाः सोमः पवमानो गायत्री। यजाग्रतइति षण्णां प्रजापतिर्मनस्त्रिष्टुप्। अभिषेके०। ततो ग्रहमंत्रैः सुरास्त्वामित्यादिपौराणैस्तच्छंयोरित्येतेन चाभिषिक्तो यजमानो धृतशुक्लांबरगंधमाल्योऽभिषेकवस्त्र-

माचार्याय दत्वा विभूतिं धृत्वा आचार्येण आनोभद्राइत्यादिमहाशांतिमंत्रजपपूर्वकं देवतोत्तरपूजने कृते मार्कंडेयादीन् प्रार्थयेत् । मार्कंडेय महाभाग० ॥ द्रौणे मे त्वं महाभाग रुद्रतेजःसमुद्भव । आयुर्बलं यशो देहि अश्वत्थामन्नमोस्तु ते ॥ दैत्येंद्रकुलसंभूत यज्ञदानक्रियारत । बले त्वां शरणं यामि दीर्घमायुः प्रयच्छ मे ॥ वसिष्ठकुलसंभूत वेदशास्त्रविशारद । नारायणांशसंभूत वेदव्यास नमोस्तु ते ॥ अंजनागर्भसंभूत कपींद्रसचिवोत्तम । रामप्रिय नमस्तुभ्यं हनुमन्रक्ष मां सदा ॥ विभीषण नमस्तुभ्यं रामपादाब्जपूजक । आयुरारोग्यमैश्वर्यं देहि पौलस्त्यनंदन ॥ द्विजेंद्र भरताचार्य सर्वविद्याविशारद । शरणं त्वां प्रपन्नोऽस्मि कृप मां रक्ष सर्वदा ॥ रैणुकेय महावीर्य कार्तवीर्यकृतांतक । आयुः प्रयच्छ मे राम जामदग्न्य नमोस्तु ते ॥ तत आचार्यादीन् संपूज्याचार्याय मार्कंडेयप्रतिमासहितं कलशं सालंकारां सवत्सां गां च दत्वा ब्रह्मादिभ्यो गवादिदशदानानि शतगुंजापरिमितं सुवर्णं च विभज्य दद्यात् । एतावत्स्वर्णाशक्तौ सर्षपादिशतसमतोलितं । गवादीनां प्रत्यक्षदानासंभवे तन्मूल्यं देयं । ततः विसर्जितग्रहपीठदानांते कांस्यपात्रे आज्यं विलोक्य सदक्षिणं तत्पात्रं ब्राह्मणाय दत्वा तिलदानं च कृत्वा ब्राह्मणाशिषो गृहीत्वा नववस्त्रं धृत्वा पुरंध्रीभिर्नीराजितो देवानभिवाद्य सहस्रं शतं वा विप्रान्संभोज्य भूयसीं दत्वा कर्म समाप्य सुहृद्युतो भुंजीत । इत्युग्ररथशांत्याख्यषष्टितमाब्दशांतिप्रयोगः ॥ ॥ अथ द्वादशाब्दोत्तरं प्रवासादागतस्यावलोकनविधिः संगृह्यते । भविष्ये स्मृत्यंतरे च । दंपती पितृपुत्रौ च स्वसारौ भ्रातरौ तथा । पुत्रिकापितरौ चैव भगिनीभ्रातरौ तथा ॥ पितृव्यो मातुलश्चैव दौहित्रो भागिनेयकः । ( पितृपुत्रौ पुत्रिकापितरावित्युभयत्र पितृपदेन मातुरप्युपलक्षणं । [illegible]ल्यात् । पितृव्यादिपदानां संबंधिशब्दत्वेन अर्थात्तैर्भ्रातृव्यादय उपलक्ष्यंते । मातुलपदेनैव भागिनेयोपलक्षणे सिद्धे पुनस्तद्ग्रहणं

ातृभगिन्युपलक्षणार्थं । तथा च दंपत्यादिद्वंद्वाष्टकं पितृव्यभ्रातृव्यौ मातुलभागिनेयौ दौहित्रमातामहौ दौहित्रमातामह्यौ भागिनेयमातृभगिन्यौ इत्येवं त्रयोदशद्वंद्वानां परस्परावलोकनं नेत्यर्थः ) द्वादशाब्दे व्यतीते तु दूरदेशं गतो यदि ॥ एतेषामेकमेकोऽपि नान्योन्यमवलोकयेत् । इच्छंति केचिदाचार्या अन्योन्यमवलोकनं ॥ शिवालयेऽथवा तीर्थे स्नात्वा प्रज्वाल्य दीपकौ । शिवं संपूज्य विधिवदुभौ तौ देवमध्यतः ॥ धृत्वा कांस्यमयं पात्रं सजलं रत्नपूरितं । शांतिजैर्मंत्रघोषैश्च द्विजैः सह विलोकयेत् ॥ आननं चैकमेकस्य दृष्ट्वा सम्यक् शिवं नमेत् । ब्राह्मणेभ्यो यथाशक्ति दद्यात्पात्रं सदक्षिणं ॥ अन्येभ्यश्चाथ विप्रेभ्यो यथावित्तानुसारतः । दद्याच्च दक्षिणां भक्त्या पूजयेच्च शिवं पुनः॥ नत्वा देवद्विजान्सूर्यमागच्छेत्स्वस्य मंदिरं । ततो व्याहृतिभिर्होमं शतमष्टोत्तरं तिलैः ॥ कृत्वाऽथ भोजयेद्विप्रान्यथावित्तानुसारतः । बांधवैः सह भुंजीत सर्वारिष्टप्रशांतये ॥ इत्थं यः कुरुते मर्त्यस्तस्यारिष्टं न विद्यते । आयुष्कामो नरश्चैवमकृत्वा नावलोकयेत् ॥ पूर्वावलोकित[illegible]ं तु विधिरेष उदाहृतः । न चैवाऽदृष्टपूर्वाणामिति प्राहुर्मनीषिणः ॥ “ शां० सा० पारिजाते । द्वादशाब्दे व्यतीते तु न कुर्याद्भ्रातृदर्शनं । पित्रोः पुत्रस्य नैवाहुर्महाहानिकरं भवेत् ॥ दर्शनं तु प्रकुर्वीत शिवं पूज्य शिवालये । कांस्यपात्रे विलोक्याज्यमंतःपटविधानतः ॥ मुखावलोकनं पश्चात्समालिंग्य विपर्ययात् । एवं कृते विधाने तु दोषशांतिर्भविष्यति ॥ सूर्यारुणसंवादे तु । गणेशमृत्युंजयविष्णुलक्ष्मीरघोरसंज्ञं ग्रहकं घटेषु । आवाह्य संपूज्य च धान्यराशौ होमं च कुर्यादिह देवमंत्रैः ॥ शिवपूजां प्रकुर्वीत प्रतिमापूजनं ततः । अघोरप्रतिमां दद्याद्ब्राह्मणाय सदक्षिणां ॥ अनेन सह गच्छ त्वं क्रीडस्व च सुखं चिरं । मां तथैवाधुना मुंच क्षमां कुरु ममोपरि ॥ शिवाग्रे तु समागत्य कृत्वा चैवांतरे पटं । उभाभ्यां नारिकेलं च भुक्त्वा भूयोऽभिगम्यतां ॥ निवर्तसूक्तं जस्त्वादावघोरं द्विजपुंगवं । अघोरप्रतिग्राहिणं ब्राह्मणमित्यर्थः ।

विसर्जयेत्पुनस्तं च नैव पश्येत्कदाचन ॥ कांस्यपात्रे घृतं कृत्वा दृष्ट्वा रूपं स्वकं स्वकं । तत्पात्रं ब्राह्मणे दद्यादक्षिणासंयुतं ततः । पादप्रक्षालनं कृत्वा आचम्य च यथाविधि ॥ शांतिमंत्रान्पठेत्पश्चात्पूजां गृह्य शिवं व्रजेत् । धूपदीपैश्च नैवेद्यतांबूलैर्दक्षिणादिभिः ॥ वस्त्रैराभरणैर्दिव्यैस्तोषयेच्छंकरं ततः । शिवस्य प्रार्थनां कृत्वा जपेत्सूक्तं कनिक्रदत् ॥ प्रदक्षिणिदभिचेति पठेत्सूक्तं शिवोपरि । पुष्पांजलिं च युगपद्द्यान्निष्कास्य तं पटं ॥ पुनःपुनर्नमस्कृत्य पश्चात्तं च विलोकयेत् । प्रणामालिंगनं कुर्यात्स्वागतं क्षेम पृच्छति ॥ ततो द्विजवराः सर्वे सूक्तानि स्वस्तिमंति च । पठित्वा होमदेशं च गच्छेयुश्च मुदान्विताः ॥ प्रतिमापूजनं कृत्वा वह्नेश्चापि यथाक्रमं । दूर्वातिलाज्यचरुणा हुनेदष्टोत्तरं शतं ॥ होमशेषं समाप्यैवं ब्रह्माचार्यादिकान्यजेत् । अभिषेकं ततः कुर्युरुभयोर्मंगलं वदेत् ॥ स्वस्तिशब्दं तथा कुर्युर्गां च दद्यात्पयस्विनीं । देवान्वह्निं विसृज्याथ कुंभे लक्ष्मीं निधाय च ॥ आचार्यब्रह्मऋत्विग्भिर्वाद्यघोषपुरःसरं । स्वगृहं च शनैर्गच्छेत्सार्धं तेन प्रवासिना ॥ देवानां चैव तृप्त्यर्थं कर्तव्यं द्विजभोजनं । एवं कृते विधाने तु न स्याद्विघ्नः कदाचन । देवद्विजप्रसादेन कल्याणं स्यान्न संशयः ॥ आयुष्यं क्षेममारोग्यं पुत्रपौत्रप्रवर्धनं । सौभाग्यमतुलं चैव लभेदस्य प्रसादतः ॥ आरामे पुण्यतीर्थे वा देवागारेऽथ संगमे । कर्तव्यं च सरित्तीरे विधानं क्षेमदं भवेत् ॥ " इति द्वादशाब्दोत्तरमवलोकनविधिः ॥ ॥ अथ प्रयोगः । उभौ स्नात्वा देशकालौ संकीर्त्य मम अमुकस्यावलोकने विदेशगमनेन द्वादशवत्सरात्ययसूचितसर्वारिष्टपरिहारद्वारा श्री० यथाविध्यवलोकनं करिष्ये इति संकल्प्य गणेशपूजांते शिवालये तीर्थे वा गत्वा दीपौ प्रज्वाल्य पटांतर्हितौ भूत्वा शिवस्योभयत उपविश्योभौ शिवं संपूज्य ब्राह्मणैः सह शांतिमंत्रपाठांते रत्नसहिते जलपूर्णे कांस्यपात्रेऽन्योन्यमवलोक्य शिवं नमेतां । ततो ब्राह्मणाभ्यां सदक्षिणे कांस्यपात्रे दत्वाऽन्येभ्यश्च यथाशक्ति दक्षिणां दत्वा पुनरुभौ

शिवं द्विजान्सूर्यं च नत्वा स्वगृहमागत्य पृथग्घोमं कुर्यातां । सचेत्थं । आचमनादिदेशकालस्मरणांते मया कृताऽमुकावलोकनविध्यंगभूतं होमं करिष्ये इति संकल्प्य स्थंडिले पावकसंज्ञमग्निं प्रतिष्ठाप्य ध्यात्वाऽन्वादध्यात् । चक्षुषीआज्येनेत्यंते अग्निं वायुं सूर्यं प्रजापतिं च तिलैः प्रत्येकं सप्तविंशतिसंख्याभिराहुतिभिः । शेषेणस्विष्टकृतमित्याद्याज्यभागहोमांते व्यस्तसमस्तव्याहृतिभिस्तिलान् हुत्वा स्विष्टकृद्धोमादिशेषं समाप्य शक्त्या विप्रान्संभोज्य कर्म समाप्य बांधवैः सह भुंजीत । इति द्वादशाब्दादूर्ध्वमवलोकनप्रयोगः ॥ ॥ अथ जीवतो मृतिवार्ताश्रवणे विधानं संगृह्यते । “ वि० मा० गर्गसंहितायां । दुष्टस्थाने यदा पुंसो भवेत्क्रूरो नभश्चरः । प्रकोपो वा दैवतस्य तदा विघ्नोऽभिजायते ॥ मृत एवेति वार्ता स्यात्सर्वदेशे दुरत्यया । विधानं तत्र कर्तव्यं नरेण हितमिच्छता ॥ आहूय ब्राह्मणान्भक्त्या चतुर्वेदपरायणान् । स्नात्वा तैलेन शुद्धेन पूजयेत्कुलदेवतां ॥ पितॄन्संतर्प्य विधिवत्स्वस्ति वाच्या द्विजोत्तमाः । जुहुयाद्विधिवद्वह्नाविंद्रप्रीत्यै समाहितः ॥ स्वादिष्ठयेतिमंत्रेण जुहुयादयुतं सुधीः । पायसं सर्पिषा युक्तं प्रधानं द्रव्यमुत्तमं ॥ मूर्तिमिंद्रस्य हेम्नस्तु पीठे देवतरोः शुभे । पूजितां विधिवद्भक्त्या आचार्याय निवेदयेत् ॥ हुत्वा स्विष्टकृतं विद्वान् गां च दद्यात्पयस्विनीं । तैलं दद्याद्द्विजातिभ्यो विघ्ननाशाय भूरिशः ॥ ब्राह्मणान्भोजयेत्पश्चाच्छतं वा शक्त्यपेक्षया । आत्मनस्त्वायसीं मूर्तिं पलैस्तु दशभिः कृतां ॥ तैलाभ्यक्तां ततो दद्याद्ब्राह्मणाय सदक्षिणां । तत्र मंत्रौ । सहस्राक्ष महाबाहो सर्वविघ्नविनाशन । अनेन मूर्तिदानेन सुप्रीतो भव मे सदा ॥ अपमृत्युविनाशाय मूर्तिमेतां ददाम्यहं । तुष्टेन मृत्युनाऽनेन पातकं मे व्यपोहतु ॥ ततः पुण्यस्त्रियो वृद्धा विप्राश्च गुरवस्तथा । नीराजनं तु दुर्वार्ताहरणाय पुनःपुनः ॥ ततोऽभिषेचनं कुर्युर्दुर्वार्तापीडितस्य तु । वृद्धान्प्रणमतस्तस्य दद्युराशीर्वचो द्विजाः ॥ ( शतंजीवेत्यादय आशीर्मंत्राः ) ग्रहं तु पूजयेद्दुष्टं प्रणमेत्कुलदेवतां । एवं

कृते विधाने च विघ्नः कोऽपि न जायते ॥ " यो जीवन्नेव स्वस्य मृतिवार्तां श्रृणुयात्स आहिताग्निश्चेदग्नये सुरभयेऽग्नये सुरभिमते वाऽष्टाक-पालेनेष्टिं कुर्यात् । तत्र मम स्वमृतिवार्ताश्रवणसूचितसकलानिष्टनिरसनद्वारा श्रीपर० सौरभिमतेष्ट्या यक्ष्य इति संकल्पः । गृह्याग्निमांस्तु स्थालीपाकमुभयातिरिक्तस्तु लौकिकेऽग्नौ स्थालीपाकं कुर्यात् । यस्य तु मृतिवार्ताश्रवणेनौर्ध्वदेहिकमपि कृतं तस्य पुनरागमने संग्रहप्रकार उच्यते । संग्राह्यापेक्षया वयोधिकः पित्रादिर्देशकालौ स्मृत्वा अमुकगोत्रस्यामुकशर्मणः पैतृमेधिककरणोत्तरं पुनरागतस्य संग्रहासिद्धिद्वारा श्री० संग्रहविधिं करिष्य इति संकल्प्य तं घृतकुंडे मज्जयित्वा सुलग्ने उत्थाप्य पुनर्देशकालौ स्मृत्वा अमुकगोत्रस्यामुक० जातकर्मादिसंस्कारान्करिष्ये इति संकल्प्य गणेशपूजादिनांदीश्राद्धांते जातकर्मादिचौलांतान्संस्कारांस्तल्लोपप्रायश्चित्तं वा कृत्वा पुनरुपनयनं विधाय त्रिरात्रं व्रतचर्यां कारयित्वा बह्वृचश्चेन्मेधाजननमपि कुर्यात् । संस्कार्यस्तु बेदव्रतलोपप्रायश्चित्तं समावर्तनं च विधाय पूर्वा पत्नी चेत्तया सह विवाहहोमं गृहप्रवेशहोमं च कुर्यात् । अयं विधिरनाहिताग्नेः । आहिताग्नेस्तु श्रौताग्न्याधानाद्यधिकमस्ति । स्त्रीणां तु प्रथमस्थालीपाको ब्राह्मणद्वारा कार्यः । उपनयनादिसमावर्तनांतं नास्ति । सुवासिनी चेत्पूर्वपतिना सह विवाहहोमादीति विशेषः । शूद्राणामप्येवं । एवं कृते कर्माधिकारः । इति जीवतो मृतिवार्ताश्रवणविधानं ॥ ॥ अथ वंध्यात्वहरं रुद्रस्नानं । हेमाद्रौ भविष्ये । युधिष्ठिर उवाच । रुद्रस्नानं विधानेन कथयस्व जनार्दन । सर्वारिष्टोपशमनं सर्वशांतिप्रदं नृणां ॥ कृष्ण उवाच । देवसेनापतिं स्कंदं रुद्रपुत्रं षडाननं । अगस्त्यो मुनिशार्दूलः सुखासीनमुवाच ह ॥ सर्वज्ञोऽसि कुमारस्त्वं प्रसादाच्छंकरस्य वै । स्नानं रुद्रविधानेन स्त्रीणां ब्रूहि कथं भवेत् ॥ स्कंद उवाच । मृतवत्सा तु या नारी दुर्भगा ऋतुवर्जिता । या सूते कन्यका वंध्या स्नानमासां विधीयते ॥ अष्टम्यां च चतुर्दश्यामुपवासपरायणः । ऋतौ

शुद्धे चतुर्थेऽह्नि प्राप्ते सूर्यदिनेऽथ वा ॥ नद्योस्तु संगमे कुर्यान्महानद्योर्विशेषतः । शिवालयेऽथ वा गोष्ठे विविक्ते वा गृहांगणे ॥ आहिताग्निं द्विजं शांतं धर्मज्ञं सत्यवादिनं । स्नानार्थं प्रार्थयेदेनं निपुणं रुद्रकर्मणि ॥ ततस्तु मंडपं कुर्याच्चतुरस्रमुदक्प्लवं । ( उत्तरे निम्नं ) बद्धचंदनमालं च गोमयेनानुलेपितं ॥ तन्मध्ये श्वेतरजसा संपूर्णं पद्ममालिखेत् । तस्य मध्ये महादेवं स्थापयेत्कर्णिकोपरि ॥ दध्याद्दलेषु नंद्यादींश्चतुर्षु विधिपूर्वकं । इंद्रादिलोकपालांश्च दलेष्वष्टसु विन्यसेत् ॥ देवीं विनायकं चैव स्थापयेत्तत्र पार्थिव । दत्वाऽर्घ्यं गंधधूपं च पुष्पदीपं गुडौदनं ॥ भक्ष्यान्नानाविधान्दद्यात्फलानि विविधानि च । चतुःकोणेषु भृंगारमश्वत्थदलपूरितं ॥ ( भृंगारं द्विमुखपात्रं । झारीति भाषायां ) एकैकं विन्यसेद्ब्रह्मन् सर्वौषधिसमन्वितं । मंडपस्य चतुर्दिक्षु दद्याद्भूतबलिं तदा ॥ आग्नेय्यां दिशि कर्तव्यं मंडपस्य समीपतः । अग्निकार्यं शुभे कुंडे पत्रपुष्पैरलंकृते ॥ लवणं पयसा युक्तं घृतेन मधुना सह । मानस्तोकेन जुहुयात्कृते होमे नवग्रहे ॥ द्वितीयस्याग्निकार्यस्य कर्ता च ब्राह्मणो भवेत् । रुद्रजप्यकृदाचार्यः सितचंदनचर्चितं ॥ सितवस्त्रपरीधानं सितमाल्यविभूषितं । शोभयेत्कंकणै रुक्मकर्णवेष्टांगुलीयकैः ॥ पूर्वमंडलवत्कार्यं द्वितीयं मंडलं शुभं । तस्य मध्ये तु सा नारी श्वेतपुष्पैरलंकृता ॥ श्वेतवस्त्रपरीधाना श्वेतगंधानुलेपना । सुखासनोपविष्टा स्यादाचार्यो रुद्रजापकः ॥ अभिषिंचेत्ततश्चैनामर्कपत्रपुटांबुना । चतुःषष्टिऋचेनैव रुद्रेणैकादशेन तु ॥ शतानि सप्तपर्णानां चतुर्भिरधिकानि तु । पर्णानामिति ऋचां तासां चतुःषष्टिसंख्यानामेकादशकृत्वः पठितानामियं संख्या । अच्छिद्रेणेतिमंत्रेण स्नानार्थं विनिवेशयेत् ॥ अश्वस्थानाद्गजस्थानाद्वल्मीकात्संगमाद्ध्रदात् । वेश्यांगणाद्राजगृहाद्गोष्ठादानीय वै मृदं ॥ सर्वौषधी रोचनां च नदीतीर्थोदकानि च । एतत्संक्षिप्य कलशे कुशला काचिदंगना । रुद्राभिजप्तेन ततः स्नापयेत्कलशेन तां ॥ तोयपूर्णोदकलशैरश्वत्थदलपूरितैः । सर्वदिक्संस्थितैः पश्चात्स्नापयेत्कल-

शाक्षतैः ॥ एवं स्नाता स्नापकाय दद्याद्गां कांचनं तथा । होतुरेवात्र निर्दिष्टा दक्षिणा गौः पयस्विनी ॥ ब्राह्मणानामथान्येषां स्वशक्त्या मुनिपुंगव । स्रग्वस्त्रकांचनादीनि दत्वा सर्वान्क्षमापयेत् ॥ कृतेनानेन विप्रेंद्र रुद्रस्नानेन भामिनी । सुभगा कांतिसंयुक्ता बहुपुत्रा प्रजायते ॥ सर्वेष्वपि हि मासेषु ब्राह्मणानुमतेषु च । तस्मादवश्यं कर्तव्यं पुत्रं स्त्री सुखमृच्छति ॥ या स्नानमाचरति रुद्रमिति प्रसिद्धं श्रद्धान्विता द्विजवरानुमते नतांगी । दोषान्निहंति सकलान्स्वशरीरभाजो भर्तुः प्रिया भवति भारत जीववत्सा ॥ ॥ अथ हेमाद्रावन्यथा स्नानं । पार्वत्युवाच । प्रेतप्रजाऽप्रजा वापि स्त्रीप्रजा वापि जायते । ग्रहरोगान्विता वापि त्यक्ता त्यजति वा यदि ॥ वद देव कथं तस्याः सर्वमेतद्विनश्यति । जायते च तथाऽभीष्टमतः पृच्छामि शंकर ॥ ईश्वर उवाच । शृणु येन प्रणश्यंति दोषाः स्त्रीणां त्वयोदिताः । जायते च तथाऽभीष्टं यथावत्कथयामि ते ॥ गोमूत्रगोमयाभ्यां च भूशुद्धिं परिकल्पयेत् । आवृते वितते देशे यत्र नान्यः प्रपश्यति ॥ कुंभान्समानयेत्तद्वद्दशैकं च तथा द्विजान् । आहूय प्रार्थयेत्तस्वानर्चयेत्प्रियकृच्छ्रिया ॥ प्रक्षाल्य स्थापयेत्कुंभान्पूरयेत्तीर्थवारिणा । कृत्वात्मरक्षां विधिवत्स्वास्तिकं च तथासनं ॥ यजेन्मां सर्वकामेशं प्राणानायम्य वाग्यतः । संकल्प्यावाह्य कुंभेषु मामेवाऽऽत्वाहंत्विति ॥ आसादितं समस्तं तु तत्रैव परिकल्पयेत् । कुंभस्य बाह्यदेशे तु लोकपालान्प्रपूजयेत् ॥ बौधायनोक्तविधिना गंगामीशानसंनिधौ । त्वरितश्च ततो नत्वा इंद्रादीन्मूलमंत्रतः ॥ प्रणवश्चादितः कार्यो नमश्चांते तथैव च । देवतापदमध्यस्तु मूलमंत्रः प्रकीर्तितः ॥ रुद्रैकादशिनीमेकां स्पृष्ट्वा कुंभोदकं जपेत् । पुनः संपूज्य विधिवन्मामिंद्रादींस्तथैव च ॥ एवं सर्वेषु कुंभेषु सर्वैः कार्यं द्विजोत्तमैः । ततः कुंभान्समादाय क्रमान्मूर्ध्नि विसर्जयेत् ॥ एतदेकादशगुणं कर्तव्यं द्विजसत्तमैः । एकादशेऽह्नि विधिवत्कर्तव्यं द्विजतर्पणं ॥ दत्वा च दक्षिणां तेभ्यो नमस्कृत्य विसर्जयेत् । एवं दोषाः प्रणश्यंति जायते तु यथेप्सितं ॥ पुरुषस्यापि कर्तव्यं

हरोगान्वितस्य च । पुत्र्यायुर्बलकामस्य क्षत्रियस्य जयार्थिनः । प्रतिसंवत्सरं यस्तु चैत्रशुक्ले शुभे दिने ॥ करोति श्रद्धया युक्तस्त्वने-
काघापनुत्तये ॥ इति रुद्रस्नानं ॥ ॥ अथास्मत्पितृकृतो रुद्रस्नानप्रयोगः । उदगयनादौ गुरुशुक्रास्तादिरहिते शुद्धे मासि शुक्लपक्षे
ऋतौ च विशेषेण चतुर्थेह्नि अष्टम्यां चतुर्दश्यां वा रविवासरे वा शुभनक्षत्रे चंद्रताराद्यानुकूल्ये तत्कर्तव्यं । इदं च चतुर्विधवंध्यात्वे
विशेषतो मृतापत्यत्वे भवति । एतन्महाद्योर्नद्योर्वाऽशोष्यसंगमे संगममात्रे वा कार्यं । इदं चोदगयनासंभवे सर्वमासेषु दक्षिणायने
च कार्यं । सर्वेष्वपि हि मासेषु ब्राह्मणानुमतेषु च । तस्मादवश्यं कर्तव्यं पुत्रं स्त्री सुखमृच्छतीति हेमाद्रौ भविष्योत्तरोक्तेः । तत्र पूर्वं कर्ता
सभार्यः दीर्घायुःसुपुत्राद्युत्पत्तिप्रतिबंधकदुरितनिरासार्थं यथाशक्ति प्रायश्चित्तमनुतापयुक्तः कुर्यात् । तच्च फलतारतम्यावगतदुरिततारतम्येन
षडब्दत्र्यब्दसार्धाब्दरूपं चांद्रायणकृच्छ्रातिकृच्छ्ररूपं वा द्रव्यजप्यहोमतीर्थब्राह्मणभोजनादिप्रत्याम्नायैः कार्यं सभ्योपदिष्टं । ततः श्रीरुद्रप्रीत्यर्थं कृ-
ष्णामेकां धेनुं शक्त्योपस्करयुतां दद्यात् । तदशक्तौ लक्षतदर्धतदर्धमितमयुतं वा गायत्रीजपं तद्दशांशेन तिलहोमं च कुर्यात् । एवं कृते
रुद्रस्नानेऽधिकारी भवति । ततः प्रागुक्ते काले देशे च कर्ता सभार्यः कृतस्नानः शुद्धः शुद्धे वाससी परिधाय आसनोपविष्ट आचांतो भूमि-
शुद्धिपूर्वकं प्राणायामस्य देशकालौ स्मृत्वा मम सभार्यस्य दीर्घायुःसुपुत्रादिसंततिप्रतिबंधकेन इहजन्मन्यन्यजन्मनि वा कृतेनाऽष्टका-
पर्वादिपैतृकनैमित्तिकाकरणेन वा परद्वेषेण वा गुरुद्वेषेण वा मृगशावभक्षणेन वा बालघातेन वा रत्नापहरणेन वा
वत्सवियोजनेन वा पितृमातृद्वेषेण वाऽन्येन वा कर्मणोत्पन्नचतुर्विधवंध्यात्वान्यतरवंध्यात्वदोषनिरासेन तथा स्त्रियाः कुक्षिदोषज्ञाताज्ञाता-
न्यदुष्टस्त्रीचैलांचलस्पर्शदोषतदेकासनाशनशयनादिजनितदोषादिसर्वसंततिप्रतिबंधकनिरासेन च दीर्घायुःसुपुत्रादिसंतत्यवाप्तिद्वारा उमास-

हितश्रीरुद्रप्रीत्यर्थं बौधायनोक्तविधिना रुद्रकलशस्नानाख्यं कर्म करिष्य इति संकल्प्य गणेशपूजनं पुण्याहवाचनं मातृकापूजनं नांदीश्राद्धं च संकल्पपूर्वकं कुर्यात् । एतानि कृत्वा प्रधानसंकल्पः । तत आचार्यब्रह्मर्त्विग्वरणं करिष्य इति संकल्प्य वरणं कर्तुं ब्राह्मणान्प्रार्थयेत् । ब्राह्मणाः संतु मे शांताः पापात्पांतु समाहिताः । वेदानां चैव दातारस्त्रातारः सर्वदेहिनां ॥ जपैर्यज्ञैस्तथा होमैर्दानैश्च विविधैः पुनः । देवानां च पितॄणां च तृप्त्यर्थं याजकाः स्मृताः ॥ येषां देहस्थिता वेदाः पावयंति जगत्त्रयं । ते मां रक्षंतु सततं जपयज्ञैर्व्यवस्थिताः ॥ आहिताग्निं द्विजं शांतं धर्मज्ञं सत्यवादिनं । स्नानार्थं प्रार्थयेदेनं निपुणं रुद्रकर्मणि ॥ इति लक्षणयुतमाचार्यं ब्रह्माणमृत्विजश्चैकादश वृणुयात् । ततः सर्वान्मधुपर्कवस्त्रालंकारादिभिः पूजयेद्यथाशक्ति । तत आचार्यादिसहितो मंडपं प्रविशेत् । ततः सऋत्विगाचार्यः संकल्पपूर्वकं सलक्षणे कूटे वा मंडपे वा ऐशान्यां सर्वतोभद्रं लिंगतोभद्रमष्टदलं वा प्रत्येकं कृत्वा तत्समीपे परितः सप्तधान्यानि मंगलार्थं निधाय रक्षोहणमित्याद्यैः यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वदा । स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु ॥ अपक्रामंतु भूतानि पिशाचाः सर्वतो दिशं । सर्वेषामविरोधेन ब्रह्मकर्म समारभे । इति च सर्षपान्विकीर्य पंचगव्येन शुचीवोहव्येति तृचेनाभ्युक्ष्य मंडपपूजां विधाय चित्रासने कंबलासने वोपविश्य भूतशुद्ध्यादिकमात्मरक्षां च कृत्वा श्रीरुद्रं ध्यात्वा आराधितो मनुष्यैस्त्वं सिद्धैर्देवासुरादिभिः । आराधयामि भक्त्या त्वां मां गृहाण महेश्वरेति प्रार्थयेत् । ततः प्रत्येकमिंद्रादिदिक्पालान्प्रणवादिनमोंततत्तन्नाममंत्रैर्नत्वा महीद्यौरिति भूमिं स्पृष्ट्वा ओषधयःसमिति यवान् क्षिप्त्वा आकलशेष्विति क्षालितान्कलशान् यवेषु निधाय इमंमेगंगइति तीर्थजलेनापूर्य तत्र गंधद्वारामिति गंधं । ओषधयःसमिति यवान् । याओषधीरिति सर्वौषधीः । कांडात्कांडादिति दूर्वाः । याःफलिनीरिति फलं । स्योनापृथिवीति सप्तमृदः । अश्वत्थे-

वेइति पंचपल्लवान् । सहिरत्नानीति पंचरत्नानि । हिरण्यरूपइति हिरण्यं च क्षिप्त्वा युवंवस्त्राणीति वस्त्रेण रक्तसूत्रेण च वेष्टयित्वा पूर्णा-
दर्वीति वंशमयानि पूर्णपात्राणि निधाय कलशस्यमुखेविष्णुरित्यादिना कलशेषु देवतीर्थान्यावाह्य देवदानवसंवादेइत्यादिना कलशं संप्रार्थ्य
त्र्यंबकमिति श्रीरुद्रमावाहयेत् । ततः समुद्रादूर्मिरिति समुद्रं कलशजले भावयित्वा कलशस्य मूले ब्रह्मजज्ञानमिति ब्रह्माणं । मध्ये इदं-
विष्णुरिति विष्णुं । कंठे नमःशंभवेइति रुद्रं । मुखे इंद्राग्नीआगतमितींद्राग्नी यमेनदत्तमिति यमं च । सर्वत इषेत्वेति देवान् । आदित्प्रत्नस्येति
सूर्यं । विश्वतश्चक्षुरिति परमेष्ठिनं च । पार्श्वयोर्नमोस्तुसर्पेभ्यइति सर्पान् । पूर्वे अग्निमीळइति ऋग्वेदं । दक्षिणत इषेत्वेति यजुर्वेदं । पश्चिमे
अग्नआयाहिवीतयइति सामवेदं । उत्तरे शंनोदेवीरित्यथर्ववेदं । मध्ये तत्सवितुरिति गायत्रीं न्यसेत् । पूर्वाद्यष्टदिक्षु तत्तन्मंत्रैर्नामभिर्वा इंद्रादी-
नष्टौ न्यस्य कांडात्कांडादिति दूर्वाः शिरसि निक्षिपेत् । ततो वंशपात्रेष्वष्टदलयुतानि वस्त्राणि संस्थाप्य तत्र निष्कतदर्धतदर्धसुवर्णनिर्मिता
अशक्तौ कृष्णलावल्लाऽवरसुवर्णनिर्मिताः श्रीरुद्रप्रतिमा अग्न्युत्तारणपंचामृताभिषेकपूर्वकं संस्थाप्य तास्वात्वावहंतुहरयइत्युमासहितं श्रीरुद्र-
मावाह्य सद्योजातंप्रपद्यामीत्यासनं । सद्योजातायवैनमोनमइति पाद्यं । भवेभवेनातिभवेभवस्वमामित्यर्घ्यं । भवोद्भवायनम इत्याचमनीयं ।
वामदेवायनमइत्यापोहिष्ठेत्याद्यैश्च स्नानं दत्वाचमनं च दत्वाऽष्टभिस्तर्पयेत् । भवं देवं तर्पयामि । शर्वं देवं० रुद्रं देवं० पशुपतिं देवं० उग्रं
देवं० ईशानं देवं० भीमं देवं० महांतं देवं० । ततो ज्येष्ठायनमइति वस्त्रं । तूष्णीमाचमनं । श्रेष्ठायनम इत्युपवीतं । तूष्णीमाचमनं । रुद्रायनम
इत्यलंकारं । कालायनमइति गंधं । कलविकरणायनमइति पुष्पं । बलविकरणायनमइति धूपं । बलायनमइति दीपं । बलप्रमथनायनम-
इति नैवेद्यं । तूष्णीमाचमनं । सर्वभूतदमनायनमइति तांबूलं । मनोन्मनायनमइति दक्षिणां दद्यात् । केचित्तु सद्योजातमिति प्रतिष्ठाप्य

सद्योजातायेत्यासनं । भवेभवेइति पाद्यं । भवोद्भवायेति स्नानं। तर्पणमष्टभिः। ज्येष्ठायेत्याचमनं।श्रेष्ठायेति मधुपर्कं। रुद्रायेति वस्त्रं । कालायेति गंधं । कलविकरणायेति पुष्पं । सर्वभूतदमनायेति धूपं । मनोन्मनायेति दीपं । भवोद्भवायेति नैवेद्यं । त्र्यंबकमिति वस्त्रादीनि दद्यादित्याहुः। अथाष्टौ पुष्पांजलीन्दद्यात् । भवाय देवाय नमः । शर्वाय देवाय० रुद्राय० पशुपतये० उग्राय० ईशानाय० भीमाय० महते देवाय नम इति । अथास्याघोरतनूरघोरेभ्य इत्युपतिष्ठेत । ततो नमस्कारः । विश्वेश्वर विरूपाक्ष विश्वरूप सदाशिव । शरणं भव भूतेश करुणाकर शंकर ॥ हर शंभो महादेव विश्वेशामरवल्लभ । शिव शंकर सर्वात्मन्नीलकंठ नमोऽस्तु ते ॥ मृत्युंजयाय रुद्राय नीलकंठाय शंभवे । अमृतेशाय शर्वाय महादेवाय ते नम इति । ततः प्रार्थना । राजसेन स्वयं ब्रह्मा सात्विकेन स्वयं हरिः । तामसेन स्वयं रुद्रस्त्रितयं त्वयि संस्थितं ॥ नमामि त्वां विरूपाक्ष नीलग्रीव नमोऽस्तु ते । त्रिनेत्राय नमस्तुभ्यमुमादेहार्धधारिणे ॥ त्रिशूलधारिणे तुभ्यं भूतानां पतये नमः । पिनाकिने नमस्तुभ्यं मीढुष्टमाय ते नमः ॥ नमामि त्वां महादेव पतये त्वां नमाम्यहं । भोक्ता भोज्यस्त्वमेवेश भक्तानां शर्मदः स्वयं ॥ सूर्यरूपं समासाद्य देहिनां देहधारकः । मुनीनां मुक्तिदाता च भक्तानां मुक्तिदः स्वयं ॥ यदृच्छया सर्वमिदं त्वामध्येति च याति च । नान्यस्य विजयं दातुं शक्तिरस्ति त्वया विनेति । ततः आराधितो मनुष्यैस्त्वं सिद्धैर्देवासुरादिभिः । आराधयामि भक्त्या त्वां मां गृहाण महेश्वरेत्यात्मानं निवेदयेत् । ततः पूर्वाद्यष्टकमलदलेष्विंद्राद्यष्टदिक्पालान्संपूज्याऽन्नादिबलिमुपहृत्य प्रार्थयेत् । इंद्राद्याश्च सुराः सर्वे लोकपालास्तथैव च । आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः ॥ ते सर्वे पूजिताः शांतिं प्रयच्छंतु सुखानि च । बलिदानादिना तुष्टाः प्रयच्छंतु यथेप्सितमिति । ततः सर्वे प्राणानायम्य देशकालौ स्मृत्वा यजमानस्यायुष्मत्सुपुत्रादिसंतत्यवाप्त्यर्थं रुद्रैकादशिनीजपं संकल्प्य साधारण-

न्यासांते विशेषन्यासं कुर्युः । सद्योजातमित्यादिपंचभिः प्रणवव्याहृतिपूर्वकैर्व्याहृतिप्रणवांतैर्व्यस्तैरंते समस्तैर्हृदयशिरःशिखाकवचनेत्रा-
स्त्राणि स्वस्मिन्विन्यस्यैवमेव कलशेषु न्यसेदिति । ततो राजसेनस्वयंब्रह्मेति स्तुतिपूर्वकं स्वस्वकलशान् स्पृष्ट्वा यजमानस्य शुभं ध्यायंतः
प्रत्येकं रुद्रैकादशिनीजपं कृत्वा राजसेनस्वयंब्रह्मेति स्तुत्वा क्षमापयेयुः । हीनो विभक्तिवर्णैश्च व्यंजनैश्च स्वरैस्तथा । जपो मे क्षम्यतां देव
प्रसादं कुरु किंकरे ॥ महारुद्रजपो होमो न्यूनश्चैवाधिकश्च यः । सर्वः संपूर्णतां यातु त्वत्प्रसादात्सदाशिव ॥ यदक्षरपदभ्रष्टं मात्राहीनं च
यद्भवेत् । तत्सर्वं क्षम्यतां देव प्रसीद परमेश्वरेति । तत आचार्यः कुंडे स्थंडिले वा स्वशाखोक्तविधिनाऽग्निं प्रतिष्ठाप्य तूष्णीं निर्वापादिना
चरुं पक्त्वाज्यभागांतं कृत्वा समित्तिलचर्वाज्यैः प्रतिद्रव्यं जपदशांशेन ऋत्विग्भिः सह होमं कुर्यात् । अत्र सर्वेषां द्वादशैकादशिनीजपरूपाणि
शतं द्वात्रिंशच्च । तद्दशांशस्त्रयोदशरूपाणि । तदाहुतयोऽष्टाचत्वारिंशत्पक्षे षट्शतानि चतुर्विंशतिश्च । शिष्टरूपद्वये दशांशाहुतयो दश । चमका-
हुतयश्चतुर्दश । सर्वा ह्यन्यूनसार्धषट्शतानि ६४८ । एतावान्प्रतिद्रव्यं होमः । अशक्तौ षोडशधादिपक्षेण । शक्तौ तु प्रतिमंत्रपक्षेण होमः कार्यः ।
तत एकादशशतसंख्यैरर्कपत्रैर्मूलमंत्रेण होमः कार्यः । सर्वोऽपि वा होमो मूलमंत्रेणैव कार्यः । मूलमंत्रस्य परमेष्ठिऋषिः । रुद्रो देवता । पंक्ति-
श्छंदः । होमादौ विनियोगः । अस्य न्यासः । परमेष्ठिने ऋषयेनमइति शिरसि । पंक्त्यै छंदसेनमइति मुखे । रुद्राय देवतायैनम इति हृदये ।
नमइति शिखायां । शंभवइति शिरसि । चेति ललाटे । मयइति नेत्रयोः । भवइति श्रोत्रयोः । चेति नासिकायां । नमइति मुखे । शंकरा-
येति ग्रीवायां । चेति हृदये । मयइति जठरे । करायेति नाभौ । चेति श्रोण्योः । नमइति कट्यां । शिवायेत्यूर्वोः । चेति गुह्ये । शिव-
तरायेति जानुनोः । चेति पादयोः । नमःशंभवेचेति हृदयायनमः । मयोभवेचेति शिरसेस्वाहा । नमःशंकरायचेति शिखायैवषट् ।

मयस्करायचेति कवचायहुं । नमःशिवायचेति नेत्रत्रयायवौषट् । शिवतरायचेत्यस्त्रायफट् । एवं होमं कृत्वा स्विष्टकृदादिपूर्णा-
हुतिप्राक्तनं होमशेषं समाप्याचार्यादयो गंधाद्युपचारै रुद्रस्योत्तरपूजां कृत्वाऽभिषेकार्थं रुद्रं प्रसाद्याग्नेरुत्तरतश्चतुरस्रं स्वस्तिकोपेतं
मंडलं कृत्वा तत्रोदुंबरकाष्ठपीठद्वये परिहिताऽहतश्वेतवस्त्रौ दंपती प्राङ्मुखावुपवेश्य स्वयमुदङ्मुखाश्चतुरधिकसप्तशतार्कपत्रैे रुद्रैकाद-
शिन्या मूलमंत्रेण वाऽभिषिंचेयुः । अत्र माध्यंदिनशाखायां रुद्राध्यायगतानां चतुःषष्टिमंत्राणामेकादशिन्यां चतुरधिकसप्तशतसंख्या
भवति । तेनैकैकेन मंत्रेणैकैकेनार्कपत्रेणाभिषिच्य पत्राणि त्यजेत् । अन्येषां तु शाखिनां मूलमंत्रेणैव तावद्वारावृत्तेन तथैवाभिषेक इति बौ-
धायनसंप्रदायः । ततः पल्लवैराशुःशिशानइति सूक्तेनाप्यायस्वेति सोमसूक्तेन यदंतियच्चेत्यादिपावमानीभिरापोहिष्ठेत्यादिभिः समुद्रज्ये-
ष्ठाइत्यादिभिः सहस्राक्षेणेतितृचेन सुरास्त्वामित्यादिपौराणैश्चाभिषिच्य शिवंशिवमिति वदेयुः । इह वाचार्योऽन्यान्यर्कपत्राणि गृह्णीयादित्येके।
ऋत्विज एवार्कपत्रैरेकादशिन्याचार्यस्तु पंचपल्लवैः सूक्तैरभिषिंचेदित्यन्ये । ततः सर्वौषधीभिः सप्तमृद्भिर्नद्या उभयकूलमृदा च सर्वांगेऽनुलिप्तौ
दंपती विशेषतः कुक्षिदेशेऽनुलिप्तां स्त्रियं शिष्टेनोद्धृतेन सर्वकलशोदकेन क्षालितांगौ शुद्धोदकेन स्नापयेयुः। ततस्तौ शरीरस्थाश्च ये दोषा ये दोषा
गर्भबीजयोः । ते सर्वे नाशमायांतु कर्मणाऽनेन भो द्विजाइति मंत्रमुच्चार्याभिषेकवाससी त्यक्त्वा शुद्धे वाससी परिधाय शुक्लचंदनमालाद्यलं-
कृतौ भवेतां । तत आचार्यो यजमानान्वारब्धः समुद्रादूर्मिरित्यादिमंत्रैः पूर्णाहुतिं हुत्वा वसोर्धारां जुहुयात् । तत्र श्रावयेत्सूक्तमाग्नेयं वैष्णवं
रौद्रमैंदवं । महावैश्वानरं साम ज्येष्ठसाम च पाठयेत् ॥ ततो यजमानः सपत्नीकः कृतत्र्यायुषकरणः पूजापूर्वकमाचार्याय पयस्विनीं धेनुं
सुवर्णं च यथाशक्ति दक्षिणां दत्वा ब्रह्मणे वृषभमृत्विग्भ्यो यथाशक्ति दत्वा क्षमाप्य श्रीरुद्राद्यावाहितदेवता विसृज्य श्रीरुद्रप्रीत्यर्थं शतं

तदर्धं तदर्धं वा ब्राह्मणान्भोजयित्वा तैः संपूर्णतां वाचयित्वा जीवत्पतिपुत्रादिभिर्वर्धापनादिकृतमंगलो ब्राह्मणाशिषो गृह्णीयात् । अनेन विधिना कार्यो रुद्रः कलशसंज्ञकः । भुंक्ते स सकलान्भोगान् प्रसादाच्छंकरस्य चेत्याह भगवान्बौधायनः । भट्टरामेश्वरसुतो भट्टनारायणात्मजः । रामकृष्णस्त्विमां चक्रे श्रीरुद्रस्नानपद्धतिं ॥ इति श्रीमन्नारायणभट्टसूरिसूनुरामकृष्णभट्टकृतो रुद्रस्नानप्रयोगः ॥ ॥ अथ शतचंडी सहस्रचंडी च । वाराहीतंत्रे । चंडीपाठे फलं देवि शृणुष्व गदतो मम । संकल्पपूर्वं संपूज्य न्यस्यांगेषु मनून् क्रमात् ॥ पठनाद्बलिदानाच्च सिद्धिमाप्नोति साधकः । उपसर्गोपशांत्यर्थं त्रिरावृत्तिं पठेन्नरः ॥ ग्रहोपशांत्यै कर्तव्या पंचावृत्तिर्वरानने । महाभये समुत्पन्ने सप्तावृत्तिं समुन्नयेत् ॥ नवावृत्त्याद्भवेच्छांतिर्वाजपेयफलं लभेत् । राजवश्याय भूत्यै च रुद्रावृत्तमुदीरयेत् ॥ अर्कावृत्ते काम्यसिद्धिर्वैरिहानिश्च जायते । मन्वावृत्ताद्वैरिनाशस्तथा स्त्री वश्यतामियात् ॥ सौख्यं पंचदशावृत्तौ श्रियमाप्नोति मानवः । कलावृत्तौ पुत्रपौत्रधनधान्यागमं विदुः ॥ राज्ञां भीतिविमोक्षाय वैरस्योच्चाटनाय च । कुर्यात्सप्तदशावृत्तं तथाऽष्टादशकं प्रिये ॥ महाव्रणविमोक्षाय विंशावृत्तं पठेत्सुधीः । पंचविंशावर्तनात्तु भवेद्बंधविमोक्षणं ॥ संकटे समनुप्राप्ते दुश्चिकित्स्यामये तथा । जातिध्वंसे कुलोच्छेदे आयुषो नाश आगते ॥ वैरिवृद्धौ व्याधिवृद्धौ धननाशे तथा क्षये । तथैव त्रिविधोत्पाते तथा चैवातिपातके ॥ कुर्याद्यत्नाच्छतावृत्तं ततः संपद्यते शुभं । श्रेयोवृद्धिः शतावृत्ताद्राज्यवृद्धिस्तथा परा ॥ मनसा चिंतितं देवि सिध्येदष्टोत्तराच्छतात् । सहस्रावर्तनाल्लक्ष्मीरावृणोति स्वयं स्थिरा ॥ भुक्त्वा मनोरथान्कामान्नरो मोक्षमवाप्नुयात् । चंड्याः शतावृत्तिपाठात्सर्वाः सिध्यंति सिद्धयः ॥ शतसाहस्रिकावृत्त्या दिक्चक्राधिपतिर्भवेत् । ॐ नारायणाय नमः । नराय॰ नरोत्तमाय॰ देव्यै॰ सरस्वत्यै॰ व्यासाय॰ इति नत्वा पठेत् । विधिवाक्यपाठस्त्वमूलो भ्रांतानां । अध्यायं प्राप्य विरमेन्नतु मध्ये कदाचन । कृते विरामे मध्ये तु

अध्यायादि पठेन्नरः ॥ तथा । देव्यर्चामग्रतः कृत्वा ब्राह्मणानां विशेषतः । ग्रंथिं वा शिथिलं कुर्याद्वाचकः कुरुनंदन ॥ ( देव्या अर्चा प्रतिमां ) इति शतचंडी सहस्रचंडी च ॥ ॥ अथ मंडपादि । नत्वा गणेश्वरं देवीं पितरौ राघवं शिवं । रामकृष्णतनूजेन कमलाकरशर्मणा ॥ डामरं यामलं चैव योगिनीतंत्रमेव च । वाराहीतंत्रमन्यांश्च ग्रंथानालोक्य यत्नतः ॥ सहस्रचंडिकायाश्च शतचंड्यास्तथैव च । नवार्णन्यासविधिना प्रयोगः प्रोच्यतेऽधुना ॥ तत्र यजमानः शुभे देशे मंडपं चिकीर्षुर्गणेशकूर्मशेषवसुधानां पूजनं कृत्वा शतचंड्यां षोडशहस्तं सहस्रचंड्यां विंशतिहस्तं मंडपं प्रसाध्य तदाग्नेयस्तंभावटे मध्ये वा पूर्वोक्तदेवानां पूजां कृत्वा ताम्रपात्रेऽर्घ्यमादाय जानुभ्यामवनिं गत्वा आगच्छ सर्वकल्याणि वसुधे लोकधारिणि । उद्धृतासि वराहेण सशैलवनकानना ॥ मंडपं कारयाम्यद्य त्वदूर्ध्वं शुभलक्षणं । गृहाणार्घ्यं मया दत्तं प्रसन्ना शुभदा भवेति भूम्यै अर्घ्यं दत्वा मंडपं विधाय तन्मध्ये ऐशान्यां हस्तमात्रां द्व्यंगुलवप्रां ग्रहवेदीं कृत्वा पश्चिमे शतचंड्यां द्विहस्तं सहस्रचंड्यां चतुर्हस्तं षड्ढस्तं वा चतुरस्रं पद्मकुंडं वा कुर्यात् । तत्राष्टाचत्वारिंशदंगुलानि चतुर्हस्ते करणी । अष्टपंचाशदंगुलानि सप्तयवा यूकाद्वयं च षड्ढस्ते करणी । एवं कुंडं कृत्वा मंडपमध्येऽष्टकोणां वेदीं कुर्यात् । तद्यथा । मध्यस्तंभचतुष्कमध्यसमं चतुरस्रं कृत्वा षोडशहस्तमंडपेऽष्टादशांगुलैर्विंशतिहस्त चतुर्विंशत्यंगुलाधिकहस्तेन कोणेषूभयतोऽंकयित्वाऽष्टसूत्रदानादष्टास्रमिति राघवभट्टोक्तप्रकारः । अथवा षोडशांगुलाधिकहस्तमात्रं मध्ये चतुरस्रं कृत्वा तत्संलग्नानि चतुर्दिक्षु तन्मानानि चत्वारि चतुरस्राणि कृत्वा बाह्यचतुरस्राणां कोणेष्वक्ष्णया सूत्राणि दत्वा दिक्षु चतुरश्चतुर्थांशांस्त्यजेदित्यष्टास्रं । एवमष्टकोणां हस्तोच्चां वेदिं कृत्वा तदुपरि वारुणं मंडलं सर्वतोभद्रं वा कृत्वोपरि वितानं किंकिणीचामरादियुतं बद्ध्वा शतचंड्यां पलेन तदर्धेन तदर्धेन तदर्धेन वा सहस्रचंड्यां तु पलपंचकेन तदर्धेन तदर्धेन वा देवीमूर्तिमष्टादशभुजां कुर्यात् ।

॥ अथ प्रयोगः । शुभेऽह्नि कर्ता सपत्नीकस्तिलतैलेन कृताभ्यंगो भूषितसंपूर्णकलशहस्तो भद्रंकर्णेभिरिति मंडपं प्रदक्षिणीकृत्य पश्चिमद्वारेण प्रविश्योपविश्य देशकालौ स्मृत्वा ममेहजन्मनि दुर्गाप्रीतिद्वारा सर्वापच्छांतिपूर्वकदीर्घायुर्विपुलधनधान्यपुत्रपौत्राद्यनवच्छिन्नसंततिवृद्धिस्थिरलक्ष्मीकीर्तिलाभशत्रुपराजयसदभीष्टसिद्ध्यर्थं ममामुककार्यसिद्ध्यर्थं वा सनवग्रहमखां शतचंडीं सहस्रचंडीं वा स्वयं ब्राह्मणद्वारा वा करिष्ये । तदंगतया गणेशपूजनं पुण्याहवाचनं मातृकापूजां नांदीश्राद्धं च कृत्वाचार्यं वृत्वा प्रार्थयेत् । आचार्यस्तुयथास्वर्गे शक्रादीनांबृहस्पतिः । तथात्वंममयज्ञेऽस्मिन्नाचार्योभवसुव्रतेति । ततो ब्रह्माणं वृत्वा यथाचतुर्मुखोब्रह्मा स्वर्गेलोकेपितामहः । तथात्वंममयज्ञेऽस्मिन् ब्रह्माणंत्वामहंवृणेइति प्रार्थयेत् ।ततः सदस्यं गणेशजपार्थं वृत्वाऽस्मिन्कर्मणि ऋत्विक्त्वेन त्वामहं वृणे इति शतचंड्यां नवऋत्विजो वृणुयात् । सहस्रचंड्यां शतं । ततोऽष्टौ द्वारपालान्वृत्वा संभवे सर्वेषां मधुपर्कपूजां कृत्वांऽगुलीयकर्णभूषणवस्त्रद्वयजलपात्रासनार्घ्यपात्राणि दद्यात् । द्विगुणमाचार्याय । अथाचार्यो यदत्रसंस्थितंभूतमिति सर्षपान्विकीर्य पंचगव्येन कुशैः शुचीवोहव्येति तृचेन मंडपं प्रोक्ष्य स्वस्त्ययनंतार्क्ष्यमिति मंत्रद्वयं पठेत् । ततो मत्कृततुलापद्धतिमार्गेण मंडपपूजां प्रागग्निस्थापनात्कुर्यात् । ततः पूर्वे कादंबरि गजारूढे वज्रहस्ते एह्येहि आगच्छागच्छ गंधपुष्पसहितमिमं क्षीरान्नबलिं गृह्णगृह्ण ममेप्सितं कुरुकुरु स्वाहेति बलिं दत्वा द्वारशाखयोर्ब्राह्म्यै माहेश्वर्यै चिच्छक्त्यै मायाशक्त्यै धात्रे विधात्रे शंखनिधये पद्मनिधये द्वारश्रियैनम इति संपूज्याधस्ताद्वास्तुपुरुषमसितांगभैरवं च पूजयेत् । तत आग्नेये । उल्के अजारूढे शक्तिहस्ते एह्येहीत्यादि । रुरुभैरवश्च । ततो दक्षिणे । करालिमहिषारूढे दंडहस्ते एह्येहीत्यादि । द्वारशाखयोः कौमारीं वैष्णवीं पूर्ववच्चिच्छक्त्यादींश्च संपूज्य चंडभैरवं पूजयेत् । ततो नैर्ऋत्यां । रक्ताक्षि प्रेतारूढे खड्गहस्ते एह्येहीत्यादि । क्रोधभैरवश्च । ततः पश्चिमे । कौबेरि अश्वारूढे पाशहस्ते एह्येही-

त्यादि । द्वारशाखयोर्वाराहीमिंद्राणीं चिच्छक्त्यादींश्च संपूज्योन्मत्तभैरवं पूजयेत् । ततो वायव्ये । मृगवाहनेंऽकुशहस्ते एह्येहीत्यादि । कपालभैरवश्च ।
तत उत्तरे ।यक्षिणि सिंहवाहिनि गदाहस्ते एह्येहीत्यादि । द्वारशाखयोश्चामुंडां महालक्ष्मीं चिच्छक्त्यादींश्च संपूज्य भीषणभैरवं पूजयेत् ।तत ऐशान्य।।
कालि वृषभारूढे शूलहस्ते एह्येहीत्यादि । संहारभैरवश्च । ऐशानपूर्वमध्ये सर्वराज्ये अहिवाहने चक्रहस्ते एह्येहीत्यादि । भूमिपूजा च । पश्चि-
मनैर्ऋतीमध्ये । सुरश्रेष्ठे हयवाहनेऽक्षसूत्रकमंडलुहस्ते एह्येहीत्यादि । अंतरिक्षपूजा च । ततो वेद्यामाग्नेये विष्णवे । पूर्वे रुद्राय । ऐशान्यां ब्रह्मणे ।
पश्चिमे गणेशाय । मध्ये महाकाल्यै महालक्ष्म्यै महासरस्वत्यै च ध्वजपताकोच्छ्रयणं कृत्वा पूजयेत् । अथाचार्यो ग्रहवेद्यां ग्रहान्संस्थाप्य सं-
पूज्य मध्यवेद्यां पीठे उपविश्य गुं गुरवे गं गणपतये द्वां द्वारश्रियै दुं दुर्गायै क्षं क्षेत्रपालाय ऱ्हः अस्त्रायफडिति वास्तुपुरुषाय महालक्ष्म्यैनमइति
नत्वा पृथ्वीत्यासनं कृत्वा अनंतासनाय ० विमलासनाय ० पद्मासनायनमइति नत्वा अपसर्पंतुतेभूता अपक्रामंतुभूतानीतिद्वाभ्यां वामपादघातत्रयं
कृत्वा ऱ्हः अस्त्रायफडिति तालत्रयं कृत्वा गणपतिसरस्वतीक्षेत्रपालान्नत्वा रः फडित्यग्निप्राकारं विचिंत्य समंताज्जलधारां दत्वा मूलेनाचम्य
( मूलं नवार्णमंत्रः ) प्राणानायम्य देशकालौ स्मृत्वाऽस्मिन् शतचंडीकर्मणि श्रीमहालक्ष्म्याः नवार्णविधानेन न्यासपूजादि करिष्ये इति सं-
कल्प्य भूतशुद्धिं कुर्यात् । स्वजीवं हंसःसोहमिति शिरःस्थितपरमात्मनि संयोज्य पादाद्याजानु लं पृथ्वीमप्सुसंहरामीति सर्वत्रानुषंगः । जान्वा-
द्यानाभि वं अपस्तेजसि नाभेराकंठं रं तेजो वायौ कंठाद्याभ्रूमध्यं यं वायुमाकाशे भ्रूमध्यादाब्रह्मरंध्रं हं आकाशमहंकारे अहंकारं महति महांतं
प्रकृतौ प्रकृतिं पुरुषे पुरुषं परमात्मनि महालक्ष्मीसंज्ञे ब्रह्मणि संहरामीत्यनुषंगेण भूतानि संहृत्य वामकुक्षावंगुष्ठमात्रं पापपुरुषं यमिति पूरकेण १६
वारं संशोष्य रमित्यग्निबीजेन कुंभकेन ६४ दग्ध्वा वमिति रेचकेन ३२ निःसार्य वमित्यमृतबीजेनाप्लाव्य लमिति संमेल्य ग्लौमिति घनीकृत्य

हमिति व्योमवीजेन देहावयवान्ध्यात्वा जीवं ऱ्हीं सोहंहंसइति तत्र संयोज्य ब्रह्मणः प्रकृतिः प्रकृतेर्महान् महतोऽहंकारोऽहंकारादाकाश आकाशाद्वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी पृथिव्या ओषधय ओषधीभ्योऽन्नमन्नाद्रेतो रेतसः पुरुष इति देहोत्पत्तिं विभाव्य प्राणप्रतिष्ठां कुर्यात् । प्राणप्रतिष्ठामंत्रस्य ब्रह्मविष्णुरुद्रा ऋषयः । ऋग्यजुःसामानि छंदांसि । चैतन्यरूपिणी जगत्सृष्टिकर्त्री प्राणशक्तिर्देवता ।आं बीजं । ऱ्हीं शक्तिः। क्रों कीलकं। प्राणप्रतिष्ठायां विनियोगः ।ॐ आं ऱ्हीं क्रों अं कं खं गं घं ङं पृथिव्यप्तेजोवाय्वाकाशात्मने आं अंगुष्ठाभ्यांनमः।ॐ इं चं छं०ञं शब्दस्पर्शरूपरसगंधात्मने ईं तर्जनीभ्यां०। ॐ उं टं ठं०णं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने ऊं मध्यमाभ्यां० । ॐ एं तं थं०नं वाक्पाणिपादपायूपस्थात्मने ऐं अनामिकाभ्यां०। ॐ ओं पं फं०मं वचनादानविहरणोत्सर्गानंदात्मने औं कनिष्ठिकाभ्यां०। ॐ अं यं रं लं वं शं षं सं हं क्षं मनोबुद्ध्यहंकारचित्तविज्ञानात्मने अः करतलकरपृष्ठाभ्यां०। एवं षडंगः । ॐ आं ऱ्हीं क्रों अं यं०क्षं हंसः सोहं क्रों ऱ्हीं आं मम प्राणाइहप्राणाः । पुनरेवं ।मम जीवइहस्थितः । पुनरेवं । मम सर्वेंद्रियाणि। पुनरेवं। मम वाङ्मनश्चक्षुःश्रोत्रजिह्वाघ्राणप्राणा इहागत्य स्वस्तये सुखेन सुचिरं तिष्ठंतुस्वाहेति शिरसि हृदि वा करं दत्वा त्रिः सकृद्वा जपित्वा पंचदशवारं प्रणवं जपन् १५संस्कारान्भावयेत् । ।अथ मातृकान्यासः। अस्य मातृकामंत्रस्य ब्रह्मा ऋषिः। गायत्री छंदः। मातृकासरस्वती देवता।हलो बीजानि।स्वराः शक्तयः।क्षं कीलकं। न्यासे विनियोगः । ॐ अं कं०आं अंगुष्ठाभ्यां०।इं चं०ईं तर्जनभ्यां०। ॐ उं टं०ऊं मध्यमा०। ॐ एं तं०ऐं अनामिका०। ॐ ओं पं०औं कनिष्ठिका० । ॐ अं यं० अः करतलकरपृष्ठाभ्यां० । एवं हृदयादिषडंगः । ततः कंठस्थषोडशदलपद्मे अकारादिषोडशस्वरान्न्यसेत् । अं नमः आंनमइत्यादि । हृदि द्वादशदले कादिठांतान्।नाभौ दशदले डादिफांतान् । तदधः षड्दले बादिलांतान् । आधारे चतुर्दशदले वादिसांतान्।

ललाटे हृदिदले हं क्षमित्यंतर्मातृकाः ॥ ॥ अथ बहिर्मातृकान्यासः । ऋष्यादिषडंगांतं पूर्ववत् । अं नमः शिरसि । आं नमः मुखवृत्ते । नेत्रकर्णनासापुटकपोलदंतपंक्त्योष्ठद्वंद्वेषु क्रमेण इंईं उंऊं ऋंॠं लृंलॄं एंऐं ओंऔं इति न्यसेत् । अं जिह्वायां । अः कंठे । दक्षकरसंध्यग्रेषु कवर्गं । वामकरे चवर्गं । दक्षिणवामपादयोष्टवर्गतवर्गौ । कुक्षिद्वयपृष्ठनाभ्युदरेषु पवर्गं । यं त्वदि । रं कंठे । लं ककुदि । वं स्कंधयोः । शं त्वदादिदक्षकरे । षं त्वदादिवामकरे । सं त्वदादिदक्षपादे । हं त्वदादिवामपादे । ळं क्षमिति व्यापकं ॥ ॥ अथ निवृत्त्यादिकलान्यासः । अं निवृत्त्यैनमः शिरसि । आं प्रतिष्ठायै॰ मुखे । इं विद्यायै॰ ईं शांत्यै॰ नेत्रयोः । उं रंधिकायै॰ ऊं दीपिकायै॰ कर्णयोः । ऋं रेचिकायै॰ ॠं मोचिकायै॰ नासयोः । लृं परायै॰ लॄं सूक्ष्मायै॰ कपोलयोः । एं सूक्ष्मामृतायै॰ ऐं ज्ञानामृतायै॰ दंतपंक्त्योः । ओं साविन्यै॰ औं व्यापिन्यै॰ ओष्ठयोः । अं सुरूपायै॰ जिह्वायां । अः अनंतायै॰ कंठे । अथ दक्षकरे । कं सृष्ट्यै॰ खं ऋद्ध्यै॰ गं स्मृत्यै॰ घं मेधायै॰ ङं कांत्यै॰ इति । अथ वामकरे । चं लक्ष्म्यै॰ छं द्युत्यै॰ जं स्थितायै॰ झं स्थित्यै॰ ञं सिद्ध्यै॰ । अथ दक्षपादे । टं जरायै॰ ठं पालिन्यै॰ डं शांत्यै॰ ढं ईश्वर्यै॰ णं रत्यै॰ इति । अथ वामपादे । तं कामिकायै॰ थं वरदायै॰ दं ह्लादिन्यै॰ धं प्रीत्यै॰ नं दीर्घायै॰ इति । पं तीक्ष्णायै॰ फं रौद्रायै॰ कुक्ष्योः । बं अभयायै॰ पृष्ठे । भं निद्रायै॰ नाभौ । मं तंद्र्यै॰ उदरे । यं क्षुधायै॰ हृदि । रं क्रोधिन्यै॰ कंठे । लं क्रियायै॰ ककुदि । वं उदार्यै॰ स्कंधयोः । शं मृत्यवे॰ दक्षकरे । षं पीतायै॰ वामकरे । सं श्वेतायै॰ दक्षपादे । हं अरुणायै॰ वामपादे । ळं असितायै॰ मूर्धादिपादांतं । क्षं अनंतायै॰ पादादिमूर्धांतं । इति कलान्यासः । ततो मूलेन त्रिः प्राणानायम्य अस्य श्रीनवार्णमंत्रस्य ब्रह्मविष्णुरुद्रा ऋषयः । महाकालीमहालक्ष्मीमहासरस्वतीदेवताः । गायत्र्युष्णिगनुष्टुप् छंदांसि । नंदाशाकंभरीभीमाशक्तयः । रक्तदंतिकादुर्गा-

(चा)मरीबीजानि । अग्निर्वायुः सूर्यस्तत्वानि । जपपूजादौ विनि० । अथैकादश न्यासाः । ह्रींबीजयुक्तानकारादिक्षकारांतान्वर्णान्बहिर्मातृका-
(स्)थानेषु न्यसेत् । ॐ ह्रीं अंनमःशिरसीत्यादि । इति प्रथमः । सर्वत्राद्यौ प्रणवः । ऐंह्रींक्लींबीजानि करद्वये कनिष्ठाद्यंगुष्ठांतं करतलकर-
पृष्ठमणिबंधेषु च न्यसेत् । ऐंह्रींक्लींनमः कनिष्ठिकाभ्यांनमइत्यादि । एवं हृदयादिषडंगः । एवं दशदिक्षु च । इति द्वितीयः । ह्रीं ऐं ब्राह्म्यै-
नमः पूर्वे । ह्रीं ह्रौं माहेश्वर्यै० आग्नेय्यां । ह्रीं क्लीं कौमार्यै० दक्षिणे । ह्रीं श्रीं वैष्णव्यै० नैर्ऋत्यां । ह्रीं ह्रूं वाराह्यै० पश्चिमे ।
ह्रीं क्लौं इंद्राण्यै० वायव्यां । ह्रीं क्षौं नारसिंह्यै० उत्तरे । ह्रीं त्स्त्रैं चामुंडायै०ऐशान्यां । ह्रीं व्योमेश्वर्यै० ऊर्ध्वे । ह्रीं सप्तद्वीपेश्वर्यै० अधः।
ह्रीं नागेश्वर्यै० पाताले । इति तृतीयः । ह्रीं नंदजायै० पूर्वांगे। त्स्त्रैं रक्तदंतिकायै० दक्षिणांगे । त्स्त्रैं शाकंभर्यै० पश्चिमांगे । त्स्त्रैं दुर्गायै०
वामांगे । ह्रूं भीमायै०मस्तकादिपादांतं । श्रीं भ्रामर्यै०पादादिशिरोंतं । इति चतुर्थः । ह्रीं ऐं ब्रह्मणेनमः पादाद्यानाभि । ह्रीं श्रीं विष्णवे०
नाभेराद्दृदयं । ह्रीं ह्रौं रुद्राय० हृदाद्याशिखं । ह्रीं हंसाय० पादद्वये । ह्रीं वैनतेयाय० करद्वये । ह्रीं वृषभाय० चक्षुषोः । ह्रीं ग-
जाननाय० सर्वांगे । ह्रीं हरये० व्यापकं । इति पंचमः । ह्रीं महालक्ष्म्यै० मध्यदेहे । ऐं सरस्वत्यै० ऊर्ध्वदेहे । क्लीं महाकाल्यै० अधो-
देहे । ह्रीं क्षौं सिंहाय० हस्तयोः । ह्रीं हंसाय० नेत्रयोः । ह्रीं ह्रूं महिषप्रेताभ्यांनमः पादयोः । ह्रीं चंडिकायै० सर्वांगे । इति षष्ठः ।
ऐंनमः मूर्ध्नि । ह्रींनमः दक्षिणनेत्रे । क्लींनमः वामनेत्रे । चां० दक्षिणकर्णे । मुं०वामकर्णे । डां०नासिकायां । यैं०मुखे । विं० लिंगे । च्चें०
पायौ । इति सप्तमः । च्चें० पायौ । विं० लिंगे । यैं० मुखे । डां० नासिकायां । मुं० वामकर्णे । चां० दक्षिणकर्णे । क्लीं० वामनेत्रे ।
ह्रीं० दक्षिणनेत्रे । ऐं०मूर्ध्नि । इत्यष्टमः । ऐंह्रींक्लींचामुंडायैविच्चेस्वाहेति मूलमंत्रं स्वाग्रे दक्षिणपश्चिमवामांगेष्वारोहावरोहाभ्यां शिरसः पादांतं

पादादिशिरोंतं च न्यसेत् । इति नवमः । पूर्वोक्तसमग्रमूलमंत्रेण हृदयादिषडंगः । इति दशमः । ततः खड्गिनीशूलिनीघोरेत्येकं श्लोकमुक्त्वा कृष्णवर्णं ध्यात्वा हृदयायनमः । शूलेनपाहिनोदेवीतिश्लोकचतुष्टयं पठित्वा रक्तवर्णं ध्यात्वा शिरसेस्वाहा । सर्वस्वरूपेसर्वेशेइति श्लोकपंचकं पठित्वा श्वेतवर्णं ध्यात्वा शिखायैवषट् । इत्येकादशन्यासाः । ततो योनिमुद्रां प्रदर्शयेत् । सा चैवं । दक्षिणकरस्य तर्जन्यां वामस्यानामिकां वामतर्जन्या दक्षिणस्यानामिकां च धृत्वाऽग्रे मध्यमांगुलीद्वयं तदग्रे कनिष्ठिकाद्वयं तदग्रेऽङ्गुष्ठद्वयमिति ॥ ॥ अथ ध्यानं । श्वेतानना नीलभुजा सुश्वेतस्तनमंडला । रक्तमध्या रक्तपादा नीलजंघोरुरुन्मदा ॥ सुचित्रजघना चित्रमाल्यांबरविभूषणा । चित्रानुलेपना कांतिरूपसौभाग्यशालिनी ॥ अष्टादशभुजा पूज्या सा सहस्रभुजा सती । आयुधान्यत्र वक्ष्यंते दक्षिणाधःकरक्रमात् ॥ अक्षमाला च कमलं बाणोऽसिः कुलिशं गदा । चक्रं त्रिशूलं परशुः शंखो घंटा च पाशकः ॥ शक्तिर्दंडश्चर्मचापं पानपात्रं कमंडलुरिति । ततो वेद्यां सर्वतोभद्रं कृत्वा तत्र देवताः स्थापयेत् । मध्ये ब्रह्मजज्ञानमिति ब्रह्माणं । उत्तरादिषु तत्तन्मंत्रैः सोमादीन् । वायुसोममध्यादिषु क्रमेण ज्मयाअत्रेति वसून् । आरुद्रासइति रुद्रान् । त्यान्नुक्षत्रियानिति द्वादशादित्यान् । अश्विनावर्तिरित्यश्विनौ । ओमासइति विश्वान्देवान् । अभित्यंदेवमिति सप्तयक्षान् । आयंगौरिति सर्पान् । अप्सरसांगंधर्वाणामिति गंधर्वाप्सरसः । ब्रह्मसोममध्ये कुमारंमातेति कुमारं । ऋषभंमेत्यृषभं । यत्तेगात्रादिति शूलं । मोषुणइति महाकालं च । ब्रह्मेशानमध्ये अदितिर्ह्यजनिष्टेति दक्षं । ब्रह्मेंद्रमध्ये तामग्निवर्णामिति दुर्गां । इदंविष्णुरिति विष्णुं
[illegible]व । ब्रह्माग्निमध्ये उदीरतामिति स्वधां । ब्रह्मयममध्ये परंमृत्योइति मृत्युरोगान् । ब्रह्मनिर्ऋतिमध्ये गणानांत्वेति गणपतिं । ब्रह्मवरुणमध्ये
[illegible]नोदेवीरित्यपः । ब्रह्मवायुमध्ये मरुतोयस्येति मरुतः । ब्रह्मणः पादमूले स्योनेति भूमिं । तत्रैवेमंमेगंग इति गंगादिनदीः । धाम्नोधाम्नइति

तसागरांश्च । बहिः सोमादिसंनिधौ क्रमेण गदां त्रिशूलं वज्रं शक्तिं दंडं खङ्गं पाशमंकुशं च । पुनरुत्तरादि । गोतमं भरद्वाजं विश्वामित्रं कश्यपं जमदग्निं वसिष्ठमत्रिमरुंधतीं च । पूर्वादि । ऐं ऱ्हीं कौमारीं ब्राह्मीं वाराहीं चामुंडां वैष्णवीं माहेश्वरीं वैनायकीं च । ततस्तदस्त्वित्यावाह्य संपूज्य बलिं दत्वा तन्मध्ये महीद्यौरिति भूमिं स्पृष्ट्वा ओषधयःसमिति सप्तधान्यानि क्षिप्त्वा आकलशेष्विति हैमं राजतं ताम्रं मृन्मयं वा कलशं संस्थाप्य इमंमेगंगइत्युदकेनापूर्य गंधद्वारामिति गंधं । याओषधीरिति सर्वौषधीः । कांडात्कांडादिति दूर्वाः । अश्वत्थेवइति पंचपल्लवान् । स्योनेति सप्तमृदः । याःफलिनीरिति फलं । सहिरत्नानीति पंचरत्नानि । हिरण्यरूपइति हिरण्यं च क्षिप्त्वा युवासुवासाइति रक्तवस्त्रेण सूत्रेण वाऽऽवेष्ट्य पूर्णादर्वीति पूर्णपात्रं निधाय तत्र रक्तवस्त्रोपरि यंत्रं लिखेत् । यथा । चतुर्द्वारं चतुरस्रत्रयं कृत्वा तन्मध्ये त्रिकोणं कृत्वा तत्पश्चिमार्धेऽन्यत्रिकोणं कृत्वा पूर्वस्य पश्चिमेरखासंलग्नकोणमन्यत्रिकोणं कृत्वा तत्संलग्नमन्यत्रिकोणं कुर्यात् । तेन बहिरष्टौ कोणा मध्ये च षट्कोणाः संपद्यंते । तन्मध्ये वान्यत्रिकोणं कृत्वा तत्संलग्नमन्यत्रिकोणमिति । यद्वा मध्ये त्रिकोणं तद्बहिः षट्कोणं तद्बाह्ये वृत्तं तद्बाह्येऽष्टौ दलानि तद्बाह्ये चतुर्द्वारं चतुरस्रत्रयमिति । एवं यंत्रं विलिख्य तत्र शतचंड्यां हेमपलेन तदर्धेन तदर्धेन वा कृतां सहस्रचंड्यां तु विंशतिदशपंचान्यतमसुवर्णकृतां ध्यानोक्तामष्टादशभुजां रहस्योक्तामष्टभुजां वा महिषासुरहंत्रीं सिंहस्थां देवीमूर्तिं रक्तपट्टदुकूलयुगच्छन्नां संस्थाप्य पूजयेत् । तद्यथा । स्ववामेऽस्त्रायफडिति क्षालितं मूलेन जलपूरितं कुंभं निधाय गंधपुष्पाक्षतादिभिर्मूलेन तत्पात्राण्यापूर्य देवदक्षिणे न्यसेत् । ततो मत्स्यमुद्रया त्रिकोणं तद्बहिः षट्कोणं तद्बहिश्चतुरस्रं तद्बाह्ये वृत्तं गोमयेन जलेन वा विलिख्य शंखमुद्रयाऽवष्टभ्य वह्नये दशकलात्मने धूम्रार्च्यै० ऊष्मायै० ज्वलिन्यै० ज्वालिन्यै० विस्फुलिंगिन्यै० सुश्रियै० सुरूपायै० कपिलायै० हव्यवाहायै० कव्यवाहायैनम इत्यभ्यर्च्य षट्-

कोणेऽग्नीशाननिर्ऋतिवायुकोणेषु हृदयायनमः शिरसेस्वाहा शिखायैवषट् कवचायहुमिति। अग्रे नेत्रत्रयायवौषट्। सर्वतः अस्त्रायफडित्यक्षतैः संपूज्यास्त्रक्षालितं शंखं संस्थाप्य हं सूर्यमंडलाय द्वादशकलात्मनेनमः। तपिन्यै॰ तापिन्यै॰ धूम्रायै॰ मरीच्यै॰ ज्वालिन्यै॰ रुच्यै॰ सुषुम्नायै॰ भोगदायै॰ विश्वायै॰ बोधिन्यै॰ धारिण्यै॰ क्षमायैनम इति शंखेऽक्षतैः संपूज्य तत्र गंधपुष्पाणि हृदयमंत्रेण क्षिप्त्वा क्षंनमः हंनम इत्यादि-विलोममातृकाभिः शिरोमंत्रेण च जलेनापूर्य उं सोममंडलाय षोडशकलात्मने॰ अमृतायै॰ मानदायै॰ पूषायै॰ तुष्ट्यै॰ पुष्ट्यै॰ रत्यै॰ श-शिन्यै॰ चंद्रिकायै॰ कांत्यै॰ ज्योत्स्नायै॰ श्रियै॰ प्रीत्यै॰ अंगनायै॰ पूर्णायै॰ पूर्णामृतायै॰ कामदायिन्यैनम इत्यभिमंत्र्यांकुशमुद्रया सूर्य-मंडलात्तीर्थमाकृष्यावाहन्यादिमुद्राः प्रदर्श्य शिखामंत्रेण धेनुमुद्रां मालिनीमुद्रां गरुडमुद्रां च दर्शयेत् (करद्वयांगुष्ठतर्जन्यग्रसंयोगे मालिनीमुद्रा। करद्वयस्य पृष्ठं संयोज्य कनिष्ठिकाभ्यामवष्टभ्याधोंऽगुष्ठौ पुरतस्तर्जन्यौ च संयोज्य मध्यमानामिकयोर्मुक्तयोः पक्षतुल्यत्वेन गरुडमुद्रा ) नेत्रमंत्रेण संवीक्ष्य कवचमंत्रेण संकलीकृत्य तत्र षडंगानि विन्यस्यास्त्रमंत्रेण रक्षां कृत्वा मूलेन गंधपुष्पैरभ्यर्च्य हस्तेनाच्छाद्य मूलेन सप्तवारमभिमंत्र्य चक्रमुद्रया संरक्ष्य तज्जलं किंचित्कुंभे क्षिप्त्वाऽस्त्रमंत्रेणात्मानं पूजाद्रव्याणि च संप्रोक्ष्य मूलेन षडंगं कृत्वात्मानं गंधपुष्पैरभ्यर्च्य मूलेन त्रिः स्वशिरसि पुष्पांजलिं दत्वा धूपदीपनैवेद्यानि मनसा निवेद्य देवरूपः सन् मूलं जपित्वा देवाय जपं निवेद्य पुष्पमाघ्राय कुंभोदरायनमइति वामे क्षिप्त्वा हस्तं प्रक्षाल्य पीठं पूजयेत्। यथा। देवीदक्षिणे गुं गुरुभ्यो॰ पं परमगुरुभ्यो॰ पं परात्परगुरुभ्यो॰ पं परमेष्ठिगुरुभ्योनम इति सं-पूज्य वामे गं गणपतये॰ दुं दुर्गायै॰ क्षं क्षेत्रपालाय॰ मध्ये आधारशक्त्यै॰ मूलप्रकृत्यै॰ कालाग्निरुद्राय॰ महामंडपाय॰ कूर्माय॰ वरा-हाय॰ अनंताय॰ भूम्यै॰ अमृतार्णवाय॰ रत्नद्वीपाय॰ हेमगिरये॰ नंदनोद्यानाय॰ मणिभूम्यै॰ रत्नमंडपाय॰ कल्पतरवे॰ रत्नसिंहास-

यनमइति संपूज्याग्नेयादिकोणेषु धर्माय० ज्ञानाय० वैराग्याय० ऐश्वर्यायेति संपूज्य । पूर्वादिदिक्षु अधर्माय० अज्ञानाय० अवैरा-ग्याय० अनैश्वर्यायेति । ऊर्ध्वं ब्रह्मणे अधोऽनंताय मध्ये वास्तुपुरुषायेति संपूज्य । मध्ये सं सत्वाय० रं रजसे० तं तमसे० मां मायायै० विं विद्यायै० । पीठात्पूर्वाद्यष्टदिक्षु ॐ ओंकारगिरिपीठेश्वरसहितामोंकारगिरिपीठेश्वर्यंबापादुकां पूजयामि । उड्डानपीठेश्वरसहितामुड्डानपीठेश्वर्यंबापादुकां० । मा मातृकापीठेश्वरसहितां मातृकापीठेश्वर्यंबा० । जां जालंधरपीठेश्वरसहितां जालंधरपीठेश्वर्यंबा० । कों कोल्हागिरिपीठेश्वरसहितां कोल्हागिरिपीठेश्वर्यंबा० । पूं पूर्णगिरिपीठेश्वरसहितां पूर्णगिरिपीठेश्वर्यंबा० । सं संहारगिरिपीठेश्वरसहितां संहारगिरिपीठेश्वर्यंबा० । कां कामरूपपीठेश्वरसहिता कामरूपपीठेश्वर्यंबापादुकां० । पुनः पूर्वादि । सबीजनमोंतैः सर्वत्र । गणेशाय० क्षेत्रपालाय० पादुकाभ्यां० बटुकेभ्यो० । अथाग्नेयादि । जयायै० विजयायै० जयंत्यै० अपराजितायै० । तत्रैव अग्निमुखवेतालाय प्रेतवाहनवेतालाय ज्वालामुखवेतालाय० धूम्राक्षवेतालाय० कंदाय० नालाय० दलेभ्यो० केसरेभ्यो० कर्णिकायै० । अं सूर्यमंडलाय० उं सोममंडलाय० मं वह्निमंडलाय० अं आत्मने० उं अंतरात्मने० मं परमात्मने० उं ज्ञानात्मने० । ततः विं विष्णुमायायै० चें चेतनायै० बुं बुद्ध्यै० निं निद्रायै० क्षुं क्षुधायै० इति पूर्वे । छां छायायै० शं शक्त्यै० तृं तृष्णायै० क्षां क्षांत्यै० जां जात्यै० लं लज्जायै० इति दक्षिणे । शां शांत्यै० श्रं श्रद्धायै० कां कांत्यै० लं० लक्ष्म्यै० धृं धृत्यै० वृं वृत्त्यै० इति पश्चिमे । स्मृं स्मृत्यै० दं दयायै० तुं तुष्ट्यै० पुं पुष्ट्यै० मां मातृकायै० भ्रां भ्रांत्यै० इत्युत्तरे । ॐ ह्रीं सर्वशक्तिकमलासनायनमः । सर्वात्मसंयोगयोगपीठात्मनेनमः । इति पीठपूजा । ततो त्वद्दिरस्थां ज्योतिर्मयीं सपरिवारां महालक्ष्मीं ध्यात्वा आगच्छ वरदे देवि दैत्यदर्पनिषूदनि । पूजां गृहाण सुमुखि नमस्ते शंकरप्रिये । दुर्गे देवि समागच्छ सांनिध्यमिह कल्पय । बलिपूजां गृहाण

त्वमष्टाभिः शक्तिभिः सहेतिमंत्रं पठित्वा दक्षिणनासारंध्रेण पुष्पांजलावानीय मूलेन मूर्तावावाह्यावाहन्यादिमुद्रा योनिमुद्रां च प्रदर्श्य मूर्तेः षडंगं कृत्वा मूलेन जयंतीमंगलाकालीत्यनेनासनपाद्यार्घ्याचमनमधुपर्कान्निवेदयेत् । तत्र पात्रचतुष्टयमस्त्रेण प्रक्षाल्य गंधादि निक्षिपेत् । तत्र पाद्ये दूर्वाविष्णुक्रांताश्यामाकपत्राणि । अर्घ्ये गंधपुष्पाक्षतकुशाग्रसर्षपयवदूर्वाः । आचमनीये जातीफलकंकोललवंगानि । मधुपर्के दधि मधु च । ततः सुगंधितैलपंचामृतोष्णोदकतीर्थोदकैः श्रीसूक्तदेवीसूक्तसरस्वतीसूक्तैरभिषिच्य पुनराचमनं दत्वा पट्टदुकूलयुगकंचुकाभरणाष्टगंधबिल्वपत्रनानापुष्पहरिद्राकुंकुमसिंदूरालक्तकपरिमलद्रव्याणि समर्प्य पंचविंशतिं द्वादश त्रीणि सहस्राण्येकं वा सहस्रं पुष्पाणि समर्पयेत् । । अथावरणपूजा । दक्षिणे ऐं महाकाल्यैविच्चेनमः । वामे क्लीं सरस्वत्यैविच्चेनमः । अभीष्टसिद्धिं मे देहि शरणागतवत्सले । भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनं ( एवमग्रेपि । प्रथमेत्यत्र तु द्वितीयतृतीयेत्यादि यथायथमूह्यं ) ॥ १ ॥ वामे हूं महिषाय० । दक्षिणे क्षौं सिंहाय० । पुरतः गं गणपतये० ऱ्हूं कालाय० । पश्चात् ऱ्हूं मृत्यवे० ॥ २ ॥ षड्दलेषु । ऱ्हैं रुद्राय० ऱ्हैं गौर्यै० श्रीं विष्णवे० श्रीं लक्ष्म्यै० ऐं ब्रह्मणे० ऐं सरस्वत्यै०॥३ ॥ तत्रैव । ऱ्हां हृदयायनमः । ऱ्हीं शिरसेस्वाहा । ऱ्हूं शिखायैवषट् । ऱ्हैं कवचायहुं । ऱ्हौं नेत्रत्रयायवौषट् । ऱ्हः अस्त्रायफट् ॥ ४ ॥ तत्रैव । गुं गुरुभ्यो० पं परमगुरुभ्यो० पं परमेष्ठिगुरुभ्यो० हरये० हराय० गणेशाय० ॥ ५ ॥ अष्टदलेषु । नं नंदजायैविच्चे० रं रक्तदंतिकायै० शां शाकंभर्यै० दुं दुर्गायै० भीं भीमायै० भ्रां भ्रामर्यै० लौं इंद्राण्यै० क्षौं नारसिंह्यै० रः प्रौं चामुंडायै० ॥६॥ दिक्षु । अं असितांगभैरवाय० रुं रुरुभैरवाय० चं चंडभैर० क्रौं क्रोधभैर० उं उन्मत्तभैर० कं कपालभै० भिं भीषणभै०सं संहारभै०॥ ७ ॥ पूर्वादिषु । इंद्राय० रं अग्नये० मं यमाय० क्षं निर्ऋतये० वं वरुणाय० यं वायवे० सं सोमाय० हं ईशानाय० ॥ ८ ॥ बहिः । वज्राय० शक्त्यै०

ाय० खड्गाय० पाशाय० अंकुशाय० गदायै० त्रिशूलाय० ॥ ९ ॥ ततो मूलेन धूपदीपौ दत्वा नैवेद्यमस्त्रेणाभिमंत्र्य मूलेन प्रोक्ष्य कवचे-
ावगुंठ्य पुष्पं दत्वा धेनुमुद्रयाऽमृतीकृत्य मूलेन निवेद्य ग्रासमुद्रां प्रदर्श्य मध्येपानीयमुत्तराचमनं च दत्वा करोद्वर्तनफलतांबूलदक्षिणानी-
राजनच्छत्रचामरदर्पणगीतवाद्यादि निवेद्यास्मत्कृतनवरात्रनिर्णयोक्तविधिना माषभक्तकूष्माडादिबलिं दत्वा पूजां समर्पयेत् । । अथ चतुः-
षष्टियोगिनीपूजा । तत्र देव्यग्रे रक्तवस्त्रेऽष्टौ त्र्यस्त्राणीत्येका पंक्तिः । एवमष्टौ त्र्यस्त्रपंक्तीः कृत्वा वक्ष्यमाणनामभिराबाह्य संपूज्य पायसत्रलीं-
न्दद्यात् । शुक्लवर्णे शूलडमरुपाशासिधरे सर्वालंकारभूषिते ससैन्ये जये एह्येहागच्छागच्छेमं पायसबलिं गृह्णगृह्ण ममेप्सितं कुरुकुरु स्वाहा ।
एवं विजये जयंति अपराजिते दिव्ययोगिनि महायोगिनि सिद्धयोगिनि गणेश्वरि । ततो गौरवर्णेऽक्षमालांकुशपुस्तकवीणाधरे प्रेताशिनि
एह्येहीत्यादि प्राग्वत् । एवं डाकिनि कालिके कालरात्रि निशाचरि टंकारिणि रुद्रवेतालि हुंकारि । ततो रक्तवर्णे ज्वालाश-
क्त्यभयवरदकरे ऊर्ध्वकेशि एह्येहीत्यादि प्राग्वत् । एवं विरूपाक्षि शुष्कांगि नरभोजनि फट्कारिणि वीरभद्रे धूम्रांगि कलहप्रिये ।
ततो विद्युत्संनिभे ध्वजबाणधनुःपाशयुते राक्षसि एह्येहीत्यादि । एवं रक्ताक्षि विश्वरूपे भयंकरि वीरकौमारि चंडिके वाराहि मुंडधारिणि ।
तत आदित्यवर्णे कमलाक्षमालाऽभयवरदकरे भैरवि एह्येहीत्यादि । एवं ध्वांक्षिणि धूम्रांगि प्रेतवाहिनि खड्गिनि दीर्घलंबोष्ठि मालिनि मं-
त्रयोगिनि । ततः सुनीले शंखचक्रगदाऽभयवरदकरे कालिनि एह्येहीत्यादि । एवं चक्रिणि कंकालिनि भुवनेश्वरि त्राटकि महामारि यम-
दूति करालिनि । ततः तेजःपुंजनिभे खड्गखेटपट्टिशपरशुहस्ते केशिनि एह्येहीत्यादि । एवं मर्दिनि रोमजंघे निवारिणि विशालि कार्मुकि लो-
लि अधोमुखि । ततो धूम्रवर्णे कुंतखेटभिंदिपालमालाकरे मुंडाग्रधारिणि एह्येहीत्यादि । एवं व्याघ्रि कांक्षिणि प्रेतरूपिणि धूर्जटि घोरि करालि

विषलंबिनि ॥ ६४ ॥ ततो गं गणपतये वं बटुकाय पिंगलभासुरनेत्राय बलिं गृह्ण गृह्ण रक्ष रक्ष कदन कदन ऱ्हां ऱ्हीं ऱ्हूं स्वाहेति बटुकाय क्षेत्रपालाय च बलिं प्रभूतबलिं दद्यात् । तत्र मंत्रः । सर्वपीठोपपीठानि द्वारोपस्तरणानि च । क्षेत्रक्षेत्रज्ञसंदोहः सर्वे दिग्भागसंस्थिताः ॥ योगिनीयोगवीरेंद्राः सर्वे यत्र समागताः । नगरे वाऽथवा ग्रामे अटव्यां सरितस्तटे ॥ वापीकूपेषु वृक्षेषु श्मशाने च चतुष्पथे । नानारूपधरा ये च बहुरूपधराश्च ये ॥ ते सर्वे चैव संतुष्टा बलिं गृह्णंतु मे सदा । शरणागतोऽस्म्यहं तेषां ते सर्वे मे सुखप्रदाः ॥ बलिनाऽनेन संतुष्टाः प्रयच्छंतु ममेप्सितं । सर्वकार्याणि कुर्वंतु दोषांश्च घ्नंतु सर्वदेति ॥ ॥ अथ कुमारीपूजा । ताश्च प्रत्यहं शतं नव वा पूज्याः । ब्राह्मणीं सर्वकार्येषु जयार्थे नृपवंशजां । लाभार्थे वैश्यवंशोत्थां सुतार्थे शूद्रवंशजां ॥ दारुणे चांत्यजातां तु पूजयेद्विधिना नर इत्युक्ता ग्राह्याः । तथा । नवभिर्लभते भूमिमैश्वर्यं द्विगुणेन तु । एकवृद्ध्या लभेत्क्षेममेकैकेन श्रियं लभेत् ॥ वर्ज्यास्तु । एकवर्षा तु या कन्या पूजार्थे तां विवर्जयेत् । ग्रंथिस्फुटितशीर्णांगीं रक्तपूयव्रणांकितां ॥ जात्यंधां केकरां काणीं कुरूपां तनुरोमशां । वर्जयेत्सर्वकार्येषु दासीगर्भसमुद्भवामिति । विशेषस्तु मत्कृते निर्णयसिंधौ ज्ञेयः । तत्र सुगंधितैलेनाभ्यंगं कारयित्वाऽलंकृतां पीठे उपवेश्य देशकालौ स्मृत्वाऽमुकफलसिद्ध्यर्थममुककर्मणि कुमारीपूजनं करिष्य इति संकल्प्य मूलेन षडंगं कृत्वा मूलमंत्रमुच्चार्य । मंत्राक्षरमयीं लक्ष्मीं मातॄणां रूपधारिणीं । नवदुर्गात्मिकां साक्षात्कन्यामावाहयाम्यहमित्यावाह्याऽऽसनं पाद्यं च दत्वोष्णोदकेन पादौ प्रक्षाल्यार्घ्याचमनस्नानपट्टदुकूलवस्त्रकंचुकालंकारादि दत्वा सुगंधेनानुलिप्य हरिद्राकुंकुमसिंदूरालक्तकांजनपुष्पमालादिभिरभ्यर्च्य धूपदीपौ दत्वा पायसनानाभक्ष्यैर्भोजयेत् । भोजनकाले च मूलमंत्रं सप्तशतीं वा पठेत् । ततो नानाफलतांबूलदक्षिणानीराजनपुष्पांजलीन्दद्यात् । एवमन्याः पूजयेत् । आवाहने तु मंत्रभेदः । मंत्राक्षरमयी-

मति सर्वत्रोक्त्वा । जगत्पूज्येजगद्वंद्ये सर्वशक्तिस्वरूपिणि । पूजागृहाणकौमारि जगन्मातर्नमोस्तुते इति प्रथमां । त्रिपुरांत्रिगुणाधारां ज्ञानमार्गस्वरूपिणीं । त्रैलोक्यवंदितांदेवीं त्रिपुरांपूजयाम्यहमिति द्वितीयां । कालिकांतुकलातीतां कारुण्यैकपरांशिवां । कल्याणजननींनित्यं कल्याणींपूजयाम्यहमिति तृतीयां । अणिमादिगुणोदारामकाराद्यक्षरात्मिकां । अनंतशक्तिसहितां कामाक्षींपूजयाम्यहमिति चतुर्थीं । कामचारांमहामायां कारुण्यत्दृदयांशिवां । कामदांकरुणोदारां रोहिणींपूजयाम्यहमिति पंचमीं । चंडवीरां चंडमायां चंडमुंडप्रभंजनीं । ब्रह्मेशविष्णुनमितां चंडिकांपूजयाम्यहमिति षष्ठीं । सुखानंदकरींशांतां सर्वदेवनमस्कृतां । सर्वभूतात्मिकांदेवीं शांभवींपूजयाम्यहमिति सप्तमीं । सुंदरींस्वर्णवर्णांगीं सुखसौभाग्यदायिनीं । संतोषजननींदेवीं सुभद्रांपूजयाम्यहमित्यष्टमीं । दुर्गमेदुस्तरेकार्ये भयशोकविनाशिनीं । पूजयामिसदाभक्त्या दुर्गांदुर्गार्तिहारिणीमिति नवमीं । ततो ब्राह्मणसुवासिनीपूजा । एवं देवीकुमार्यादिपूजा नवरात्रेऽपि प्रत्यहं कार्या । इयं शतचंड्यां दिनचतुष्टयं द्विगुणादिवृद्ध्या कार्या । सहस्रचंड्यां दशोत्तरा वृद्धिः । ततः पूजां देव्यै समर्प्य सर्वे विप्राः कृतांगन्यासाः शतं नवार्णमंत्रं जप्त्वा कवचार्गलाकीलकानि सकृज्जप्त्वा सप्तशतीं जप्त्वांऽते रहस्यं नवार्णशतं च जपेयुः । कवचादीनां प्रत्यावृत्ति नावृत्तिः । एवं साचार्यर्त्विजः प्रत्येकं प्रथमेऽह्न्येकं द्वितीये द्वे तृतीये त्रीणि चतुर्थे चत्वारि रूपाणीत्येवं जपं कुर्युः । ऋत्विजां कर्तुश्च प्रत्यहं क्षीरमात्राशनमशक्तौ हविष्याशनं वा । प्रत्यहं सहस्रं शतं वा ब्राह्मणान्भोजयेत् । पंचमेऽह्नि होमः । नवरात्रे तु नवम्यामेव ॥ ॥ अथ होमः । तत्र स्वगृह्योक्तस्यागमोक्ततंत्रस्य च समुच्चयः । गृह्योक्तं कृत्वा आगमोक्तं कुर्यात् । तद्यथा । देशकालौ स्मृत्वा ब्राह्मणद्वारा कृतस्य नवचंडीशतचंडीसहस्रचंडीनामन्यतमजपस्य संपूर्णतासिद्ध्यर्थं दशांशेन तिलमिश्रपायसद्रव्येण होमं करिष्ये । तदंगं कुंडसंस्काराग्निस्थापनादि करिष्ये इति

संकल्य मूलेन कुंडं वीक्ष्यास्त्रेण संप्रोक्ष्य तेनैव दर्भैः संताड्य कवचेनाभ्युक्ष्याश्वत्थसमिधा मूलेन प्रागग्रा उदगग्राश्च तिस्रो लेखाः कृत्वा
प्रागग्रासु विष्ण्वीशशक्रानुदगग्रासु ब्रह्मयमचंद्रानभ्यर्च्य मध्ये त्र्यस्रषट्कोणाष्टदलचतुरस्राणि लिखित्वा योगपीठं वागीश्वरं च संपूज्या-
ग्नेर्वीक्षणादि कृत्वा वामनासायां ह्रीमित्याकृष्य भ्रूमध्यस्थेन जाठरेण चैकीकृत्य ह्रीमित्युद्भवमुद्रया रेचकेन ॐ ह्रीं वह्निचैतन्यायनमइति
बहिरग्नौ प्रतिष्ठां कृत्वा ध्यात्वाऽग्निं मूलेनाभिमंत्र्य धेनुमुद्रां प्रदर्श्यास्त्रेण संरक्ष्य कवचेनावगुंठ्य गंधाद्यैः संपूज्य मूलेन प्रतिष्ठाप्य ॐ चित्पिं-
गले हन हन पच २ दह २ सर्वान्ज्ञापयस्वाहेति ज्वालिनीमुद्रां प्रदर्श्यैंधनैः समिध्यास्त्रेण दर्व्या कंकणं बद्ध्वाऽग्नेर्गर्भाधानादिसंस्कारा-
न्कुर्यात् । प्रतिसंस्कारं मूलेनाज्येन त्रिर्जुहुयात् । नामकर्मणि तु शतमंगलनामासित्वंहुताशनेति नाम कृत्वा जुहुयात् । अथ स्वदेहे न्यासः ।
ॐ स्यूं पद्मरागायैअग्निजिह्वायैनमः लिंगे । ष्यूं सुवर्णायै॰ हृदये । श्यूं भद्रलोहितायै॰ शिरसि । व्यूं लोहितायै॰ मुखे । ल्यूं श्वेतायै॰ घ्राणे ।
र्यूं धूमिन्यै॰ नेत्रयोः । य्यूं कराल्यै॰ सर्वांगे । सहस्रार्चिषे॰ त्वहृदयायनमः । स्वस्तिपूर्णाय॰ शिरसेस्वाहा । उत्तिष्ठपुरुषाय॰ शिखायैवषट् ।
धूमव्यापिने॰ कवचायहुं । सप्तजिह्वाय॰ नेत्रत्रयाय॰ । धनुर्धराय॰ अस्त्रायफट् । अग्नये जातवेदसेनमः मूर्ध्नि । अग्नये सप्तजिह्वाय॰ दक्षकरे ।
अग्नये हव्यवाहनाय॰ दक्षकट्यां । अग्नयेऽश्वोदराय॰ लिंगे । अग्नये वैश्वानराय॰ वामकट्यां । अग्नये कौमारतेजसे॰ वामपार्श्वे । अग्नये वि-
श्वमुखाय॰ वामांसे । अग्नये देवमुखाय॰ शिखायां । ततोऽग्निं ध्यात्वा परिसमुह्य परिस्तीर्य परिधीन्निक्षिप्योपरिमेखलाक्रमेण ब्रह्मविष्णुरुद्रान्
[illegible]ग्न्यां गौरीं च संपूज्य वह्नौ यंत्रं विचिंत्य षड्दलेष्वाग्नेयादिकोणेषु पुरतः पश्चान्मध्ये च स्यूंपद्मरागायैइत्यादिपूर्वोक्तसप्तजिह्वाः संपूज्याग्ने-
[illegible]ादिकोणेषु पुरतः पश्चाच्च सहस्रार्चिषेइत्यादिषडंगानि संपूज्याष्टदलेषु पूर्वादिदिक्षु अग्नयेजातवेदसेइत्याद्यष्टौ मूर्तीः संपूज्य चतुरस्रे इंद्रादी-

क०

सायुधान्संपूज्य कुंडं नवसूत्र्या संवेष्ट्य पात्रासादनादि स्वगृह्योक्तं कृत्वा निर्वापादिना प्रभूतपायसं श्रपयित्वाज्यं चरुं च ऱ्हीमित्यभिमंत्र्य धेनुमुद्रां दर्शयेत् । ततस्तिष्ठन्मौनी वह्नौ तिस्रः समिधोऽभ्याधाय वामदक्षिणयोरिडापिंगले मध्ये सुषुम्नां च ध्यात्वा चक्षुषी हुत्वाऽग्नीषोमाभ्यां मध्येऽग्नयेस्विष्टकृते च मध्ये हुत्वा पूर्वोक्तसप्तजिह्वादिमूर्तिभ्यस्तत्तन्मंत्रैरेकैकामाज्याहुतिं हुत्वा मर्त्येभ्यः पितृभ्यो यक्षेभ्यो नागेभ्यश्च हुत्वा जुह्वां चतुर्गृहीत्वा वैश्वानरजातवेदइडावहलोहिताक्षसर्वकर्माणिसाधयस्वाहावौषडिति हुत्वा गणेशमंत्रेण जुहुयात् । ततः पूर्वोक्तसर्वन्यासान्कृत्वा वह्नौ पीठपूजां कृत्वा देवीभावाद्यावाहनादिमुद्राः प्रदर्श्य षडंगं कृत्वा षोडशोपचारैः संपूज्य मूलेन शतमेकादशाधिकमाज्याहुतीर्हुत्वा नवग्रहादिलोकपालांतेभ्यस्तत्तन्मंत्रैः समिदाज्यचरून् हुत्वा पायसतिलपलाशपुष्पसर्षपपूगीफललाजदूर्वांकुरयवबिल्वफलरक्तचंदनगुग्गुलुद्रव्याणि तिलमिश्रपायसमेव वा कवचार्गलाकीलकरहस्यैः प्रतिश्लोकं हुत्वा कृतस्य जपस्य दशांशेन प्रतिश्लोकं सप्तशतीमंत्रेणोक्तद्रव्याणि तिलपायसं वा जुहुयात् । प्रतिश्लोकंचजुहुयात्पायसंतिलसर्पिषेतिवचनात् । अध्यायसमाप्तौ उवाचस्थले च पत्रपुष्पफलैर्होमः । यद्वा नमोदेव्याइत्येतेन नवार्णेन वा जपदशांशहोमः । एवं प्रधानहोमं कृत्वा नामभिः स्रुवेणाज्यं पायसं च जुहुयात् । यथा। कादंबर्यैस्वाहा । उल्कायै० करात्यै० रक्ताक्ष्यै० श्वेतकौबेर्यै० हरितायै० यक्षिण्यै० कंकाल्यै० सुरश्रेष्ठायै० सर्वराज्यै० । ब्राह्म्यै० माहेश्वर्यै० कौमार्यै० वैष्णव्यै० वाराह्यै० ऐंद्र्यै० नारसिंह्यै० चामुंडायै० । धात्रे० विधात्रे० शंखनिधये० पद्मनिधये० द्वारश्रियै० वास्तुपुरुषाय० । ऐरावताय० पुंडरीकाय० वामनाय० कुमुदाय० अंजनाय० पुष्पदंताय० सार्वभौमाय० सुप्रतीकाय० । दमनकाय० पुंडरीकाय० गुग्गुलाय० कुरंटकाय० । ऋग्वेदाय० यजुर्वेदाय० सामवेदाय० अथर्ववेदाय० । नवग्रहाणां दिक्पालानां च नामभिः । असितांगभैरवाय० रुरुभैरवाय० चंडभै० क्रोध०

उन्मत्त० कपाल०भीषण० संहार०। ततः पूर्वोक्ताधारशक्त्यादिपीठदेवताभ्य आवरणदेवताभ्यश्च हुत्वा ॐ ऱ्हीं ब्राह्मीमाहेश्वरीकौमारीवैष्णवी-
वाराहीनारसिंह्यैंद्रीचामुंडायैविच्चेस्विष्टकृतेस्वाहेति स्विष्टकृतं हुत्वाऽऽज्यं जुहुयात् । ऱ्हीं नंदायैविच्चेस्वाहा । ऱ्हीं रक्तदंतिकायै०। ऱ्हीं शा-
कंभर्यै०। ऱ्हीं दुर्गायै०। ऱ्हीं भीमायै०। ऱ्हीं भ्रामर्यै०। ऱ्हीं कालिकायै०। ऱ्हीं शिवदूत्यैविच्चे०। ऱ्हीं प्रजापतयेस्वाहेति हुत्वा प्रायश्चित्तहो-
मांते दिक्पालनवग्रहविनायकादिक्षेत्रपालादिभ्यो माषभक्तबलीन्दत्वा द्वादशगृहीतेन समुद्रादूर्मिरितितृचेन मूर्धानंदिवः० पुनस्त्वादित्या०
पूर्णादर्वि० सप्ततेअग्ने०धामंते०इत्येतैर्मूलेन च पूर्णाहुतिं हुत्वा इदमग्नये वैश्वानराय वसुरुद्रादित्येभ्यः शतक्रतवे सप्तवतेऽग्नयेऽद्भ्यो महालक्ष्म्यै
च नममेति त्यजेत् । ततो वसोर्धारां हुत्वा संस्रावान्प्रास्य प्रणीताविमोकादिकर्मशेषं समाप्य मूलमंत्रेण होमदशांशेन दुग्धेन जलेन वा
तर्पयित्वा तद्दशांशेन मार्जयेत् । ततः श्रेयः संपाद्याचार्यादीन् वस्त्राद्यैः संपूज्याचार्याय शतं तदर्धं तदर्धमष्टौ वा गोमिथुनानि सुवर्णचतुष्टयं
च दद्यात् । ब्रह्मणे निष्कद्वयं गोद्वयं च । ऋत्विग्भ्यः प्रत्येकं निष्कत्रयं गोमिथुनं च। इदं सहस्रचंड्यां। तदर्धं शतचंडयां । तदर्धं नवचंड्यां।
अशक्तौ सर्वेभ्यः सुवर्णं । ततो दानान्याचार्यादिभ्योऽन्येभ्यो वा दद्यात् । यथा। विप्रं संपूज्य कपिलां गां स्वर्णशृंगीं रौप्यखुरां ताम्रपृष्ठीं
कांस्यदोहनां सवस्त्रां संपूज्य कपिलेसर्वभूतानां पूजनीयासिरोहिणि । तीर्थदेवमयीयस्मादतःशांतिंप्रयच्छमेइतिमंत्रेण दद्यात् ।१। यथारत्नेषुसर्वेषु
सर्वेदेवाव्यवस्थिताः तथाशांतिंप्रयच्छंतु रत्नदानेनमेसुराः इति नीलमणिं ॥ २ ॥ अथ श्वेताश्वदानं । विप्रं संपूज्य अश्वं हेमपल्याणरौ-
प्यकटकगजदंतवज्रनेत्रताम्रमयखुरक्षौमपुच्छस्वर्णललाटपट्टसुकक्षास्वायुधग्रैवेयसुवस्त्रयुतं धान्यरत्नोपरिस्थं कृत्वा मार्तंडायुधवेगाय काश्यपा-
त्रिमूर्तये । जगद्दीपायसूर्याय त्रिवेदायनमोनम इत्युक्त्वाऽमुकशर्मणेऽमुकशाखाध्यायिने सूर्यलोकनिवासकामनया देवीप्रीतिकामनया वा इमं

तार्श्वं तुभ्यमहंसंप्रददेनममेत्युक्त्वाऽश्वकर्णं विप्रहस्ते दत्वा मंत्रं पठेत् । महार्णवेसमुत्पन्न उच्चैःश्रवसपुत्रक । मयात्वंविप्रमुख्याय दत्तो
यसुखीभव ॥ इमंविप्रनमस्तुभ्यमश्वंतेप्रतिपादितं ॥ प्रतिगृह्णीष्वविप्रेंद्र मयादत्तंसुशोभनमिति । ततः सुवर्णदक्षिणां दद्यात् । ३ । ततः इहा-
मुत्रातपत्राणं कुरुकेशवमेप्रभो । छत्रंत्वत्प्रीतयेदत्तं ब्राह्मणायमयासहेति छत्रं । ४ । शशांककरसंकाश हिमडिंडीरपांडुर । प्रोत्सारयाशुदुरितं
चामरामरवल्लभेति चामरं ।५। सर्वसस्याश्रयाभूमिर्वराहेणसमुद्धृता । अनंतसस्यफलदा अतःशांतिंप्रयच्छमेइति भूमिं ।६। यथानकृष्णशयनं शून्यंसा-
गरजातया । शय्याममाप्यशून्यास्तु तथाजन्मनिजन्मनीति शय्यां । ७ । तृप्तिंकरोतिभूतानामिहलोकेपरत्रच । तस्मात्प्रदीयतेधान्यमतःशां-
तिंप्रयच्छमेइति सप्तधान्यानि च दद्यात् ।८। ततो द्वारजापकेभ्योऽन्येभ्यश्च दक्षिणां दद्यात् । ततः सर्वकलशोदकेन सामात्यं यजमानं समुद्र-
ज्येष्ठाइत्यादिसुरास्त्वामित्यादिपौराणैश्चाभिषिंचेयुः । ततो यजमानो नवग्रहाणामुत्तरपूजां कृत्वा विसृज्याचार्यहस्ते दत्वा देवीं संपूज्य बलिं
दद्यात् । क्षत्रियादिनाऽश्वमेषच्छागमहिषाणामन्यतरद्देयं । विप्रेण तु कूष्मांडं बिल्वमिक्षवश्च देयाः । यथा । देवीं द्रोणपुष्पबिल्वाम्रदलजाती-
चंपकैः संपूज्योदङ्मुखः कर्ता पूर्वामुखं देवीमुखं वा बलिं गंधादिनाऽभ्यर्च्य पशुस्त्वंबलिरूपेण ममभाग्यादुपस्थितः । प्रणमामिततःसर्वरू-
पिणंबलिरूपिणं ॥ चंडिकाप्रीतिदानेन दातुरापद्विनाशनं । चामुंडाबलिरूपाय बलेतुभ्यंनमोनमः ॥ यज्ञार्थेबलयःसृष्टाः स्वयमेवस्वयंभुवा ।
अतस्त्वांघातयाम्यद्य तस्माद्यज्ञेवधोऽवधइत्यभिमंत्र्य ऐंह्रींश्रीमिति तत्र पुष्पं क्षिप्त्वा । रसनात्वंचंडिकायाः सुरलोकप्रसाधकः ॥ ह्रांह्रीं-
खड्ग आंहूंफडिति खड्गमन्यद्वा शस्त्रं संपूज्य ॐकालिकालियज्ञेश्वरिलोहदंडायैनमइति छेदयित्वा ॐह्रींऐंह्रींकौशिकीरुधिरेणाप्यायतामिति देव्यै
निवेद्य शेषं गृहीत्वा पूतनायै चरक्यै विदार्यै पापराक्षस्यै च निवेद्य माषपिष्टमयं शत्रुं कृत्वा खड्गेन छेदयित्वा स्कंदाय विशाखाय च दत्वा

बलिशेषं रक्षोभ्यो हरेत् । मंत्रस्तु । ॐ ऱ्हीं स्फुर स्फुर कुंभ कुंभ सुनु सुनु गुलु गुलु धनु धनु मारय मारय विद्रावय विद्रावय कंपय कंपय कंपातय कंपातय कृंतय कृंतय पूरय पूरय ॐ ऱ्हीं ॐ ऱ्हूं फट् २ हुं मर्दय २ हुं इति । ततः शेषेण बहिर्दद्यात् । तत्र मंत्रः । बलिं गृह्णं-त्विमं देवा आदित्या वसवस्तथा । मरुतश्चाश्विनौ रुद्राः सुपर्णाः पन्नगा ग्रहाः ॥ असुरा यातुधानाश्च पिशाचोरगराक्षसाः । डाकि-न्यो यक्षवेताला योगिन्यः पूतनाः शिवाः ॥ जृंभकाः सिद्धगंधर्वा माला विद्याधरा नगाः । दिक्पाला लोकपालाश्च ये च विघ्नविनायकाः ॥ जगतां शांतिकर्तारो ब्रह्माद्याश्च महर्षयः । मा विघ्नो मा च मे पापं मा संतु परिपंथिनः ॥ सौम्या भवंतु तृप्ताश्च भूतप्रेताः सुखावहाइति । ततः स्नात्वा तिलकं धृत्वा खड्गिनीशूलिनीत्येकेन शूलेनपाहिनोदेवीतिचतुष्टयेन नमोदेव्यैइतिपंचकेन च प्रार्थयेत् । रूपंदेहियशोदेहि भगं भगवतिदेहिमे । पुत्रान्देहिधनंदेहि सर्वान्कामांश्चदेहिमे ॥ महिषघ्निमहामाये चामुंडेमुंडमालिनि । आयुरारोग्यमैश्वर्यं देहिदेविनमोस्तुते ॥ ततः । गुह्यातिगुह्यगोप्त्रीत्वं गृहाणास्मत्कृतंजपं । सिद्धिर्भवतुमेदेवि प्रसादात्त्वसुंदरीति देव्यै निवेद्य मूलेन पुष्पेण देवीमुद्वास्य नासया त्वद्दि प्रविष्टां विभाव्य षडंगं कृत्वा उत्तिष्ठ० अभ्यारमिति विसृज्याचार्याय दत्वा मंत्रं पठेत् । त्रैलोक्यमातर्देवित्वं सर्वभूतदयान्विते । दाने-नानेनसंतुष्टा सुप्रीतावरदाभवेति । नवरात्रे तु विशेषः । दशम्यां देवीं विसृजेत् । मंत्रस्तु । उत्तिष्ठदेविचंडेशि शुभांपूजांप्रगृह्यच । कुरुष्व ममकल्याणमष्टाभिःशक्तिभिःसहेत्युत्थाप्य । गच्छगच्छपरंस्थानं स्वस्थानंदेविचंडिके । व्रजस्रोतोजलंवृद्ध्यै स्थीयतांचजलेत्विह ॥ दुर्गेदेवि जगन्मातः स्वस्थानंगच्छपूजिते । संवत्सरेव्यतीतेतु पुनरागमनायवै ॥ इमांपूजांमयादेवि यथाशक्त्योपपादितां । रक्षार्थेत्वंसमादाय व्रजस्वस्था-नममिति जले प्रवाहयेत् । ततोऽग्निं संपूज्य विभूतिं धृत्वा गच्छगच्छेति तं विसृज्य सहस्रचंड्यां सहस्रमन्यत्र शतं यथाशक्ति वा विप्रा-

भोज्य यस्यस्मृत्या० प्रमादात्कुर्वतामिति जपित्वा पूर्णतां वाचयित्वा कर्मेश्वरार्पणं कृत्वा सुहृद्युतो भुंजीत ( अस्य मूलं मार्कंडेय-
राणस्थखिलत्वेन प्रसिद्धे सप्तशतीकल्पेऽस्ति ) इदमेव पूजाहोमबल्यादिविधानं नवरात्रेऽपि ज्ञेयं । विशेषस्तु मत्कृते निर्णयसिंधौ नवरात्र-
निर्णये ज्ञेयः । इति शांतिरत्ने शतचंडीसहस्रचंडीप्रयोगः ॥ ॥ श्रीमन्नारायणाख्यात्समजनि विबुधो रामकृष्णाभिधानस्तत्सूनुः सर्व-
विद्यांबुधिनिजचुलुकीकारतः कुंभजन्मा । दृष्ट्वा नानानिबंधान्व्यरचयदतुलं ग्रंथमब्जाकराख्यः पित्रोः पादाब्जभृंगो रघुपतिपदयोः स्वश्रमं
प्रार्पयच्च ॥ तर्के दुस्तर्कमेधाः फणिपतिसदृशः पाणिनीये प्रपंचे न्याये प्रायः प्रगल्भः प्रकटितमहिमा भाट्टशास्त्रप्रवादे । प्राभः प्राभा-
करीये पथि मथितदुरंतांतवेदांतसिंधुर्वेदे वादे वितंद्रो जगति विजयते रामकृष्णार्यसूनुः ॥ यो भाट्टतंत्रगहनार्णवकर्णधारः शास्त्रांतरेषु निखि-
लेष्वपि मर्मभेत्ता । योऽत्र श्रमोऽस्ति विहितः कमलाकरेण प्रीतोऽमुनास्तु सुकृती बुधरामकृष्णः ॥ आदौ निर्णयसिंधुस्तु वार्तिके टिप्पणी पुनः ।
काव्यप्रकाशगा व्याख्या दाने च कमलाकरः ॥ शांतिरत्नं ततः पूर्तव्रतयोः कमलाकरौ । ग्रंथो वेदांतरत्नं च भाट्टशास्त्रकुतूहलं ॥ प्रायश्चित्ते
रत्नमेकं व्यवहारे तथाऽपरं । बह्वृचाह्निकमन्यश्च गोत्रप्रवरदर्पणः ॥ रत्नं कर्मविपाकाख्यं कार्तवीर्यस्य पद्धतिः । टिप्पणी च तथा शास्त्रे
दीपिकाऽऽलोकसंज्ञिता ॥ मीमांसायां तथा शास्त्रतत्वस्य कमलाकरः । सर्वतीर्थविधिश्चैव भक्तिरत्नं तथोत्तमं ॥ रामकृष्णसुतेनेत्थं कमला-
करशर्मणा । द्व्यधिका विंशतीनां च ग्रंथानां रत्नमालिका ॥ सेवां कर्तुमशक्तेन ह्यर्पिता रामपादयोः । इति श्रीमत्पदवाक्यप्रमाणपारावार-
पारीणरामेश्वरभट्टसूरिसूनुनारायणभट्टसुतमीमांसकरामकृष्णभट्टात्मजकमलाकरभट्टकृतं शांतिरत्नं समाप्तिमगमत् ॥ छ छ छ छ ॥

